॥ श्रौतसूत्रं ॥

# Śrauta-sūtra of Lāṭyāyana

With the commentary of Agniswāmī

Edited by
ANANDA CHANDRA VEDANTAVAGISA

# Śrauta-sūtra of Lātyāyana



Edited by

ANANDA CHANDRA VEDANTAVAGISA



The Śrauta-sūtras are that branch of the Vedic Literature which describe the ritual in a Sūtra-style. Indispensable for the knowledge of the Vedic ritualism, they are also a source of the history of Ancient India. About sixteen Śrauta-sūtras have come down to us, of which two belong to Rigveda, four to Sāmaveda, one each to Atharvaveda and white Yajurveda, while eight belong to Black Yajurveda.

The *Lātyāyana Śrauta Sūtra* belongs to the Sāmaveda. It lays down the duties of the Udgātars, the Sāmavedic priests, in various Soma-sacrifices. First published in 1872 by Asiatic Society of Bengal, the work has been out of print since a long time. The importance of the present edition has been greatly enhanced by the addition of a new appendix containing corrections and emendations to the text, prepared by Dr. C. G. Kashikar, a masterhand on vedic-rituals. The work is indispensable for every vedic scholar.



M/s. Arya Book Depot

**CASH MEMO**

Phone : 2911154
Wire : Literature

# Munshiram Manoharlal Publishers Pvt. Ltd.

ORIENTAL & FOREIGN BOOKSELLERS & PUBLISHERS
4416 NAI SARAK, DELHI-110 006

A- No 002152

Date 2-11-96

| ACC. No. | DESCRIPTION OF BOOKS | QTY. | RATE | AMOUNT Rs. | P. |
|---|---|---|---|---|---|
| | Srauta Sutra of Latyayana - M.R.M. | | | 600 | 00 |
| | V V | | | | |
| | Tax - 25/- | | | 150 | 00 |
| | | | | 950 | 00 |
| | | | TOTAL | | |

E.&O.E.

**Thank you !**

H.O. : 54 Rani Jhansi Road, New Delhi-110 058
Phones : 7771668, 7773650
BOOKS SOLD ARE NOT RETURNABLE

The Śrauta-sūtras are that branch of the Vedic Literature which describe the ritual in a Sūtra-style. Indispensable for the knowledge of the Vedic ritualism, they are also a source of the history of Ancient India. About sixt
Śrauta-sūtras have come c
which two belong to Rigv
Sāmaveda, one each to At
white Yajurveda, while ei
Black Yajurveda.

The *Lātyāyana Śrauta Sūtr*
Sāmaveda. It lays down t
the Udgātars, the Sāmave
various Soma-sacrifices. F
in 1872 by Asiatic Society
work has been out of prin
time. The importance of t
edition has been greatly e
addition of a new appendi
corrections and emendatic
prepared by Dr. C. G. Ka
masterhand on vedic-ritua
is indispensable for every

# ŚRAUTASŪTRA OF LĀTYĀYANA

WITH THE
COMMENTARY OF AGNISWĀMĪ

EDITED BY
Ananda Chandra Vedantavagisa

*With new appendix containing corrections and emendations to the text by*
Dr. C. G. Kashikar



**Munshiram Manoharlal Publishers Pvt. Ltd.**

# ॥ श्रौतसूत्रं ॥

## लाट्यायनाचार्य प्रणीतम्
## अग्निस्वामिविरचितभाष्यसहितम्

श्रीआनन्दचन्द्रवेदान्तवागीशेन
परिशोधितम् ।





मुन्शीराम मनोहरलाल
पब्लिशर्स प्रा.लि.

# विज्ञापनम्।

छन्दोगानां यज्ञविधिप्रसिद्ध्यर्थं लाट्यायणाचार्य्येण अष्टौ हि ब्राह्मणग्रन्थाः प्रौढ़ं ब्राह्मणमादिमम्। षड्विंशाख्यं द्वितीयं स्यात्ततः सामविधिर्भवेत्। संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिता इत्येतेनोक्तेषु सामवेदीयेषु सर्वेषु ब्राह्मणेषु विहितानां मन्त्राणां परस्परविरोधादिदोषपरिहारार्थञ्चैतानि सूत्राणि विरचितानि। एतान्येव श्रौतसूत्राणि कल्पसूत्राणीति च कथ्यन्ते। अग्निस्वामिनाचार्य्येणैतेषां सूत्राणां भाष्यं विरचितम्। अस्मिन् ग्रन्थे दशसंख्याकाः प्रपाठकाभिधेयाः परिच्छेदा वर्त्तन्ते, प्रपाठकाश्च पुनः कण्डिकाभिर्विभक्ताः, तेनैतेषां प्रपाठकानाम्मध्ये प्रथम द्वितीय तृतीय चतुर्थ पञ्चम षष्ठाष्टम नवमेषु द्वादशशः कण्डिकाः सन्ति सप्तमे तु त्रयोदशसंख्यका दशमे विंशतिसंख्यकाश्च दृश्यन्ते, तेनायं ग्रन्थ एकोनत्रिंशाधिकशतसंख्यकैः कण्डिकाभिरन्वितो वर्त्तते।

तत्र प्रथमप्रपाठके तावत् परिभाषाया ऊर्द्ध्वं ऋत्विग याज्यलक्षणाद्यनन्तरं व्रतप्रतिमन्त्रणादि पूतभृदाहवनीयाधिकारान्त उक्तः। द्वितीये स्तोमयोगादि सार्वक्रतुकसामान्यविधानान्तः। तृतीये षोड़शिनो गुणविधानादि वाणावयवद्रव्यविधानान्तः। चतुर्थे वाणावयवाच्छादनद्रव्यविधानादि वाजिभक्षणमन्त्रान्तः। पञ्चमे चातुर्मास्याधिकारे वरुणप्रघासिकब्रह्मत्वकथनादि सोम-

चमसोभक्षणान्तः। षष्ठे मन्त्रनिनः सामविधानादि द्व्यक्षरप्रतिहारान्तः। सप्तमे चतुरक्षरप्रतिहारादि होतुराज्ये गायत्रीगानान्तः। अष्टमे एकाह-अहीन-सत्राख्य काण्डत्रितयान्वितयज्ञस्य प्रतिकाण्डे पृथग्विधिविधानादि वाजपेयविधानान्तः। नवमे राजसूयविधानादि अहीनविधिविधानान्तः। दशमे सत्राधिकारे तत्परिभाषाविधानादि संवत्सरविधानान्तः प्रस्तावो निरूपितोऽस्ति।

कस्मिन् काले लाट्यायणाचार्य्यः प्रादुरभूत् कदा वा एतानि सूत्राणि तेन विरचितानि तन्निर्णयः कुत्रापि न दृश्यते, किन्तु कैश्चिद्विद्वद्भिर्विक्रमादित्यस्य सार्द्धशतवर्षपूर्वावधि सूत्ररचनकाल इत्यनुमीयते, तदनुमानस्यापि समीचीनत्वेन प्रमाणं नास्ति। पूर्वस्मिन् काले यदा अक्षररचनं लिपिकार्य्यं वा नाभूत्, तदा गुरुमुखात् श्रवणेन शिष्यपरम्पराणां कण्ठेऽभ्यस्तो वेद आसीत्, तदानीमल्पाभ्यासेन श्रुतबहुविषयमनायासेन शिष्याणां स्मरणार्थमाचार्य्याः संक्षेपतस्तदर्थं सङ्कलय्य अल्पाक्षरेण बह्वर्थप्रतिपादकानि सूत्राणि विरचितवन्तः, तेन विनोपदेशं तेषां तात्पर्य्यावधारणं न सम्भवतीति। अत आचार्य्यपरम्परया उपदेशं प्राप्तवन्तः शिष्यास्तेषां प्रकृतमर्थमवधारयन्ति। ये चान्ये व्युत्पत्तिबलेन तत्तात्पर्य्यावधारणाय प्रवृत्तास्ते विपरीतमर्थमुद्भावयन्ति। अतः सूत्राणां गुरूपदेशमवश्यमपेक्षणीयम्।

लाट्यायनश्रौतसूत्राणां सदृशानि द्राह्यायणाचार्य्यविरचितानि छन्दोगानामपराणि श्रौतसूत्राणि वर्त्तन्ते। तेषु प्रायश एतेषां

पाठार्थादिः सौसादृश्यो दृश्यते, यत्र कुत्रचित् किञ्चिन्मात्रविशेषो विद्यते तत्र तत्र तज्ज्ञापनार्थं मया सर्वेषां सूत्राणां निम्नदेशे पृथक्तया द्राह्यायणमतमुद्धृतम्। तेन लाट्यायणाचार्य्यविरचितश्रौतसूत्रेभ्यो द्राह्यायणाचार्य्यकृतश्रौतसूत्रेषु कियान् विशेषो वर्त्तते तदवगमः सुकरो भविष्यतीति। धन्विकृतया लाट्यायणश्रौतसूत्रवृत्त्या चेतेषां श्रौतसूत्राणामवयवाक्षरशोधनञ्च मया कृतमित्यलमतिपल्लवितेन।

आदिब्राह्मसमाज
कलिकाता

श्रीआनन्दचन्द्रवेदान्तवागीशस्य।

एतद्ग्रन्थसंशोधनार्थं पाठभेदप्रदर्शनार्थञ्च यानि पुस्तकानि मया संगृहीतानि तेषां विवरणान्यत्र निर्दिश्यन्ते ।

आस्यातिकसभापुस्तकगृहादानीतं मूलपुस्तकं ... ... १

पण्डितवामनाचार्य्यसकाशादानीतं मूलपुस्तकं ... ... १

काशीस्थसंस्कृतपाठगृहादानीतं मूलपुस्तकं ... ... १

आस्यातिकसभापुस्तकगृहादानीतमग्निस्वामिकृतभाष्यपुस्तकं १

पण्डितवामनाचार्य्यसकाशादानीतमग्निस्वामिकृतभाष्यपुस्तकं १

कलिकातासंस्कृतपाठगृहादानीतमग्निस्वामिकृतभाष्यपुस्तकं १

कलिकातासंस्कृतपाठगृहादानीतं धन्विकृतवृत्तिपुस्तकं ... १

कलिकातासंस्कृतपाठगृहादानीतं द्राह्यायणसूत्रपुस्तकं ... १

# लाट्यायनश्रौतसूत्राणां प्रतीकसूचिः ।

# अकारादिवर्णक्रमेण

## तात्पर्य्यसूची ।

Digitized by Madhuban Trust

सूचीसमाप्ता।

श्रीगणेशाय नमः ।

# लाट्यायनीये

## श्रौतसूत्रे

### प्रथमः प्रपाठकः ।



अथ प्रथमा कण्डिका ।

किमिदं सूत्रं नामशास्त्रं । किमर्थमिदमारभ्यते । यज्ञविधिप्रसिद्धये । इह हि छान्दोग्ये द्विविधोविधिः, अनुब्राह्मणिकः षट्प्रामाणिकस्य । तत्रानुब्राह्मणिकः, यजुषाङ्कर्म्मसु लिङ्गतोविधानमर्थग्रहणादित्यतआरभ्य, साधारणगुणविधिस्तु सर्वत्रेति यावत् । अपरः षड्भिः प्रमाणैर्निर्वर्त्यते । कानि पुनस्तानि षट् प्रमाणानि । ब्राह्मण सूत्र आर्षेयकल्प ऋक्सामसमाम्नायो-ह्योपदेशाः । तत्र ब्राह्मणे ज्योतिर्दशाहो क्लृप्तो । षष्ठादिषु चतुर्ष्वध्यायेषु ज्योतिष्टोमः क्लृप्तः त्रिसंस्थः सविकल्पः सप्रायश्चित्तः, प्रजापतिरकामयत बहु स्यां प्रजायेयेत्यत आरभ्य । तथा दशमे द्वादशाहस्य समस्तं ब्राह्मणं। तथा एकादशादिषु

B

पञ्चसु अध्यायेषु स्तोमोयुज्यते सवित्रियेभ्योऽहर्भ्य इत्यत आरभ्य दशानामह्नां स्तोत्रविधिः। तावेतौ ज्योतिष्टोमदशाहौ गवामयनादीनां सहस्रसम्वत्सरपर्यन्तानां प्रकृतिभूतौ। एवञ्चैवमेव समाम्नायं गृहीत्वा ऋग्यजुःसाम्नाञ्च समाम्नायपरिपठितानां लिङ्गतोऽनुविधानमनारभ्यकर्मार्थताव्युत्पत्तेः। तदेवं सिद्धये इदमुच्यते।

ननु यज्ञविधिप्रसिद्धये सूत्रारम्भ इत्येतदनर्थकं, तस्मान्नारब्धव्यं। अथारब्धव्यं प्रयोजनं वक्तव्यं। उच्यते, आरब्धव्यमेव। कस्मात्, अस्पष्टाऽनिष्टपर्युदास शेषविध्येकविधिविकल्प समुच्चय नियमार्थं शास्त्रारम्भः। अस्पष्टानान्तावत्, तस्य द्वादशदीक्षोपसद इति दीक्षोपसदोर्विभागसंशयं विशिनष्टि तिस्र उपसद इति। अनिष्टपर्युदासः, दक्षिणासीनः प्रतिहरतीति स विधिः पर्युदस्यते दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्त्तेति। शेषविधिः, तत्र जह्यादप्राक्तेऽपि करिष्यामीति विदित्वेत्यप्रोच्यमानेन गम्यते। तथा एकविधिविकल्पः, पर्य्येनमत्रिशन् ग्रामकामो यजेतेति श्रुतिः, इह च कामान्तरं कल्पते, कश्चिदर्थमर्हन्यो न प्राप्नुयात् अनूक्तां प्रथमेन यजेतेति। तथा समुच्चयः, अथ यत्सङ्गववेलायां स आदिरित्यनेन साप्तविध्यं दर्शयता ॐङ्कारउद्गीथादौ नियमितः, आदिशब्देनोङ्कार उच्यते, रथन्तरे वागित्यादेयमित्यनेन विकल्पे प्राप्ते आह, समुच्चयस्तु नानार्थत्वादिति प्रस्तावशान्त्यर्था हि वागुद्गीथादेरोङ्कार इति। तथा नियमविधिः, विश्वरूपाणां गानमनारभ्य विधानात्सर्वत्र प्राप्तौ सत्यां ज्योतिष्टोमे नियम्यते, तानि नान्यत्र विश्वरूपाभ्यो न चान्यत्र

विश्वरूपा ज्योतिष्टोमा ज्योतिष्टोमादिति ज्योतिष्टोमे विश्वरूपाणां गानन्नियम्यते। तदेवमाद्यानां विधानानां अन्तरेण सूत्रारम्भान्न सिद्धिः। तस्माद्यदुच्यते आरब्धव्यं सूत्रमिति तद्युक्तं। एवं सिद्धे सूत्रारम्भे आरभ्यते।

## अथ विध्यव्यपदेशे सर्वक्रत्वधिकारः* ॥ १ ॥

तत्र शास्त्रादौ अथेत्ययन्निपात आनन्तर्यापेक्षोमङ्गलार्थः पूर्वप्रकृतापेक्षोधिकारार्थश्चेति। मङ्गलार्थस्तावत् अथ प्रतिग्रहणे, नासति, मङ्गलादिमध्यावसानानि हि शास्त्राणि आयुष्मन्त्येव वीरपुरुषाणि भवन्ति, शिष्याचार्ययोर्हितानि प्रथन्ते मङ्गलं। किं पुनरथशब्दे मङ्गलार्थत्वमिति चेत्। अप्रश्नस्तावत्, यावता औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः। अथायन्निपातपठितेष्वेलर्थेषु पद्यते, अथ अर्थग्रहणप्रश्नाधिकारानन्तर्य्यपृष्टप्रतिवचनमङ्गलार्थपूजाचरितेष्विति उक्तं मङ्गलार्थत्वं। अथ पूर्वप्रकृतापेक्षत्वे किं प्रयोजनं, कानि चास्य पूर्वप्रकृतानीति। उच्यते, अपेक्षितं हि शास्त्रेण वक्तव्यं भवति, लघुनोपायेन तत्सिद्धं भवति। कथमपेक्षत इति चेत्, लोकवेदयोर्वृत्तान्ते उत्तरत्वेन प्रयोगात्। दृश्यते चायमुभयोर्लोकवेदयोरस्मिन्नर्थे प्रयुज्यमानः। लोके तावत्, ओदनमपेक्ष्य तण्डुलपाकः कर्त्तव्यः, पर्य्येषणासिद्धान्येव मनसि कृत्वाथ तण्डुलमात्रं प्रति वक्तव्ये क्लृप्त ओदन इति, अथ शब्देन सर्वसाधनसम्पदं क्लृप्तां दर्शयति। तथा वेदे, पर्कादिषिमान्तं

* द्राह्यायणसूत्रे तु 'अथातः' इत्ययमेव विशेषः।

सामसमाम्नायमिद्धमालोच्याह, अथ खल्वयमार्षप्रदेशो भवति, ऋषीणां पृथङ्नामगोत्राणां प्रकृतिरिति, एवं च प्रयोगमात्राद्यस्मात् पूर्व्वस्य साधनराशेः साध्यमर्थं प्रति प्रत्ययो भवति। अथोच्यते कान्यस्य पूर्वप्रकृतानीति, ब्राह्मण ऋग्यजुःसामसमाम्नायार्षेयकल्प गृह्यार्षेय धर्मशास्त्राण्यङ्गानि लोकश्चेति। ब्राह्मणन्तावत्, प्राण-प्रभृतिभिरुपतिष्ठेरंस्तदुक्तं ब्राह्मणेन, निरुक्तांश्चानिरुक्तांश्च गाय-तीति ब्राह्मणं भवति। ऋक्समाम्नायः, ऋचः सामेति स्वाहाकारान्तया तृतीयामिति, उत्तरा वामदेव्यं गीत्वा तस्यर्चा-नुजपेयुरिति। यजुः समाम्नायः। महन्मेवोच इति, करिष्यन् प्रतिमन्त्रयेतेति। सामसमाम्नायः, अग्निष्टयतीत्यवभृथसाम-त्यग्नायिरिति गायेदिति, उत्तराश्चैतं प्रत्यावजंः स्तृचे वैकस्यां वा, तृचापत्तीनि तृचेषु त्रिरितराणीति। आर्षेयकल्पः, अन्तो-र्यास्विकृता गर्भाः कल्पेन यथैवार्षेयकल्पेनोक्तमिति चौरक-लभिः प्रत्यक्षविहितश्चार्षेयकल्पेन तत्रानुमानं न विद्यत इति। गृह्यं, तस्मिन् सम्वत्सरमग्निमिन्धीत, यैकाग्नेः परिचर्य्यया तया सर्वेषां यज्ञोपवीतोदकाचमने नित्ये कर्मोपयतामिति। आर्षेया-णि, दीक्षणीयायान्ताच्चर्यसामनीगायेत्यमूषित्येते। धर्मशास्त्रं, आर्षेयोनूचानः साधुचरण इति। शिक्षा, अद्भुतमविलम्बित-मिति। व्याकरणं, एतान्येवोहस्थानानि, अश्वाश्वतरेष्वश्व-तरीषु च यथार्थमूहेदिति। निरुक्तं, नैतन्ध्वानामार्माः सरस्वत्यान्तेषामेकोव्यर्णः। ज्योतिषं, उदगयन पूर्वपक्ष पुण्या-हसन्निपाते यज्ञकालोनादेश इति। छन्दोविचितिः, यथा

सवनं छन्दांस्यादिशन् गायत्र्यैवानुसवनमाप्यायनमिति। लोकः, औदुम्बरीमुच्छ्रयिष्यन्, अन्वाहार्य्यपचनं प्रति यमुनामवभृथमभ्यवयन्तीति। अधिकारार्थः, खल्वपि लोके तावच्छुचये शीलवते सम्यक्कृतपादोपसङ्ग्रहाय अथास्मै शास्त्रमारभ्यते। तथा वेदे, गवादीनधिकृत्याह, अथैष गौरथैष आयुरथैषोपचितिरिति। एवमाद्यथशब्दस्यार्थसम्बन्धा लोकवेदप्रत्ययाः। एवं ज्योतिष्टोमादीनां सहस्रसम्वत्सरान्तानां विधिमधिकृत्याहाथेति। एवमर्थोऽथशब्द इति सिद्धं।

विध्यव्यपदेशे सर्वक्रत्वधिकारः। विधेः अव्यपदेश इति षष्ठीसमासः क्रियते। विधीयते विधानं वेति विधिः। महन्मेवोच इति करिष्यन् प्रतिमन्त्रयेतेत्येतदादि विधिर्वच्यते। तदाद्यस्य विधेरधिकारोद्रष्टव्यः। अव्यपदेशे, नव्यपदेशोव्यपदेशः। अनधिकृत्य कञ्चित्क्रतुमुपदिश्यमानोविधिः सर्वत्र भवति। व्यपदेशः, अग्निष्टुत्स्वाग्नेयोनिगद इत्येतदादि विधिर्व्यपदेशविषय एव भवति। सर्वक्रतुषु सर्वशब्दो निरवशेषवाची, क्रमेण सर्वक्रतूनामधिकारः। अधिकारोव्यापारः प्रसङ्ग इत्येकोऽर्थः। एष पदार्थः। अथ समुदायार्थः। एतदुक्तं भवति, अनधिकृत्य कञ्चित्क्रतुं विधिरुपदिश्यमानः सर्वत्र भवतीति।

एवञ्चेद्विधिरिति शक्यमवक्तुं, कस्मात्, निर्देशतः सिद्धेः। महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेतेत्येतदादिर्निर्दिश्यत एव विधिः। अव्यपदेश इत्येतदपि न वक्तव्यं, कस्मात्, सामान्यविशेषाभ्यां विधयो भवन्ति। तत्र सामान्योविधिरौत्सर्गिकः सर्वत्र

भवति, अतस्तस्य विशेषोऽपवादः। तत्रापवादेनाविशेषो बाधिष्यते, तस्माच्छक्यमवक्तुं। सर्वक्रत्वधिकार इत्यत्रापि सर्वग्रहणं शक्यमवक्तुं, ऋतेपि सर्वग्रहणात्प्रसक्तमिदमन्यत्र विशेषग्रहणात्। अधिकारशब्दोप्यतिरिच्यत एव, कस्मात्, उक्तमधिकारार्थत्वमथशब्दस्येति, सर्वक्रतूनधिकृत्याथशब्दः प्रवर्त्तते शास्त्रादाविति। अतः सर्वमिदं सूत्रं नारब्धव्यं। अथारभ्यते प्रयोजनं व्यक्तव्यं। नानारब्धव्यं, आरब्धव्यमेव, कस्मात्, अनारम्भे विधिर्न सिध्येत। तत्र यत्तावदुच्यते विधिग्रहणं न कर्त्तव्यमित्यत्र ब्रूमः। कर्त्तव्यमेव। किमर्थं, शेषविध्युपसङ्ग्रहार्थं, येपि विधयोन परामृश्यन्ते सूत्रकारेण तेषामपि 'प्रसङ्गः स्यादिति, विधिग्रहणन्तावत्प्रातःसवने सवनमुखीयेष्वाहूतेषूपहवमिच्छते लोकद्वारीयोपाकरणादि सिध्यर्थं। अव्यपदेश इत्येतदपि न वक्तव्यमित्यत्र ब्रूमः, अव्यपदेशग्रहणं विकल्प समुच्चयप्रत्याम्नायप्रसङ्गप्रतिषेधार्थं, एतेषामस्मिन्नेव शास्त्रे दर्शनात्। विकल्पस्तावत् दृश्यते, अभिप्रयायमभिषुण्वन्त्यभिक्रान्ते समानन्नाभिषुण्वन्ति प्रतिष्ठित्य इति सविकल्पः स्यादिति। तथा रथन्तरे वागोङ्कारयोः समुच्चयदर्शनात्, समुच्चयस्तु नानार्थत्वादिति। तथा प्रत्याम्नायोपि दृश्यते, सुत्यायां यज्ञसारथ्यहरहः सत्रे सत्रस्पर्द्धोति। तदेतेषां प्रसङ्गोमाभूदित्यत आह अव्यपदेश इति। यदुच्यते सर्वग्रहणं न कर्त्तव्यमित्यत्र ब्रूमः, यदि ह्ययं सर्वसब्दं न कुर्यात्तथापि सति ये ताण्डके परिपठिता ज्योतिष्टोमादयः सहस्रसम्वत्सरान्तास्तेषामेवाधिकारो गम्येत। सोयमाचार्यः सर्वशब्दं करोति।

येपि शाखान्तरे दृष्टाः एकाहाहीनसत्रेषु भूः सर्वमेधचतुर्थसार-स्वत्यादयस्तेषामेवाधिकारः स्यादिति। यदुच्यते अधिकारग्रहणं न कर्त्तव्यमित्यत्र ब्रूमः, अधिकारग्रहणं नियमार्थं। कथं, अयमधिकार आतिदेशिकान् सर्वान् अधिकारान् बाधित्वा आसूत्रसमाप्तेः स्यादिति। तस्माद्यदुक्तमारब्धव्यं सूत्रमिति तद्युक्तं॥१॥

एवं सिद्धे सर्वाधिकारे वक्ष्यत्याचार्यः, महन्मेवोच इति करिष्यन् प्रतिमन्त्रयेतेति, तत्रायं संशयः किमियतैव प्रतिमन्त्रणं क्रियतां अथ कृत्स्नेन मन्त्रेणेति। एतस्मिन् संशये सत्याहाचार्यः,

## मन्त्रविधिश्चादिग्रहणेन* ॥ २॥

तत्र मन्त्रशब्दः प्रतीतशब्दार्थः कर्तृपदार्थको महन्मेवोचादिषु यजुःषु वर्त्तते। विधीयते विधानं वेति विधिः। आदिग्रहणेन आदीयतेऽर्थोऽनेनेति आदिः। अयं सूत्रार्थः आदिगृहीतोमन्त्रः कृत्स्नः प्रयोक्तव्य इति। अत्रोच्यते, यद्येवमर्थः, सूत्रारम्भो न कर्त्तव्यस्तर्हि, ऋतेपि एतस्मादवगम्येत एतत्, आदिग्रहीतो मन्त्रः कृत्स्नः प्रयोक्तव्य इति, परिपठितानामादिगृहीतोमन्त्रः प्रयोक्तव्य इति। ननु सिद्धं गृह्यप्रामाण्यादेवैतदाम्नायार्थत्त्वात्, पदार्थाभिसम्बन्धाच्छेषविशेषविधिः तद्विषय इति चेत्, स्थालीपुलाकवत्। अन्यत्र यावद्यजुर्ग्रहणादुत्तरसूत्रारम्भाच, गृह्यप्रामाण्यात्तावन्मन्त्रान्तमव्यक्तं परस्यादिग्रहणेन विद्यादिति, आम्नायार्थत्वादिति, यदि ह्यादिग्रहीतोमन्त्रः कृत्स्नो न प्रयु-

* द्राह्यायणोऽप्येवमेव सूचितवान्।

ष्वेताम्नायोऽनर्थकः स्यात्। सार्थकेन चाम्नायेन भवितव्यं। अतश्च गम्यते कृत्स्नमन्त्रप्रसङ्ग इति। पदार्थाभिसम्बन्धादवगम्यते कृत्स्नमन्त्रप्रयोग इति। इह पदानां पारम्पर्येणार्थोप्यभिसम्बन्धः, तन्मावत्वादिवत्। शेषविशेषविधेः शेषे यस्माद्विशेषविधिरागच्छति। सत्र एव ग्रहस्य भक्षये सुरेन्द्रं१ सह दत्युदस्य हरिवदहरिवासु चेत्सुवीरन्निति, सति कृत्स्नमन्त्रप्रयोगे एकदेशोद्धारः सम्भवति। शेषविशेषविधिस्तद्विषय एवेति, स्थालीपुलाकवत्, यथैकेनौदनसिक्थेन कृत्स्ना स्थाली परीक्ष्या खिन्ना नखिन्नेति। एकदेशेन पुलाकस्थानीयेन स्थाली स्थानीयोग्रन्थः कृत्स्नः परिच्छिद्यत इति। अन्यत्र यावद्यजुर्ग्रहणाद्यावद्यजुरनादिष्टान्तान् मन्त्रानिति। यावद् यजति समर्थन्तावत् प्रयोक्तव्यमिति। अर्थवादोद्धारं विदधत्त्वं कृत्स्नमन्त्रप्रकरणप्रसङ्गं ज्ञापयति। उत्तरसूत्रारम्भाच्च मन्यामहे कृत्स्नमन्त्रप्रकरण प्रसङ्ग इति। उत्तरादिः पूर्वान्तलक्षणमिति, उत्तरस्य मन्त्रस्यादिना पूर्वस्य मन्त्रस्यान्तो लक्ष्यते, सति च कृत्स्नमन्त्रप्रयोगे तल्लक्षणं सम्भवति। तदेवं सिद्धे कृत्स्नमन्त्र प्रयोगे यदुच्यते मन्त्रविधिश्चादिग्रहणेनेत्येतदनर्थकं, कस्मात्सूत्रारम्भ, अथारभ्यते प्रयोजनं वक्तव्यं, यदुच्यते सूत्रन्नारब्धव्यमारब्धव्यमेवेत्यत्र ब्रूमः, कस्मात् सूत्रारम्भः अस्य विधेरप्रसिद्धेः। यत्तावदुच्यते गृह्यप्रामाण्यान्नारब्धव्यमित्यत्र ब्रूमः। तत्राप्येष एव विधिः कृत्स्नमन्त्रप्रयोगस्य। यदुक्तं आम्नायार्थवत्त्वादिति पर्कादिवदेतद्द्रष्टव्यं। यथा पर्कादेः सिमान्तस्य सामसमाम्नायस्य गवादिषु सहस्रसम्वत्सरान्तेषु न

सर्वस्य प्रयोगोदृष्टः। न च तावता तस्याम्नानमनर्थकं भवति पदार्थाभिसम्बन्धादिति यदुक्तमिति तत्र ब्रूमः। न ह्येकस्मात् पदार्थाभिसम्बन्धान्मन्त्रप्रयोगो भवति, रूपसम्पन्ना अपि हि श्रुत्या विधीयन्ते, तं प्रोद्दिद्वानस्यत्योसीतिवत्, दुर्विज्ञानत्वाच्च मन्त्राणां न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वेति। शेषविशेषविधिरिति यदुच्यते, तत्र ब्रूमः। शेषविशेषविधिस्तद्विषयोपि गम्यते। स्थाली पुलाकवत् तद्विषय इति यदुक्तं, अनैकान्तिकोयं दृष्टान्तः, व्यभिचारकत्वादिति, एकेनौदनसिक्थेन स्थाली न कृत्स्ना परीक्ष्यते, पाकवैषम्यादेव व्यभिचारित्वाददृष्टान्तः। अन्यत्र यावद्यजुर्ग्रहणादिति यदुक्तं, अनेन वचनेन प्रसक्ते कृत्स्नमन्त्रप्रयोगे अयजति समर्थस्योद्धारोविधीयते, यदप्युक्तमुत्तरसूत्रारम्भादित्येतदपि अनेनैव प्रत्युक्तं। एवमेतानि सूत्रानारम्भकारणानि प्रत्युक्तानि। तत्र यदुक्तमारब्धव्यं सूत्रमिति तद्युक्तं।

मन्त्रविधिश्चादिग्रहणेन। अयमर्थः, आदि प्रदिष्टोमन्त्रः कृत्स्नः प्रयोक्तव्य इति। अथ विधिग्रहणं किमर्थमिति चेत्, अधिकृत एव विधिर्विध्यव्यपदेश इति। अत्रोच्यते, विधिग्रहणेन तद्या एतत्सुब्रह्मण्यामाहूय यजमानं वाचयतीति एवं त्रिराह्वयेति विध्यादि गृह्यते। अथ चशब्दः किमर्थमिति अर्धादि च विधिर्भवति इदमन्नमयं रस इमा गावः सहश्रियेति। अपर आह, मन्त्रविधिश्चादिग्रहणेनेति यथा यजुःसमाम्नाये मन्त्रः पठितः तथा प्रयुज्यते। सम्मार्जने संमृजन्त्वित्यस्य पुनन्त्वित्यनेन प्रत्याम्ना-

योमा भूदेरवदिति, मह्यन्तेजसे ब्रह्मवर्चसायेति च ममायुष इत्यस्य च प्रत्याम्नायो माभूदित्यत आदिग्रहणेनेत्याह। अथ वा च शब्दः समुच्चयार्थः। आदिग्रहणेनाव्यपदेश इति वर्त्तते अवदृष्ट-मत्वादिवत्। एवमुक्तार्थं सूत्रं॥ २॥

एवं मन्त्रविधिस्त्वादिग्रहणेनेति सिद्धे कृत्स्नमन्त्रप्रयोगे अथ मन्त्रान्तः कथं विज्ञातव्य इत्यत्रोच्यते।

## उत्तरादिः पूर्वान्तलक्षणं* ॥ ३ ॥

उत्तरस्य मन्त्रस्यादिना पूर्वस्य मन्त्रस्यान्तोलक्ष्यते, तल्लक्षणं उत्तरादिः पूर्वान्त इति। सिद्धे लक्षणग्रहणं किमर्थमिति चेत्, अत्रोच्यते। यदि ह्ययं लक्षणग्रहणं न कुर्यादुत्तरस्य मन्त्रस्यादिः पूर्वस्य मन्त्रस्यान्तः स्यात्, एवं पूर्वस्य मन्त्रस्यान्तस्य उत्तरस्य मन्त्रस्य चादेः संसर्गः क्रियेत, एवं मा भूदित्यत आह लक्ष-णमिति॥ ३ ॥

इह वृतप्रतिमन्त्रणादीनि कर्माण्युपदेक्ष्यन्ते एकं कर्त्तारमधि-कृत्य, अविशेषचोदिताश्च त्रय उद्गातारः। यक्ष्वित्याऊर्वाचान्यानृ-त्विजो वृणते कस्मादुद्गातारोवृता आर्त्विज्यं कुर्वन्तीति। तत्रेदं संशेते अविशेषचोदितानां सर्वेषां प्राप्तौ कस्येमानि भवन्ति, अत आह आचार्यः।

## एकश्रुतिविधानान्मन्त्रान् कर्माणि चोद्गातैव कुर्य्या-दनादेशे* ॥ ४ ॥

---

* द्राह्यायणोप्येवमेव।

एकवचनश्रुत्या ये विधीयन्ते, त एकश्रुतिविधानाः मद्वन्मे-वोच इति करिष्यन् प्रतिमन्त्रयेतेत्येवमाद्या मन्त्राः। कर्माणि च पृथक्सावित्रोपादैर्मधुपर्कस्य पिबेदित्येवमादीनि उद्गातैव कुर्यादनादेश इति, आदेशादन्यत्रानादेशे। आदेशः, प्रस्तोता हविर्धानं गच्छेत् मध्यन्दिने ऊतआदित्यग्रहे प्रतिहर्त्ता भवति। अथ वा एकश्रुतिविधानाद्धेतोः उद्गातैवोक्तः, एकस्य श्रुतौ विधानं उद्गाता सामवेदेनेति। अथैवशब्दः किमर्थमिति चेत्, अवधारणार्थः। सामान्यत्वादुद्गातृशब्दस्य यस्यैवानन्यशब्द संयोगः स एव मुख्यः। अनादेशग्रहणस्य प्रयोजनमुक्तं प्रथमसूत्रएव ॥ ४ ॥

उक्तमुत्तरादिः पूर्वान्तलक्षणमिति, एतल्लक्षणं महदादीनां यजुषां उत्क्रान्तिरसीति पर्यन्तानां येषु पुनरिदं लक्षणं नं सम्भवति, तामुच्छ्रयतीत्येवमादिवत्, तेषां कः प्रयोगः इत्यत्राह।

## यावद्यजुरनादिष्टान्तान् मन्त्रान्* ॥ ५ ॥

येषां मन्त्राणामन्तोनादिश्यते तान् एव यजुः प्रतीयात् तेषु यावदेव यजति समर्थन्तावदेव प्रयोक्तव्यमिति। येर्थवादा मध्ये पठितास्तेषामुद्धार इति ॥ ५ ॥

उक्तं मन्त्रविधिश्चादिग्रहणेनेति, तत्रोक्तं महदादिषु यजुःषु मन्त्रशब्दोस्य वर्त्तत इति। अथ ऋक्साम्नां को विधिरित्यत्राह।

---

* द्राह्यायणोप्येवं। मन्त्रादिति का० पु० पाठः।

c 2

## ऋचश्चादिग्रहणेन* ॥ ६ ॥

समाम्नाये या ऋक् तस्या ऋचः आदिग्रहणेन विधिर्भवति। अवधूय पवित्रमुदग्दशमवाङ्नाभि वितनुयुः पवित्रं त इति। साम्नश्चेति च शब्दः, साम्नश्चादिग्रहणेन विधिर्भवति, अध्वर्युप्रेषितस्त्यग्नायिरिति गायेदित्यादिवत्। आदिनेति सिद्धे ग्रहणं किमर्थमिति चेत्, उच्यते। आदिना च ग्रहणेन चेत्येवमर्थं ग्रहणं अग्निष्टयतीत्यवमृथसामद्रतिवत्॥ ६ ॥

इति परिभाषा।

उक्तं कर्माण्युद्गातैव कुर्यादनादेशे, तत्रोद्गातेत्युक्ते किं लक्षणं पुनरुद्गातारं कुर्यादित्युच्यते। तदुद्गातृलक्षणं विवक्षुराचार्यः साधारणत्वादृत्विग्गुणानां सर्वर्त्विजोऽधिकृत्य लक्षणमारभते।

## ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्म्यन्यूनाङ्गोऽनतिरिक्ताङ्गो द्वयसतश्चानतिकृष्णोऽनतिश्वेतः* ॥ ७ ॥

ऋत्विगिति जातिशब्देन। ऋत्विक्, आर्षेयः, अनूचानः, साधुचरणः, वाग्मी, अन्यूनाङ्गः, अनतिरिक्ताङ्गः, द्वयसतश्च, अनतिकृष्णः, अनतिश्वेतः, दशपदं सूत्रं। अथेदानीमर्थोवच्यते। ऋत्विक्, ऋतौ यजतीति ऋत्विक्, प्रजापतिरकामयत बहुःस्यां प्रजायेयेति स आत्मन् वृत्त्यमपश्यत्तत ऋत्विजोऽसृजत यदृच्छासृजत तदृत्विजामृत्विक्त्वं। ऋत्विक् कस्मादीरिणः, ऋग्यष्टा भवतीति

---

* द्राह्यायणोऽप्येवं।

शाकपूणिः, ऋतुयाजो भवतीति नैरुक्ताः। आर्षेयः, ऋषेरपत्यमार्षेयः, ऋषिर्दर्शनात् स्तोमान्ददर्शेत्यौपमन्यवः, तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयं लभ्यानर्ष तदृषीणामृषित्वमिति विज्ञायते, आदशमात् पुरुषादव्यवच्छिन्नं आर्षं यस्य स आर्षेयः। अनूचानः, अनूक्तवाननूचानः शिष्येभ्योविद्यासम्प्रदानं यः कृतवान् सोऽनूचानः। साधुचरणः, साध्विति प्रशंसा, प्रशस्तकर्मेत्यर्थः, बहु ब्राह्मणकर्मस्ववस्थितः। वाग्मी, वक्तुं समर्थः, अथ वा संस्कृतवाक् वाग्मी, योहि संस्कृतां वाचमुच्चारयति स वाग्मी, कः पुनर्वाचः संस्कारः, शब्दार्थन्यायेभ्योऽवगमः, यस्त्वेवं लक्षणां वाचमुच्चारयति स वाग्मी, न यो बहुतरं वचनमनर्थकं भाषते तद्धि वाक्छलायालमित्युच्यते, योहि बहुभाषणः स न वाग्मी वाचालो वाचाट इत्युच्यते, वाचोऽग्मिन्यालजारचौ बहुभाषिणीति, सर्वथा यः प्रतिवचनसमर्थः स वाग्मी, योहि पृष्टः सन् न्यायेन प्रतिवचनं प्रददाति, स वाग्मी, मतिद्वैधे उत्पन्ने संशयच्छेत्ता, उदाहरणं चात्र कौषीतकिनः, कस्मात्कौषीतकीनां न कश्चनातीव जिहीते यज्ञावकीर्णाद्धीत्यप्रतिवचनदानात्। अन्यूनाङ्गः, ऊनमेव न्यूनं न न्यूनाङ्गः, स अन्यूनाङ्गः। अनतिरिक्ताङ्गः, अङ्गानां चातिरिक्तता पुरुषलक्षणे सिद्धा, तत्र चोक्तं, ज्योतिषं पूर्वप्रकृतमिति, तस्य चाङ्गं पुरुषलक्षणं, चतुःषष्ट्यङ्गत्वात्। द्वयसतश्च, प्रमाणतश्च अन्यूनः, अनतिरिक्तः, प्रमाणे प्रमाणे द्वयं द्वयं समं यस्य स द्वयसतः। अन्येषां द्वे सतश्चेति पाठः। तेषां कारिकयार्थो वर्ण्यते, अधश्चोर्द्धं च नाभेस्तु समोयस्मात् प्रमाणतः। पादाङ्गुष्ठा

कृविष्टश्वः स वै देमत उच्यते इति। अनतिकृष्णः, न अतिकृष्णः अनतिकृष्णः। अनतिश्वेतः, न अतिश्वेतः अनतिश्वेतः। अपरे वयसि निपातयन्ति, कृष्णश्वेतशब्दो नातिबालो नातिवृद्ध इति एवमुक्तार्थं सूत्रं ॥ ७ ॥

ऋत्विजां लक्षणमुक्तं, अथ याज्यः किं लक्षणः स्यादिति अत आह।

याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यातः* ॥ ८ ॥

आर्षेयः अनूचानः साधुचरण इति। अथ वा याज्यश्च एवं लक्षणः यादृग्लक्षणाऋत्विजः। प्रथमैर्वा त्रिभिर्गुणैर्व्याख्यातः। लुप्तविभाषं सूत्रं। गुणग्रहणं क्षत्रियवैश्ययोर्यथासम्भवं गुणा ग्राह्याः॥ ८ ॥

सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत* ॥ ९ ॥

साम्प्रतं विधिर्विवक्षितः, सोमं प्रब्रूते, सोमप्रवाकः, तमकरिष्यन् कर्म नमः सोमाय राज्ञ इत्येतद्यजुरुक्त्वा प्रत्याख्यानं कुर्यात् किञ्चिदेव व्याक्षेपं कृत्वा अपरुषं प्रत्याचक्षीत। अथ करिष्यत एव, तावद्विधौ वक्तव्ये कस्मादकरिष्यतः पूर्वमुच्यते प्रत्याख्यानमात्रस्य वक्तव्यत्वादकरिष्यतः पूर्वमुक्तं, करिष्यतो हि कृतप्रतिमन्त्रणादिः समिदाधानाहवनीयोपस्थानान्तोविधिर्वक्तव्यः स उच्यते ॥ ९ ॥

अकरिष्यतोविधिरुक्तः, अथ करिष्यतोविधिं विवक्षुराह।

---

* द्राह्यायणेप्येवं।

**महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेत* ॥ १० ॥**

महन्मे वोचइत्यनेन यजुषा करिष्यन् प्रतिमन्त्रणं कुर्यात् ॥ १० ॥

**तन्न जह्यादप्रोक्तेऽपि करिष्यामीति विदित्वा* ॥ ११ ॥**

तत् कृतप्रतिमन्त्रणं यजुः न जह्यात् नोत्सृजेत् अप्रोक्तेऽपि सोमप्रवाकेणेति करिष्यामीति विज्ञाय। कोऽस्य विषयः सा-ध्यकाः† ॥ ११ ॥

अथ कृतप्रतिमन्त्रणं कृत्वा अनन्तरं सोमप्रवाके किं प्रतिपत्त-व्यमित्यत्राह ।

**आवसथः ससोमप्रवाकाय लवणमन्नन्दध्नाहारयेत्* ॥ १२ ॥**

आवसन्ति तमित्यावसथः, सोमं प्रब्रूते सोमप्रवाकः, तस्मै सोमप्रवाकाय तादर्थ्ये चतुर्थी। लवणमन्नं लवणेन सम्पृक्तमन्नं लवणमन्नन्तत् दध्ना सह हारयेत् भोजयेत्, एवं सूत्रार्थः। आ-वसथश्च सोमप्रवाकाय कर्त्तव्यः। तत्रैव चास्य भोजनन्देय-मिति ॥ १२ ॥

**प्रहिणुयात् प्रस्तोतृसुब्रह्मण्यौ पुरस्तात् कर्म्मभ्यः* ॥ १३ ॥**

सोमप्रवाकायान्नं हारयित्वाथानन्तरं प्रहिणुयात् प्रस्तो-तृसुब्रह्मण्यौ पुरस्तात् कर्मभ्यः, प्रहिणुयात् प्रेषयेदित्यर्थः।

---

* द्राह्यायणेऽप्येवं। † असमीचीनः पाठः किन्तु पुस्तकत्रयेऽपि समानत्वात् तादृश एव रक्षितः।

क्लृविष्टम्यः स वै देशत उच्यते इति। अनतिकृष्णः, न अति-कृष्णः अनतिकृष्णः। अनतिश्वेतः, न अतिश्वेतः अनतिश्वेतः। अपरे वयसि निपातयन्ति, कृष्णश्वेतशब्दो नातिबालो नातिवृद्ध इति एवमुक्तार्थं सूत्रं ॥ ७ ॥

ऋत्विजां लक्षणमुक्तं, अथ याज्यः किं लक्षणः स्यादिति अत-आह।

**याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यातः* ॥ ८ ॥**

आर्षेयः अनूचानः साधुचरण इति। अथ वा याज्यश्च एवं लक्षणः यादृग्लक्षणाऋत्विजः। प्रथमैर्वा त्रिभिर्गुणैर्व्याख्यातः। लुप्तविभाषं सूत्रं। गुणग्रहणं क्षत्रियवैश्ययोर्यथासम्भवं गुणा ग्राह्याः॥ ८ ॥

**सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत* ॥ ९ ॥**

साम्प्रतं विधिर्विवक्षितः, सोमं प्रब्रूते, सोमप्रवाकः, तम-करिष्यन् कर्म नमः सोमाय राज्ञ इत्येतद्यजुरुक्त्वा प्रत्याख्यानं कु-र्यात् किञ्चिदेव व्याक्षेपं कृत्वा अपरुषं प्रत्याचक्षीत। अथ करिष्यत एव, तावद्विधौ वक्तव्ये कस्मादकरिष्यतः पूर्वमुच्यते प्रत्याख्यानमात्रस्य वक्तव्यत्वादकरिष्यतः पूर्वमुक्तं, करिष्यतो हि वृतप्रतिमन्त्रणादिः समिदाधानाहवनीयोपस्थानान्तोविधिर्वक्तव्यः स उच्यते ॥ ९ ॥

अकरिष्यतोविधिरुक्तः, अथ करिष्यतोविधिं विवक्षुराह।

---

* द्राह्यायणोऽप्येवं।

महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेत* ॥ १० ॥

महन्मे वोचइत्यनेन यजुषा करिष्यन् प्रतिमन्त्रणं कुर्यात् ॥ १० ॥

तन्न जह्यादप्रोक्तेऽपि करिष्यामीति विदित्वा* ॥ ११ ॥

तत् कृतप्रतिमन्त्रणं यजुः न जह्यात् नोत्सृजेत् अप्रोक्तेऽपि सोमप्रवाकेणेति करिष्यामीति विज्ञाय। कोऽस्य विषयः सा-ध्यकाः† ॥ ११ ॥

अथ कृतप्रतिमन्त्रणं कृत्वा अनन्तरं सोमप्रवाके किं प्रतिपत्त-व्यमित्यत्राह।

आवसथः ससोमप्रवाकाय लवणमन्नन्दध्नाहारयेत्* ॥ १२ ॥

आवसन्ति तमित्यावसथः, सोमं प्रब्रूते सोमप्रवाकः, तस्मै सोमप्रवाकाय तादर्थ्ये चतुर्थी। लवणमन्नं लवणेन सम्पृक्तमन्नं लवणमन्नन्तत् दध्ना सह हारयेत् भोजयेत्, एवं सूत्रार्थः। आ-वसथश्च सोमप्रवाकाय कर्त्तव्यः। तत्रैव चास्य भोजनन्नेय-मिति ॥ १२ ॥

प्रहिणुयात् प्रस्तोतृसुब्रह्मण्यौ पुरस्तात् कर्म्मभ्यः* ॥ १३ ॥

सोमप्रवाकायान्नं हारयित्वायानन्तरं प्रहिणुयात् प्रस्तो-तृसुब्रह्मण्यौ पुरस्तात् कर्म्मभ्यः, प्रहिणुयात् प्रेषयेदित्यर्थः।

---

* द्राह्यायणोऽप्येवं। † असमीचीनः पाठः किन्तु पुस्तकत्रयेऽपि समानत्वात् तादृश एव रक्षितः।

प्रस्तोता च सुब्रह्मण्यश्च प्रस्तोतृसुब्रह्मण्यौ पूर्वं कर्मण आरम्भात् अथ वा तादर्थ्ये चतुर्थी यानि पुरस्तात् कर्माणि तान्यंसामादीनि तदर्थं ॥ १३ ॥

उक्तं प्रह्विण्यात् प्रस्तोतृसुब्रह्मण्याविति। तयोः कर्मार्थं प्रागमनं। कर्माणि च देवयजने क्रियते। अत आचार्यो देवयजनलक्षणं विवक्षुराह।

प्रागुदक्प्रवणन्देवयजनं लोमशमवृक्षं समं* ॥ १४ ॥

प्रागुदक्प्रवणं देवजयनं। आपः प्राच्य उदीच्यो वा यत्र गच्छन्ति। अथ वा प्रागुदीचीदिशं यत्रापः प्रवर्त्तन्ते तत् प्रागुदक्प्रवणं चात्रालसारिण्योयत्रापः स्युरित्यर्थः। देवयजनं देवा अस्मिन्निज्यन्त इति देवयजनं। लोमशं, अतिलोमशं तृणोऽधि बहुलमित्यर्थः। अवृक्षन्नास्मिन् वृक्षाः सन्त्यवृक्षं। समं, यत्र नविषमाभूमिस्तत्समं। एवं लक्षणं देवयजनं स्यात्॥ १४ ॥

किञ्च।

पुरस्ताच्चास्यापः स्युः* ॥ १५ ॥

पुरस्तादिति दिङ्नियमः क्रियते। पूर्वप्रदेशे देवयजनस्य आपः स्युरिति च शब्दः क्रियते। पुरस्तान्नियमः अन्यासु च दिक्षु विप्रतिषेध इति। अस्येति समीपलक्षणा षष्ठी, स्युरिति स्वभावतः स्युर्न कृत्रिमा इति ॥ १५ ॥

---

* द्राह्यायणोप्येवं।

उक्तं च स्वभावतः स्युरिति। अथ पुनरुपपत्तिर्न स्यात् ततः किं स्यात्। अत्रोच्यते।

## तदभावे महावृक्ष उदपानोमहापथो वा* ॥ १६ ॥

तदिति पूर्वनिर्द्देशः, तासामभावः, भवनं भावः, न भावः अभावः, अपामभावे महावृक्षादयः स्युः। महांश्चासौ वृक्षश्च महावृक्षः आन्महतः समानाधिकरणजातीययोरित्याकारः। अपरे वर्णयन्ति उदुम्बर इति। प्राजापत्य उदुम्बरः प्रजापतिर्वाव महानिति पूर्व एव तु साधीयान्। महतः समानाधिकरण इति। उदपानः कूपः। देशान्तरगामी पन्था महापथः॥ १६॥

## न चास्य स्थलतरमदूरे स्यात्* ॥ १७॥

एवं लक्षणं चैव स्यात्, न चास्य देवयजनस्य स्थलतरं समीपे स्यात् आतिशायनिकस्तरः प्रत्ययो देवयजनमपि न स्थले भवतीत्येतद्दर्शयति। स्थलतरः पर्वतः, अस्येति सर्वेषु कल्पेषु स्यात् अनन्तरस्य विधिर्माभूदिति ॥ १७ ॥

## देवयजनमाचक्ष्व पुरस्तात्* ॥ १८॥

न चास्य स्थलतरमदूरे स्यादित्युक्तं। किञ्च देवयजनप्रमाणं चास्य पूर्वे प्रदेशे स्थितं न स्यात्॥ १८॥

---

* द्राह्यायणोप्येवं।

C

विपर्यस्याभिचरणीयेषु, स्थलादन्यद्देवयजनमात्राच्च* ॥ १९ ॥

उक्तमविशेषेण देवयजनलक्षणं। अथाभिचरणीयेषु विशेषविवक्षुराह। विपर्यस्याभिचरणीयेष्विति। यदिदं देवयजनलक्षणमुक्तं एतदभिचरणीयेषु विपर्यस्तं भवति। विपर्यासः प्रातिलोम्यं। किं सर्वमेव विपर्यस्तं नेत्युच्यते। किन्तर्हि, स्थलादन्यद्देवयजनमात्राच्च। विपर्यासेऽपि सति नैव स्थलतरमदूरे स्याद्देवयजनमात्रञ्च पुरस्तान्नैव स्यात् ॥ १९ ॥

स्वयं व्रजेत् क्रय उपवसथ्ये वा† ॥ २० ॥

उक्तं प्रदक्षिणयात्प्रस्तोतृसुब्रह्मण्यौ पुरस्तात् कर्मभ्य इति। अथ तस्य गमनकालः क इति। अत्रोच्यते। आत्मना गच्छेत् क्रये उपवसथ्ये पुनः स्वयं व्रजेदनाहूतोपि ॥ २० ॥

उदङ्ङेव तु गृहेभ्यः प्रथमं देवो देवमेत्विति† ॥ २१ ॥

अथ तस्य गमनक्रिया उच्यते। उदङ्ङेव तु गृहेभ्यः प्रथमं निष्क्रामेत्। देवो देवमेत्वित्यनेन यजुषा। अथैव शब्दः किमर्थं उच्यते। अन्यतोपि गन्तव्ये उदङ्ङेव तावत् प्रथमं प्रस्थानं कुर्यात्। अथ तुशब्दः किमर्थं उच्यते। अन्यतो द्वारेष्वेवं ॥ २१ ॥

---

* द्राह्यायणोऽप्येवं किन्तु तेनात्र सूत्रद्वयं कृतं। † द्राह्यायणोऽप्येवं।

दूरं व्रजित्वा विहाय दौष्कृत्यमिति* ॥ २२ ॥

दूरमध्वनोगत्वात्येवशिष्टे विहाय दौष्कृत्यमित्येतत् यजुर्जपेत्। विहाय दौष्कृत्यं व्रजामीत्यस्याध्याहारमपरे वर्णयन्ति। अपरे यावद्ग्रहणं कस्मादवचनात्॥ २२ ॥

बद्धानामासीति पन्थानमापद्य† ॥ २३ ॥

देवयजनगामी यः पन्था तमापद्य अनन्यगामिनं बद्धानामासीत्येतत् यजुर्जपेत् ॥ २३ ॥

उत्तरं वेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः पितरोभूरिति† ॥ २४ ॥

यस्योपवसथ्येह्नि आगमनं भवति स देवयजनमहावेदेरुत्तरमन्तमाक्रम्य दक्षिणमन्तमीक्षमाणः पितरोभूरित्येतद्यजुर्जपेत्। यस्य पुनः क्रयेह्नि आगमनं भवति स पत्नीसंशालायां वेदिमाक्रमते महावेदेरभावात् ॥ २४ ॥

यजुरन्तरयेन्वाहारन्धानञ्ज्यः* ॥ २५ ॥

यजुषामन्तरयेऽन्वाहारन्धानजप्योमन्यते । अन्तरयस्त्यागः, उत्सर्गः। अन्वाहरणमन्वाहारः अनुत्सर्ग इत्यर्थः। कः पुनर्विषयः। सान्निपातिकोविधिः। तत्रानुजपः अलोपार्थः ॥ २५ ॥

---

* द्राह्यायणाप्येवं।

† द्राह्यायणोप्येवं किन्तु तेन सूत्रद्वयेनैकसूत्रं कृतं।

c 2

## उपेक्षणं शाण्डिल्यः* ॥२६॥

उपेक्षणं वर्जनमकरणमित्यर्थः। एवं शाण्डिल्योमन्यते। कस्मात् निमित्तापायात्। अपर आह। पितरोभूरिति कृत्स्नं यजुः अन्तरितं समाम्नाये। त्रयोह्नु वै पितरः अवमा ऊर्वा काव्या इति। तस्यान्वाहारन्धानं जप्योमन्यते। कस्माद्लोपात्। उपेक्षणं वर्जनं शाण्डिल्यः कस्मादपाठात् ॥ २६ ॥ १ ॥

इति प्रथमस्य प्रथमा कण्डिका ॥

---

अथ द्वितीया कण्डिका।

उक्तं स्वयं व्रजेत् क्रय उपवसथ्येवेति। तत्र उदङ्ङ्ःव तु गृहेभ्यः प्रथममित्युद्गातृकर्म प्रकृतमेतदादि। तत्रोक्तमुत्तरं वेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः पितरो भूरित्येतद्यजुर्जपेदिति। अस्यानन्तरं मधुपर्कविधिं विवक्षितः। तं विवक्षुराह।

## पृथक् सावित्रीपादैर्मधुपर्कस्य पिबेत्* ॥ १ ॥

पृथक् नानेत्यर्थः। सावित्रीपादैः सविता देवता यस्याः सेयं सावित्री तस्याः पादैः पिबेत्। मधुना पृक्तन्दधिपयःकृतान्नं वा मधुपर्कः। दधनि पयसि वाथ चाकृतान्ने मधु दध्यान्मधुपर्कमेतदाहुः। दधिमधुशलिलेषु सक्तवः पृथगेवेति विहितास्त्रयस्तु मन्थाः। तस्य मधुपर्कस्य पिबेत् अस्येति अवयवलक्षणा षष्ठी।

---

* द्राह्यायणोऽप्येवं।

कथं पिबेद्यथा शेषः स्यादिति। ननु सावित्रीपादैरिति सिद्धे किं पृथक् ग्रहणमिति। उच्यते। उक्तं, सवितृदेवता सावित्रीति। एवं सर्वासां सवितृदेवतानां प्रसङ्गः प्राप्तः। अत आचार्यः पृथक्ग्रहणं करोति। यस्य ऋक्समाम्नाये पृथगाम्नानन्तयेति। ननु यद्येवमर्थं न तस्मान् मुख्यां अग्ने वेदेत्येतां सावित्रीमुत्सृज्य गौणीं गृह्णीयात्। तन्न, इयमेव मुख्या। कथं मुख्येति चेत्। उच्यते। अथोपसीदत्यभिधीहि भोः सावित्रीं मे भवाननुब्रवीत्विति। अस्मिन्नेतस्या एवानुवचनं। तस्या उत्तरा ऋक्समाम्नायाभिव्यक्तेश्च सावित्री चतुर्थी भवतीत्येतस्या एव श्रुतौ विधानं। तथा शाखान्तरीयायामथावशिष्टायां श्रुतौ एतामेव प्रतिजानते। तस्मात् पृथक्ग्रहणं नानार्थत्वादेवमुक्तं ॥ १ ॥

**तत्रैतदाहरन्ति विष्टरं पादप्रक्षालनमर्घ्यमाचमनीयं मधुपर्कमिति* ॥ २ ॥**

तत्र तस्मिन् मधुपर्कविधौ एतदानयन्ति। विष्टराद्याहरणकर्म कर्तव्यनियमार्थं बहुवचनं। दर्भासनं विष्टरः। पादप्रक्षालनार्थं उदकं पादप्रक्षालनं। अर्घार्थमुदकमर्घ्यं। आचमनार्थमुदकमाचमनीयं। मधुपर्क उक्तलक्षणः। अथ तत्र ग्रहणं किमर्थमिति चेत्। उच्यते, मधुमन्थोदमन्थयोर्मधुपर्ककल्पार्थं। ते च वक्ष्यन्ते। तत्र तत्रैतदाहरन्ति विष्टरादि ॥ २ ॥

---

* द्राह्यायणस्तु अर्हयिष्यन्त आहरन्ति विष्टरौ पाद्यमर्घ्यं इत्येव विशेषं सूत्रितवान्।

तस्य पिबेत्* ॥ ३ ॥

तस्य मधुपर्कस्य पिबेत् । कथं ॥ ३ ॥

इददन्नमयं रस इमा गावः सहश्रियेति तु पुरस्तादेकैकस्य* ॥ ४ ॥

सावित्रीपादस्येति शेषः । तुशब्दो विशेषणार्थः ॥ ४ ॥

वाग्वहु बहु मे भूयादिति प्रथमस्योपरिष्टात् प्राणोवै वाचो भूयान् बहुर्मे भूयो भूयादिति द्वितीयस्य मनो वाव सर्वं सर्वं मेभूयादिति तृतीयस्य* ॥ ५ ॥

सावित्रीपादस्योपरिष्टादिति वर्त्तते । प्रथमद्वितीयतृतीयग्रहणं चतुर्थनिषेधार्थं । तूष्णीं चतुर्थमिति प्राप्ते ॥ ५ ॥

सर्वे स्वाहाकारान्ताः* ॥ ६ ॥

सर्वे भक्षमन्त्राः स्वाहाकारान्ताः । स्वाहाकारान्ता इति बहुवचनात् सिद्धेः किमर्थं सर्वग्रहणमिति चेत् उच्यते । मधुमन्थादीनामपि भक्षमन्त्राः स्वाहाकारान्ताः स्युरित्येवमर्थं सर्वग्रहणं ॥ ६ ॥

रसोसि वानस्पत्यो रसं मयि धेहीति मधुमन्थस्य पिबेदिति गौतमो, वानस्पत्य इति प्रवचनं† ॥ ७ ॥

---

* एतानि द्राह्यायणीयेऽत्र न सन्ति ।

† द्राह्यायणेऽप्येवं किन्तु तेनैतेन सूत्रद्वयं कृतं ।

रसोसि वानस्पत्य इति । अनेन मन्त्रेण मधुमन्थस्य पिबेदिति गौतम आचार्य आह । यच्चोक्तं विष्टरादीनि द्रव्याण्येकैकशस्त्रिस्त्रिर्वेदयेरन्निति, तत्र मधुमन्थस्यावेदने प्राप्ते आह । वानस्पत्य इति प्रवचनमिति । वानस्पत्यो वानस्पत्य इत्यावेदनन्त्विः ॥ ७ ॥

तथा दधिमन्थोदमन्थयोः, पयस्योऽपयस्य इति तु रसादेशः* ॥ ८ ॥

यथा मधुमन्थस्य तथा दधिमन्थोदमन्थयोः पिबेत् । तेन प्रकारेणेत्यर्थः । अयं तु विशेषः । पयस्योपयस्य इति तु रसादेशः । वानस्पत्य इत्येतस्य स्थाने स्यातामित्यर्थः । रसोऽसि पयस्य रसोस्योपयस्यः, यथासङ्ख्यं ॥ ८ ॥

एते नैव प्रवचने कालिन्दः सारस्वत इति वा† ॥ ९ ॥

एते एव पूर्वोक्तप्रवचने दद्यात् । पयस्योपयस्य इति । कालिन्दः सारस्वत इति वा, याथासङ्ख्येन ॥ ९ ॥

शेषं ब्राह्मणाय दद्यात्† ॥ १० ॥

उक्तं मधुपर्कस्येत्यवयवलक्षणा षष्ठी क्रियते । तत्र पानमुक्तं । अथ शेषे का प्रतिपत्तिरिति । उच्यते । शेषं ब्राह्मणाय दद्यात् पुत्रादेः ॥ १० ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतं ।

† द्राह्यायणेऽप्येवं ।

## तदभावेऽद्भिः संप्रोक्ष्याब्राह्मणाय* ॥ ११ ॥

शूद्रवर्जं। उच्छिष्टयोग्ये पुत्रशिष्याभावेऽद्भिः संप्रोक्ष्य क्षत्रिय-वैश्ययोः ॥ ११ ॥

## कुरुतेति गवि प्रोक्तायां ब्रूयात्* ॥ १२ ॥

उक्तं आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात्। एवं गवि प्रोक्तायां कुरुतेति ब्रूयात् ॥ १२ ॥

## उत्सृजत गां तृणानि गौरत्त्विति वा† ॥ १३ ॥

कुरुतेति ब्रूयादेवं वा ॥ १३ ॥

## सर्वेषां यज्ञोपवीतोदकाचमने नित्ये कर्मोपयतां‡ ॥ ॥ १४ ॥

उद्गातृकर्मोक्तं। अथ सर्वेषां साधारणमुच्यते। सर्वेषामुद्गातॄणां यज्ञोपवीतञ्च उदकाचमनञ्च एते च नित्ये कर्म कुर्वतां एवं यज्ञोपवीती भवत्येवमाचान्तोदको भवतीति। यज्ञोपवीतञ्च उदकपूर्णञ्च कमण्डलुं। आचमन्ति तस्मादित्याचमनं। यज्ञोपवीतनित्यत्वे ब्रह्मचर्यं ज्ञापयति। अथ सर्वग्रहणं किमर्थं। उच्यते। सुब्रह्मण्यं चतुर्थानां ब्रह्मपञ्चमानां यजमानषष्ठानां सम्बन्धस्तदर्थं ग्रहणं ॥ १४ ॥

---

* द्राह्यायणोऽप्येवं।

† द्राह्यायणे विशेषोऽस्ति।

‡ द्राह्यायणोऽप्येवं किन्तु च्छेदविषये विशेषोऽस्ति।

**अव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैः* ॥ १५ ॥**

न व्यवायः अव्यवायः, न व्यावृत्तिः अव्यावृत्तिः, अन्तरागमनं व्यवायः, अनभिमुखता व्यावृत्तिः। केनाव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैः, कर्मोपयतामिति वर्त्तते ॥ १५ ॥

**प्राङ्मुखकरणञ्चानादेशे¶ ॥ १६ ॥**

प्राङ्मुखकरणमादेशादन्यत्र स्यात्, आदेशः प्रत्यङ्मुखस्तिष्ठंश्छिरसि गायत्रङ्गायेदिति। चशब्दः समुच्चयार्थः, अव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैरनादेश इति ॥ १६ ॥

**क्रीते राजनि सुब्रह्मण्य उत्तरेण सोमवहनं गत्वान्तरेणेषे शमीशाखां पलाशशाखां वा सपलाशां पाणौ कृत्वाऽवतिष्ठेत¶ ॥ १७ ॥**

उक्तं प्रहिणुयात् प्रस्तोतृसुब्रह्मण्यौ पुरस्तात्कर्मभ्य इति। तत्र सुब्रह्मण्यं कर्म विवक्षुरिदं सूत्रमारभते, क्रीते राजनि सुब्रह्मण्य इति। अथ कस्मात् कर्मभेदः क्रियते, प्रस्तोत्रीयं तावद्वक्तव्यं पूर्व्वं तार्क्ष्यसामादीनामित्यत्राह कृताकृतत्वात् तार्क्ष्यसामादीनां क्रमभेद इति। क्रीते राजनि क्रीते सोमे, सुब्रह्मण्य इति कर्तृनिर्द्देशः उत्तरेण सोमवहनं गत्वा उत्तरेणेति दिङ्नियमः, गत्वेति क्रियोपदेशः। अन्तरेणेषे सोमवहनेषयोरन्तराले शमीशाखां पलाशशाखां वा सपलाशां दक्षिणेन पाणिना गृहीत्वावतिष्ठेत ॥ १७ ॥

---

* द्राह्यायणोऽप्येवं, किन्तु तत्र छेदविषये विशेषोऽस्ति।

¶ द्राह्यायणोऽप्येवम्।

E

**अध्वर्युसम्प्रैषं सर्वत्राकाङ्क्षेत् सुब्रह्मण्यायाम्* ॥१८॥**

संप्रेषणं संप्रैषः तम् आकाङ्क्षेत् तावत्प्रतीक्षेत यावत् संप्रेषण-मिति सर्वत्र ग्रहणं सर्वासु सुब्रह्मण्यासु न केवलं शाकल्या-मिति ॥ १८ ॥

**रश्मी धारयंश्शाखया¶ प्रेष्येद्गावौ दक्षिणं पूर्व्वं ॥ १९ ॥**

रश्मी अभीषू प्रग्रहावित्यर्थः धारयन् सव्येन पाणिना शाखया दक्षिणेन पाणिना गृहीतया प्रस्थापयेत् गावौ सोमवहनयुक्तौ दक्षिणं पूर्वम्, दक्षिणस्यां धुरि यो युक्तस्तं पूर्व्वं पश्चादुत्तरमि-त्यर्थः ॥ १९ ॥

**सुब्रह्मण्योमिति त्रिराह्वयेत्प्राचि वर्त्तमाने† ॥ २० ॥**

प्राङ्मुखे वर्त्तमाने सुब्रह्मण्योमिति प्रणवं त्रिर्ब्रूयात्, वर्त्तति-र्गत्यर्थः ॥ २० ॥

**षट्कृत्वः प्रतीचि* ॥ २१ ॥**

प्रत्यङ्मुखे वर्त्तमाने षट्कृत्वः प्रणवं ब्रूयादिति वर्त्तते ॥ २१ ॥

**पूर्व्वेण पत्नीशालां विमुक्ते छदिषि शाखामवगुह्य तामेवैषामनूत्क्रम्य§ यथार्थं स्यात् ॥ २२ ॥**

---

* द्राह्यायणेऽप्येवम् ।

¶ प्रेष्येदिति द्राह्यायणः । तेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणे मध्यमया वाचेत्यधिकमस्ति ।

§ द्राह्यायणे किञ्चिदधिकमस्ति ।

पत्नीशालायाः पूर्वप्रदेशे विमुक्ते अर्द्धविमुक्ते सति छदिषि च्छादनकटे शाखाम् अवगुह्य अवलम्ब्य तामेवैषामनूत्क्रम्य अवतीर्य्य ततो यथार्थं स्यादिति कर्मणः समाप्तिं दर्शयति ॥ २२ ॥

दक्षिणमनड्वाहꣳ सुब्रह्मण्याय दद्यात्* ॥ २३ ॥

दक्षिणस्यां धुरि यो युक्तोऽनड्वान् तं सुब्रह्मण्याय दद्यात् यजमानः सामर्थ्यात् ॥ २३ ॥

उभाविति शाट्यायनकं विज्ञायते कर्मसंयोगात्* ॥२४॥

उभावप्यनड्वाहौ देयाविति शाट्यायनके श्रुतिः कर्मसंयोगात् उभाभ्यां हि कर्म कृतं हेतूपादानं क्रियते कर्मसंयोगादिति यस्य येन कर्मसंयोगः स तद्द्रव्यं लभतइत्यर्थः।

यस्मिन् कर्मणि यद्द्रव्यं यस्य सन्निहितं भवेत्।
तत्तस्यैव प्रदातव्यं होतुर्गोचपटो यथा॥ २४ ॥

इति प्रथमस्य द्वितीया कण्डिका।

---

अथ तृतीया कण्डिका।

आतिथ्यायाꣳ सꣳस्थितायां दक्षिणस्य द्वारबाहोः पुरस्तात्तिष्ठन्नन्तर्वेदिदेशेऽन्वारब्धे यजमाने पत्न्याञ्च सुब्र-

---

* द्राह्यायणे विशेषोऽस्ति।

ह्मण्योमिति त्रिरुक्त्वा निगदं ब्रूयादिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जारकौशिकब्राह्मणगौतमब्रुवाणेतावदहे सुत्यामिति यावदहे स्यात् * ॥ १ ॥

उक्ता शाकटी सुब्रह्मण्या सुब्रह्मण्योमिति त्रिराह्वयेत् प्राचि वर्तमाने षट्कृत्वः प्रतीचीति प्रणवमात्रक्रियोक्ता इदानीं तस्याः ¶काल-देशक्रियाविधयो विवक्षिताः, तान् विवक्षुराचार्य्य इदं सूत्रमारभते, आतिथ्यायां संस्थितायामिति। आतिथ्या इष्टिः तस्यां संस्थितायां समाप्तायामित्यर्थः दक्षिणस्य द्वारबाहोः पत्नीशालायाः पूर्वे प्रदेशे तिष्ठन्। कथं गम्यते पत्नीशालाया द्वारस्येति उच्यते, सम्बन्धादातिथ्यायां संस्थितायामिति पूर्वेण पत्नीशालायां तिष्ठन्नित्यूर्द्धता विधीयते। अन्तर्वेदिदेशे अकृतं वेदिकरणं भवत्यतो देशइत्याह। अन्वारब्धे यजमाने पत्न्याञ्च, अन्वारम्भणं स्पर्शनम्, सप्तमी क्रियते यस्य च भावेन भावलक्षणमिति समासः क्रमार्थः। सुब्रह्मण्योमिति त्रिः प्रणवमुक्त्वा निगदं ब्रूयात्। इन्द्रागच्छेत्येतदादिनिगदग्रहणं संव्यवहारार्थम् वक्ष्यत्यग्निष्टुत्स्वाग्नेयो निगद इति। एतावदहे सुत्यामिति यावदहे स्यादिति एतावदित्यत्र सुत्या निर्देश्या यावद्भिरहोभिः सुत्या, तावद्भिः परिगणनां कृत्वा निर्द्देशः कार्य्यः ॥ १ ॥

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

¶ कालभेदक्रियेति का० पु० तथा स० पु० पाठः।

अद्येति समानाह्नि* ॥ २ ॥

यस्मिन्नहनि सुत्या भवति तस्मिन्नहन्यद्येति ब्रूयात्, समानाहनीति किमर्थमद्येति सुत्यामिति सिद्धेः, उच्यते, कदाप्येकस्मिन्नहनि कृत्स्नं कर्म क्रियते, तस्मिन्नपि अद्य सुत्येत्येवं ब्रूयात्, कोऽस्य विषयः। साद्यस्काः ॥ २ ॥

देवा ब्राह्मण आगच्छतागच्छतागच्छतेति गौतमः* ॥३॥

सुत्यादेशानन्तरमेतद्ब्रूयात् इत्येवं गौतम आचार्य्य आह ॥ ३ ॥

आगच्छेति पूर्वं देवाह्वानाद्धानञ्जप्यः* ॥ ४ ॥

एवं धानञ्जप्य आचार्य्यो मन्यते ॥ ४ ॥

आगच्छ मघवन्नित्येके* ॥ ५ ॥

एके आचार्य्याः पूर्व्वं देवाह्वानान्मन्यन्ते ॥ ५ ॥

पूर्व्वयोः प्रणवयोर्विरमेत्¶ ॥ ६ ॥

अवस्यादित्यर्थः, विरामोऽवसानम् ॥ ६ ॥

मेने ब्रुवाणयोः† ॥ ७ ॥

एतयोश्च पदयोर्विरमेत् ॥ ७ ॥

---

* द्राह्यायणेऽप्येवम्।

¶ द्राह्यायणे प्रणवान्तयोरिति विशेषः।

† द्राह्यायणे ब्रुवाणेति चेति विशेषः।

षणे जारे चाग्नेय्याम्* ॥ ८ ॥

आग्नेय्यां सुब्रह्मण्यायां एतौ च विरामौ षणे जारे चेति ॥ ८ ॥

पृथग्यजते शब्देषु च¶ ॥ ९ ॥

विरमेदिति वर्तते पृथङ्नानेत्यर्थः, यजते शब्देषु चेति उक्ते किं पृथग्ग्रहणमिति चेत् उच्यते, पितृपितामहप्रपितामहशब्दानां च समासो माभूदिति ॥ ९ ॥

एवं त्रिः† ॥ १० ॥

अनेन प्रकारेण त्रिः क्रिया सुब्रह्मण्यायाः ॥ १० ॥

आहूय† ॥ ११ ॥

आहूयेति विधिर्गृह्यते, एवं त्रिराहूय यजमानं वाचयति ॥११॥

पत्नीयजमानावुपह्वमिच्छमानौ सुब्रह्मण्योपह्वयस्वेति† ॥१२॥

पत्नी च यजमानश्च पत्नीयजमानौ तावुपवह्वं काङ्क्षमाणौ सुब्रह्मण्योपह्वयस्वेत्येवं ब्रूयातां उपह्वानमुपह्वः ॥ १२ ॥

उपहूतइत्युपह्वः¶ ॥ १३ ॥

सुब्रह्मण्यो याचित उपह्वं दद्यात्, कः पुनरुपह्वः उपहूत इत्युपह्वः अयमुपह्वप्रकारः ॥ १३ ॥

---

* द्राह्यायणे विशेषोऽस्ति ।

¶ द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रत्रयेनैकसूत्रं कृतम् ।

उपहूय यथार्थं स्यात् * ॥ १४ ॥

स्पष्टार्थः ॥ १४ ॥

एवं सर्वेषपसन्द्दतेषु¶ ॥ १५ ॥

बहुवचनसामर्थ्यात् तत्सिद्धेः सर्वग्रहणं निरर्थकमिति चेत् तत् कथं प्रतीष्टिषु स्यादिति उपसद्ग्रहणादिष्टिद्वये उपसत्प्रत्ययो माभू-दिति ॥ १५ ॥

यास्वोर्द्ध्वमुपसद्भ्य उत्करे तु तत्र तिष्ठन्† ॥ १६ ॥

यास्वोर्द्ध्वमुपसद्भ्यस्तादेच्छ्यन्ते सुब्रह्मण्यास्तासामप्येष एव विधिः अयन्तु विशेषः, उत्करे तु तत्र तिष्ठन्निति, तिष्ठन्निति वक्तव्ये तत्र ग्रहणं किमर्थमिति चेत् उच्यते, माभूत् समीपसप्तमी प्रत्यय इति आरूढ़े नोत्करे वक्तव्या। अपर आह उत्करे चाह तत्र तिष्ठन्निति हि ब्राह्मणं तस्मादुत्करे तिष्ठन् सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतीति ॥ १६ ॥

प्राक् सुत्यादेशान्नामग्राहः‡ ॥ १७ ॥

एवं चैता उत्करे भवन्ति किञ्च प्राक् सुत्यादेशान्नामग्राहो भवति एतावदहे सुत्यामिति प्रागस्माद्वचनात् ॥ १७ ॥

अग्नीषोमीयवपायां कृतायाम् परिहृतासु वसतीवरीषु

---

* द्राह्यायणे अन्यत्रास्ति।

¶ द्राह्यायणेऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

‡ द्राह्यायणेऽप्येवम्। किन्तु तत्र छेदविषये विशेषोऽस्ति।

**प्रातरनुवाकोपक्रमवेलायामसौ यजत इति प्रत्येकं गृह्णीयाद्-यजमाननामधेयान्यमुष्य पुत्रः पौत्रो नप्तेति पूर्वेषां* ॥ १८ ॥**

अग्नीषोमीयस्य पशोर्वपायां हुतायां वसतीवरी परिहरणे कृते प्रातरनुवाकस्य आरम्भणवेलायां यजमाननामधेयानि गृह्णीयात् प्रत्येकम् एकमेकं प्रति प्रत्येकम् असाविति सर्व्वनाम्ना यजमानस्य नामधेयानि यजमाननामधेयानीति बहुवचनं क्रियते तत्सम्बन्धेन सर्वाण्येतानि पितृप्रभृतीनि यजमाननामधेयानि। अपर आह नक्ष-त्रास्य यं नित्यं तृतीयं यत्तद्गुह्यमेव भवति। सर्वनाम्नः स्थाने पितृ-पितामहप्रपितामहानां नामधेयानि गृह्णीयात् अमुष्य पुत्रः पौत्रो नप्तेति यथासंख्यम्। यथामुष्य पुत्रः पौत्रो नप्तेत्येतेषां पूर्वत्वे सिद्धे पूर्वेषामिति किमर्थमारभ्यते, उच्यते, एकशेषविधिप्रज्ञापनार्थं, कथमेकशेषो गृह्यतइति पूर्वेषां च पूर्वासां च ॥ १८ ॥

**अथावरेषां यथाज्येष्ठꣳ स्त्रीपुꣳसां ये जीवेयुः¶ ॥१९॥**

अथानन्तरमवरेषां नामानि गृह्णीयात् अवरे पुत्रपौत्र-प्रपौत्राः, कथमेतद्गम्यते तेषामपि त्रयाणामेवेति अथशब्दसामर्थ्यात् यथाज्येष्ठम् यो ज्येष्ठः यथाज्येष्ठम् उत्पत्तिक्रमतः किमविशेषेण न जीवेयुः ॥ १९ ॥

**जनिष्यमाणानामित्युक्त्वा सुत्यादेशप्रभृति समापयेत्† ॥२०॥**

---

* द्राह्यायणेऽप्येवं, किन्तु छेदविषये विशेषोऽस्ति।

¶ द्राह्यायणेऽप्येवम्।

† द्राह्यायणे विशेषोऽस्ति।

जनिष्यमाणानामिति सिद्धे उक्तेति किमर्थमारभ्यते, उच्यते, पृथग्यजते शब्देषु च विरमेदित्युक्तम् तदिहापि प्राप्तं तन्निवृत्त्यर्थम् उच्यते समासेन पितृपितामहप्रपितामहशब्दं कृत्वा यजत इति ब्रूयात् ॥ २० ॥

याग्नीषोमीयवपायां लुप्ता सा साद्यःक्रीषु* ॥ २१ ॥

याग्नीषोमीयवपा होमानन्तरकाला सुब्रह्मण्या सा साद्यःक्रीषु लुप्ता लोपः क्रियते, अथ सामर्थ्यादेव लोपे प्राप्ते निमित्तापाये नैमित्तिकस्याप्यपायइति सूत्रं किमर्थमारभ्यते, अत्रोच्यते, तिस्रः सन्नियोगशिष्टाः सनामग्राह्याः तासां सन्नियोगशिष्टानां सतीनां पूर्वस्याः लोपे उत्तरयोरपि लोपो गम्यते। सन्नियोगशिष्टानामन्यतमापायेऽपाय इति, अपर आह प्रतिनिधौ माभूदिति, साद्यःक्रीष्वग्नीषोमीयस्य पशोः स्थाने अग्नीषोमीयं पुरोडाशं निर्वपतीति, अथोद्देशनिर्देशौ किमर्थमिति चेत्, अत्रोच्यते, सूत्रकारस्यायमभिप्रायः सैव लुप्ता। अन्यत्र निमित्तापायेऽपि नैमित्तिकानि भवन्तीति। यथा सन्ततिष्वप्रस्तावास्वपि कुशाविधानमिति ॥ २१ ॥

इति प्रथमस्य तृतीया कण्डिका।

---

*द्राह्यायणे विशेषोऽस्ति।

F

## अथ चतुर्थी कण्डिका ॥

**अग्निष्टुत्स्वाग्नेयो निगदः* ॥ १ ॥**

सुब्रह्मण्यायाः सार्वक्रतुको विधिरुक्तः, साम्प्रतं विशेषो विवक्षितस्तं विवक्षुराचार्य्य आह, अग्निष्टुत्स्वाग्नेयो निगद इति। अग्निष्टुत्सु यज्ञेषु आग्नेयो निगदो भवति अग्निर्देवता अस्येत्याग्नेयः, निगदश्च उक्तलक्षणः, अग्निष्टुत्स्वाग्नेयेति वक्तव्ये निगद इति कथं निगदस्यैव प्रत्याम्नानं स्यान्नेतरस्येति ॥ १ ॥

**तत्र गौतमीयमग्न आगच्छ रोहिताभ्यां बृहद्भानो धूमकेतो जातवेदो विचर्षण आङ्गिरस ब्राह्मणाङ्गिरस ब्रुवाणेति प्राक् सुत्यादेशात्* ॥ २ ॥**

तत्र तस्मिन्नित्यर्थः। गौतमस्येदं गौतमीयम्। अग्न आगच्छेत्येतदादिर्निगदः। प्राक् सुत्यादेशात् एतावदह्ने सुत्यामिति प्रागस्मात् ॥ २ ॥

**देवानाꣳ स्थानेऽग्नयः* ॥ ३ ॥**

देवानां स्थाने अग्नय इति ब्रूयात् ॥ ३ ॥

**अथ धानञ्जय्योऽग्न आगच्छ रोहितव आगच्छ भरद्वाज-**

---

* द्राह्यायणोऽप्येवम्।

स्याजसद्दसः द्दनो वारावस्कन्दिन्नषसो जारेत्याङ्गिरसप्रभृति-समानम्* ॥ ४ ॥

अथशब्द आनन्तर्य्ये गौतमीयो विधिरुक्तः, आग्नेयी च सुब्रह्मण्योक्ता। तत्रायं धानञ्जयोक्तो विशेषः अग्न आगच्छ रोहितव इत्येतदादिः प्राक् सुत्यादेशादिति वर्तते, किञ्च ॥ ४ ॥

इन्द्र९ शक्रेति ब्रूयाद्विश्व इति देवाननिरुक्तेषु¶ ॥ ५ ॥

आग्नेयी सुब्रह्मण्योक्ता। साम्प्रतं अनिरुक्त उच्यते, शक्रागच्छेति विश्वे ब्रह्माण इत्येवं ब्रूयात्, अनिरुक्तेषु उपहव्यादिषु। आनिरुक्त्यं देवतानामधेयं पारोक्ष्यम ॥ ५ ॥

अनिरुक्तप्रातःसवनयोश्च¶ ॥ ६ ॥

एवमेव सुब्रह्मण्या स्यात्, अनिरुक्तं प्रातःसवनं यस्य सोऽनिरुक्तप्रातःसवनः अनिरुक्तप्रातःसवनश्चानिरुक्तप्रातःसवनश्चानिरुक्तप्रातःसवनौ तयोरनिरुक्तप्रातःसवनयोः, कथं पुनर्गम्यते, यथायं बहुव्रीहिः समासः। अथ पुनरयं तत्पुरुषः कल्प्येतेति। यदि ह्ययं बहुव्रीहिरभविष्यत् सुक्तसंशयमेव सूत्रमभविष्यत्। अनिरुक्तापूर्ववाजपेयेष्विति। एवं क्रियमाणे एवं सूत्रम् अभविष्यत्। समासे च संशयो नाभविष्यत्। येन पुनरयं पृथक्सूत्रमारभ्यते, अनिरुक्तप्रातः-

---

*द्राह्यायणेऽत्र नास्ति।

¶द्राह्यायणेऽप्येवम्।

सवनयोश्चेति ज्ञापयति तत्पुरुषः समास इति अनिरुक्तश्च तत् प्रातःसवनं चानिरुक्तप्रातःसवनमिति। तेनापूर्ववाजपेययोः प्रातरनुवाकोपक्रमणकालेव सुब्रह्मण्या निरुक्ता स्यादिति उच्यते, न क्रतुसम्बन्ध एवायं गृह्यतां तदुच्यते मुक्तसंशयं सूत्रमभविष्यत् एवं चेत् अनिरुक्तापूर्ववाजपेयेष्विति एवं क्रियमाणे सूत्र इत्यत्र ब्रूमः, यद्येवं सूत्रमभविष्यत्, वाजपेयविचाराणां सर्वेषां प्रसङ्गोऽभविष्यदेवं माभूदित्यत आह, अनिरुक्तप्रातःसवनयोश्चेति ॥ ६ ॥

## अभिषेचनीयदशपेयावन्तरेण सदा नामग्राहः* ॥ ७ ॥

अभिषेचनीयस्य दशपेयस्य अभिषेचनीयदशपेयौ तावन्तरेण याः सुब्रह्मण्याः ताः सर्वाः सनामग्राहाः अन्तरान्तरेण युक्त इति द्वितीया भवति। सदाग्रहणं सत्राद्यपेक्षम्, अपरे ब्रुवते नामग्रहणमात्रमेवास्त्विति न निगदः ॥ ७ ॥

## अहर्गणेष्वहराद्यन्तयोराह्वयेत्* ॥ ८ ॥

द्विरात्रप्रभृतिष्वहर्गणेषु अह्नः आदौ चान्ते चाह्वयेत्। अथ किमर्थमिदमारभ्यते, विद्यमाने आह्वाननिमित्ते प्रत्यहं वसतीवरीपरिहरणे प्रातरनुवाके च। उच्यते, वक्ष्यत्ययम् एकाष्टकादीक्षिण उपसर्गिनस्ते तूष्णीमेकत्रिंशमहरासीरन् सवनविधेन वा पशुना यजेरन्निति, अत्रापि कथं स्यादिति ॥ ८ ॥

## उत्तरार्था हर्न्तिकी* ॥ ९ ॥

---

* द्राह्यायणेऽप्येवम्।

या अङ्कः अन्ते सुब्रह्मण्या सोत्तरार्था, उत्तरार्थमहर्गणेष्वहरा-ह्वन्तयोराङ्कयेदिति। अत्रातिरात्रान्ते प्राप्ता तत्प्रतिषेधार्थमार-भ्यते, उत्तरार्था हरन्तिकीति ॥ ९ ॥

अग्नीषोमीयप्रभृत्यहीनेषु सर्वाः सनामग्राह्याः* ॥ १० ॥

अग्नीषोमीयादि यत्कर्म अहीनेषु तस्मिन् याः सुब्रह्मण्याः ताः सर्वाः सनामग्राह्याः स्युः। ननु अग्नीषोमीयप्रभृतयः सनामग्राह्या एव भवन्ति, तत् किमिदम् अग्नीषोमीयप्रभृतीत्यारभ्यते, उच्यते, वक्ष्य-त्ययं सर्वाः सनामग्राह्या इति। यद्ययमग्नीषोमीयप्रभृतीति न ब्रूयात्, तदा शाकल्या आरभ्य सर्वाः सनामग्राह्याः स्युः, सर्वा इति वचनात्, न हि तदस्ति यद्वचनान्न भवति। वचनस्यातिभारो नास्ति वचनमुपलब्धुं शक्यते। अथाहीनग्रहणं किमर्थमिति चेत्, ऐकाहिको विधिरुक्तः। सात्रिको वक्ष्यते, दीक्षानुपूर्व्येण दीक्षितानां सत्रेषु नामग्राह इत्यत आरभ्य तदेवमुभयत्रोक्तो विशेष उच्यमानः प्रत्याख्यायाहीनादन्यत्र न स्यात्। तथा च सूत्रे उक्तम्, एकाहाहीन-सत्राणीति चतुर्थी सोमजातिर्नास्ति। अतएव सिद्धेऽहीनग्रहणं न कर्तव्यम्, क्रियमाणे कारणं वक्तव्यम्। उच्यते, कर्तव्यमहीनग्रहणम्, अक्रियमाणे मुख्याहीनशब्दो गृह्यते येऽहीनकाण्डे पठितास्तएव गृह्येरन् मुख्यत्वात् गौणमुख्ययोर्मुख्ये सम्प्रत्यय इति कृत्वा सोऽय-माचार्योऽहीनग्रहणं करोति। येऽप्यहीनकाण्डे न परिपठिताः। यथा वरुणप्रघासद्विदिवसाकमेधत्र्यहव्युष्टिद्विरात्र इति। द्वादशाहीनस्या-

---

*द्राह्यायणोऽप्येवम्।

हीनभूतः, कथम् एतेषु सर्वेषु एष विधिः स्यादित्यतोऽर्थमहीन-ग्रहणम् ॥ १० ॥

दीक्षानुपूर्व्येण दीक्षितानाᳫं सत्त्रेषु नामग्राहः* ॥ ११ ॥

आहीनिको विधिरुक्तः। साम्प्रतं सात्त्रिक उच्यते, येनानुपूर्व्येण दीक्षिताः सत्त्रिणस्तेनैव क्रमेण तेषां सुब्रह्मण्यायां नामग्रहणं स्यात्। आनुपूर्व्यं क्रमः। आनुपूर्व्येणेति सिद्धे किं दीक्षाग्रहणमिति, उच्यते, अनेनोक्तम्, असौ यजत इति प्रत्येकं गृह्णीयादिति, तत्र प्रत्येकग्रहणे प्रयोजनमनेकयजमानतायां प्रत्येकं गृह्णीयादिति एकाहाहीनेषु तत्रापि दीक्षणानुपूर्व्येणैव। अथ दीक्षितानामिति किमर्थम् उच्यते नेदिष्ठिनि दीक्षते प्रेतस्यैव नामग्रहणं स्यादिति। य एव प्रथमं सत्त्रिलेन दीक्षित इति ॥ ११ ॥

ऊर्द्ध्वमतिरात्रादग्रहणम्* ॥ १२ ॥

प्रायणीयादतिरात्रादूर्द्ध्वमग्रहणं नाम्नाम् ॥ १२ ॥

तस्यान्ते श्वः सुत्या गौतमस्य* ॥ १३ ॥

तस्य प्रायणीयस्यान्ते या वसतीवरी परिहरणान्तकाला सुब्रह्मण्या, तस्यां श्वः सुत्यामागच्छेति ब्रूयात्। तस्येति निर्देशः क्रियते अहीनद्वादशाहवैदत्रिरात्राद्यर्थं, तस्य तस्येति ॥ १३ ॥

नार्मेधान्त एके* ॥ १४ ॥

---

*द्राह्यायणोऽप्येवम्।

एके आचार्या मन्यन्ते, श्वः सुत्या संयुक्ता नामधान्ता सुब्रह्मण्या स्यादिति। अहराद्याद्य सुत्या स्यादित्यर्थः ॥ १४ ॥

अद्य सुत्या शाण्डिल्यस्य* ॥ १५ ॥

प्रायणीयस्यातिरात्रस्यान्ते शाण्डिल्य आचार्योऽद्य सुत्येति मन्यते ॥ १५ ॥

अनाक्रानं धानञ्जप्यस्तिसृषु चोत्तमासु नामग्राहः¶ ॥१६॥

अतिरात्रस्यान्तेऽनाक्रानं धानञ्जप्यो मन्यते, तिसृषु च सत्रोत्तमासु नामग्राहः स्यादिति ॥ १६ ॥

उत्तमयोरिति गौतमः* ॥ १७ ॥

सत्रोत्तमयोर्नामग्राहः स्यादिति गौतम आचार्यो मन्यते एतस्मिन् कल्पे ॥ १७ ॥

तथा सत्यग्नीषोमीयवपायामग्रहणं धानञ्जप्योऽनाक्रानं वा† ॥ १८ ॥

तथा सति कल्पे अग्नीषोमीयवपायामग्रहणं नाम्नां धानञ्जप्य आचार्यो मन्यते। समाधिप्रधानत्वादनाक्रानमेव वा ॥ १८ ॥

---

*द्राह्यायणोऽप्येवम्।

¶द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

†द्राह्यायणे चेति विशेषः, तेनैतेन सूत्रद्वयं कृतम्।

सर्वत्र सत्त्रेष्वग्रहणं शाण्डिल्यः* ॥ १९ ॥

सर्वासु सुब्रह्मण्यासु सत्त्रेषु नामग्राहो न स्यादित्येवं शाण्डिल्य आचार्यो मन्यते ॥ १९ ॥

ऊर्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे* ॥२० ॥

प्रायणीयादतिरात्रादूर्ध्वमेका सुब्रह्मण्या आग्नेयी भवेत्। द्वितीये पञ्चदशरात्रे ॥ २० ॥

द्वे वा¶ ॥ २१ ॥

द्वे वा सुब्रह्मण्ये आग्नेय्यौ भवेयाताम् ॥ २१ ॥

सर्वाः प्राक् त्रिकद्रुकेभ्यस्तृतीये* ॥ २२ ॥

तृतीये पञ्चदशरात्रे आतिथ्यासंस्थानकालाया आरभ्य याः सुब्रह्मण्या ताः सर्वा आग्नेय्यः स्युः। प्राक् त्रिकद्रुकेभ्यः ॥ २२ ॥

कौण्डपायिनतापश्चितयोर्द्वादशाहे सुत्येति विदित्वा परिमाणज्ञानं धानञ्जप्यः* ॥ २३ ॥

कौण्डपायिनामयनं कौण्डपायिनं, तापश्चितामयनं तापश्चितं, कौण्डपायिनञ्च तापश्चितञ्च कौण्डपायिनतापश्चिते तयोः कौण्डपायिनतापश्चितयोः। द्वादशाहे सुत्येति ज्ञात्वा परिमाणज्ञानं धानञ्जप्यो मन्यते। एतावदहे सुत्यामिति यावदहे स्यादित्युक्तम् ॥२३॥

---

*द्राह्यायणेऽप्येवम्।

¶द्राह्यायणे चेति विशेषः।

सुत्यामागच्छेतीतराः* ॥ २४ ॥

अथ या अन्याः प्राक् परिमाणाङ्गानाम्नानात् तासु को विधिर्वोच्यते, सुत्यामागच्छेतीतरा इति ॥ २४ ॥

ऊर्द्ध्वं चातिरात्रात् प्रथमस्य सारस्वतस्य प्राक् श्वः सुत्यायाः* ॥ २५ ॥

वक्ष्यत्ययम् कौण्डपायिनसारस्वतयोरिष्ट्ययनेषु सुत्यावदिति। तत्र सारस्वते ऊर्द्ध्वमतिरात्रात् प्रायणीयाद्याः सुब्रह्मण्याः तासु च सुत्यामिति ब्रूयात्। प्राक् श्वः सुत्यायाः। तत्र प्रथमस्य सारस्वतस्येति प्रथमग्रहणमतिरिच्यते। यावता सन्ततसुत्ये एवोत्तरे। अत्र प्रथमग्रहणं क्रियते कौण्डपायिनार्थम्। कौण्डपायिनोऽपि तत्र पक्षे तस्योपसदं न उपवसथकर्म कृत्वातिरात्रमुपेयुरिति। तस्मादूर्द्ध्वमतिरात्रात् सुत्यामागच्छेति ब्रूयात् प्राक् श्वः सुत्याया इति ॥२५॥

कौण्डपायिनसारस्वतयोरिष्ट्ययनेषु सुत्यावच्छाण्डिल्यः*॥२६॥

शाण्डिल्य आचार्यो मन्यते। अहरावन्तयोराह्वयेदिति ॥ २६ ॥

तथाग्निहोत्रमासे तथाग्निहोत्रमासे* ॥ २७ ॥

कौण्डपायिनसारस्वतयोरिष्ट्ययनेषु यथाग्निहोत्रमासे कौण्डपायिनेन प्रकारेणेत्यर्थः ॥ २७ ॥

इति प्रथमस्य चतुर्थी कण्डिका।

---

* द्राह्यायणोऽप्येवम्।

G

## अथ पञ्चमी कण्डिका ।

**सर्वत्रानादेशे परिसामानि प्रस्तोता गायेत् स्वाध्यायवत् स्वासु* ॥ १ ॥**

उक्तं प्रह्विणुयात् प्रस्तोतृसुब्रह्मण्यौ पुरस्तात् कर्मभ्य इति तत्र सुब्रह्मण्यीयमुक्तम् अनन्तरं प्रस्तोत्रीयं वक्तव्यम्। तत्र क्रमभेदस्य प्रयोजनमुक्तम् सुब्रह्मण्यप्रकरणएव साम्प्रतं प्रस्तोतृकर्म विवक्षुरिदं सूत्रमारभते, सर्वत्रानादेश इति। तत्र पदानि सर्वत्र अनादेशे परिसामानि प्रस्तोता गायेत् स्वाध्यायवत् स्वासु। तत्र सर्वशब्दो निरवशेषवाची। सर्वविधिविषयो निर्देशः सर्वक्रतुष्वित्यर्थः। अनादेश इति आदेशादन्यत्र, आदेशः यथा अयं सहोहा इति त्रिरुद्गाता गायेदिति। परिसामानीति कर्मनिर्देशः, परिच्छिन्नकर्तृकाणि सामानि परिसामानि परिगतलिङ्गानि वा सामानि परिसामान्युच्यन्ते। प्रस्तोतेति कर्तृनिर्देशः। गायेदिति क्रिया निर्दिश्यते। स्वाध्यायवदिति धर्मउच्यते स्वाध्यायेन तुल्या क्रिया स्वाध्यायवत् स्वासु, स्वास्वि-त्याश्रयविशेषो नियम्यते। स्वास्वस्वासु च साम्नां द्वयी वृत्तिर्दृश्यते सर्वपदानामर्थः। अथ समुदायार्थः। यान्येतानि तार्क्ष्यसामादीनि उद्वंशीयान्तानि दीक्षणीयादिषूदवसानीयान्तेषु कर्मसूपदिश्यन्ते एतानि सर्वाणि प्रस्तोतृकर्मेति। अत्रोच्यते, सर्वत्रग्रहणं तावन्न कर्त्तव्यम्, किमर्थम्, अक्रियमाणेऽपि सर्वत्रग्रहणे प्रत्येष्यतएतत् यथा सर्वत्रेति

---

* द्राह्यायणोऽप्येवम्।

कथम् विध्यव्यपदेशे सर्वत्रत्वधिकार इति वचनात् अधिकारनिवृत्त्यर्थमिति चेत्, दीक्षानुपूर्व्येण दीक्षितानामिति तन्न। कस्मात्, प्रकरणसमाप्तेः। न प्रकृतमतिदेशा बाधन्तइति न्यायोपदेशात्। अनादेश इत्येतदपि शक्यमवक्तुम्। कस्मात, सामान्यविशेषाभ्यां प्रवृत्तिर्विधीनाम्। अत्र सामान्यो विधिरौत्सर्गिकः तस्यापवादो विशेषः, तत्र औत्सर्गिको विधिरपवादेन बाधिष्यते, तस्माच्छक्यमवक्तुमनादेशइति परिसामानीति च वक्तव्यम् कस्मात, सर्वथा संव्यवहारार्थाः संज्ञाः शास्त्रे भवन्ति। न चानया संज्ञया शास्त्रे संव्यवहारोऽस्ति। प्रस्तोतृग्रहणमप्यतिरिच्यतएव कस्मात् प्रकृतत्वात् प्रह्विणुयात् प्रस्तोतृसुब्रह्मण्यौ इति, तेन संयोगादुद्गातृप्रसङ्ग इति चेत्, तन्न कस्मात् असम्भवात् स्वयं व्रजेत् क्रय औपवसथ्येवेति। प्रतिहर्त्ता स्यादिति चेत्, तदपि न प्रकृतहानिः स्यात् अप्रकृतप्रत्ययस्य। प्रकृतो हि प्रस्तोता, अप्रकृतो हि प्रतिहर्त्ता। अथ गायेदित्येतदपि अतिरिच्यतएव साम चोद्यमानं गानादन्यत्र किं भजते। स्वाध्यायवदित्येतदपि न वक्तव्यम्। अगृह्यमाणविशेषं साम स्वाध्यायवदेव भवति, विशेषस्तु यथा मन्द्रमिवाग्र आददीताथ तारतरमथ तारतममिति अनिरुक्तं गेयं बलबलानुकुर्वता गेयम्। अक्षरेणाक्षरेण प्रतिष्ठापयताऽङ्गेयमिति। स्वास्वित्येतदपि न वक्तव्यम् कस्मात्, अन्याभिरसंयोगात्। अविशेषेणादिश्यमानं स्वासु उज्झित्वा कथमस्वासु क्रियते अन्याभिरसंयोगः औत्पत्तिकसंयोगात् विश्वेदेवा इति वसिष्ठनिहवमूहेत्, तथा स्वयोनीनि सर्वत्राभिरूपतराण्यस्वयोनीनि न इति। एवं सर्वेषां प्रतिपदमुद्धार उक्तः।

अथवोच्यते, प्रयोजनमुच्यताम्, अत्राह यदुच्यते, नारभ्यानो-त्यारभ्यानोति ब्रूमः। कस्मादारम्भे विधिप्रसिद्धेः। यत्तावदुच्यते, सर्वत्र शब्दोऽतिरिच्यतइति तन्न, न केवलमस्मिंश्छास्त्रे अयमादेशः, अन्यत्रापि यथा अध्वर्य्यवित्याहोद्गातेति। यत् सर्वत्रेति न ब्रूयाद्विस्वरूपाणां गानं प्रस्तोतुः स्यात् परिसामशब्दत्वात् अत आह सर्वत्रानादेश इति। आदेशग्रहणमुक्तार्थं प्रथमसूत्रएव विकल्पसमुच्चयप्रत्याम्नायप्रसङ्गो माभूदिति। यदुच्यते परिसामानीति न वक्तव्यम् शास्त्रे संव्यवहाराभावादित्यत्र ब्रूमः। अस्ति संज्ञासंव्यवहारः शास्त्रेण च सम्पदतिरेको यथान्यैः परिसामभिरिति यदुच्यते। प्रकृतत्वात् प्रस्तोतृग्रहणं न कर्त्तव्यमित्यत्र ब्रूमः। कर्त्तव्यमेव कस्मान्नियमार्थम्। व्याहृतिसामानुगापनञ्च प्रस्तोतुः स्यादिति व्याहृतिसामानि गापयेद् यजमानमित्येकश्रुतिविधानात् उद्गातुर्माभूदिति। अथ यदुक्तं गायेदिति न वक्तव्यम् साम चोद्यमानं गानक्रियां भजतइत्यत्र ब्रूमः। आख्यातप्रचोदनान्नास्ति दोषः। दृश्यन्ते हि वाक्यान्युभयोर्वेदलोकयोः उच्यमानार्थानि गम्यमानार्थानि अर्थगृहीतानि च। उच्यमानार्थानां तावद् यथाद्वारं दीयतामिति यथा गम्यमानार्थद्वारमिति दीयताम् अपिधीयतां वेति, यथा शीघ्रमिति संग्रहकारेण तथा वेदे ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेतेति। अथैष गौरथैष आयुरिति इदमाख्यातप्रयोगे न दोषः। अथ यदुक्तं गायत्ररथन्तरवद्विशेषग्रहणाभावात् कथमन्यं धर्मं भजतइति तस्मात् स्वाध्यायवदिति न वक्तव्यमित्यत्र ब्रूमः। परिसाम्नां प्रयोगे संशयः किमनुदूहितान्यननुसंहृतस्तोभानि

क्रियन्ताम् अथोदूहितान्येवोपसंहृतस्तोभानि च क्रियन्ताम् केन वा स्वरेण क्रियन्तामिति एष संशयः। आम्नाये कानिचिदनुपसंहृतस्तोभानि पठ्यन्ते कानिचिदाद्यन्तस्तुभ्यानि केषुचित् पादशिष्टा गीतिः पठ्यते। तत्रायं संशयः, किं तेनैव धर्मेण युज्यतामथान्यो धर्म इति। तथोदूहः किं प्राप्नोति चतुर्थीदात्ततमात् स्वराद्व्यन्तरानुदूहति प्रागुपायान्न चेत् समानपुरुषवचने तृतीयप्रभृतीनामुदात्ततमः कश्चित् स्वरो भवति, तमुदूह इत्याचचते। तथाच यज्ञे क्रियतइति च शार्ङ्गादीनामुदूहः प्राप्नोति एतस्मिन् प्राप्ते स्वाध्यायवदित्याह। अतः शार्ङ्गादिषु उदूहो निवर्त्तते अनुपदस्य स्तोभानुसंहारः स्यादित्येष स्वाध्यायधर्मः। ननु यद्येष स्वाध्यायधर्मः, किमर्थमुद्धृतस्तोभानि पठ्यन्ते। उच्यते, लाघवार्थमत्राह, यदि लाघवार्थमुद्धारः, किमर्थमन्यान्यमुपदस्तुभ्यानीति उच्यते स्तोभस्थानस्वरनिदर्शनार्थम्। कथं पुनरेतद्गम्यते यथा निदर्शनार्थम् न नियमार्थमिति निदर्शनार्थमेवेति गम्यताम् स्मृतिलेशात्, स्मृतिर्नाम अमूल आगमः पारम्पर्यमित्यर्थः। एवं विशिष्टाः स्मरन्ति। पदाय पदाय स्तोभा अनुवर्त्तन्तइति लिङ्गम्, यदिहकारेणाभ्यस्तमिति च, कथं पुनरेतद्गम्यते, यथा निदर्शनार्थमिदमिति। पदाय पदाय स्तोभा अनुवर्त्तन्तइति राचोन्न एवायं विधिरिति, नेति ब्रूमहे। नित्यानुवादोऽयन्तस्याहावोहाव इति स्तोभांस्तोभति विश्वं समन्विणं दह विश्वं समन्विणं दहेति। तद्वा अतिच्छन्दःसु भवति यद्वै सप्तपदासु भवति तस्य त्रिर्निधनमिति अवगम्यते नित्यानुवाद इति। पाश्वविध्योपपत्तेश्चानुसंहारः कर्त्तव्य इति।

अनुसंहारे क्रियमाणे विधावसौकल्यो भवति उपासनविधानाच्च साम्नां क्रियेष्यते। उपासनमन्त्रेऽपि तावल्लोकेषु पञ्चविधं सामोपासीतेति। कुतश्चिदानीं प्रयोगः, तथाच

स्मृतेर्लिङ्गाच्च रात्रोम्ने प्रयोगे याज्ञिको विधिः।
पाञ्चविध्योपपत्तेश्च स्तोभसंहार इष्यते।
उद्धारः पुनराचार्यैः स्वाध्याये लाघवार्थिभिः।
प्रोक्तस्तस्मिन् प्रतिष्ठा च संहारस्तेन चेष्यते॥ इति।

एवं च श्रूयते। नग्नानि ह वा एतानि सामानि भवन्ति यान्यसुभ्रानीति। तस्मात्स्तोभाननुसंहरान्ते साम्नामनग्नताया इति अत आह, स्वाध्यायवदिति, एष स्वाध्यायधर्मः, ये पुनर्वर्णयन्ति नानुसंहार इति तेषामेते दोषाः प्रसज्यन्ते अथ यदुक्तमन्याभिरसंयोग औत्पत्तिकः संयोगादिति। अतः स्वास्विति न वक्तव्यमित्यत्र ब्रूमः। आभिरूप्यमलिङ्गम् अस्ति राणायनीयके तु शुक्रचन्द्रयोः* ऋगन्तरं इह च ऋगन्तरं गृह्यते, नियुत्वान्वाय वागह्यत्राह, गोरमन्वतेति। अतो नियमार्थमाह, स्वास्विति एवमेतेषां पदानामारम्भकारणानि सर्वाणि, तस्माद्युक्तः सूत्रारम्भ इति॥ १॥

## तृचापत्तीनि तृचेषु त्रिरितराणि¶ ॥ २ ॥

यानि तृचापत्तीनि स्वासु तानि तृचेषु कर्त्तव्यानीति। यान्यतृचापत्तीनि तानि त्रिः कर्त्तव्यानि। स्वास्वित्येतदनुवर्त्तते॥ २॥

---

* श्रेयोः श्रेयान्तरम् इति स० पु० तथा का० पु० पाठः।

¶ द्राह्यायणोऽप्येवम्।

अन्तरेण चात्वालोत्करौ सञ्चरः सर्वत्रानादेशे* ॥ ३ ॥

चात्वालोत्करयोरन्तरासञ्चरः सञ्चरन्ति तेनेति सञ्चरः। सर्वत्र सर्वकर्मणामित्यर्थः। अनादेशे आदेशादन्यत्र सर्वत्र। ग्रहणं तस्मादेतेनैव प्रसुते प्रपद्येतैतेन निष्क्रामेदिति। सुत्यायामेव केवलं माभूदिति ॥ ३ ॥

तदाम्नानं तीर्थं* ॥ ४ ॥

य एष सञ्चर उक्तः, चात्वालोत्करावन्तरेण तस्याम्नानमिति संव्यवहारिकी संज्ञा। आम्नानेन स गच्छेदिति तीर्थमिति संव्यवहारिकमेव, तरन्ति तेनेति तीर्थम् संव्यवहारः दक्षिणं नयेयुस्तीर्थेन ॥ ४ ॥

अग्नौ चीयमाने पश्चिमेन पुच्छङ्गत्वा दक्षिणेऽपिकक्षे तिष्ठेद्यत्र वोपदध्युः* ॥ ५ ॥

अग्नौ चीयमाने अग्निचित्यायामिदं कर्मोपदिश्यते। चीयमान इति वर्त्तमानकालोपदेशः। पश्चिमेन पुच्छं गत्वा पश्चिमेनेति दिङ्नियमः। गत्वेति क्रियोपदेशः। उपविश्य दक्षिणेऽपि कक्षे तिष्ठेदिति। न यावदङ्गानि निवर्त्त्यन्ते, लक्षितश्चाग्निचेत्रं भवति तस्मिन् काल इत्यर्थः। अपिकक्षौ वक्ष्येते यत्र वोपदध्युः यस्मिन्वा

---

* शाह्यायनेऽप्येवम्।

देशे अध्वर्यव उपधानं कुर्युः तस्मिन् वा तिष्ठेदिति देशोपदेशः। नोर्द्धता ॥ ५ ॥

पश्चिमेन पक्षावपिकक्षौ* ॥ ६ ॥

उक्तं दक्षिणेऽपि कक्षे तिष्ठेदिति, कः पुनः प्रदेशोऽपिकक्षसंज्ञ इति अत्राह, पश्चिमेन पक्षाविति ॥ ६ ॥

पूर्वेणोपब्लयौ* ॥ ७ ॥

पूर्वेण पक्षयोः उपब्लयौ वक्ष्यति, उत्तरे चोपब्लये स्वं हृदयमालभ्य प्रजापतिहृदयमिति ॥ ७ ॥

पुष्करपलाश उपधीयमाने हिरण्मये पुरुषे स्वयमातृण्णासु च शर्करासु व्याहृतिसामानि गायेद् यजमानꣳ सत्यं पुरुषो भूर्भुवः स्वरित्येतासु पृथक्* ॥ ८ ॥

उक्तमग्नौ चीयमाने पश्चिमेन पुच्छं गत्वा दक्षिणेऽपि कक्षे तिष्ठेदिति। अथ तस्मिन्देशेऽवस्थितस्य किं कर्मेत्यत्रोच्यते पुष्करपलाश उपधीयमान इति, पुष्करं पद्मं तस्य पत्रं पलाशं तस्मिन्नुपधीयमाने हिरण्मये पुरुषे सुवर्णमये पुरुषे तस्मिन्नुपधीयमाने। स्वयमातृण्णासु च शर्करासु स्वभावभिन्नास्वित्यर्थः। औत्पत्तिकानि न कृत्रिमाणि यासां शर्कराणां छिद्राणि ताः स्वयमातृण्णाः तासु चोप-

---

*द्राह्यायणोऽप्येवम्।

धीयमानासु व्याहृतिसामानि व्याहृतिषु भवानि सामानि व्याहृतिसामानि तानि गापयेद् यजमानम् सत्यं पुरुषो भूर्भुवस्वरित्येतासु एतानि सामानि यथोद्दिष्टानि पृथङ्गानेत्यर्थः एकस्मिन्नेकस्मिन्नुपधीयमाने एकमेकं साम गापयेत् प्रतिद्रव्यमानुपूर्व्येण ॥ ८ ॥

तेषाꣳ स्थाने स्वयं चिन्वान ऋतनिधनमाज्यदोहं पुरुषव्रतमेकानुगानं रथन्तरं वामदेव्यं बृहदिति* ॥९॥

तेषां व्याहृतिसाम्नां स्थाने स्वयञ्चिन्वान इति साचिको विधिरुपदिश्यते तस्मिन्नेतानि सामानि यथोद्दिष्टानि भवन्ति ॥९॥

रथन्तरप्रभृतीनि विकल्पन्ते लोकसामभिरावृत्तैः* ॥१०॥

रथन्तरं वामदेव्यं बृहदिति विकल्पन्ते लोकसामभिः प्रतिलोमैः सह ॥ १० ॥

सञ्चितमग्निं दक्षिणेन गत्वाग्न आयूꣳषीति प्रत्यङ्मुखस्तिष्ठंश्छिरसि गायत्रं गायेन्निरुक्तम्* ॥ ११ ॥

चीयमाने गानमुक्तम् इदानीं सञ्चितगानमुच्यते, सञ्चितमग्निं समस्तश्चितः सञ्चितः अथाग्निग्रहणं किमर्थम् अग्नौ चीयमान-इति प्रकृतोऽग्निः, अत्रोच्यते, शिरआदीन्यङ्गानि प्रकृतानि तेषु गानमुपदिश्यते सोऽयमाचार्योऽग्निग्रहणं करोति, कथम्, अविद्य-

* द्राह्यायणोऽप्येवम्।

मानेष्वङ्गेष्वपि गानं प्रवर्त्ततएव यथा चक्रचितमभिचरंश्चिन्वीते-त्यादिषु विकारेषु वाजसनेयके च अनाविष्कृतचित्याग्नौ दक्षिणेन गत्वेति सञ्चर उपदिश्यते अग्न आयूंषीत्येतस्यामृचि शिरसः समीपे प्रत्यङ्मुखः तिष्ठन् त्रिर्गायत्रं गायेन्निरुक्तम् प्रत्यङ्मुख इति प्राङ्मुखकरणस्थानादेशइति प्रकृतं निरुक्तम् एतद्वै गायत्रस्य क्रूरं यन्निरुक्तमिति निरुक्तता अनुपपद्यमाना सेह वचनादारभ्यते निरुक्त-मिति आनिरुक्त्यं स्तोत्रापन्नस्य भवति ॥ ११ ॥

प्रत्याव्रज्य रथन्तरं दक्षिणे पक्षउदङ्मुखः पश्चाद्वा प्राङ्मुखः* ॥ १२ ॥

प्रत्याव्रज्य येनैव गतस्तेनैवाव्रज्य दक्षिणे पक्षे उदङ्मुखः तिष्ठन् रथन्तरङ्गायेत् पश्चाद्वा पक्षस्य तिष्ठन् प्राङ्मुखो गायेत् ॥ १२ ॥

पश्चिमेन पुच्छं गत्वा बृहदुत्तरे पक्षे दक्षिणामुखः पश्चाद्वा प्राङ्मुखः* ॥ १३ ॥

पश्चिमेन पुच्छङ्गत्वा उत्तरस्य पक्षस्य समीपे दक्षिणामुखस्तिष्ठन् बृहद्गायेत् पश्चिमेन वा प्रदेशे तिष्ठन् प्राङ्मुखो गायेत् ऊर्द्धता ॥१३॥

प्रत्याव्रज्य यज्ञायज्ञीयं पुच्छे संवत्सरस्येद्धेक्षः सौत्यो वा* ॥ १४ ॥

---

* द्राह्यायणोऽप्येवम् ।

प्रत्याव्रज्य पुच्छस्य पश्चिमे प्रदेशे तिष्ठन् यज्ञायज्ञीयं गायेदिति अत्र प्राङ्मुखता सिद्धा प्राङ्मुखकरणज्ञानादेशदति यदि संवत्सरो दैक्षः सौत्यो वा भवति ॥ १४ ॥

ऋतुष्ठा यज्ञायज्ञीयमन्यत्र* ॥ १५ ॥

यदि दैक्षः सौत्यो वा संवत्सरो न भवति ततः ऋतुष्ठा यज्ञायज्ञीयं गायेत् ॥ १५ ॥

वामदेव्यं दक्षिणेऽपि कक्षे तिष्ठन् गायेत् प्रजापतिहृदयमुत्तरे* ॥ १६ ॥

प्रजापतिहृदयमुत्तरेऽपि कक्षे तिष्ठन् गायेत् ॥ १६ ॥

एतानि गौतम उत्तरेणाग्निं गत्वा* ॥ १७ ॥

एतानि यथाविहितानि तेनैव क्रमेण गायेदिति गौतम आचार्यो मन्यते अयं तु विशेषः उत्तरेणाग्निं गत्वा ॥ १७ ॥

एतान्येव प्रदक्षिणं प्रत्यन्ताद्व्रानञ्जप्यो यज्ञायज्ञीयं पुच्छे प्रजापतिहृदयस्थाने च वामदेव्यम्¶ ॥ १८ ॥

एतान्येव यथाविहितानि प्रदक्षिणं गायेत् प्रतिपत्तिस्थानं

---

*द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणोऽप्येवम् । किन्तु तेनैतेन सूत्रत्रयं कृतम् ।

यावदन्तइति अयं तु विशेषः यज्ञायज्ञीयं पुच्छे प्रजापतिहृदयस्थाने च वामदेव्यमिति ॥ १८ ॥

दक्षिणेनाग्निं गत्वा गौतमीये व्यत्ययं ये पक्षयोः शाण्डिल्यः* ॥ १९ ॥

शाण्डिल्यो मन्यते एष एव गौतमोक्तः कल्पो भवति अयं तु विशेषः दक्षिणेनाग्निं गत्वा ये च पक्षयोः सामनी विहिते ते च व्यत्ययेन भवतः अन्योन्यस्थानापत्तिर्व्यत्ययः ॥ १९ ॥

शिरसि च गीत्वोत्तरे पक्षे* ॥ २० ॥

अयं च विशेषः शाण्डिल्यो मन्यते, शिरसि च गीत्वा तत उत्तरे पक्षे गेयमिति ॥ २० ॥

यथागीतमितराणि* ॥ २१ ॥

एवं स्युः ॥ २१ ॥

उत्तरे चोपन्लये स्वꣳ हृदयमालभ्य प्रजापतिहृदयमध्वर्युपथे श्यैतम्¶ ॥ २२ ॥

उत्तरे चोपन्लये स्वं हृदयमालभ्य प्रजापतेर्हृदयम् चशब्दः

---

* द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणोऽप्येवम् । किन्तु तेनैतेन सूत्रद्वयं कृतम् ।

शाण्डिल्यमतानुकर्षणार्थः स्वं हृदयमिति स्वशब्दः क्रियते अग्नेरङ्गानि प्रत्यङ्गानि प्रकृतानि अतः स्वशब्दं करोति। अध्वर्युपथे श्येतम्, येन पथा अध्वर्युरग्निमारोहति तस्मिंश्छ्येतम्॥ २२॥

इति प्रथमस्य पञ्चमी कण्डिका।

---

अथ षष्ठी कण्डिका।

**प्रवर्ग्यवत्युत्तरेण सम्राड़ासन्दीं गत्वा पश्चात्तिष्ठन्नध्वर्युप्रेषितस्त्वय्नायिरिति गायत् पदाय पदाय स्तोभेत्*॥ १॥**

आग्निकं सामगानमुक्तं पुष्करपलाशउपधीयमानइत्यत आरभ्य अध्वर्युपथेश्येतमित्येवमन्तम् इदानीं प्रवर्ग्यकर्मोच्यते तद्विवक्षुराह, प्रवर्ग्यवतीति। अत्रोच्यते, किमर्थं पुनरिदं भिन्नक्रमादादिश्यते तार्क्ष्यसामादीन्येव तावदादेष्टव्यानि आसन्नतमानि। अत्राह, एतानि तावदवश्यम्भावित्वात् पूर्वमादिश्यन्ते, तार्क्ष्यसामादीनि पुनः कामतः प्रयुज्यन्ते, तस्मादेषामवश्यम्भावित्वाद्भिन्नक्रम आदेशः प्रवर्ग्योऽस्मिन्नस्तीति प्रवर्ग्यवत्तस्मिन् प्रवर्ग्यवति कर्मणि उत्तरेण सम्राड़ासन्दीं गत्वा सम्राड् घर्मः स यस्यां निधीयते सा सम्राड़ासन्दी तस्याः पश्चिमे प्रदेशे तिष्ठन्नध्वर्युप्रेषितस्त्वय्नायिरिति गायेत् प्रेषणं नाम संस्कारार्थं सम्बोधनं प्रेषितः सन् त्वय्नायिरिति एतत् साम गायेत् गानञ्चायनमा-

---

*द्राह्यायणोऽप्येवम्। किन्तु तेनैतेन सूत्रद्वयं कृतम्।

चार्य्यप्रवृत्तिः सर्वत्रायं प्रकरणादौ गानग्रहणं करोति। पदाय पदाय स्तोभेत्, अनुपदं स्तोभमनुसंहरेत्। अथेदं किमर्थमारभ्यते, यथा-सिद्धमेतत् स्वाध्यायवदिति। अत्रोच्यते, आधिकारिकमिदं सूत्रं प्रकरणादौ प्रकारप्रदर्शनार्थो विधिः ॥ १ ॥

निधनायैव स्तौभीं वाचं विसृजेत्* ॥ २ ॥

इह पूर्वः स्तोभः अनुपायः उत्तरः सोपायः अत्र किं पूर्वस्यानु-संहारः उत उत्तरस्येति, एतस्मिन् संशये सति आचार्य्य आह, निधनायैव स्तौभीं वाचं विसृजेदिति। निधनायैव अर्थे सोपायः स्तोभः कार्य्यः न पदायेत्यर्थः एवशब्दादन्येष्वप्येवमेव ॥ २ ॥

उपग्रहप्रभृतीनि स्वरयन्तउपेयुर्ये घर्मउपयुक्ताः स्युः* ॥३॥

उपग्रहादीनि निधनानि स्वरयन्त उपेयुः स्वरेण सह ब्रूयुः एकार उपग्रहः अथ किमर्थमारभ्यते, उपायपरत्वादेकारस्य कथं वा न निधनाङ्गं स्यादेकारः, उच्यते, एकादशाक्षरनिधनो भवतीति स्ववश्रुतेरनिधनाङ्गमपि कल्पेतोपग्रहः अतो नियमार्थमाहोपग्रह-प्रभृतीनि ॥ ३ ॥

पत्नी च* ॥ ४ ॥

निधनमुपेयात् ॥ ४ ॥

---

*द्राह्यायणेऽप्येवम्।

एवं मध्ये* ॥ ५ ॥

योऽयं विधिरुक्तः स एवमेव मध्ये कार्य्यः ॥ ५ ॥

प्राप्य चाह्वनीयायतनम्* ॥ ६ ॥

प्राप्य चाहवनीयस्याग्नेरायतनं एवमेव सामगानम् अनेनैव प्रकारेणेत्यर्थः ॥ ६ ॥

परिषिच्यमानेऽप उपस्पृश्य वार्षाहरम्* ॥ ७ ॥

परिषिच्यमाने घर्मे अप उपस्पृश्य वार्षाहरं साम गायेत् ॥ ७ ॥

इष्टाहोत्रीयं परिषिक्ते* ॥ ८ ॥

परिषिक्ते घर्मे इष्टाहोत्रीयं साम गायेत् ॥ ८ ॥

तस्य सर्वे निधनमुपेयुः* ॥ ९ ॥

तस्येष्टाहोत्रीयस्य सर्वे ऋत्विजो निधनं ब्रूयुः ॥ ९ ॥

द्वीपं चेद्घर्मपात्राणि हरेयुर्नाकाङ्क्षेत परिषेचनम्¶ ॥ १० ॥

द्वीपञ्चेद्घर्मपात्राणि हरेयुरध्वर्यवः तत्र पात्रे परिषेचनं न प्रतीक्षेत गायेदेव साम यत्परिषेचनसमनन्तरकालं द्विधा यत्रापः

---

* द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणे विशेषोऽस्ति ।

प्रवर्त्तन्ते, तद्वीयं कः पुनरस्य कर्मणो विषयः यदा मध्यन्दिने घर्मक्रिया सास्य विषयः ॥ १० ॥

श्यैतं प्रत्याव्रजꣳस्तृचे वैकस्यां वा* ॥ ११ ॥

आहवनीयायतनाद् द्वीपाद्वा प्रत्याव्रजन् श्यैतङ्गायेत्, तृचे चैकस्यां वा तृचापत्तीनि तृचेष्विति तृचक्रियायां प्राप्तायां श्यैतस्य एकस्यां वेति विकल्पयति, अपरे च पुनः विनिविष्टविषयां विभाषां वर्णयन्ति, द्वीपात् प्रत्याव्रजंस्तृचे आहवनीयायतनादेकस्यां कस्मात् द्वीपादागच्छतः प्रकृष्टत्वादध्वनस्तृचे गानस्य सम्भवोऽस्ति, आहवनीयायतनात् तु सन्निकृष्टत्वात् पत्नीशालाया एकस्यामेव ॥ ११ ॥

यजमानो निधनमनूपेयात्* ॥ १२ ॥

तृचे वैकस्यां वा गीयमानस्य प्रस्तोत्रोच्यमानं निधनं यजमानोऽनुब्रूयात्, कुत एतत् श्रुतेः एवं हि श्रूयते प्रत्याव्रजं श्यैतं यजमानो निधनमिति ॥ १२ ॥

पूर्वया द्वारा प्रपद्योत्तरेणाग्नीं गत्वा पश्चाद्गार्हपत्यस्य तिष्ठन् महावीरायतनं प्रेक्षमाणो वामदेव्यं गायेदिति धानञ्जप्यः¶ ॥ १३ ॥

---

* द्राह्यायणे छेदविषये विशेषोऽस्ति ।

¶ द्राह्यायणोऽप्येवम् ।

पूर्वया द्वारा पत्नीशालां प्रविश्य पत्नीशालाग्नीनुत्तरेण गत्वा पश्चिमे प्रदेशे गार्हपत्यस्याग्नेः तिष्ठन् महावीरायतनं प्रेक्षमाणः यस्मिन् देशे रोचते घर्मस्तदायतनं प्रेक्षमाणो वामदेव्यं गायेदिति धानञ्जप्य आचार्य्य आह ॥ १३ ॥

श्यैतान्तानीति शाण्डिल्यः* ॥ १४ ॥

त्वग्नायिप्रभृतीनि श्यैतान्तानि गायेन्न वामदेव्यमित्येवं शाण्डिल्य आचार्य्य आह, केचिदेवं वर्णयन्ति, श्यैतान्तानीति तिष्ठन् गायेत् वामदेव्यन्त्वासीनः शान्त्यर्थं हि कर्मणोऽनुचरं वामदेव्यम् तस्या गानमयुक्तं श्रुतश्चेदं वामदेव्यम् गार्हपत्यस्य पश्चादिति, अपरे च वर्णयन्ति, तिष्ठन्नेव वामदेव्यं गायेत् आसीनं न्यायं छान्दोग्यम् वामदेव्यस्य लिङ्ग वाचनिकं तिष्ठन् गानं कथं मे पुनरेतदनुच्यमानं गम्यते, यथास्य न न्यायम् छान्दोग्यं न तिष्ठन्न्यायमिति उच्यते, श्रुतेः उदङ्ङासीनः उद्गायति प्रत्यङ्ङासीनः प्रस्तौति दक्षिणासीनः प्रतिहरतीति ॥ १४ ॥

गणः सामान्युत्तराणि* ॥ १५ ॥

अत ऊर्द्ध्वं यान्यादेक्ष्यामः तार्क्ष्यसामादीन्युद्वंशीयान्तानि दीक्षणीयादिषूदवसानीयान्तेषु कर्मसु तानि सर्वाणि गणः गणो नामसञ्ज्ञः ॥ १५ ॥

---

*द्राह्यायणोऽप्येवम्।

I

आभिरूप्यात् कर्त्तव्यानीत्येके* ॥ १६ ॥

आभिरूप्यं नाम लिङ्गं तस्मादाभिरूप्यात्कर्त्तव्यानि श्रुतिर्नास्ति एवमेके आचार्य्या ब्रुवते ॥ १६ ॥

न वा कुर्य्यात्* ॥ १७ ॥

न वा कुर्यादश्रुतत्वात् अपरे ब्रुवते अग्नीषोमीयसवनीययोरपि पशुबन्धयोराभिरूप्यात् सामगानप्रसङ्ग इति इष्टिषु च सामिधेन्यनु-वचनीयादिषु तस्मान्न कुर्यात् ॥ १७ ॥

स्वे वा यज्ञे कुर्य्यादित्येके* ॥ १८ ॥

भिन्नेष्वाचार्य्यमतेषु अलोपो लोपान्न्यायतर इति न्यायात्कर्त्त-व्यानि, यदप्युक्तमाभिरूप्यप्रसङ्गात् सोमाङ्गभूतेषु हविर्यज्ञेषु सामगान-प्रसङ्ग इति तन्नोपपद्यते वक्ष्यति हि यावद्वचनं कर्मयोग इति, अपरे ब्रुवते गणः सामान्युत्तराण्याभिरूप्याद्वा क्रियेरन् यानि वा विधास्यन्ते तार्क्ष्यसामादीनि ॥ १८ ॥

दीक्षणीयायां तार्क्ष्यसामनी गायेत्त्यमूष्वित्येते* ॥ १९ ॥

दीक्षणीयायामिष्टौ तार्क्ष्यसामनी गायेत् त्यमूष्वित्येते अत्रो-च्यते किमन्यान्यपि तार्क्ष्यसामानि सन्ति येन ऋक्ग्रहणं कृतमिति अत्रोच्यते, सन्त्यन्यान्यपि तार्क्ष्यसामानि शाखान्तरेषु तास्वेकं

* द्राह्यायणेऽप्येवम् ।

ब्राह्मणं ब्राह्मणानुसारी च कल्पः तस्मात्सत्स्वपि अन्येषु तार्च्यसामसु ऋक्ग्रहणं विशेषणार्थं कृतमिति तथा तार्च्यः सुपर्ण इति पर्याय-शब्दात् सौपर्णान्यपि गृह्येरन् एवं माभूदतो विशेषणार्थं कृतमिति अत्रोच्यते, यदि विशेषणार्थं ऋक्ग्रहणं कृतमिति अनिर्देशः किमर्थ-मेते इति अत्रोच्यते, नैवायं सामनिर्देश इति किन्तर्हि, काल-निर्देशोऽयं एते आइते आगते आसन्ने हविषि गानं स्यादिति ये पुनः सामनिर्देशं वर्णयन्ति तेषां नियमार्थो निर्देशः तत्र ह्याग्ना-वैष्णवं हविः तार्च्यसाम्नोस्वाभिरूप्यं नास्ति तदसत्यस्याभिरूप्ये अवि-नाशनामानं शब्दमालोच्य स्वस्त्ययइत्येतत् आहैतदिति किञ्चान्यत् यदाप्यनेकं हविः दीक्षणीयायां भवति तदाप्येते एव॥ १९॥

प्रायणीयायां प्रवद्भार्गवं* ॥ २० ॥

प्रायणीयायामिष्टौ प्रवद्भार्गवं साम गायेदिति वाक्यशेषः ॥ २० ॥

उदयनीयायामुद्वत्* ॥ २१ ॥

उदयनीयायामिष्टौ उद्वद्भार्गवं गायेत् प्रकृतस्य भार्गवशब्दस्यानु-कर्षणार्थः उदयनीयायामक्रमे सामोपदेशो लाघवार्थः ॥ २१ ॥

आतिथ्यायां गायत्रीसामौशनम्* ॥ २२ ॥

अतिथ्यायामिष्टौ औशनङ्गायेत् गायत्रीसाम त्रैष्टुभान्यपौ-शनानि सन्ति अतो विशेषणार्थं गायत्रीग्रहणं ॥ २२ ॥

---

*द्राह्यायणोऽप्येवम्।

अञ्जन्ति घर्मं तत्र शार्ङ्गम्* ॥ २३ ॥

अञ्जन्तीत्यत्र बहुवचनं कालार्थं यस्मिन् काले महावीरं आज्येनाध्वर्युरनक्ति तत्र गायेत् त्रिः शेषाणि यानि वक्ष्यन्ते तानि सर्वाणि सकृत् सकृद्गायेत् आरूढवदाङ्गिरसञ्च त्रिर्गायेत् कथमेतद्गम्यते, उच्यते, तत्र शब्दसामर्थ्यात् द्राह्यायणके हि पाठे शार्ङ्गारूढवदाङ्गिरसे त्रिरभ्यस्येदितराणि पराचा तथा च होता लिङ्गोपपत्तिश्चैवमिति तदिह तत्र शब्देनाचार्यो गुरुकरणेन ज्ञापयति, अवमासगुरुक्रमभेदः पुनर्वचनमर्थापत्तयः शेषमर्थमभिवर्त्तयन्तीति ॥ १३ ॥

रजतजातरूपे उपदधति तच्छुक्रचन्द्रे* ॥ २४ ॥

राजतसौवर्णयोः शतमानयोरुपधानं करोत्यध्वर्युर्यस्मिन् काले तत्र शुक्रचन्द्रे गायेत्, राजते शुक्रं सौवर्णे चन्द्रम् तच्छब्देनानयोः कर्मणोर्नानाकालत्वमपि ज्ञापयति ॥ २४ ॥

अभीन्धते तद्घर्मस्य तन्वौ* ॥ २५ ॥

रोचनार्थं घर्मेन्धनैरभीन्धते अध्वर्यवः घर्मस्य तन्वौ गायेत् ॥२५॥

रुचितं प्राहुस्तद्घर्मस्य वा रोचनमिन्द्रस्य वा* ॥ २६ ॥

---

* द्राह्यायणोऽप्येवम् ।

यदा रुचितं घर्मं प्राहुरध्वर्यवः रुचितो घर्म इति तद्घर्मस्य वा रोचनं गायेत् इन्द्रस्य वा तत् ॥ २६ ॥

धेनू उपसृजन्ति तद्धेनु* ॥ २७ ॥

गौर्धेनुरजा च धेनुस्ते वत्सबर्कराभ्यां मिश्रयन्ति तत्र धेनुं गायेत्, सकृदेव न प्रतिद्रव्यम् ॥ २७ ॥

तस्य देवतायै सोपायं स्तोभमाहरेन्न पादायेति गौतमः¶ ॥ २८ ॥

तस्य साम्नः देवतार्थं सोपायं स्तोभं कुर्यात् न पादार्थमुपायम् एवमाह गौतमः ॥ २८ ॥

उत्तमं पादं पुनरभ्यस्येद्यथा पञ्च निधने वामदेव्ये† ॥२९॥

धेनोरुभयं पादं पुनरभ्यस्येत् कथम्, यथा पञ्च निधने वामदेव्ये तेन प्रकारेणेत्यर्थः ॥ २९ ॥

पय आहरन्ति तत्पयः* ॥ ३० ॥

धेनू दुग्ध्वा तत्पय आहरन्ति तत्र पयो गायेत् सकृदेव तद्ग्रहणसामर्थ्यात् ॥ ३० ॥

---

* द्राह्यायणेऽप्येवम्।

¶ द्राह्यायणे विशेषोऽस्ति।

† द्राह्यायणेऽप्येवं, किन्तु छेदविषये विशेषोऽस्ति।

आसिञ्चन्ति तस्मिन्धुसामात्वा विशन्त्विति* ॥ ३१ ॥

तप्ते घर्मे तत्पयस्यासिञ्चन्ति तत्र सिन्धुसाम गायेत् सकृदेव ॥३१॥

शफाभ्यां परिगृह्णन्ति तद्वसिष्ठस्य शफौ* ॥ ३२ ॥

शफाभ्यां परिग्रहाभ्यां महावीरं परिगृह्णन्ति तत्र वसिष्ठस्य शफौ गायेत् ॥ ३२ ॥

ह्रियमाणे व्रतपक्षौ* ॥ ३३ ॥

होमार्थं घर्मे ह्रियमाणे व्रतपक्षौ गायेत्, अत्र तद्ग्रहणं न करोति अविप्रतिपत्तिः सर्वेषामध्वर्यूणामेतस्मिन्नानुपूर्वे ॥ ३३ ॥

हुतेऽश्विनोर्व्रते अहोरात्रयोर्वा* ॥ ३४ ॥

हुते घर्मेऽश्विनोर्व्रते गायेत्, अहोरात्रयोर्वा व्रते गायेत् विकल्पः, अपरे विनिवेशं वर्णयन्ति, अतिरात्रे अहोरात्रयोर्व्रते अन्यत्राश्विनोर्व्रते ॥ ३४ ॥

रौहिणाभ्यां पुरोडाशाभ्यां चरन्ति तद्राजन रौहिणके* ॥ ३५ ॥

रौहिणसंज्ञौ पुरोडाशावेककपालौ तयोर्हूयमानयोराजनरौहिणके गायेत् एकत्र राजनमन्यत्र रौहिणकं यथाकालम् ॥ ३५ ॥

---

*द्राह्यायणेऽप्येवम् ।

परिघर्मं सम्राडासन्द्यां समारोपयन्ति तदारूढ़वदाङ्गिरसमित एत इति स्वर्णिधनं* ॥ ३६ ॥

महावीरधर्चित्रशफादिद्रव्यं घर्मोपकरणं घर्मम् तदासन्द्यां समारोपयन्ति, तदारूढ़वदाङ्गिरसं गायेत्, इतएत तदारुहन्निति स्वर्णिधनं स्वःशब्दं निधनं कुर्यात्, त्रय्या विद्यया संस्तुतोऽभिष्टुतोऽनुशस्तस्य घर्मो भवत्यत आह ॥ ३६ ॥

ऋङ्मयो यजुर्मयः साममयो घर्मो भवतीति ह्याह¶ ॥३७॥

एवं ब्राह्मणमाह, ऋङ्मयो यजुर्मयः साममयो घर्मो भवतीति ॥३७॥

अग्निं प्रणयन्ति तत्राग्नेर्व्रतम्* ॥ ३८ ॥

यस्मिन् कालेऽध्वर्यवोऽग्निं प्रणयन्ति, तत्राग्नेर्व्रतं गायेत्, तत्र शब्दादत्र केचिदनुव्रजनम् इच्छन्ति ॥ ३८ ॥

अग्नीषोमौ तत्रोभयोर्व्रते* ॥ ३९ ॥

अग्निस्च सोमस्च अग्नीसोमौ तयोः प्रणीयमानयोरुभयोर्व्रते गायेदनुलिङ्गम् अग्निप्रणयनवत् ॥ ३९ ॥

सुत्यायां यज्ञसारथ्यहरहः† ॥ ४० ॥

---

*द्राह्यायणेऽप्येवम्।

¶द्राह्यायणे एतदत्र नास्ति।

† द्राह्यायणे विशेषोऽस्ति।

सुत्यायां यज्ञसारथि गायेत्, अहरहरित्यहर्गणार्थम् अहर्गणेषु हि सकृत्कृते कृतः शास्त्रार्थ इति कृत्वा प्रथमादह्न ऊर्द्ध्वमुत्तरेष्वहःसु संशयः स्यात् अतोऽहरहरित्याह कः पुनरस्य यज्ञसारथिनो देशः कालश्चेति अत्रोच्यते, प्राक्प्रातरनुवाकोपाकरणादाग्नीध्रिये आग्नीध्रीये सुत्यार्थमाज्येषु प्रणीयमानेषु प्रणयनाधिकारसामर्थ्यात् प्रणयन्तीति प्रकृतं तस्य पश्चात्तिष्ठन् गायेदित्यर्थः ॥ ४० ॥

सत्रे सत्रस्यर्द्धि* ॥ ४१ ॥

अहरहः सत्रे सत्रस्यर्द्धिं गायेत्, यज्ञसारथिनः प्रत्याम्नायः ॥ ४१॥

उक्षा चेदनूबन्ध्य औक्ष्णो रन्ध्रे* ॥ ४२ ॥

यदि उक्षा अनूबन्ध्यो भवति, तदा औक्ष्णे रन्ध्रे गायेत्, उक्षा सेचनसमर्थो गौः ॥ ४२ ॥

ऋषभ आर्षभं* ॥ ४३ ॥

ऋषभे अनूबन्ध्ये आर्षभं गायेत्, ऋषभः अनड्वान् भूत्वा पुनर्वृषभत्वमापन्नः ॥ ४३ ॥

उन्नते त्रैककुभं* ॥ ४४ ॥

उन्नतेऽनूबन्ध्ये त्रैककुभं गायेत्, अत्यर्थं ककुभं सुमहान् भूतः उन्नत इत्यर्थः ॥ ४४ ॥

---

*द्राह्यायणेऽप्येवम् ।

वभ्रायां वाभ्रं* ॥ ४५ ॥

वभ्रा नाम बन्ध्या तस्यामनूबन्ध्यायां वाभ्रं गायेत् ॥ ४५ ॥

अज आजिगं* ॥ ४६ ॥

अजेऽनूबन्ध्ये आजिगं गायेत् ॥ ४६ ॥

मेष और्णायवं* ॥ ४७ ॥

मेषेऽनूबन्ध्ये और्णायवं गायेत् ॥ ४७ ॥

पयस्यायां स्वरं पयोनिधनं* ॥ ४८ ॥

पयस्यायामिष्टौ अनूबन्ध्यस्थाने क्रियमाणायां स्वरम्पयोनिधनं गायेत् ॥ ४८ ॥

उदवसानीयायामुद्वंशीयं* ॥ ४९ ॥

उदवसानीयायामिष्टौ उद्वंशीयं गायेत् ॥ ४९ ॥

उपक्रम्य समापयेदाकृतेरपवर्गात्* ॥ ५० ॥

सामगानमुक्तं गणः सामान्युत्तराण्यभिरूप्यादित्यत आरभ्य एतदुपक्रम्य समापयेत् आयज्ञसमाप्तेरित्यर्थः, का पुनरियमाकृति यदारभ्य न समाप्नुयादिति अत्रोच्यते, गणः सामान्युत्तराणीत्युक्तम्

---

* द्राह्यायणोऽप्येवम् ।

K

सर्वेषां क्रिया वेति एकेषामध्वर्यूणां प्रथमयज्ञेन प्रवृञ्ज्यादित्यारभ्यते, तत्र शार्ङ्गादीनामसम्भवात् तार्क्ष्यसामादीनामप्यक्रिया प्राप्नोति, अत आचार्यो यत्नमारभते, अप्रवर्ग्येऽपि तार्क्ष्यसामादीन्यारभ्य समापयेत् कस्मात् अलोपो लोपाज्ज्यायतर इत्येतस्मात् अन्यच्च न केवलमेतदर्थं सूत्रमारभ्यते, किञ्च सर्वकर्माणि उपक्रम्य समापयेदाक्रतोरपवर्गात्, यथा शास्त्रेऽस्मिन्नाचार्याणां विप्रतिपत्तयो दृश्यन्ते तस्यां ते श्वः सुत्या, गौतमस्य नार्मेधान्तइत्येकेऽन्यः सुत्या शाण्डिल्यस्यानाक्रानं धानञ्जय्य इति एवमादिषु येनैवाचार्यमतेनोपक्रमेत तेनैव समापयेत् विधिसंरम्भान्न कुर्यात् तथा उद्गातारो ब्रह्मा सुब्रह्मण्याश्च उपक्रम्य स्वानि कर्माणि समापयेरन् अन्योन्यस्य कर्म न कुर्यात् तथा काम्ये कर्मणि प्रारब्धे अर्द्धसमाप्तएव यदि न फलावाप्तिः स्यान्न च तत्फलमेवासौ कामावाप्तिरिति कृत्वा विरमेत् लोकवत् निदानम् इह हि अवशिष्यत एवार्थः तदर्थं समापयेत् कः पुनरसावर्थः नित्यं स्वर्दृशः ब्रवीति तथाप्याङ्गरुद्धार्थएव खल्वयम्भवति अनुखल्वर्थः श्रुत्यर्था अन्ववयन्तीति निदानं स्वर्गे नित्ये दृष्टं प्रायश्चित्तिरिति तथा यजमाननिमित्तायामापदि प्राप्तायां न तत्कालमेव विरमेत् एकेषां विधिः दीक्षितश्चेदन्तराकार्यो म्रियेत मरणान्तं कर्मेति तत्तथा सति समापयेदेव उक्तं हि अतोऽन्य आहारात् गतप्राणावस्था भवन्ति तस्मात्ते प्रेतेऽपि समापयितव्या इति तथा विश्वरूपा ब्राह्मणे असितम्टगाह स्म वै पुरा कश्यपा उद्गायन्तीत्यधिकृत्याह, प्राह्णे वा अहं यज्ञं समस्थापयं यथा तु वे ग्रामस्य यातस्य शीर्षं वा भग्नं वानुसमावहेदेवं वा अहं यज्ञस्यातोऽधिकरिष्यामीति

एवमर्थं गृहीत्वा नार्द्धसमाप्तौ विरमेत् समापयेदेव तथा यथै-वोपक्रमेत् तथा समापयेत् कुतः पुनरियमाशङ्का अन्यमारभ्यान्यं समापयेदिति. क्वापि च दर्शनात् क्वापि वनोनायजाभ्यः चतु-रात्राय जामदग्न्याय दोत्ते ब्रह्मचारिणं सम्पन्नं कुलीनं परिहृत्य तस्य त्रिवृत्पञ्चदशमहरुपेतं बभूवार्थतरस्तमर्थं साधयित्वा प्रत्याजगाम समापयमिदमहर्योगन्निशीर्णमतेत्यायुरतिरात्रमुपदधौ ब्रह्मचारिणश्च परिहारेण यज्ञप्रत्यवहारेण च स रूक्षो बभूव यस्तेतौ दोषौ परिहरेन्न रूक्षः स्यादित्येतस्माद्दोषादाशङ्कमानः आचार्य्य आह उपक्रम्य समापयेदाक्रतोरपवर्गादिति ॥ ५० ॥

इति प्रथमस्य षष्ठी कण्डिका ।

---

अथ सप्तमी कण्डिका ।

औदुम्बरीमुच्छ्रयिष्यन् पूर्वेण देवयजनं गच्छेद्दक्षिण-तश्चेदस्यावसथः स्यात्* ॥ १ ॥

प्रास्तोत्रीयमुक्तं परिसामगानं साम्प्रतमौद्गात्रमुच्यते तत्रेदं प्रथममौद्गात्रम् औदुम्बरीकर्म उदुम्बरस्य विकारः औदुम्बरी अव-

---

* द्राह्यायणेऽप्येवम् ।

यवो वा तामौदुम्बरीमुच्छ्रयिष्यन् उद्गाता पूर्वेण देवयजनस्य गच्छेत् उच्छ्रयिष्यन्निति भविष्यत्कालनिर्देशः देवयजनमुक्तलक्षणं यदि दक्षिणतो देवयजनस्यावसथः स्यादुद्गातुः अत्रोच्यते कथं पुनरेतद्गम्यते यथौदुम्बरीमुच्छ्रयणमुद्गातुर्भवति न तत्प्राप्नोति प्रस्तोत्रधिकृतत्वात् अत्रोच्यते, परिसामगानं प्रस्तोतुरधिकृतं तत्परिसमाप्तम् अनन्तरमौद्गात्रं विवक्षितं श्रुतिश्च प्रजापतिर्देवेभ्य ऊर्जं व्यभजदित्येवमधिकृत्याह, यदुद्गातौदुम्बरीं प्रथमेन कर्मणान्वारभते स्वयैव तद्देवतयात्मानमार्लिज्याय वृणीतेतामुच्छ्रयतीति एवं कृत्वा सूत्रकार आह, एकश्रुतिविधानान्मन्त्रात् कर्माणि चोद्गातैव कुर्यादनादेश इति अत औदुम्बर्युच्छ्रयणमुद्गातुः सिद्धम् ॥ १ ॥

उत्तरेण यद्यन्यतः* ॥ २ ॥

यदि अन्यस्यान्दिश्यावसथः स्यादुद्गातुः प्राच्यामुदीच्यां प्रतीच्यां वा तत उत्तरेण देवयजनस्य गच्छेत् ॥ २ ॥

पूर्वौ सदसो द्वार्यौ श्वभ्रावन्तरेण प्रपद्याग्रेणौदुम्बरीं गत्वोदङ्मुखस्तिष्ठन्नध्वर्युणा सहोच्छ्रयेत् द्युतानस्त्वेति¶ ॥ ३ ॥

पर्वौ सदसः द्वार्यौ द्वारार्थौ श्वभ्रौ श्वभ्रः खातः तयो श्वभ्रयोरन्तरा प्रपद्य औदुम्बरीं प्रागग्रां विन्यस्तां पूर्वेण गत्वा उदङ्मुखस्तिष्ठन् उद-

---

*द्राह्यायणेऽप्येवम् ।

¶ द्राह्यायणे विशेषोऽस्ति ।

मुखग्रहणं प्राङ्मुखकरणज्ञानादेश इति परिभाषितं तन्माभूदिति तिष्ठन्नित्यूर्द्धता विधीयते। अध्वर्युणा सह उच्छ्रयेत् अध्वर्युणा सहोच्छ्रयणं कुर्यात् द्युता नस्त्वेत्येतदादिना मन्त्रेण ॥ ३ ॥

आयोरिति श्वभ्रेव दध्यात्* ॥ ४ ॥

आयोरित्येतदादिना मन्त्रेण श्वभ्रेव दध्यात् प्रक्षिपेत् ॥ ४ ॥

अवधाय जपेन्नमः समुद्राय नमः समुद्रस्य चक्षसे। मामा यूनर्वाहासीदूर्गस्यर्ज्जोदा ऊर्ज्जम्मे देह्यूर्जं मे देह्यन्नं मे देह्यन्नं मे धेहीति* ॥ ५ ॥

औदुम्बरीमवधाय श्वभ्रे एतद्यजुर्जपेत् यथा सूचितं अर्थवादेतिकरणमध्यपतितमेतद्यजुः तत्सूत्रकारेणोद्धृता अर्थवादेतिकरणं तत्स्वमेव दर्शितम् ॥ ५ ॥

तान्न विसृजेदावच्छादनात्* ॥ ६ ॥

तामौदुम्बरीन्न विसृजेत् आ अवच्छादनात् अवच्छादनं छदिषोऽध्यूहनं तामिति निर्देशः औदुम्बर्यां भग्नापन्नतोतदग्धप्ररूढ़ायामन्यामाहृत्य तथैवाहृतोच्छ्रयेत् अत्रापि तान्न विसृजेदावच्छादनात् ॥ ६ ॥

---

*द्राह्यायणेऽप्येवम्।

**अध्वर्य्युणाभिजुहतायां जुहुयात् तस्यैवावृतान्तरेण विशाखे घृतेन द्यावापृथिवी आप्रीणाथाᳩ स्वाहेति पूर्वां* ।७।**

यथाध्वर्य्युणाभिहुता स्यादौदुम्बरी तथाभिजुहुयात् तस्यैवाध्वर्य्योराष्टता आवृत् परिक्रमस्तेनैव विधिनेत्यर्थः अन्तरेण विशाखे तस्यैवावृतेत्युक्तं यद्यप्येतस्मिन् देशेऽध्वर्य्युर्न जुहुयात् तथाप्युद्गाता विशाखयोरन्तराले जुहुयात् यथा सूचितेन मन्त्रेण पूर्वां ॥ ७ ॥

**प्रजापतये स्वाहेत्युत्तरां* ॥ ८ ॥**

अनेन मन्त्रेणोत्तरामाहुतिं जुहुयात् अनेन यथोक्तेन स्वाहाकारान्तेन मन्त्रेणोत्तरामाहुतिं जुहुयात् ॥ ८ ॥

**अन्यतरां वा स्वाहाकारद्वितीयां यथा भूमिमाज्यं प्राश्यतीति* ॥ ९ ॥**

अनयोराहुत्योरन्यतरां वा जुहुयात् स्वाहाकारद्वितीयां तथा च जुहुयादस्कन्नमविच्छिद्यमानम् आज्यं यथा भूमिङ्गमिष्यतीति ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम्, किन्तु क्रमविषये विशेषोऽस्ति ।

**अधस्ताद्विशाखस्य परिगृह्य जपेद्दिवि देवां दृ०ँह मयि प्रजामिति* ॥ १० ॥**

विशाखस्याधस्तादुभाभ्यां पाणिभ्यां गृहीत्वा यथासूचितं यजुर्जपेत् ॥ १० ॥

**अन्तरीक्षे वया०ँसि दृ०ँह मयि पशूनिति मध्ये* ॥११॥**

एतद्यजुर्जपेत्, एतत् यजुर्यथा सूचितं मध्य औदुम्बरीं परिगृह्य जपेत् ॥ ११ ॥

**पृथिव्या मध्योषधीर्दृ०ँह मयि सजातानिति मूले* ॥ १२ ॥**

मूले परिगृह्य औदुम्बरीमेतद्यजुर्जपेत् यथासूचितञ्च ॥ १२ ॥

**ऊर्द्ध्वं होमाद्याजमानं धानञ्जप्यः* ॥ १३ ॥**

ऊर्द्ध्वं होमात् कर्मोपदिश्यते तद्याजमानं धानञ्जय्य इच्छति कस्मात् आत्मवाचकत्वात् मन्त्राणां मयि प्रजां मयि पशून् मयि सजातानिति ॥ १३ ॥

**स्वयमिति गौतमशाण्डिल्यौ* ॥ १४ ॥**

उद्गाता स्वयमिति गौतमशाण्डिल्यावाचार्यावाहतुः कस्मात् यां वै काञ्चर्त्विगाशिषमाशासते यजमानस्यैव सेति ॥ १४ ॥

---

*द्राह्यायणेऽप्येवम्।

अवच्छाद्यमानायां दिव्यं छद्मसि सन्ततिनाम विश्व-जनस्य छाया नमस्तेऽस्तु मामा हिं९ सीरिति* ॥ १५ ॥

अवच्छाद्यमानायामौदुम्बर्यामेतद्यजुर्यथाम्नातं जपेत् ॥१५॥

दक्षिणेन श्वभ्रान् गत्वा परौ द्वार्यावन्तरेण प्रपद्यैतत् कुर्य्यादिति शाण्डिल्यः* ॥ १६ ॥

अग्रेणौदुम्बरीं गत्वेत्यत आरभ्य आसमाप्तेरेतत्कर्म दक्षिणेन सदोनिमित्तान् स्थूणा श्वभ्रान् गत्वा अपरौ द्वारार्थौ यौ श्वभ्रावन्तरेण प्रविश्य कुर्य्यात् इति शाण्डिल्य आचार्य्य आह ॥ १६ ॥

उत्तरेणेति धानञ्जप्यः* ॥ १७ ॥

यदेतत्कर्मोक्तं शाण्डिल्यीयं एतदेव सर्वं धानञ्जप्य आचार्य्य इच्छति अयं विशेषः उत्तरेण श्वभ्रान् गत्वा ॥ १७ ॥

गौतमीयमितरत्* ॥ १८ ॥

यत्तु प्रथमं विधानमुक्तं तद्गौतमाचार्य्यसंकीर्त्तितं किमर्थमेत-दुक्तमित्येतत् उक्तमुपक्रम्य समापयेदाकृतेरपवर्गादित्येतदर्थम् ॥१८॥

---

* द्राह्यायणेऽप्येवम् ।

यथेतन्निष्क्रामेत्* ॥ १९ ॥

यथागतं यथाप्रविष्टं तथैव निष्क्रामेत् यदि पूर्वया यद्यपरया तामेव निष्क्रामेत् ॥ १९ ॥

इति प्रथमस्य सप्तमी कण्डिका।

---

अथ अष्टमी कण्डिका।

यूपमुच्छ्रीयमाणमनुमन्त्रयेरन्नृमण ऊर्द्ध्वभरसन्त्वेति* ॥१॥

औदुम्बर्युच्छ्रयणमुक्तम् अनन्तरं यूपानुमन्त्रणं विवक्षितं तद्विवक्षुराचार्य्य इदं सूत्रमारभते यूपमुच्छ्रीयमाणमिति। यूपमिति कर्मणि द्वितीया यूपशब्दः प्रतीतपदार्थकः उच्छ्रीयमाणमिति वर्त्तमानकालोपदेशः अनुमन्त्रयेरन्निति क्रियोपदेशः नृमण ऊर्द्ध्वभरसन्त्वेति मन्त्रोपदेशः, अत्रोच्यते, यूपमिति न कर्त्तव्यं कस्मात् उच्छ्रीयमाणशब्दसामर्थ्यादेव ज्ञास्यते मन्त्रलिङ्गाच्च नृमण ऊर्द्ध्वेति ऊर्द्ध्वो हि यूपः उच्यते, कर्त्तव्यं यूपग्रहणं अक्रियमाणे औदुम्बर्य्या अनुमन्त्रणं प्रतीयात् उद्गातृणामौदुम्बरीसंयोगात् अतो यूपग्रहणमवश्यं कर्त्तव्यं, ननु नृमण इति सिद्धे आदेशे ऊर्द्ध्वभर-

---

* द्राह्यायणोऽप्येवम्।

L

सन्त्वित्येतेषामक्षराणां किमर्थं ग्रहणमिति अत्रोच्यते, वक्ष्यति हि एतान्येवोहस्थानानीति ॥ १ ॥

एतान्येवोहस्थानानि यावन्तः स्युः* ॥ २ ॥

एतान्येव पदानि ऊहस्य स्थानानि यावन्तो यूपाः स्युः, ननु एतान्येवोहस्थानानीति सिद्धे यावन्तः स्युरिति किमर्थमारभ्यते, ब्रवीति एकैकस्मिन् यूपे अनुमन्त्रणं माभूदग्निष्ठ एव सर्वेषां संस्कारार्थमूहः स्यादिति कस्मात् भिन्नकालत्वात् यूपोच्छ्रयणस्य नृमण-ऊर्द्ध्वभराः सन्तो सुम्नानूर्द्ध्वभरा दृश्येयं ॥ २ ॥

यत्र तिष्ठन्त उच्छ्रीयमाणं पश्येयुरिति शाण्डिल्यः* ॥३॥

यस्मिन्देशे स्थिता उच्छ्रीयमाणं पश्येयुरुद्गातारः तत्रैव स्थिता अनुमन्त्रयेरन्निति शाण्डिल्य आचार्य्य आह, कस्मात् उच्छ्रीयमाणमिति वर्त्तमानकालनियमात् ॥ ३ ॥

अन्तर्वेद्येवेति धानञ्जय्यो न बहिर्वेदि यजुरवकल्पत-इति ¶ ॥ ४ ॥

---

*द्राह्यायणोऽप्येवम् ।

¶द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अन्तर्वेद्येव तिष्ठन्तोऽनुमन्त्रयेरन्निति धानञ्जप्य आचार्य्य आह कस्मात् बहिर्वेदि प्रयुज्यमानं यजुर्न समर्थं भवतीति श्रुतेः न केवलमसमर्थं भवतीति अवकल्पते च असम्यक् च कल्पते न सम्यक् प्रयुक्तं भवतीत्यर्थः ॥ ४ ॥

विश्वरूपाणां गानं यजमानेनोक्तः प्रत्याचक्षीत * ॥ ५ ॥

प्रस्तोत्रा गेयं परिसामत्वादिति चेत् अत्रोच्यते, नैवं कुतः श्रुतेः आध्वर्य्यवित्याह्वोद्गाता मास्म मे निवेद्य होत्रे प्रातरनुवाकमुपाकरोदिति सोऽध्वर्य्युः प्राह आहूतो व्रजति स पूर्व्वया द्वारा हविर्द्धाने प्रपद्यते स दक्षिणस्य हविर्द्धानस्योत्तरं चक्रमभ्युपश्रयमाण उदङ्ङासीनो विश्वरूपा गायतीति तदेतद्गानं प्रति यजमानेनोक्तः अकारणं प्रत्याचक्षीत न गास्यामि कस्मात् ग्रहाभावात् ग्रस्ताभावात् सम्पदतिरेकदर्शनादिति ॥ ५ ॥

गायेति चेदेव ब्रूयान्न मामनामन्त्र्य प्रातरनुवाकमुपाकुर्या इत्यध्वर्य्युं ब्रूयात् ¶ ॥ ६ ॥

यदि यजमानः गायेदिति ब्रूयात्पुनः तदा उद्गाताध्वर्य्युं ब्रूयात् मामपृष्ट्वा प्रातरनुवाकस्योपाकरणं माकार्षीरिति अथैव-

---

* द्राह्यायणे विशेषोऽस्ति ।

¶ द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

शब्दः कस्माद्गायेति चेदेवेति अवधारणार्थः, ब्रूयादेवेति यथैव सकारणं प्रत्याख्यानं कृत उद्गात्रा तथैव सकारणं यजमानो ब्रूयाद्-गायेति उक्तं ग्रहाभावाच्छस्त्राभावाच्च सम्पदतिरेकदर्शनान्न गास्यामी-त्यत्र ब्रवीमि वसतीवर्योर्ग्रहः प्रातरनुवाकः शस्त्रं न च सम्पदतिरेकः यथान्यैः परिसामभिरिति ॥ ६ ॥

एवमुक्तः सन्नुद्गाता किं कुर्यादित्युच्यते ।

होतारं प्रातरनुवाकायोपविष्टं पूर्वेण गत्वा यजमानस्य पूर्वया द्वारा प्रपद्यान्तरेण हविर्द्धाने पूर्वेण चक्रे उदङ्मुख उपविशेत् तूष्णीम् * ॥ ७ ॥

होतारं प्रातरनुवाकशंसनार्थमुपविष्टं पूर्वेण गत्वा यजमानस्य तेनैव गत्वा पूर्वया द्वारा हविर्धानं प्रविश्य हविर्द्धानयोरनसोरन्तराले चक्रयोः पूर्वे प्रदेशे उदङ्मुख उपविशेदुद्गाता तूष्णीं, ननु किं मन्त्रेणोप-वेशनं प्रकृतं येन तूष्णीमाह, उच्यते बहिष्पवमानप्रकरणे यजुषोपवेशनं विधायाह, एवं सर्वस्तोत्रेष्वासीरन्निति तदिह स्तोत्रसंशब्दनात् सर्व-शब्दसामर्थ्यात्प्राप्नोति तन्निवृत्त्यर्थमाह तूष्णीमिति स्तोत्रसंशब्दनन्तु अध्वर्योः किं स्तुतं स्तोत्रमिति ॥ ७ ॥

---

*द्राह्यायणेऽप्येवम् ।

पुरस्ताद् यजमानः प्रत्यङ्मुखः * ॥ ८ ॥

उद्गातुः पूर्वे प्रदेशे यजमानः प्रत्यङ्मुख उपविशेत् तूष्णीम्॥ ८ ॥

युञ्जे वाचं शतपदीङ्गायेत् सहस्रवर्त्तनि गायत्रं त्रैष्टुभं जगद् विश्वा रूपाणि सम्भृता देवा ओकांसि चक्रिर इत्येतस्यां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानञ्जप्यः स्वाध्यायस्वरेण मनसैव यजमान उपस्वरेत् ¹ ॥ ९ ॥

युञ्जे वाचमित्येतदाद्यायां यथासूचितायां पंक्तौ त्रिर्गायत्रं गायेदिति धानञ्जप्य आचार्य्य आह स्वाध्यायस्वरेण मन्द्रेणेति, अपरे ब्रुवते येन स्वरेण नित्यः स्वाध्यायः क्रियते तेनेति मध्यमेनेति अथैतस्यामिति किमर्थं छन्दोऽन्तरमेतस्यामेव पंक्तौ स्यादिति उत्तरसूत्रोक्तमित्यर्थः ॥ ९ ॥

त्रिषु त्रिषु पदेषु गायेदिति गौतमः पूर्वं पूर्वमतिसृजन् * ॥ १० ॥

---

*द्राह्यायणोऽप्येवम्।

¹ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

एतस्यामेव पंक्तौ त्रिषु त्रिषु पदेषु गायत्रं गायेत् पूर्वं पूर्वं विसृजन् युञ्जे वाचं शतपदीङ्गायेत् सहस्रवर्त्तनि गायत्रं त्रैष्टुभञ्जगदिति प्रथमङ्गायेत्, सहस्रवर्त्तनि गायत्रं त्रैष्टुभञ्जगद् विश्वा रूपाणि सम्भृतेति द्वितीयं, गायत्रं त्रैष्टुभञ्जगद् विश्वा रूपाणि सम्भृता देवा ओकांसि चक्रिरइति तृतीयम्॥ १० ॥

प्रगाथकारं वा * ॥ ११ ॥

एतस्यामेव पंक्तौ प्रगाथकारं वा गायत्रं गायेत् प्रगाथकारं कृत्वा प्रयोगस्तु युञ्जे वाचं शतपदीङ्गायेत् सहस्रवर्त्तनि गायत्रं त्रैष्टुभं जगदिति प्रथमं गायेत्, गायत्रं त्रैष्टुभं जगद्गायत्रं त्रैष्टुभञ्जगद् विश्वा रूपाणि सम्भृतेति द्वितीयं, विश्वा रूपाणि सम्भृता विश्वा रूपाणि सम्भृता देवा ओकांसि चक्रिरइति तृतीयम्॥ ११ ॥

गीत्वा यथार्थं स्यात् * ॥ १२ ॥

एतेषां कल्पानामन्यतमेन गीत्वा यथा प्रयोजनं गच्छेत् ॥ १२ ॥

विश्वरूपाश्चेद्गायेत् ज्योतीꣳष्यपि गायेत् * ॥ १३ ॥

यदि विश्वरूपा गायेत् ततः ज्योतींष्यपि गायेत्, ननु किमर्थं

---

*द्राह्यायणेऽप्येवम् ।

पुनरयं यद्यर्थः क्रियते चेदिति यदा विश्वरूपाणां गानं यत्नेन प्रतिष्ठापितमिति उच्यते, अयं ह्याचार्यो वक्ष्यति एतं परिक्रमं सर्वक्रतुषु विद्यादिति, तद् विश्वरूपाणां गानं सर्वक्रतुषु प्राप्नोति सोऽयमाचार्य्यः ज्योतिष्टोमादन्यत्र विश्वरूपाणां गानं ज्ञापयति कथं एतत् विश्वरूपाणां गानं ज्योतिष्टोम एव प्रवर्त्तते नान्यत्रेति ननु वक्ष्यत्याचार्य्यो न चान्यत्र विश्वरूपात् ज्योतिष्टोमादिति सत्यमेतत् अस्य तु पुनर्वचनस्य तत्रैव प्रयोजनं वक्ष्यामः कः पुनर्ज्योतिर्गानस्य कालो गानविधिश्चेति ॥ १३ ॥

परिहिते प्रातरनुवाके यो नप्त्रीयं नाम सूक्तं पुरा तस्माद्धोतारमारम्भयित्वाग्रयणस्य वानुहिङ्कारं पवित्रं धारयन्नास्तावं वा प्राप्य स्तोमयोगादग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः सूर्य्यो ज्योतिर्ज्योतिः सूर्य्य इत्येतेषु पदेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत्* ॥ १४ ॥

परिहिते समाप्ते प्रातरनुवाके परिधानीयायां ऋचायामित्यर्थः अपोनप्त्रीयं नाम ऋक्वं तस्मात्पूर्वं पुरा विरम्यतां तावदित्युक्त्वा आग्रयणस्य वानुहिङ्कारं आग्रयणो ग्रहः तस्य गृहीतस्य हिंकारस्य पश्चात् आग्रयणं गृह्णन्नध्वर्युर्हिंकरोति पवित्रं धारयन् पवित्रं विगृह्णन्ति हस्तकार्य्यमेव तद् यज्ञस्यक्रियत इति आस्तावं वा

* द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम्।

प्राप्य पुरा बहिष्पवमानस्य स्तोमयोगात् एतत्कालत्रयमुपदिष्टं ज्योतिर्गानस्य विकल्पेन अग्निर्ज्योतिर्ज्योतिरग्निरित्येतेषु यथासूत्रितेषु पदेषु एकैकस्मिन् पदे त्रिस्त्रिर्गायत्रं गायेत् अभ्यस्याभ्यस्य अभ्यासम् ॥ १४ ॥

तानि नान्यत्र विश्वरूपाभ्यः* ॥ १५ ॥

यदा तावदुक्तं विश्वरूपास्वेद्गायेत् ज्योतींष्यपि गायेदिति तत्किमिदं पुनस्तानि नान्यत्र विश्वरूपाभ्य इति अत्रोच्यते, यत्कालत्रयमुक्तं ज्योतिर्गानस्य तदिह पुनर्नियम्यते विश्वरूपगानानन्तरमेव ज्योतिर्गानं स्यादिति अपरे पुनर्वर्णयन्ति एतद् विश्वरूपाणां गानं यएवंविद्यजमानस्तस्यैव स्यात् नाविदुष इति कस्मात् अनियमाद् विश्वरूपास्वेद्गायेदिति तेन विदुष एव यजमानस्य विश्वरूपाणां गानन्नाविदुष इति उक्तं एवं हि यजमान उपस्वरेदिति एतद् विदुषो यजमानस्योपस्वरणं सम्भवति तानीति तानि ज्योतींषि लोकद्वारीयोपसरणादीनि चैवं विदुष एव यजमानस्य प्रवर्त्तेरन्नानेनं विदुष इति ॥ १५ ॥

न चान्यत्र विश्वरूपात् ज्योतिष्टोमात् ज्योतिष्टोमात्* ॥१६॥

---

* द्राह्यायणोऽप्येवम् ।

ज्योतिष्टोमादन्यत्र विश्वरूपाणां गानं न स्यात् ननु यदा तावत् पूर्वमेव ज्ञापितं ज्योतिष्टोमएव विश्वरूपाणां गानं नान्यत्रेति तत् किमिदं पुनरुच्यते, न चान्यत्र विश्वरूपात् ज्योतिष्टोमादिति उच्यते, ज्योतिष्टोमेपि यावदाहारं न स्यादिति प्रथमाहार एव भवेदिति सहचरणानि ह्येतानि विश्वरूपाश्च ज्योतींषि च ज्योतिष्टोमस्येति ॥१६॥

इति प्रथमस्य अष्टमी कण्डिका।

---

अथ नवमी कण्डिका।

युगपत्कर्मसु सर्वेषूद्गातुर्दक्षिणमनु वाङ् प्रस्तोता सव्यं प्रतिहर्त्ता* ॥ १ ॥

वक्ष्यत्ययमाचार्य्यः होता प्रातरनुवाकमनूच्याभूदुषा इति यदा ब्रूयादथ वेदिमाक्रामेयुर्मृदा शिथिरेति सर्वेषामुद्गातॄणां युगपत्-कर्मोच्यते, तस्य को विधिरिति तं विवक्षुराह, युगपत्कर्मस्विति युगपदिति यान्येकवेलायामेतेषु युगपत्कर्मसु सहकर्त्तव्येषु कर्मसु सर्वेषु सर्वशब्दः निरवशेषवाची उद्गातुर्दक्षिणं वाङ् अनु प्रस्तोता

---

*द्राह्यायणोऽप्येवम्।

M

भवेत् सव्यं बाहुं अनु प्रतिहर्त्ता कर्मस्विति बहुवचननिर्द्देशात्सिद्धे सर्वकर्मत्वे सर्वशब्दः किमर्थमिति चेत् अत्रोच्यते, यदि ह्ययं सर्वशब्दं न कुर्य्याद्वेद्याक्रमणादिषु कर्मसु तद्विधानं प्रतीयते सोऽयमाचार्य्यः सर्वग्रहणं करोति पूर्वमप्याक्रमणाद् यत्कर्मोक्तं यूपानुमन्त्रणं तस्मिन्नप्येष एव विधिः स्यादिति ॥ १ ॥

होता प्रातरनुवाकमनूच्याभूदुषा इति यदा ब्रूयादथ-वेदिमाक्रामेयुर्म्रदाशिथिरेति* ॥ २ ॥

होता प्रातरनुवाकं शस्त्रमनूच्य यदा यस्मिन् काले अभूदुषा इत्येतं शब्दं ब्रूयात् अथानन्तरं वेदिमाक्रामेयुर्म्रदाशिथिरेत्येतदा-दिना यजुषा अत्र होतृग्रहणं किमर्थमिति चेत् यदा प्रातरनुवाको होतृकर्तृक एव अत्रोच्यते, होतर्य्येव प्रातरनुवाककर्त्तरि कदाचिदपि प्रातरनुवाकस्य कर्त्ता होता न भवति न तस्मिन् कः पुनरस्य विषयः प्रायणीयोऽतिरात्रोवेदत्रिरात्रस्यैकेषामध्वर्यूणामसमाप्त एवाहनि प्रात-रनुवाक उपाक्रियते न तत्राक्रमणं कुर्युः होतैव यदा ब्रूयात्तदा कुर्य्युः अतः प्रातरनुवाकग्रहणं होतृग्रहणं च करोति ॥ २ ॥

बर्हिर्वेद्येतज्जपित्वा मा मा हिंसीरित्येतावतवेति धानज्जप्यः* ॥ ३ ॥

बर्हिर्वेद्येतद्यजुर्जपित्वा म्रदाशिथिरेत्येतदादि वेदिरसीति यावत्

*द्राह्यायणेऽप्येवम् ।

मामाहिंसीरित्येतावतैवाक्रमणं कुर्य्युरिति धानञ्जप्य आचार्य्य आह ॥ ३ ॥

सवनमुखेषु च* ॥ ४ ॥

सवनमुखे पवमानमुखे यदाक्रमणं तदेवं प्रकारं सर्वेषु सवनमुखेषु स्यात् अभूदुषाकाले आज्यानामन्ते निःसृप्य पृष्ठानामन्ते च निःसृप्य, चशब्दो धानञ्जप्यमतानुकर्षणार्थः ॥ ४ ॥

यजुषाहरहरिति गौतमः¶ ॥ ५ ॥

गौतम आचार्य्य आह, आक्रमणं अहरहर्यजुषा स्यादिति अहर्ग्रहणं चाहर्ग्रहणार्थं अहर्गणे सकृत्कृते कृतः शास्त्रार्थ इति कृत्वा उत्तरेष्वहःस्वक्रिया माभूदिति ॥ ५ ॥

सकृत्कृताविति शाण्डिल्यः* ॥ ६ ॥

एकाहेषु चाहर्गणेषु च सकृदेव स्यादिति शाण्डिल्य आचार्य्य आह ॥ ६ ॥

यावद्वाक्रामेयुरित्येके* ॥ ७ ॥

---

*द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणोऽप्येवम् , किन्तु छेदविषये विशेषोऽस्ति ।

एके आचार्या ब्रुवते यावत्कृत्वा वेदिमाक्रामेयुः तावत्कृत्वा यजुषेति अपरे पुनर्विनिवेशं वर्णयन्ति अनुसवनमेकाहेषु यजुषाहरहरिति अहीनेषु सकृत्कृतताविति सत्रेष यावद्वाक्रामेयुरिति ओस्तोमेषु ॥ ७ ॥

हविर्द्धानं प्रवेक्ष्यमाना वसतीवरीरनुप्रविशेयुः* ॥ ८ ॥

हविर्द्धानं प्रवेक्ष्यमाना अध्वर्यवः वसतीवरीसंज्ञा आपः ता अनुप्रविशेयुः तासां पश्चात्प्रविशेयुः ॥ ८ ॥

तस्य रराट्यामालभ्य विष्णोः शिर इति* ॥ ९ ॥

तस्य हविर्धानस्य रराट्यामालभ्य विष्णोः शिर इत्येतद् यजुर्जपेयुः रराट्यानाम द्वारस्योपरिस्थितं मण्डलं ललाटस्थानीयं तस्येति तस्य नात्मनः ॥ ९ ॥

इष ऊर्ज इति प्रविशन्तः¶ ॥ १० ॥

इष ऊर्ज इत्येतदादि यजुर्हविर्द्धानं प्रविशन्तो जपेयुः अपरे वाकाङ्गमिदं यजुर्वर्णयन्ति इष ऊर्ज्ज आयुषे वर्चसे च प्रविशाम इति ॥ १० ॥

---

* द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणेन परसूत्रेण सहैकसूत्रं कृतम् ।

अन्तरेणेषे बाहूनवहृत्य पार्ष्णीरनुदृयच्छन्तो युनज्मीति राजानमभिमृशेयुर्यः प्रातःसवनाय* ॥ ११ ॥

दूर्षा च दूर्षा च तयोरिषयोरन्तरेण बाहून् प्रसार्य पार्ष्णीरक्षिपन्तः युनज्मीत्येतेन यजुषा सोमं राजानमभिमृशेयुः यः प्रातःसवनार्थमुपक्लृप्तः ॥ ११ ॥

अविभक्तश्चेत्सर्वम्¶ ॥ १२ ॥

यद्यविभक्तः स्यात् सर्वमभिमृशेयुः ॥ १२ ॥

नचेत्प्राप्नुयुर्देशेनैव¶ ॥ १३ ॥

यदि न प्राप्नुयुः सोमन्देशेनैव प्रसार्य बाहूनवमृष्टं मन्येयुः अथैवशब्दः किमर्थं, उच्यते, अन्यस्मिन्नप्यभिमर्शने देशेनैव यथा तद्यदानुशंसन् होतापोहिष्ठीया ब्रूयात् तदैनमन्वालभेरन्नपाष्ट्वाना इति ॥ १३ ॥

प्रस्तोता प्रथमोऽतिसर्पेत्¶ ॥ १४ ॥

साम्प्रतन्तेषां दक्षिणस्य हविर्धानस्य पश्चिमे प्रदेशे कर्म वक्ष्यते तदर्थं प्रस्तोता प्रथमोऽतिसर्पेत् ॥ १४ ॥

---

*द्राह्यायणेन पूर्वसूत्रेण सहैकसूत्रं कृतम्।

¶द्राह्यायणोऽप्येवम्।

**तत उद्गाता* ॥ १५ ॥**

ततोऽनन्तरं उद्गाता अतिसर्पेत् ॥ १५ ॥

**ततः प्रतिहर्त्ता* ॥ १६ ॥**

ततोऽनन्तरं प्रतिहर्त्ता अतिसर्पेत् ततस्तत इत्येष गतिक्रमः सर्वत्र सदःप्रवेशननिर्गमनादिषु कर्मसु ॥ १६ ॥

**दक्षिणस्य हविर्द्धानस्य पश्चात् सव्यावृत उपविशेयुर्ऋतस्य सदन इति¶ ॥ १७ ॥**

द्वे हविर्द्धानसंज्ञके अनसी तयोर्दक्षिणस्य पश्चिमे प्रदेशे सव्यावृत उपविशेयुः ऋतस्य सदन इत्येतेन यजुषा युगपत्कर्मन्यायेन प्राङ्मुखाः ॥ १७ ॥

**पुरस्ताच्चोपरिष्टाच्चर्चः सर्वत्र जपेयुर्यासु करिष्यन्तः स्युः¶ ॥ १८ ॥**

पुरस्ताच्च उपरिष्टाच्च ऋचः सर्वत्र जपेयुः सर्वत्र स्तोत्रेषु न केवलं

---

* द्राह्यायणेनैताभ्यामेकसूत्रं कृतम् ।

¶ द्राह्यायणेऽप्येवम् ।

बहिष्पवमाने यासु यासु स्तोत्रं करिष्यन्तः स्युः अथ पुरस्ताच्चेति कस्मादुच्यते उपरिष्टाच्चेति वक्तव्ये सर्वथा उपरिष्टाच्छब्दः पुरस्तात् क्रियामपेक्षते सम्बन्धिशब्दादत्रोच्यते स्तोत्रसम्बन्धात्पुरस्ताज्जपोपरिष्टाज्जपयोः सामकल्पितछन्दोविकारः प्राप्नोति अतोऽयमाचार्यः पुरस्ताच्चेति ब्रवीति तेन किं नैवर्चः सामिकं धर्ममपेक्षन्ते य एवौत्पत्तिकः स्वाध्यायधर्मस्तेनैव प्रयुज्येरन्निति कथं पुनरेतदनुक्तं गम्यते यथर्चः सामिकं छन्दोविकारं गृह्णन्तीति उच्यते श्रुतेः श्रुतिर्हि न किष्टं कर्मणा नशदिति बृहत्यः सत्योभ्यारम्भेण जगत्यः एषोऽस्य धारया सुत इति ककुभः सत्योभ्यारम्भेण त्रिष्टुभ इति च अत्र न किष्टं कर्मणा नशदित्येकैव बृहती तथा एषोऽस्य धारयासुत इत्येकैव ककुप् तत्र सत्या जगत्यो विकारे बृहत्यः ककुभः सत्य इति बहुवचनस्यासम्भवः तदेवं दृष्ट्वा सूत्रकारो यत्नमारभते, कथं पुरस्ताज्जपोपरिष्टाज्जपयोरविकारः स्यादिति अत्रोच्यते यद्येवं बृहत्यः सत्यः ककुभः सत्य इति अस्य बहुवचनस्य कथमर्थवत्त्वमिति उच्यते, प्रगाथधर्मं गृहीत्वा ब्रवीति ब्राह्मणं एष प्रगाथानां धर्मः प्रथमश्छन्दःक्रिया तथा प्रगाथेषु प्रथमश्छन्दःक्रिया तच्चोदितत्वादिति एवमेतं सामान्यं प्रगाथधर्मं गृहीत्वा ब्राह्मणमाह, बृहत्यः सत्य इत्यादि एवमेतद् ब्राह्मणमर्थवद्भवतीति अथ पुरस्तादुपरिष्टाच्चेति वक्तव्ये पुरस्ताच्छब्दे चशब्दः किमर्थं क्रियते, उच्यते नियमार्थं यद्यपि प्रमादात् कथञ्चित् पुरस्ताज्जपो न क्रियेत उपरिष्टाज्जपः क्रियेतैव न सन्नियोगशिष्टावेताविति कृत्वा उपरिष्टाज्जपो निवर्त्तते, सन्नियोगशिष्टानामन्यतमापाये उभयोरप्यपाय इति ॥ १८ ॥

**अत्र तु बहिष्पवमानस्य* ॥ १९ ॥**

अस्मिन् कृतसदनदेशे बहिष्पवमानर्चो जपेयुः अथ अत्रशब्दः किमर्थमिति चेत् उच्यते, अस्मिन्नेव काले उपवेशनानन्तरं जपेयुः न क्षणमपि तिष्ठेयुरिति ॥ १९ ॥

**अभिषुते राजन्यृतपात्रमसीति द्रोणकलशमालभ्य वानस्पत्य इति प्रोक्षेयुः¶ ॥ २० ॥**

अभिषुते सोमे राजनि अध्वर्युभिः ऋतपात्रमसीत्यनेन यजुषा द्रोणकलशमालभ्योद्गातारः वानस्पत्य इत्यनेन यजुषा प्रोक्षेयुः अधोऽधोक्षं द्रोणकलशं प्रोक्षन्तीति ॥ २० ॥

**दक्षिणे पाणावुद्गाता दशापवित्रं कुर्वीत¶ ॥ २१ ॥**

प्रागद्रोणकलशप्रतिपत्तेः अध्वर्युणा दीयमानं दशापवित्रमुद्गाता दक्षिणेन पाणौ गृह्णीयात् ॥ २१ ॥

**अक्षश्चेदुपहन्युः पुनः प्रोक्षेयुः¶ ॥ २२ ॥**

यदि द्रोणकलशं प्रोक्षन्तः कदाचित् प्रमादादक्षं स्पृशेयुः तेनैव विधिना पुनः प्रोक्षेयुः ॥ २२ ॥

---

* द्राह्यायणेऽप्येवं किन्तु तत्र तुशब्दो नास्ति ।

¶ द्राह्यायणेऽप्येवम् ।

अन्तरेणाक्षविष्कम्भौ दशापवित्रं प्रास्येदनुपघ्नन्* ॥२३॥

अक्षोपाक्षकयोरन्तरेण दशापवित्रं प्रास्येत् अनुपघ्नन् अस्पृशन् कम् अक्षमुपाक्षं वा उपाक्षो विष्कम्भः ॥ २३ ॥

संहितौ चेदुभावुपरि¶ ॥ २४ ॥

संहितौ चेदक्षविष्कम्भौ एकलग्नौ उभयोरुपरिष्टात् प्रास्येत् दशापवित्रम् ॥ २४ ॥

सर्वं रथोपस्थमुपर्युपरि† ॥ २५ ॥

यदि तद्धविर्द्धानं सर्वमेव रथोपस्थं स्यात् अक्षविष्कम्भाधिष्ठानानि सर्वाण्येव लग्नानि स्युः सर्वेषामुपरिष्टाद् दशापवित्रं समीपेन प्रास्येत् ॥ २५ ॥

उत्तरेण रथजङ्घाᳪ रथश्चेत्† ॥ २६ ॥

यदि रथः स्यात् हविर्द्धानं उत्तरेण रथजङ्घायाः दशापवित्रं

---

* द्राह्यायणे विशेषोऽस्ति ।

¶ द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैताभ्यामेकसूत्रं कृतम् ।

N

प्राश्येत् सर्वेषु कल्पेषु अनुपपन्न् रथौ हविर्द्धाने भवत इति श्येना-दिष्वभिचरणीयेष्वस्य विषयः ॥ २६ ॥

इति प्रथमस्य नवमी कण्डिका ।

---

अथ दशमी कण्डिका ।

प्रत्याव्रज्य ग्राव्णो युञ्ज्यात् प्रदक्षिणमष्टमदेशेषु स्थवीयांस्यभ्यन्तराणि कृत्वा* ॥ १ ॥

कृतसदनाद्यथागतं प्रत्याव्रज्योद्गातार अभिषवस्थानं उपविशेयुः तत उद्गाता ग्राव्णो युञ्ज्यात् ग्राव्ण इति द्वितीयाबहुवचनं युञ्ज्या-दिति क्रियोपदेशः प्रदक्षिणमिति योजनानुपूर्वम् अष्टमदेशेष्वष्टमेषु दिग्भागेषु स्थवीयांस्यभ्यन्तराणि कृत्वा यानि स्थवीयांसि तानि अभ्यन्तराणि कृत्वा यानि अल्पीयांसि तानि वाह्यानि ॥ १ ॥

तानि मुखानि¶ ॥ २ ॥

---

*द्राह्यायणेऽप्येवम् किन्तु तेनैतेन सूत्रद्वयं कृतम् ।

¶द्राह्यायणेऽप्येवम् ।

यानि स्थवीयांसि तानि मुखानि, ननु उक्तं भवता सर्वे उद्गातारः प्रत्याव्रजेयुरिति अयं च समानकर्तृक आदेशः एकमधिकृत्योच्यते प्रत्याव्रज्य ग्राव्णो युञ्ज्यादिति तत्कथं बहुत्वाभावात् सर्वेषामुद्गातॄणामधिकार इति उच्यते, अर्थात् अयं हि ग्राव्णां योजनमुक्त्वा वक्ष्यति तानभिमृश्य जपेयुरिति ॥ २ ॥

दक्षिणार्द्धपूर्वार्द्धं प्रथमम्* ॥ ३ ॥

दक्षिणपूर्वस्यान्दिशि प्रथमं ग्रावाणं स्थापयेत् उक्तं क्रमानुपूर्वं दक्षिणमिति ॥ ३ ॥

तानभिमृश्य जपेयुर्मरुत इति* ॥ ४ ॥

तान् ग्राव्णः यथास्थानं स्थापितानभिमृश्य मरुत इत्येतद् यजुर्जपेयुः दक्षिणार्द्धपूर्वार्द्धमित्येतत् प्रकृतम् अत आह तानिति ॥ ४ ॥

ऋतसदन एतज्जपित्वा युक्तास्थ वहतेत्येतावतैवेति धानञ्जप्यः* ॥ ५ ॥

ऋतसदनस्थानएव मरुत इत्येतदादि घोषणामीवाञ्चातयध्वमित्येवमन्तञ्जपित्वा युक्तास्थ वहतेत्येतावतैवाभिमृशेयुरिति धानञ्जप्य आचार्य्यो मन्यते ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम्।

पश्चात् दक्षिणतो वा द्रोणकलशमध्यूहेयुरिदमहमिम-मिति यजमानशब्दं सर्वत्र यथार्थं कुर्युः* ॥ ६ ॥

अधिषवणचर्मणि ग्राव्णां पश्चिमे प्रदेशे दक्षिणे वा द्रोणकलश-मध्यूहेयुः इदमहमिममित्यनेन यजुषा यश्चास्मिन् यजुषि यजमान-शब्दः तमेकद्विबहुत्वेषु यथार्थमूहेयुः सर्वशब्दः अन्येष्वपि यजुःषु यो यजमानशब्दस्तमपि यथार्थं कुर्युः धारानुमन्त्रणं पृष्ठहोमा-दिषु ॥ ६ ॥

अनुजपेयुरन्येन कृते मन्त्रौ ब्राह्मणविहितादन्यच्च[¶] ॥७॥

अन्येन कृते योजनाध्यूहने अनुजपेयुर्योजनाध्यूहनमन्त्रौ ब्राह्मण-विहितादन्यच्चेति ये ब्राह्मणविहिताः कल्पाः यं द्विष्यादित्येवमादयः न तेष्वनुजपोऽस्ति स्वयमेव ते कर्त्तव्याः, नन्वयमपि प्रथमः कल्पो ब्राह्मणविहित एव ग्राव्णः संसाद्य द्रोणकलशमध्यूहन्तीति तत् किमि-दमारभ्यते ब्राह्मणविहितादन्यच्चेति उच्यते, सत्यमेतदेवं किन्तु संसादनाध्यूहने श्रुते न तु योजनाध्यूहनमन्त्रौ नियुक्तौ ब्राह्मणेन सूत्रकारेण लिङ्गतः कल्पितौ अत आह ब्राह्मणविहितादन्यच्चेति ॥७॥

एष कल्पः काम्यानां द्वैध्यकल्पादन्यत्र[¶] ॥ ८ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

¶ द्राह्यायणोऽप्येवं, किन्तु छेदविषये विशेषोऽस्ति ।

योऽयं प्रथमः कल्प उक्तः प्रत्याव्रज्य ग्राव्णो युञ्ज्यादित्यत आरभ्य एष एव विधिः काम्यानां किं सर्वेषां न किं तर्हि द्वेष्यकल्पादन्यत्र ॥८॥

विपर्यस्य तु तस्मिंस्तूष्णीञ्च योजनाध्यूहने* ॥ ९ ॥

य एषः प्रथमकल्पे विधिरुक्तः एष द्वेष्यकल्पे विपर्यस्तः सर्वो भवति प्रदक्षिणमष्टमदेशेष्वित्येतत्तावदप्रदक्षिणं स्थवीयांस्यभ्यन्तराणि इति तानल्पीयांस्यभ्यन्तराणि स्थवीयांसि वाह्यानि दक्षिणार्द्ध-पूर्वार्द्धं प्रथममिति तद्द्वेष्यकल्पे पश्चात् स्यात् किञ्चान्यत तूष्णीं च योजनाध्यूहने ग्राव्णां योजनं द्रोणकलशस्य चाध्यूहनं ते तूष्णीं भवेयाताम् एते कर्मणी द्वेष्यकल्पे ॥ ९ ॥

इदमहममुमिति दक्षिणापरमष्टमदेशं निरूहेत्¶ ॥१०॥

उक्तं यं द्विष्याद्दिमुखान् ग्राव्नः कृत्वेदमहममुममुष्यायणममुष्याः पुत्रममुष्या विशोऽमुष्यादन्नाद्यान्निरूहामीति निरूहेदिति ब्राह्मणे द्रोणकलशस्य निरूहणं श्रूयते तत्कतमस्यां दिशि असौ द्रोणकलशो निरूहयितव्य इत्यत आह, इदमहममुमिति दक्षिणपश्चिममष्टम-दिग्भागं प्रति द्रोणकलशं निरूहेत् इदमहं कुवीनहश्वलब्य-शलभिकाङ्गत्याः पुत्रम् उदीच्यां दिशि यवाद्यन्नाद्यां निरूहामीति अथ प्रियकल्पे इदमहं कुमारगुप्तं द्रव्यस्यापि न्यायपुत्रं प्राच्यान्दिशि शाल्याद्यन्नाद्येऽध्यूहामि इति प्रयोगः ॥ १० ॥

---

*द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

¶ द्राह्यायणोऽप्येवम्।

द्वेष्यप्रियकल्पयोर्मन्त्रौ राजन्यूहेत्* ॥ ११ ॥

द्वेष्यकल्पस्य च प्रियकल्पस्य च मन्त्रौ राजन्यधिकरणभूते-ऽध्यूहेत् ॥ ११ ॥

तस्य च विशमादिशेत्ताञ्चैवान्नाद्येन¶ ॥ १२ ॥

तस्य च राज्ञः विशमादिशेत् अमुष्या विशोऽमुष्यां विशीति प्रयोगः तामेव च विशामन्नाद्येनाविशेत्, अमुष्मादन्नाद्यादमुष्मिन्नन्नाद्ये इति प्रयोगः ॥ १२ ॥

उपांशुसवनो नाम ग्रावा पञ्चमस्तमुपरिष्टाद्द्रोणकल-शस्य कुर्यात् राष्ट्रजिघांसुः प्रतीवेशां बलवतीं विशमादि-शन्* ॥ १३ ॥

अथो तदुभयमनादृत्येदमहमस्मात्तेजसि ब्रह्मवर्चसेऽध्यूहामीत्य-ध्यूहेत्तेजसे च ब्रह्मवर्चस आत्मानमध्यूहतीति तृतीयं काम्यं गतार्थ-मिति कृत्वा सूत्रकारेण न परामृष्टं यः कामयेत विशा राष्ट्रं हन्या-मिति व्यूह्य ग्राव्णोऽधोद्रोणकलशं सादयित्वोपांशुसवनमुपरिष्टादभि-निदध्यादिदमहममुया विशाऽदो राष्ट्रं हन्मीति अत्र सन्देहः क उपांशुसवन इत्यत्राह सूत्रकारः उपांशुसवनो नाम ग्रावा पञ्च

* द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

मस्तमुपरिष्टात् द्रोणकलशस्य कुर्य्यात् राष्ट्रजिघांसुरिति हन्तु-मिच्छन् जिघांसुः प्रतीवेशां प्रबला या विट् तां बलवतीमादिशन् इदमहममुदीच्या विशामुं राष्ट्रं हन्मीति प्रयोगः ॥ १३ ॥

**एतेषामेकं कृत्वा पथ्यं कुर्यादिति गौतमः* ॥ १४ ॥**

एतेषां काम्यानां कल्पानां यो यस्य चिकीर्षितस्तं कृत्वा पथ्यं कुर्य्या-दिति गौतम आचार्य्यो मन्यते पथेनोपेतः पथ्यः प्रथम इत्यर्थः ॥१४॥

**तमेवेति धानञ्जप्यः¶ ॥ १५ ॥**

तमेव कल्पं कृत्वा अथान्यत्कर्म प्रतिपद्येत नैव पथ्यं कुर्य्यादिति धानञ्जप्य आचार्य्यो मन्यते ॥ १५ ॥

**पृष्ठानामन्ते पूर्वया द्वारा निष्क्रम्य काम्यं शा-ण्डिल्यः* ॥ १६ ॥**

पृष्ठेषु समाप्तेषु पूर्वया द्वारा सदसो निष्क्रम्य काम्यं कुर्य्यादिति एवं शाण्डिल्य आचार्य्यो मन्यते ॥ १६ ॥

**पवित्रेण द्रोणकलशं संमृज्याद्वसवस्त्वेति बुध्नं रुद्रा-स्त्वेति मध्यमादित्यास्त्वेति बिलम्* ॥ १७ ॥**

---

*द्राह्यायणोऽप्येवम्।

¶ द्राह्यायणे तदेवेति विशेषः।

नित्ये योजनाध्यूहनप्रकरणे काम्यानां प्रकल्पानां प्रसङ्गाद्विधिरुक्तः साम्प्रतमनन्तरां कर्मप्रतिपत्तिं विवक्षुराह, पवित्रेण द्रोणकलशं संमृज्यादिति पुनन्ति तेनेति पवित्रं दशापवित्रेण द्रोणकलशं संमृज्यादुद्गाता वसवस्त्वेत्यनेन यजुषा द्रोणकलशस्य बुध्नं संमृज्यादिति रुद्रास्त्वेति मध्यमादित्यास्त्वेति बिलं संमृज्यादिति वर्त्तते ॥ १७ ॥

**एतेषामेकैकेन त्रिस्त्रिरनुसवनꣳ संमृज्यादिति धानञ्जप्यः* ॥ १८ ॥**

एतेषां यजुषां वसवस्त्वेत्येतदादीनाम् एकैकेन त्रिस्त्रिरनुसवनं संमृज्यादिति धानञ्जप्य आचार्य्य आह, वसवस्त्वेति प्रातःसवने सर्वाणि स्थानानि संमृज्याद् रुद्रास्त्वेति मध्यन्दिने आदित्यास्त्वेति तृतीयसवने सर्वाणि स्थानानि संमृज्यादिति वर्त्तते ॥ १८ ॥

**सर्वैः सर्वेष्विति शाण्डिल्यः* ॥ १९ ॥**

सर्वैर्यजुर्भिर्वसवस्त्वेत्येतदादिभिः सर्वेषु सवनेषु सर्वाणि स्थानानि संमृज्यात् एकैकेनैकैकं स्थानं त्रिस्त्रिरित्यर्थः एवं शाण्डिल्य आचार्य्य आह ॥ १९ ॥

**अवधूय पवित्रमुदग्दशमवाङ्नाभि वितनुयुः पवित्रन्त इति* ॥ २० ॥**

---

*द्राह्यायणेऽप्येवम् ।

कृत्वैतेषां कल्पानामेकैकेन सम्मार्जनमवधूय पवित्रमुद्गृह्य-मवाङ्गाभि वितनुयुः पविचन्त इत्येतयर्चा ॥ २० ॥

सन्ततायां धारायामुद्गाता जपेत् प्रभुरक्रेत्यमुष्य राज्या-येति प्रियꣳ राजानमादिशेत्* ॥ २१ ॥

पूयमानस्य सोमस्य सन्ततायां धारायां अविच्छिन्नायामुद्गाता जपेत्प्रभुरक्रेत्येतद्यजुः अमुष्य राज्यायेत्येतस्य सर्वनाम्नः स्थाने यो यस्य प्रियः स्याद्राजानमादिशेत् ॥ २१ ॥

राज्ञो राज्यायेति वा यजमानस्यर्द्धौ† राज्ञो राज्यायेति वा* ॥ २२ ॥

यजमानस्य राज्ञो राज्यायेति वा यजमानस्यर्द्धौ यजमानस्य राज्ञो राज्यायेति वा ॥ २२ ॥

सोमस्य राज्ञो राज्यायेति वा¶ ॥ २३ ॥

यजमानस्यर्द्धौ सोमस्य राज्ञो राज्यायेति वा ॥ २३ ॥

सोमस्येत्येव ब्रूयात् सोमराजानो हि ब्राह्मणाः¶ ॥ २४ ॥

---

* द्राह्यायणोऽप्येवं किन्तु तेनैतेन सूत्रद्वयं कृतम्।

† यजमानस्य राज्ञ इति मू० पु० पाठः।

¶ द्राह्यायणोऽप्येवम्।

एवशब्दोऽवधारणार्थः, सोमराजानो हि ब्राह्मणा इति हेतूपादानमस्यैव नियमार्थम् ॥ २४ ॥

आग्रयणं गृह्णन्नध्वर्युर्हिंकरोति तदा प्रवृणीरन्नग्निः प्रस्तोताहं मानुषो बृहस्पतिरुद्गाताहं मानुषो वायुः प्रतिहर्त्ताहं मानुष इति* ॥ २५ ॥

आग्रयणो नाम ग्रहस्तं गृह्णन्नध्वर्युर्हिंकरोति तदा तस्मिन् काले प्रवृणीरन् अग्निः प्रस्तोतेत्येतदादिभिर्यथासूत्रितैर्वृतप्रतिमन्त्रणार्थं यदाग्रयणे त्रिर्हिंकरोति तेनैवास्योद्गातारो वृता भवन्ति ॥ २५ ॥

न प्रवृणीरन्निति धानञ्जप्यः* ॥ २६ ॥

धानञ्जप्य आचार्य्य आह न प्रवृणीरन्निति सर्वत्र वृता एवेति द्रोणकलशोपसदने यद्द्रोणकलशमुपसीदन्ति तेनोद्गातारो वृताः द्रोणकलश एवैनानार्त्विज्याय वृणीत इति श्रुतेः ॥ २६ ॥

प्रवृणीरन्नेवेति शाण्डिल्यः* ॥ २७ ॥

शाण्डिल्य आचार्यः प्रवृणीरन्नित्येवमाह, प्रतिनिमित्तं हि नैमित्तिकानि भवन्ति अपि चार्थस्यादूषको अलोपस्य लोपान्न्यायतर इति ॥ २७ ॥

---

* द्राह्यायणोऽप्येवम् ।

अत्र वाचं यच्छेयुः* ॥ २८ ॥

अस्मिन् काले वाग्यमनं कुर्युः ॥ २८ ॥

ऋतसदने वा* ॥ २९ ॥

ऋतसदने वा वाचं यच्छेयुः दक्षिणस्य हविर्द्धानस्य पश्चादृतसदनम् ॥ २९ ॥

वेदिं वाक्रामन्तः* ॥ ३० ॥

अभूदुषाकाले यद्वेद्याक्रमणं उक्तं तस्मिन् काले वा वाचं यच्छेयुः ॥ ३० ॥

स्तुते बहिष्पवमाने विसृजेरन्* ॥ ३१ ॥

स्तुते बहिष्पवमाने स्तोत्रे वाचं विसृजेरन् ॥ ३१ ॥

इति प्रथमस्य दशमी कण्डिका।

अथ एकादशी कण्डिका।

उत्तराद्धविर्द्धानात् ध्रुवस्थालीं ऽ हरन्तः पश्चिमेनोद्गातॄन् हृत्वा तेनैव प्रतिहरेयुः* ॥ १ ॥

---

* द्राह्यायणोऽप्येवम्।

ग्रहग्रहणाधिकारो वर्त्तते, गृहीतेषु सर्वेषु ग्रहेषु ध्रुवो गृह्यते तत्रोद्गातृसम्बन्धं कञ्चिद्विवक्षुराह, उत्तराद्धविर्द्धानादिति हविर्द्धानसंज्ञके द्वे अनसी दक्षिणं उत्तरञ्च तत्रोत्तराद्धविर्द्धानादिति अपादानलक्षणा पञ्चमी हविरस्मिन्निधीयतइति हविर्द्धानम् ध्रुवो नाम ग्रहः स्थाल्यां गृह्यते तां ध्रुवस्थालीं हरन्तः उद्गातॄणां पश्चिमेन प्रदेशेन हृत्वा गृह्णीते सोमे तेनैव पुनर्नयेयुः अव्यवायार्थं नित्यं परकर्तृकेषु बहुवचनं नैनानपरेण हरेयुरपि ह्यकुशला अध्वर्यवो भवन्तीति ॥ १ ॥

अध्वर्युं निष्क्रामन्तं प्रस्तोता सन्तनुयात्* ॥ २ ॥

हविर्धानात् निष्क्रामन्तम् अध्वर्युं प्रस्तोता सन्तनुयात् उत्तरीयैकदेशे गृह्णीयात् अविच्छेदार्थम् ॥ २ ॥

तमुद्गाता¶ ॥ ३ ॥

तं प्रस्तोतारं उद्गाता सन्तनुयात् ॥ ३ ॥

उद्गातारं प्रतिहर्त्ता¶ ॥ ४ ॥

सन्तनुयादिति वर्त्तते ॥ ४ ॥

तं ब्रह्मा¶ ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम् ।

¶ द्राह्यायणेऽप्येवं किन्तु तेन सूत्रचतुष्टयेनैकसूत्रं कृतम् ।

तं प्रतिहर्त्तारं ब्रह्मा सन्तनुयात् ॥ ५ ॥

ब्रह्माणं यजमानः* ॥ ६ ॥

सन्तनुयादिति वर्त्तते विच्छेदे हि प्रायश्चित्तश्रवणात्सर्वे सन्तता भवन्ति ॥ ६ ॥

न राजानमालभ्यानुपस्पृश्याप आज्यमालभेरन्¶ ॥ ७ ॥

साम्प्रतमेतेषामाज्यहोमो वच्यते तैश्च सोमः पूयमानः स्पृष्टः अत आह न राजानमालभ्यानुपस्पृश्याप आज्यमालभेरन्निति ॥ ७ ॥

तथाज्यꣳ राजानꣳ सर्वत्र¶ ॥ ८ ॥

तथाज्यमालभ्यानुपस्पृश्यापः सोमन्नालभेरन् सर्वशब्दः स्रुतेऽप्या-ज्यालम्भात् अनुपस्पृश्यापो नैव सोममालभेरन् ॥ ८ ॥

अध्वर्युणा कृते प्रवृत्तहोमौ जुहुयुर्गत्यानुपूर्व्येण बेकुरानामासि सूर्यामेति‡ ॥ ९ ॥

अध्वर्युणा कृते प्रवृत्तहोमौ जुहुयुः प्रवृत्तहोमाविति संज्ञा गत्यानुपूर्व्येणापि प्रस्तोता प्रथमोऽतिसर्पेत् तत उद्गाता ततः प्रतिहर्त्तेति गत्यानुपूर्व्यं बेकुरानामासीति प्रथमां सूर्यामेति द्वितीयां अथ

* द्राह्यायणेऽप्येवं किन्तु तेन सूत्रचतुष्टयेनैकसूत्रं कृतम् ।

¶ द्राह्यायणेऽप्येवं किन्तु तेन सूत्रद्वयेनैकसूत्रं कृतम् ।

‡ द्राह्यायणेऽप्येवम् ।

गत्यानुपूर्व्येणेति किमिदं यावता दूहाप्यानुपूर्व्यमुक्तम् एवं अध्वर्युं निष्क्रामन्तं प्रस्तोता सन्ननुयात्तमुद्गातोद्गातारं प्रतिहर्त्तेति होमेऽप्येतदेवानुपूर्व्यं ग्रहीष्यते व्यतिक्रमहेत्वसम्भवात् अत्रोच्यते, गत्यारम्भेण अन्योऽपि यो होमः तत्रापि गत्यानुपूर्व्यमेव स्यात् यथा आग्निध्रीये द्वे आहुती जुहुयुरिति ॥ ९ ॥

**सꣳस्तुतसोमे त्वधिकामुद्गाता जुहुयात् संवेशायोपवेशायेति यथासवनं छन्दाꣳस्यादिशन्* ॥ १० ॥**

यदि सोमौ संस्तुतौ स्यातामित्येवमधिकृत्याह, सुसमिद्धे होतव्यमग्निर्वै सर्वा देवताः सर्वा एव देवताः पश्यन् जुहोति संवेशायोपवेशायेति छन्दोदेवत्यास्तिस्र आहुतयस्त्र उच्यन्ते तासां कालो विवचितः होता च अत आह, संस्तुतसोमे तु प्रवृत्तहोमौ हुत्वा अधिकामाहुतिमुद्गाता जुहुयात् संवेशायोपवेशायेति यथासवनं छन्दांस्यादिशन् यत्र यस्मिन् सवने यथासवनम्-तुशब्दः छन्दोविशेषणार्थः अधिकग्रहणं प्रवृत्तहोमयोः प्रत्याम्नायो माभूदिति ॥ १० ॥

**ऋचꣳ सामेति स्वाहाकारान्तया तृतीया सर्वत्र स एवेति शाण्डिल्यः† ॥ ११ ॥**

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेऽप्येवं किन्तु तेनैतेन सूत्रद्वयं कृतम् ।

ऋचं सामेत्येतयर्चा स्वाहाकारान्तया तृतीयामाहुतिं जुहुयात् उद्गाता सर्वत्र संस्रुतसोमे च स एवोद्गाता जुहुयात् नेतरो तृतीयामाहुतिम् ॥ ११ ॥

महागिरिमहानदीरथाह्ववायुव्यवायेष्वसंस्रवः* ॥ १२ ॥

महागिरिः महान् पर्वतः महानदी महती नदी रथाह्वः रथस्याङ्गागमः वायुर्देवताविशेषः एतैर्व्यवाये असंस्रवः संस्रवो न भवति पूर्वपश्चिमवातैर्वायुव्यवायो गृह्यते अन्यथा सर्वदा सम्भवात् व्यवायशब्दः प्रत्येकमभिसम्बध्यते ॥ १२ ॥

पृथग्जनपदे च* ॥ १३ ॥

पृथग्जनपदे तु पुनः पुनरव्यवायेऽपि महागिर्यादिभिः संस्रवो न भवति पृथग्जनपदः पञ्चालाः कुरवः मत्स्या इति ॥ २३ ॥

अविद्विषाणमात्रादित्येके* ॥ १४ ॥

अविद्विषाणमात्रादेवासंस्रव इत्येके आचार्या मन्यन्ते ॥ १४ ॥

हुत्वा जपेयुर्ब्रह्माहं गायत्रीं वाचं प्राणं प्रजापतिं प्रपद्येऽश्मानमाखणं पर्यूह इति* ॥ १५ ॥

यदा सर्वैर्हुतं भवति अथ ब्रह्माहं गायत्रीं वाचमित्येतद्यजुर्जपेयुः ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम्।

**अध्वर्युमन्वावर्त्तेरन्नसर्पन्तः* ॥ १६ ॥**

यथाध्वर्युरावर्त्तेत तथैव आवर्त्तेरन् अव्यवायोऽव्यावृत्तो नाद्रियेरन्नसर्पन्त इत्यारभ्यते, उत्तरयोरपि सवनयोरेवमेव स्यादिति ॥ १६ ॥

**सव्यैः पाणिभिः पृथग्दक्षिणा तृणानि निरस्येयुर्योऽद्य सौम्य इति* ॥ १७ ॥**

किञ्चिद्गत्वा सव्यैर्वामैः पाणिभिर्हस्तैः पृथङ्नाना दक्षिणस्यां दिशि तृणानि निरस्येयुः निरासः प्रक्षेपः योऽद्य सौम्य इत्यनेन यजुषा ॥ १७ ॥

**चात्वालदेशं प्राप्याध्वर्यावुपविष्टे तस्मात् प्रत्यगुपविशेयुर्याम आत्मेति* ॥ १८ ॥**

चात्वालसन्निकृष्टो देशः तं प्राप्याध्वर्यावुपविष्टे तस्मादध्वर्योः पश्चिमे देशे उपविशेयुर्याम आत्मेत्येतदादिना यजुषा ॥ १८ ॥

**प्रत्यङ्मुखः प्रस्तोता† ॥ १९ ॥**

प्रस्तोता प्रत्यङ्मुख उपविशेत् ॥ १९ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेऽप्येवं किन्तु तेन सूत्रद्वयेनैकसूत्रं कृतम् ।

उदङ्मुख उद्गाता† ॥ २० ॥

प्रस्तोतर्युपविष्टे अनन्तरमुद्गाता उदङ्मुख उपविशेत् ॥ २० ॥

पश्चिमेनोद्गातारं गत्वा दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्त्ता† ॥ २१ ॥

उद्गातारमुपविष्टं पश्चिमेन गत्वा प्रतिहर्त्ता दक्षिणपूर्वमष्टमदिग्भागमीक्षमाणः उपविशेत् ॥ २१ ॥

सव्याधरानुपस्थान् कृत्वा द्यावापृथिव्योः सन्धिमीक्षमाणाः समानि मुखानि धारयन्तः* ॥ २२ ॥

सव्यान् वामानुपस्थान् ऊरून् अधरान् कृत्वा द्यौश्च पृथिवी च द्यावापृथिव्यौ तयोः द्यावापृथिव्योः सन्धिमीक्षमाणाः समानि मुखानि धारयन्तः मनःसमाध्यर्थम् ॥ २२ ॥

एवं सर्वस्तोत्रेष्वासीरन्* ॥ २३ ॥

योऽयं विधिरुक्तः प्रत्यङ्मुखः प्रस्तोतेत्यत आरभ्य समानि मुखानि धारयन्त इति यावत् नैष बहिष्पवमानमधिकृत्योक्तः अतः सर्वस्तोत्रेषु भवति कुत एतत् यस्माद्वक्ष्यत्येतत्सर्वं कुर्यादुत्तरयोः पव-

† द्राह्यायणेऽप्येवं किन्तु तेन सूत्रद्वयेनैकसूत्रं कृतम्।

* द्राह्यायणेऽप्येवम्।

१४

मानयोरिति अत आहैवं सर्वस्तोत्रेष्वाशीरन्निति, ननु यद्येवं सर्वग्रहणं न कार्य्यं एवं स्तोत्रेष्वाशीरन्निति सिद्धेः उच्यते, वक्ष्यति हि एवं परिक्रमं सर्वक्रतुषु विद्यादिति पाठान्तरे चैष ज्योतिः सर्वे कामा इति एवं ज्योतिषं दर्शयति एवं परिक्रमं सर्वक्रतुषु विद्यादिति ज्योतिषं सर्वक्रतुषु विध्यन्तरं दर्शयति वक्ष्यति च तदनन्तरं षोड़शी साम्ना स्तोष्यमाण इति त्रिसंस्थेऽपि ज्योतिष्टोमे प्रकृतिभूते षोड़शी नास्ति अत्र षोड़शिन्येष विधिर्न प्राप्नोति अप्राकृतत्वात् विकृतः षोड़शी तथा मानसादिषु नैमित्तिकेषु च न प्राप्नोति अत आह सर्वस्तोत्रेष्वाशीरन्निति ॥ २३ ॥

अपरेणोद्गातॄंस्त्र्यवरार्द्ध्या उपगाः* ॥ २४ ॥

उद्गाणॄणां पश्चिमे प्रदेशे अवरार्द्ध्या उपगाः स्युः अवरार्द्ध्य-शब्दः निकृष्टवचनः त्रयाणामप्यधो न भवन्तीत्यर्थः ॥ २४ ॥

चतुरवरार्द्ध्यानेके* ॥ २५ ॥

एके चतुरवरार्द्ध्यान्मन्यन्ते न तस्योपदेशः दिग्भिरेवोद्गायन्तीति अथ परार्द्ध्याः कियन्त उपगातार इति षट् परार्द्ध्या इति ॥ २५ ॥

त एतेनाक्षरेणोपगायेयुर्हो इति मन्द्रस्वरेण सन्ततं सह-वाचेष्वारमन्तः* ॥ २६ ॥

---

* द्राह्यायणे विशेषोऽस्ति ।

यदि त्र्यवरार्द्धा यदि चतुरवरार्द्धा यदि षट्परार्द्धाः तएते-नाक्षरेणोपगायेयुर्हो इति मन्द्रस्वरेण सन्ततम् अविच्छिन्नं यान्युद्गातॄणां सहवाच्यानि तेषु विरमेयुरुपगातारः सहवाच्यानि निधनानि अथ उपगायेयुर्हो इति सिद्धेः एतेनाक्षरेणेति किमर्थमारभ्यते उच्यते, सूत्रान्तरमारभते अपि चोपगातॄणां भक्तिमुद्गातार एव कुर्युरिति एतस्मिन् कल्पेऽप्येतेनैवाक्षरेणेति ॥ २६ ॥

**तस्मात्त्र्यन्तरेण स्तुयुः* ॥ २७ ॥**

तस्मात् मन्द्रात् त्र्यन्तरेणोत्कृष्टेनोद्गातारः स्तुयुः स्वरे स्वरे सप्तय-वान्तराणीत्यन्तरपरिमाणं तस्मात् त्र्यन्तरेण स्तुयुः ॥ २७ ॥

**समेन वा प्रातःसवने* ॥ २८ ॥**

उपगातृस्वरतुल्येन वा प्रातःसवने स्तुयुः मन्द्रेणेत्यर्थः ॥ २८ ॥

**एकान्तरेण वा* ॥ २९ ॥**

मन्द्रादेकान्तरेण वा स्तुयुः ॥ २९ ॥

इति प्रथमस्य एकादशी कण्डिका।

---

* द्राह्यायणे विशेषोऽस्ति।

अथ द्वादशी कण्डिका ।

प्रस्तरं प्रतिगृह्य प्रस्तोता ब्रह्मꣳस्तोष्यामः प्रशास्तरित्युद्-गात्रे प्रयच्छेत्* ॥ १ ॥

उक्तमेवं सर्वस्तोत्रेष्वासीरन्निति अनन्तरमध्वर्युः प्रस्तरं प्रस्तोत्रे प्रयच्छति सोमः पवत इत्यनेन यजुषा ततः परं अध्वर्योः सकाशात् प्रतिगृह्य प्रस्तोता ब्रह्मन् स्तोष्यामः प्रशास्तरित्यनेन यजुषा उद्गात्रे प्रयच्छेत् प्रस्तरमिति कर्मणि द्वितीया प्रतिगृह्येति दीयमानं गृहीत्वा प्रस्तोतेति कर्तृनिर्देशः प्रयच्छेदिति क्रियोपदेशः प्रस्तरो दर्भमुष्टिः उक्तम् अध्वर्युः प्रस्तरं हरतीति तस्मादध्वर्युणा प्रस्तरईषदिव विधूयो विधूतमिव हि तृणम्पशव उपावर्त्तन्तइति ॥ १ ॥

तेन दक्षिणां जङ्घामुपहत्य युञ्ज्यात् स्तोममग्नेस्तेज-सेति* ॥ २ ॥

एतेन प्रस्तरेण उद्गाता दक्षिणां जङ्घां स्पृष्ट्वा युञ्ज्यात् स्तोममग्ने-स्तेजसेति एतदादिना यजुषा प्रस्तरमासाद्योद्गायेद्धविषोऽस्कन्दाय यजमानं तु स्वर्गाल्लोकादवगृह्णातीत्युक्ताह अष्ठीवतोऽपस्पृशतोद्गेय-न्तेनास्य हविरस्कन्नं भवति न यजमानं स्वर्गाल्लोकादवगृह्णातीत्यतः सूत्रकारः तेन दक्षिणां जङ्घामुपहत्येत्याह ॥ २ ॥

अन्नं करिष्यामीति जपेत्* ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

युक्त्वा स्तोममनन्तरम् अन्नं करिष्यामीत्येतदादि यजुर्जपेत् ॥ ३ ॥

तूष्णीं चात्वालमुदपात्रञ्चावेक्षेरन्* ॥ ४ ॥

तूष्णीं अमन्त्रकमित्यर्थः सर्वे उद्गातारः तूष्णीञ्चात्वालमुदपात्रं चावेक्षेरन् ॥ ४ ॥

सामासि प्रतिमाभाहीत्यादित्यम्* ॥ ५ ॥

सामासि प्रतिमाभाहीत्यनेन यजुषा आदित्यमवेक्षेरन्निति वर्त्तते ॥ ५ ॥

तूष्णीं वा* ॥ ६ ॥

यजुषा वा आदित्यमवेक्षेरन् तूष्णीं वेति विकल्पयति ॥ ६ ॥

सकृद्धिङ्कृत्य बहिष्पवमानेन स्तुवीरन्* ॥ ७ ॥

अत्रोच्यते, सकृदिति किमर्थमारभ्यते, यदा तावदुक्तं नवभिः स्तुवन्ति हिङ्कारो दशमो दशाक्षरा विराड़िति उच्यते अयं हि त्रिवृत्स्तोमकं बहिष्पवमानमधिकृत्य विधिरारभ्यते विराट् सम्पदर्थं यत्र पुनः स्तोमवृद्धिः स्यात् अनेकसामानेकदैवतं वा बहिष्पवमानं स्यात् तत्र हिङ्कारं प्रति संशयः स्यात् किञ्च प्रतिसाम प्रतिदैवतं वा स्यादिति, अतोऽयमाचार्यो यत्नमारभते सकृद्धिंकृत्य बहिष्पवमानेन स्तुवीरन्निति। अथ बहिष्पवमानग्रहणं किमर्थमिति चेत् अत्रोच्यते,

---

* द्राह्यायणोऽप्येवम्।

वक्ष्यत्ययं एतत्सर्वं कुर्यादुत्तरयोः पवमानयोरिति तत्रापि सकृ-देव हिङ्कारः प्राप्नोति नैतत् तत्र ह्ययं वक्ष्यति साम्ने साम्ने हिंकुर्यु-रिति अत्रोच्यते, न ह्येकविधौ प्रत्याम्नायो गम्यते विकल्पः प्रतीयते अतोऽयमाचार्यो यत्नमारभते बहिष्पवमानेनेति ॥ ७ ॥

अहिङ्कृता प्रथमा रेतस्याः* ॥ ८ ॥

अहिंकृता प्रथमा स्तोत्रीया स्याद्बहिष्पवमाने तस्याः संव्यवहा-रिकीयं संज्ञा रेतस्येति वक्ष्यति हि रेतस्यैकत्रिकस्य बहिष्पवमान-मिति ॥ ८ ॥

हिङ्कृताः पराः* ॥ ९ ॥

रेतस्या याः पराः स्तोत्रीयाः तासु हिङ्कारः स्यादिति ॥ ९ ॥

रथन्तरवर्णोऽत्तमाविसृष्टहिङ्कारा† ॥ १० ॥

रथन्तरवद्वर्णो यस्या सेयं रथन्तरवर्णा सा चोत्तमा बहिष्पव-मानस्य स्यात् अविसृष्टहिङ्कारा च स्यात् हिङ्कारो न विसृज्यते आकारो विसर्गः ॥ १० ॥

तस्या ऊर्द्ध्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोभेत्† ॥ ११ ॥

---

* द्राह्यायणोऽप्येवम् किन्तु तेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

तस्या रथन्तरवर्णाया ऊर्ध्वं प्रस्तावाच्चलार्यक्षराणि रथन्तर-वदभिष्टोभेत् ॥ ११ ॥

अन्नमकरमिति स्तुत्वा जपेत्* ॥ १२ ॥

अन्नमकरमित्येतदादि यजुर्जपेदुद्गाता एकश्रुतिविधानात् ॥१२॥

श्येनोऽसीति प्रस्तरे यजमानं वाचयेत्* ॥ १३ ॥

श्येनोऽसीत्येतदादि यजुः प्रस्तरेऽधिकरणे यजमानं वाचयेत् आलब्धप्रस्तरं अनुलारभे इति लिङ्गात् ॥ १३ ॥

तꣳसर्वत्र स्तुत्वोपह्वयेरन्* ॥ १४ ॥

तं यजमानं सर्वस्तोत्रेषु स्तुत्वोपह्वयेरन् सर्वग्रहणं न केवलं बहिष्पवमाने उपहव उक्तलक्षणः ॥ १४ ॥

संवर्चसेतीक्षकान्सहकारिणश्च प्रेक्षमाणो जपेत्* ॥१५॥

संवर्चसेत्येतदादि यजुः ये तत्रेक्षकाः ये चास्य सहकारिणः तान् प्रेक्षमाणो जपेत् ॥ १५ ॥

नमो गन्धर्वायेत्यादित्यम्* ॥ १६ ॥

---

* द्राह्यायणोऽप्येवम्।

नमो गन्धर्वायेत्येतदादि यजुरादित्यमीक्षमाणो जपेत् ॥ १६ ॥

देशेनैवान्तर्हितश्चेत्* ॥ १७ ॥

अन्तर्हितश्चेदादित्यः स्यात् देशेनैवावेक्षेत् कोऽस्य विषयः सदसि बहिष्पवमानेन स्तुवन्ति तत्प्रकरणे किमर्थमिति चेत् उच्यते, अन्यत्रापि देशेनैव सुभूरसीत्यादित्यमुपतिष्ठेरन् उद्वयन्तमसस्परीति च एतदर्थं दर्शयति ॥ १७ ॥

एतत्सर्वं कुर्यादुत्तरयोः पवमानयोः* ॥ १८ ॥

वक्ष्यत्ययं यथासवनमुपविश्य प्रस्तोता हविर्द्धानं गच्छेन्मध्यन्दिने ऽुतं आदित्यग्रहे प्रतिहर्त्ता भव इति योऽयं हविर्द्धानं गच्छेत् स एव कुर्यादुत्तरयोः पवमानयोः विष्णोः शिर इत्यत आरभ्य सर्वग्रहणं निरवशेषवाचि एवमतिप्रसक्ते ब्रवीति ॥ १८ ॥

प्रवरास्तु निवर्त्तन्ते चात्वालावेक्षणप्रभृति च प्राग्घिङ्कारात्† ॥ १९ ॥

अग्निः प्रस्तोताहं मानुष इत्येतदादयः प्रवरा निवर्त्तन्ते तूष्णीं चात्वालमुदपात्रं चावेक्षेरन्निति एतदादि यत्कर्म्म तत् सर्वं प्राग्घिङ्कारान्निवर्त्तते ॥ १९ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

प्रवेशनसम्मार्जने चान्तरेण तृतीयसवने* ॥ २० ॥

प्रवेशनञ्च सम्मार्जनञ्च प्रवेशनसम्मार्जने इष उर्ज इति प्रवेशनं वसवस्त्वेति सम्मार्जनन्तयोः प्रवेशनसम्मार्जनयोः अन्तराले यत्कर्म तृतीयसवने तच्च सर्वन्निवर्त्तते चशब्दात् पूर्वसूत्रोक्तञ्च ॥ २० ॥

कुम्भन्तु तत्र सम्मृज्यादुत्तरे हविर्धाने यः पूर्वो द्रोणकलशावृता† ॥ २१ ॥

तत्र तृतीयसवने कुम्भस्य सम्मार्जनं कुर्यात् न द्रोणकलशस्य तुशब्दो विशेषणार्थः उत्तरे हविर्द्धानसंज्ञकेऽनसि यः पूर्वस्थापितः तं सम्मृज्यात् न पश्चिमं द्रोणकलशावृता यो द्रोणकलशसम्मार्जनविधिः तेन सम्मार्जनविधिना आवृत्परिक्रमो विधिरिति समानार्थः ॥ २१ ॥

तं पूतभृदित्याचक्षते तं पूतभृदित्याचक्षते* ॥ २२ ॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेऽप्येवं किन्तु तेनैतेन सूत्रद्वयं कृतम्।

तं कुम्भं योऽसौ पूर्वः तं पूतभृदित्येवमाचक्षते एते पूतभृदाहवनीययोरप्यधिकारं मन्यन्तइति ॥ २२ ॥

इति प्रथमस्य द्वादशी कण्डिका ।

इति प्रथमः प्रपाठकः समाप्तः ।

---

# द्वितीयः प्रपाठकः ।

अथ प्रथमा कण्डिका ।

स्तोमयोगेऽग्निर्युनक्त्वित्यतस्य स्थाने वायुर्युनक्तु सूर्यो युनक्त्विति नानासवनयोः* ॥ १ ॥

उक्तं एतत्सर्वं कुर्यादुत्तरयोः पवमानयोरिति सर्वस्मिन्विध्यन्ते प्राप्ते प्रवरास्तु निवर्त्तन्तइति एतदादि यन्निवर्त्तते तदुक्तं साम्प्रतं स्तोमयोगविशेष उच्यते स्तोमयोगमन्त्रे अग्निर्युनक्त्वित्येतस्य पदस्य स्थाने वायुर्युनक्तु सूर्यो युनक्त्विति नानासवनयोरेते पदे स्यातां नाना पृथगित्यर्थः वायुर्युनक्तु मनसेति माध्यन्दिने सूर्योयुनक्तु वाचेति तृतीयसवने ॥ १ ॥

विहारं धानञ्जप्योऽग्नेस्तेजसा बृहस्पतिस्त्वेति प्रातःसवन इन्द्रियस्येन्द्रियेण बृहस्पतिस्त्वेति माध्यन्दिने सूर्यस्येति तृतीयसवने† ॥ २ ॥

अस्मिन्नेव स्तोमयोजने मन्त्रे याः समस्तास्तिस्रो देवता आम्ना-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणोऽप्येवं किन्तु तेनैतेन सूत्रद्वयं कृतम् ।

तास्तासामनुसवनं विकृतां क्रियां धानञ्जप्यो मन्यते तदुच्यते, अग्नेस्तेजसा वृहस्पतिस्त्वा युनक्तिति प्रातःसवने इन्द्रस्येन्द्रियेण वृहस्पतिस्त्वा युनक्तिति माध्यन्दिने सूर्यस्य वर्चसा वृहस्पतिस्त्वा युनक्तिति तृतीयसवने ॥ २ ॥

सर्वैरेकैकं यथाम्नायꣳ शाण्डिल्यः* ॥ ३ ॥

सर्वैरेभिरेकैकं स्तोमयोजनं यथाम्नायं शाण्डिल्यो मन्यते, यथाम्नायग्रहणं किमर्थमिति चेत् उच्यते, विहारः प्रकृतः तन्माभूदिति ॥ ३ ॥

साम्ने साम्ने हिंकुर्युः* ॥ ४ ॥

सामार्थं सामार्थं हिंकुर्युः उक्तं सकृद्धिङ्कृत्य बहिष्पवमानेन स्तुवीरन्निति तत्र सकृद्धिङ्कारः इह पुनः प्रतिसाम हिङ्कारः स्यात् ॥४॥

वृषकोऽसि स्वरोऽसीति यजमानवाचने* ॥ ५ ॥

वृषकोऽसि स्वरोऽसीत्येतदादियजुषी यजमानवाचने स्यातां नानासवनयोः क्रमेण श्येनोऽसीत्येतस्य स्थाने ॥ ५ ॥

स्तुत्वा बहिष्पवमानेन प्रस्तरादुभयतश्चतुरङ्गुलं परि-

---

* द्राह्यायणोऽप्येवम् ।

छिद्य तृणं चात्वाले प्रविध्येद्यदि स्तुतं यदिवाद्य सुष्टुतमर्वाक् स्तुतं यदि वातिष्टुतं यत्तयोरन्येन दिवमारुहेमेममन्येन जयेम लोकमिति* ॥ ६ ॥

उत्तरयोः पवमानयोरातिदेशिको विधिरुक्तः साम्प्रतं यदनन्तरं प्रकृतं कर्म तदुच्यते, स्तुत्वा बहिष्पवमानेन अनन्तरं प्रस्तरात्तृणं गृहीत्वा तदुभयतः परिछिद्य तृणं चतुरङ्गुलं कार्य्यं तच्चात्वाले प्रविध्येत् प्रक्षिपेत् प्रक्षेपः प्रव्याधः यदि स्तुतमित्येतदादिना मन्त्रेण एकश्रुतिविधानादुद्गाता अङ्गुलिछेदनसंशये येन कर्म कृतं तस्य परिमाणम् ॥ ६ ॥

तत्रैवोदपात्रं निनयेयुः समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छतारिष्टास्तन्वो भूयाः स्म मापरा सेचिनो धनमिति*।७।

तस्मिन्नेव चात्वाले उदपात्रन्निनयेयुः यत्तत् उदपात्रं तस्मिन् कर्मण्यङ्गभूतं तदेव चात्वाले निनयेयुः समुद्रं वः प्रहिणोमीत्येतदादिना यजुषा ॥ ७ ॥

बहिर्वेद्युदञ्चोऽयुञ्जि पदान्युत्क्रामेयुः प्रागुदग्भ्यः* ॥८॥

---

* द्राह्यायणोऽप्येवम् ।

तदुदपात्रं निनीय अनन्तरं बहिर्वेद्युदङ्मुखा अयुञ्जि पदानि उत्क्रामेयुः गच्छेयुः प्राग्दश्भ्यः त्रि पञ्च सप्त नव वा ॥ ८ ॥

आव्रज्याग्नीध्रीयं बहिष्पवमानर्चोऽधीयीरन्* ॥ ९ ॥

आव्रज्य आग्नीध्रीयन्तस्मिन् बहिष्पवमानर्चः अधीयीरन् ननु किमिदं बहिष्पवमानर्चोऽधीयीरन्निति आव्रज्याग्नीध्रीयमुपरिष्टाज्जप इति वाच्ये उच्यते, स्तोत्रधर्मः प्रवृत्तः प्रत्यङ्मुखः प्रस्तोतोदङ्मुख उद्गाता दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्त्तेति सोऽयमाचार्यः पुनरारभते बहिष्पवमानर्च इति कथं य एव पुरस्ताज्जपस्य धर्मः स एव धर्मः स्यादिति प्रांमुखैः क्रियेति ॥ ९ ॥

अनुव्याहारिषोन्मामिति यमिति शंकेत तस्मा आग्नीध्रीय आहुतीवज्रं प्रहरेद्यज्ञश्च्वत उपचते नमस्त्वते सत्योऽसि सत्यसंस्कृतस्तस्य तेय ऊनं योऽकृतं योऽतिरिक्तमदर्शत्तस्य प्राणेनाप्यायस्व स्वाहेति† ॥ १० ॥

प्रतिपक्षतया अनुव्याहारिषीत् क्षपणवादं कृतवान् अयं पूर्वमिति उद्गायतामिति शंकेत पुनरप्यभिव्याहरेदिति तस्मै तदर्थं आग्नीध्रीये आहुतिवज्रं प्रहरेत् यज्ञश्चक्षतदृत्येतदादिना यजुषा आहुति-

* द्राह्यायणे विशेषोऽस्ति।

† द्राह्यायणेऽप्येवम्।

वज्रः अभिचारार्था आहुतिः अनुव्याहारप्रशमनार्थं अनुव्याहारो नाम अभिद्रोहाभिसंहितः प्रश्नः ॥ १० ॥

न व्यभिचरेतेति धानञ्जप्यः* ॥ ११ ॥

यदुक्तं तस्मा आग्नीध्रीय आहुतिवज्रं प्रहरेदिति तन्न कुर्यात् कस्मात् यतः यएनमनुव्याहरति स आर्त्तिमार्च्छतीति श्रुतेः अक्रियमाणेऽप्येतस्मिन् यएनमनुव्याहरति स आर्त्तिमार्च्छत्येव तस्मान्न व्यभिचरेतेति इति धानञ्जप्यस्य मतम् ॥ ११ ॥

इति द्वितीयास्य प्रथमा कण्डिका।

---

अथ द्वितीया कण्डिका।

अहीनबहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्र* ॥ १ ॥

बहिष्पवमानस्य कृत्स्नो विधिरुक्तः साम्प्रतमहीनसत्रेषु देशविशेषो विवक्षितः स उच्यते, अहीनबहिष्पवमानैरिति अहीनस्य बहिष्पवमानानि अहीनबहिष्पवमानानि तैरहीनबहिष्पवमानैः सदसी स्तुवीरन् देशेन देशः प्रत्याम्नायते प्रथमादह्नोऽन्यत्र प्रथमे-

---

* द्राह्यायणोऽप्येवम्।

ऽहनि चात्वालदेशे स्तुत्वा शेषेषु सदसि स्तुवीरन् ननु बहिष्पवमानै-रिति बहुवचनसामर्थ्यादहीनविधौ सिद्धे कस्मादहीनग्रहणं क्रियते यावता एकाहेषु बहुत्वासम्भवात् सत्रेषु च विशेषवचनादाद्यन्तयोश्च सत्रेष्विति अतः प्रत्याख्यायाहीनात् न चान्या चतुर्थी यज्ञजाति-रस्ति यस्यामिदं विधानं कल्प्येत तस्मादहीनग्रहणं न कर्त्तव्यं क्रिय-माणे च प्रयोजनं वक्तव्यम् उच्यते यदुच्यतेऽहीनग्रहणं न कर्त्तव्यमिति कर्त्तव्यमिति ब्रूमः कस्मात् शेषविधिप्रसिद्धये द्वादशाहेऽहीनभूते एकाहमिश्रेषु चाहीनेषु वरुणप्रघासद्विदिवसाश्वमेधत्रिरात्रव्युष्टि-द्विरात्रेषु अक्रियमानेऽहीनग्रहणे संशयः स्यात् सोऽयमाचार्यो मुक्त-संशयं सूत्रमारभते, अहीनबहिष्पवमानैरिति अथ प्रथमादह्नोऽन्य-त्रेति अहर्ग्रहणं न कर्त्तव्यं कस्मात् प्रथमादन्यत्रेति सिद्धे न चैक-स्मिन्नहन्यनेकबहिष्पवमानं नास्ति उच्यते, कर्त्तव्यमहर्ग्रहणं कस्मात् अक्रियमाणे प्रथमेऽहनि नैमित्तिकबहिष्पवमानावृत्तौ सदसि स्तवनं स्यात् बहिष्पवमानानन्तरे सोमापहारे सोमदाहे वा आभ्यासिक-संस्कारे सति हविषः स्तुत्यर्थत्वात् पवमानानां संस्कारावृत्तौ पव-मानाभ्यासवृत्तिः प्राप्नोति पवमानाभ्यासवृत्तिश्चेति वचनात् हवि-स्तुतिः पवमाने इति च तस्मादहर्ग्रहणे क्रियमाणे नास्ति दोषः ॥ १ ॥

**आद्यन्तयोश्च सत्रेषु*** ॥ २ ॥

आद्यन्तयोश्च ये अहनी सत्रेषु ताभ्यामन्यत्र सदसि स्तवनं सत्रेषु समाध्यर्थम् ॥ २ ॥

---

* द्राह्यायणेऽप्येवम् ।

प्राग्धिष्ण्येविहरणान्निष्क्रम्य तृणप्रासनप्रभृति समापयेयुः* ॥ ३ ॥

सदसि बहिष्पवमानक्रियायामयं विशेषः प्राग्धिष्ण्येष्वग्नीनां विहरणात् तृणप्रक्षेपणादि कर्म निष्क्रम्य समाप्नुयुः चतुरङ्गुलं परिच्छिद्य तृणं चात्वाले प्रविध्येदित्यत आरभ्य आ उपरिष्टाज्जपात् ॥ ३ ॥

वैदत्रिरात्रे सत्रन्यायं गौतमः* ॥ ४ ॥

वैदत्रिरात्रे सत्रं न्यायं गौतम आचार्यो मन्यते उभयतोऽतिरात्रत्वात् ॥ ४ ॥

अहीनन्यायं धानञ्जप्यः* ॥ ५ ॥

अहीनेषु यो न्यायस्तं धानञ्जप्यो मन्यते अहीनत्वात् ॥ ५ ॥

मन्द्रं प्रातःसवने स्तुवीरन्नुत्तरोत्तरमुत्तरयोः† ॥ ६ ॥

मन्द्रः स्वरस्तं श्रित्वा प्रातःसवने स्तुवीरन् उत्तरमुत्तरं श्रित्वा उत्तरयोः पवमानयोः स्तुवीरन् मन्द्रे सप्तयवान्तराणि भवन्ति अतः श्रित्वेत्युक्तम् अन्यथा हि मन्द्रेण प्रातःसवनं स्तुवीरन्निति स्यात् ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

मध्येन वोभयोः* ॥ ७ ॥

मध्येन स्वरेण वा उभयोरुत्तरयोः सवनयोः स्तुवीरन् ॥ ७ ॥

एतस्यां वेलायां प्राश्नीयुः¶ ॥ ८ ॥

एतस्मिन् काले इत्यर्थः स्तुत्वा बहिष्पवमानेन ऋत्विजाम्भोजन-काल उपदिश्यते एतस्मिन् काले भुञ्जीरन्नान्तराभोजनं स्यात् आदधिभक्षणात् ॥ ८ ॥

अनुसवनन्तु सन्नेषु सवनमुखीयान् भक्षयित्वा सन्नेषु नाराशंसेषु† ॥ ९ ॥

अनुसवनन्तु सन्नेषु भोजनं सवनशब्दो विशेषणार्थः कं विशिनष्टि कालं सवनमुखीयान् भक्षयित्वेति सवनमुखीयानां भक्षणमुक्तं भवति नह्यभक्षयित्वा सन्नेषु नाराशंसेषु ततो भुञ्जीरन् ननु सन्नेषु नाराशंसेषु इत्युक्ते सवनमुखीयानां भक्षणमुक्तम्भवति नह्यभक्षितेषु सवनमुखीयेषु नाराशंसानां सादनमस्ति तस्मात्सवनमुखीयान् भक्षयित्वेत्यतिरिच्यते नैतत् कुतः वक्ष्यत्ययं द्वितीयाः सवनेषु नाराशंसाः पूर्वयोस्तु तृतीयाविति तत्र संशयः स्यात् किं पूर्वेषु नाराशंसेषु सन्नेषु उत्तरोत्तरेष्विति तद्विवेचनार्थमारभ्यते ये सवनमुखीयानन्तरं नाराशंसास्तेषु सन्नेष्विति ॥ ९ ॥

---

* द्राह्यायणे विशेषोऽस्ति ।

¶ द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं क्रमम् ।

वपायां हुतायां धिष्ण्यानुपतिष्ठेरन्* ॥ १० ॥

सवनीयस्य पशोर्वपायां हुतायामनन्तरं धिष्ण्यानुपतिष्ठेरन् तद्धिष्ण्योपस्थानं वक्ष्यते ॥ १० ॥

चात्वाले तु मार्जनं पूर्वं सर्वेष्विदमापः प्रवहतावद्यञ्च मलञ्च यद्यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणमापोमा तस्मादेनसो दुरितात्पान्तु विश्वतोऽनिर्मा मुञ्चामि शपथान्निर्मा वरुणादुत निर्मा यमस्य षड्विंशात्सर्वस्मादेव किल्बिषात् सुमित्रियान आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयन्द्विष्म इति* ॥ ११ ॥

चात्वाले तु मार्जनं पूर्वसर्वेषु धिष्ण्योपस्थानाद्भवति मार्जनं मन्त्रपूताभिरद्भिरभ्युक्षणं इदमाप इत्येतदादिना मन्त्रेण प्रकृतमधुनोच्यते ॥ ११ ॥

सम्राडसीत्याहवनीयमुपस्थायोदञ्चो गत्वास्तावचात्वालशामित्रानुदङ्मुखाः स्तुतो नभोसंमृष्ट इति* ॥ १२ ॥

सम्राडसीत्यनेन मन्त्रेण आहवनीयमुपस्थाय उदङ्मुखा गत्वा आस्तावचात्वालशामित्रान् आस्तावस्य चात्वालस्य शामित्रस्य आस्तावचात्वालशामित्राः तानुपतिष्ठेरन् उदङ्मुखाः उदङ्मुखा इति प्राङ्मुख-

---

* आश्वायनोऽप्येवम्।

करणं प्रत्याम्नायते स्तुतो नभोसंसृष्ट इति एतदादिभिर्मन्त्रैः यथा-संख्येन ॥ १२ ॥

विभुरसीत्याग्नीध्रीयमुपतिष्ठेरन्* ॥ १३ ॥

विभुरसीत्यनेन मन्त्रेण आग्नीध्रीयस्योपस्थानं कुर्युः ननु आहव-नीयमुपस्थायेति प्रकृतमुपस्थानं कस्मादुच्यते उपतिष्ठेरन्निति उच्यते उदङ्मुखा इति प्रकृतं, तन्माभूत् अतः उपतिष्ठेरन्नित्युच्यते कथं आग्नीध्रीयं गत्वा प्राङ्मुखा उपतिष्ठेरन्निति ॥ १३ ॥

तमुत्तरेण सञ्चरः सर्वत्र* ॥ १४ ॥

तमाग्नीध्रीयमुत्तरेण सञ्चरः सर्वत्र एनपायोगे द्वितीया सर्वत्रेति न केवलं धिष्ण्योपस्थाने तमिति निर्देशः क्रियते केषाञ्चित् परिश्रिते भवति केषाञ्चिद्बहिर्भवति यदि परिश्रिते यदि बहिस्तस्यैवोत्तरेण सञ्चरः ॥ १४ ॥

दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्द्धानमाहवनीयञ्च पृष्ठहोमाय* ॥ १५ ॥

दक्षिणेनाग्नीध्रीयस्य सञ्चरः उत्तरयोः सवनयोर्यस्मिन् काले हवि-र्द्धानगमनं भवति आहवनीयग्रहणादन्योऽपि पृष्ठाश्रितो होमः आह-वनीय एव स्यात् यथा वैराजमिति ॥ १५ ॥

* द्राह्यायणेऽप्येवम् ।

पूर्वस्याꣳ सदसो द्वारि प्रत्यङ्मुखास्तिष्ठन्तो वह्निरिति होतुर्धिष्ण्यम्* ॥ १६ ॥

पूर्वस्यां द्वारि कस्य सदसः तिष्ठन्तो वह्निरित्येतदादिना यजुषा-होतुर्धिष्ण्यमुपतिष्ठेरन् ॥ १६ ॥

श्वात्र इति मैत्रावरुणस्य* ॥ १७ ॥

धिष्ण्यमुपतिष्ठेरन् ॥ १७ ॥

तुथ उशिगन्धारिरवस्युरिति ब्राह्मणाच्छꣳसिप्रभृतीना-मुदञ्चः* ॥ १८ ॥

तुथ इत्येतदादिभिर्यजुर्भिः ब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकानां उदञ्चो धिष्ण्याः तानुपतिष्ठेरन् ॥ १८ ॥

तत्रैव तिष्ठन्तः शुन्ध्युरिति मार्जालीयम्† ॥ १९ ॥

तस्मिन्नेव प्रदेशे तिष्ठन्तः शुन्ध्युरित्येतदादिना यजुषा मार्जाली-यमुपतिष्ठेरन् ॥ १९ ॥

ऋतधामेत्यौदुम्बरीम्* ॥ २० ॥

ऋतधामेत्यनेनौदुम्बरीमुपतिष्ठेरन् ॥ २० ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे विशेषोऽस्ति ।

समुद्र इति ब्रह्मणः सदनम्* ॥ २१ ॥

समुद्र इत्यनेन यजुषा ब्रह्मणः सदनमुपतिष्ठेरन् तत्रैव तिष्ठन्त इत्येतदनुवर्त्तत एव ॥ २१ ॥

उत्तरेण सदो गत्वान्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तोऽहिरिति प्रजहितम्* ॥ २२ ॥

उत्तरेण सदसः गत्वा वेदेरन्तः अन्तर्वेदि अन्तरित्यव्ययं न बहिर्वेदीत्येतदुक्तं भवति प्रत्यङ्मुखास्तिष्ठन्तः अहिरिति प्रजहितमुपतिष्ठेरन् पात्नीशालोऽग्निः केषाञ्चिद्गार्हपत्यादतिप्रणयनो भवति केषाञ्चिदाहवनीयात् यस्मादतिप्रणयनो भवति स गार्हपत्यः योऽन्यः स प्रजहितः ॥ २२ ॥

अज इति गार्हपत्यम्* ॥ २३ ॥

अज इत्यनेन मन्त्रेण गार्हपत्यमुपतिष्ठेरन् ॥ २३ ॥

सगरा इति दक्षिणाग्नेरायतनम्* ॥ २४ ॥

सगरा इत्येतदादिना यजुषा दक्षिणाग्नेरायतनमुपतिष्ठेरन् ॥२४॥

कव्य इति दक्षिणं वेद्यन्तम्* ॥ २५ ॥

---

* द्राह्यायणेऽप्येवम् ।

कव्य इत्येतदादिना यजुषा महादेवेर्दक्षिणमन्तमुपतिष्ठेरन्॥२५॥

तत्रैव तिष्ठन्तः सर्वान् समन्वीक्षमाणाः पातमेति* ॥ २६ ॥

एतस्मिन्नेव देशे तिष्ठन्तः सर्वानाहवनीयादीन् धिष्ण्यान् समन्वीक्षमाणाः पातमित्येतद् यजुर्जपेयुः ॥ २६ ॥

एकैकमुपस्थायैतद्ब्रूयुरिति शाण्डिल्यो बहुशब्दानेकवत् कुर्वन्तः† ॥ २७ ॥

आहवनीयादारभ्य एकैकं धिष्ण्यमुपस्थायैतद् यजुर्जपेयुरिति शाण्डिल्य आचार्यो मन्यते तस्मिन् यजुषि यान् बहुशब्दान्तानेकवत्सनयन्तः प्रयोगस्तु पाहि माग्नेरौद्रेणानीकेन पिपृहि मा नमस्तेऽस्तु मा मा हिंसीरित्येवमादि ॥ २७॥

इति द्वितीयस्य द्वितीया कण्डिका।

अथ तृतीया कण्डिका।

रौरुकीणि चेत् कुर्युरादित्यं प्रथममुपतिष्ठेरन्नध्वनामिति* ॥ १ ॥

रौरुकीये प्रवचने यानि धिष्ण्योपस्थानयजूंष्याम्नातानि यदि-

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणोऽप्येवं किन्तु तेनैतेन सूत्रद्वयं कृतम्।

तानि कुर्युः ततः प्रागाहवनीयोपस्थानादादित्यन्तावदुपतिष्ठेरन् अध्व- नामध्वपत इत्यनेन मन्त्रेण ॥ १ ॥

आहवनीयमुपस्थाय तमेवापि जोऽसि जायमान इत्यपि जोऽसि नवजात इति वा यमग्निमनुप्रहरन्ति तमभिप्रेत्य* ॥ २ ॥

आहवनीयं पूर्वोक्तेन विधिना उपस्थाय तमेवोपतिष्ठेरन् अपि जोऽसि जायमान इति अपि जोऽसि नवजात इति वा एतयोरन्य- तरेण यमग्निन्निर्मथ्य आहवनीये प्रहरन्ति तमग्निमाभिमुख्येन प्रेत्य समीपे गत्वा उपतिष्ठेरन् ॥ २ ॥

यदा चात्वालमथोत्करन्तुमुलोऽस्याक्रन्द कृत्वेति* ॥ ३ ॥

यदा यस्मिन् काले चात्वालमुपतिष्ठेरन् अथानन्तरमुत्करमुप- तिष्ठेरन् तुमुलोऽस्याक्रन्द कृत्वेत्यनेन मन्त्रेण ॥ ३ ॥

यदा शामित्रमथ यत्रोबध्यन्निखनन्त्यूबध्यगोह्योसि पा- र्थिव इति* ॥ ४ ॥

यस्मिन् काले शामित्रमुपतिष्ठेरन् अथानन्तरं यस्मिन् देशे पशोः ऊबध्यन्निखनन्ति तं देशमुपतिष्ठेरन् ऊबध्यगोह्योऽसि पार्थिव इत्यनेन यजुषा ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम् ।

**यदाग्नीध्रीयमथ यत्राच्छावाकआसीनोहोतर्युपह्वमिच्छ-त्युपह्व्योऽसि नमस्य इत्युपह्व्योऽसि तनूपा इति वा* ॥ ५ ॥**

यस्मिन् काले आग्नीध्रीयमुपतिष्ठेरन् अथानन्तरं यत्र यस्मिन् देशे अच्छावाकआसीनः होतरि उपह्वमिच्छति तं देशमुपतिष्ठे-रन् उपह्व्योऽसि नमस्य इति उपह्व्योऽसि तनूपा इति वा एतयोरन्य-तरेण वा ॥ ५ ॥

**यदा ब्रह्मणः सदनमथ सदस्यस्य सदस्योऽसि मलिम्लुच इति* ॥ ६ ॥**

यस्मिन् काले ब्रह्मणः सदनमुपतिष्ठेरन् अनन्तरं सदस्यस्य सदन-मुपतिष्ठेरन् सदस्योऽसि मलिम्लुच इत्यनेन मन्त्रेण सीदन्त्यस्मिन्निति सदनम् ॥ ६ ॥

**यदा दक्षिणं वेद्यन्तमथ प्राजापत्यमसीति पत्नीशाला-मैन्द्रमसीति सदो वैष्णवमसीति हविर्द्धानमैन्द्राग्नमसीत्याग्नी-ध्रीयं वैश्वदेवमसीति वा* ॥ ७ ॥**

यस्मिन् काले दक्षिणं वेद्यन्तमुपतिष्ठेरन् ततोऽनन्तरं पत्नी-शालादीन्याग्नीध्रीयान्तानि आगाराण्युपतिष्ठेरन् यथादिष्टैर्मन्त्रैः, ननु आग्नीध्रीयस्य पूर्वमेवोपस्थानं कृतं तत् किमिदं पुनरादिश्यत-

---

* द्राह्यायणेऽप्येवम्।

१७

इति अत्रोच्यते, तदाग्नीध्रीयस्य कृतम् इमानि तु पत्नीशालादीनां परिश्रितानामुपस्थानानि प्रकृतानि तस्मादाग्नीध्रीयपरिश्रितस्येद-मुपस्थानमिति ॥ ७ ॥

**अथ तथैव समस्तेन सर्वे स्थ सोम्यासः सर्वे सोमं पिबत सर्वे सोमस्य पीतिमानशध्वे पातमेति समानं परम्* ॥ ८ ॥**

अथ अस्मात् कर्मणोऽनन्तरं यथापूर्वं समस्तोपस्थानं कृतं तथैव तेन प्रकारेण सर्वान्समन्वीक्षमाणाः सर्वे स्थ सोम्यास इत्येतद्यजु-र्जपित्वा अनन्तरं पातमेत्येतदादि पूर्वोक्तं जपेयुः ॥ ८ ॥

**ऋतस्य द्वारौ स्थ इत्यपरौ द्वारबाहू संमृज्य मा मा सन्ताप्तमिति प्रविशेयुः¶ ॥ ९ ॥**

द्वयोर्विधानयोरन्यतरेण धिष्ण्यानुपस्थाय अनन्तरं ऋतस्य द्वारौ स्थ इत्यनेन मन्त्रेण सदसः अपरौ पश्चिमौ द्वारबाहू संमृज्य मा मा सन्ताप्तमित्यनेन यजुषा सदसि प्रविशेयुः सम्मार्जनं शोधनम् ॥ ९ ॥

**दक्षिणेनौदुम्बरीं गत्वा तस्या उत्तरत उपविशेयुर्नमः सखिभ्यः इति† ॥ १० ॥**

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

¶ द्राह्यायणेऽधिकमस्ति ।

† द्राह्यायणेऽप्येवम् ।

दक्षिणेन प्रदेशेनौदुम्बर्यां गत्वा तस्या उत्तरे प्रदेशे उपविशेयुः नमः सखिभ्य इत्यनेन यजुषा तस्या इति निर्देशो माभूत् सदस उत्तरत इति ॥ १० ॥

पूर्वेण प्रस्तोतारं प्रतिहर्त्ता गच्छेदेतस्याम्* ॥ ११ ॥

एतस्यां वेलायां धिष्ण्योपस्थानानन्तरायां पूर्वेण प्रदेशेन प्रस्तोतारं प्रतिहर्त्ता गच्छेत् अपरे ब्रुवते एतस्यामित्येतस्यामौदुम्बर्याम् अयमेव नित्यः सञ्चर इति ॥ ११ ॥

एतस्यां वेलायाᳬंसमुपह्वयेरन्* ॥ १२ ॥

एतस्यामिति काकाक्षिन्यायेनोभयत्र सम्बध्यते एतस्यां वेलायामस्मिन् काले समुपह्वयेरन्, ननु एतस्यां वेलायामिति किमर्थमारभ्यते अथ समुपह्वयेरन्नित्यानन्तर्ये सिद्धे उच्यते, अन्यदप्यस्ति पूर्वेण प्रस्तोतारं प्रतिहर्तुः गमनं न तस्मिन् समुपह्वयेरन् धिष्ण्योपस्थानानन्तरं प्रवेशनकालएव समुपह्वयेरन् ॥ १२ ॥

सर्वे सत्रेषु* ॥ १३ ॥

यजमाना उपह्वयध्वमित्येवोपह्वानमिति सर्वे यजमानाः सत्रेषु समुपह्वयेरन् ॥ १३ ॥

---

* द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम्।

**मिथोऽन्यत्र* ॥ १४ ॥**

सत्रादन्यत्र मिथः द्वौ द्वौ समुपह्वयेरन् ॥ १४ ॥

**सर्वे यजमानम* ॥ १५ ॥**

सत्रादन्यत्र सर्वे त्रयोऽपि उद्गातारो यजमानमुपह्वयेरन् उद्गातार उपह्वयध्वमिति प्रार्थिताः सन्त उपहूत इत्यनुज्ञां कुर्युरित्यर्थः ॥ १५ ॥

**द्वारबाहुसम्मार्जनप्रभृत्येतत् सर्वं कुर्युर्यदा धिष्ण्यानुपतिष्ठेरन्* ॥ १६ ॥**

ऋतस्य द्वारौ स्थ इत्येतस्मादारभ्य एतत् सर्वं कुर्युः यावद् यजमानसमुपह्वानमिति यस्मिन् काले धिष्ण्यानुपतिष्ठेरन्, ननु एतत् सर्वमिति किमर्थं द्वारबाहुसम्मार्जनप्रभृतीति सिद्धे उच्यते, उक्तं यदा धिष्ण्यानुपतिष्ठेरन्निति वक्ष्यति च अथ धिष्ण्यानुपतिष्ठेरन्नित्येतस्मिन् प्रकरणे अनुपस्थानं शाण्डिल्य इति तद्धिष्ण्योपस्थानानन्तरं कर्म अनुपस्थानेन प्राप्नोति सोऽयमाचार्यो नियमार्थमारभते एतत् सर्वं कुर्यादिति कथं अनुपस्थानेऽपि स्यादिति ॥ १६ ॥

**याजमानब्रह्मत्वे चेदुद्गाता कुर्यादाग्नीध्रीयमुपस्थाय पूर्वेण परिक्रामेत्* ॥ १७ ॥**

---

* द्राह्यायणोऽप्येवम् ।

यजमानस्य कर्म याजमानं ब्रह्मणः कर्म ब्रह्मत्वं ते याजमानब्रह्मत्वे यद्युद्गाता मूल्येन कुर्यात् तदाग्नीध्रीयमुपस्थाय तस्य पूर्वेण गच्छेत् किं विषयं पुनरिदं कर्मोद्गातुः उच्यते आपत्कल्पे॥ १७॥

सादस्यानुपस्थाय तत एवेक्षमाणः पात्नीशालान्* ॥ १८॥

सादस्यान् धिष्ण्यानुपस्थाय सदसि भवाः सादस्याः तानुपस्थाय तस्मिन्नेव देशेऽवस्थित ईक्षमाणः पात्नीशालान् धिष्ण्यानुपतिष्ठेत् पत्नीशालायां भवाः पात्नीशालाः॥ १८॥

इतरथेतरौ* ॥ १९॥

इतरथा इतरौ प्रष्टौ पूर्वोक्तेन विधिना धिष्ण्यान् उपतिष्ठेयाताम्॥ १९॥

इति द्वितीयस्य तृतीया कण्डिका।

---

अथ चतुर्थी कण्डिका।

ऋतस्य द्वारौ स्थ इति पूर्वौ द्वारबाहू संमृज्य दक्षिणस्य पुरस्तादुदङ्मुख उपविशेदिति धानञ्जप्यः† ॥ १॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणे विशेषोऽस्ति।

सादसान् पात्नीशालांश्च धिष्ण्यानुपस्थाय अनन्तरमृतस्य द्वारौ स्थ इत्यनेन यजुषा पूर्वौ द्वारबाहू सदसः संमृज्य दक्षिणस्य द्वारबाह्वोः पूर्वे प्रदेशे उदङ्मुख उपविशेदित्येवं धानञ्जप्यः आचार्य आह ॥ १ ॥

पश्चात् प्रत्यङ्मुख इति शाण्डिल्यः* ॥ २ ॥

पश्चिमे प्रदेशे दक्षिणस्य द्वारबाह्वोः प्रत्यङ्मुख उपविशेदित्येवं शाण्डिल्य आचार्य आह ॥ २ ॥

उक्ते प्रवेशनोपवेशने† ॥ ३ ॥

प्रवेशनोपवेशनार्थीये यजुषी पूर्वमेवोक्ते मा मा सन्ताप्त नमः सखिभ्य इति च ॥ ३ ॥

ऋत्विक्पथेन गत्वा समस्तोपस्थानप्रभृति समानम्† ॥ ४ ॥

याजमानमुक्तं साम्प्रतं ब्रह्मत्वं विवक्षितं तदुच्यते, ऋत्विक्पथेन गत्वा समस्तोपस्थानादारभ्य सर्वान् समन्वीक्षमाणाः पातमेत्येतस्मात् सर्वं समानम् ॥ ४ ॥

दक्षिणार्द्धे तु सदसः पूर्वमुपवेशनं प्रस्तोतुः प्रत्युपवेशनं

---

* द्राह्यायणे विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

ब्रह्मोपवेशनेन निरस्तः परावसुरिति दक्षिणातृणं निरस्येदावसोः सदने सीदामीत्युपविशेत्* ॥ ५ ॥

अयन्तु विशेषः प्रागौद्गात्रादुपवेशनात् दक्षिणे प्रदेशे सदस उपवेशनं प्रस्तोतुरुपवेशनं प्रति तच्च ब्रह्मोपवेशनेन, ननु किमिदं ब्रह्मोपवेशनेनेति यदा वक्ष्यत्येवोपवेशनम् उच्यते, वक्ष्यत्ययं ब्रह्मणः प्रकरणे प्रतिपत्तौ धिष्ण्यानुपस्थायोक्तं सदस्युपवेशनमिति निरस्तः परावसुरित्यनेन यजुषा दक्षिणातृणन्निरस्येत् आवसोः सदने सीदामीत्यनेन उपविशेत् ॥ ५ ॥

भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष इत्युक्त्वौदुम्बरीं गत्वोपविशेत्† ॥ ६ ॥

उपविश्यानन्तरम् एतद्यजुर्जपेत् अनन्तरमौदुम्बरीं गत्वा पूर्वोक्तेन यजुषोपविशेत् ॥ ६ ॥

अनूपविशेतामितरौ† ॥ ७ ॥

तमुपविष्टमनन्तरं प्रस्तोतृप्रतिहर्त्तारावुपविशेतां पूर्वोक्तेनैव यजुषा ॥ ७ ॥

---

* द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम्।

† द्राह्यायणोऽप्येवम्।

एतेनानुपूर्वेण सर्वं यथासनञ्चिकीर्षेत्* ॥ ८ ॥

यदि याजमानब्रह्मत्वे उद्गाता कुर्यात् तदा याजमानं ब्रह्मत्व-मौद्गात्रमित्यनेनानुपूर्वेण सर्वं यथासनं उपवेशनादि कुर्यात् ॥ ८ ॥

ग्लायेच्चेदध्यौदम्बर्येव* ॥ ९ ॥

यदि ग्लायेदौदुम्बर्यामेवासीनः सर्वं कुर्यात् ग्लानिरशक्तिः ॥ ९ ॥

सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्रह्माणमनुप्रविशेद् ब्राह्मणाच्छंसिनं वा† ॥ १० ॥

सदस्य एवमेव यदिदमुद्गातॄणां धिष्ण्योपस्थानमुक्तमनेनैव प्रकारेण कुर्वन् ब्रह्माणमनुप्रविशेत् ॥ १० ॥

तेनास्य समुपह्वः स्याद्भक्षश्च समानः† ॥ ११ ॥

यदि ब्रह्मणा यदि वा ब्राह्मणाच्छंसिना यस्यानुप्रविष्टः तेन सह सदस्यस्य समुपह्वः स्यात् न केवलं समुपह्वो भक्षश्च तेनैव तुल्यः स्यात् ॥ ११ ॥

बीभत्सेयाताञ्चेन्नानाचमसौ स्याताम्* ॥ १२ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे नैतेन सूत्रद्वयं कृतम् ।

यदि बीभत्सेयातां नाना चमसौ स्यातां बीभत्सा नाम घृणा स्यातामिति एतावेव चमसौ नाना स्याताम् अन्येषां तु सत्यामपि बीभत्सायां नैव नाना चमसः स्यात् ॥ १२ ॥

सर्पत्सु न शून्यं सदः कुर्यात्* ॥ १३ ॥

सवनसंस्थासु सर्पणेषु सर्पत्सु ऋत्विग्यजमानेषु न सदस्यः शून्यं सदः कुर्यात् ॥ १३ ॥

तस्य दधिभक्षान्तं कर्म* ॥ १४ ॥

तस्य सदस्यस्य दधिभक्षान्तं कर्म भवति नोर्द्धम् ॥ १४ ॥

स निवर्त्तेत सत्रेषु* ॥ १५ ॥

स दधिभक्षतो निवर्त्तेत सत्रेषु सदस्यस्य कथं पुनरेतद्गम्यते यथा दधिभक्षतो निवर्त्तते सदस्यस्य न सदस्य एवेति उच्यते सदस्यो हि सत्रोत्पादक एव आवर्त्तेवाः सदस्या इति, ननूक्तमग्न्युषोमान्तमहःसत्रेष्विति सत्रेषु दधिभक्षप्राप्तिरेव नास्ति अग्न्युषोमान्तत्वादह्नाम् अत्रोच्यते, सविधिरुद्गातृणामुक्तो न सदस्यस्य सदस्यस्य हि अविशेषेणोक्तं दधिभक्षान्तं कर्म एकाहाहीनसत्रेषु सोऽविशेषवचनप्राप्तो दधिभक्षः सत्रेषु विशेषवचनेन स निवर्त्तेत सत्रेष्विति ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम्।

विसꣳस्थिते सवने पूर्वया द्वारान्तरेण होतुर्धिष्ण्यं मैत्रावरुणस्य च सञ्चरः* ॥ १६ ॥

विसंस्थिते अर्द्धसमाप्ते सवने अन्तरेण होतुर्धिष्ण्यस्य मैत्रावरुण-धिष्ण्यस्य गत्वा पूर्वया द्वारा सदोनिष्क्रमणकर्मार्थमेष सञ्चरः ॥१६॥

तद्यथेतं तद्यथेतं* ॥ १७ ॥

तद्यथा गतं एवं सदसि सञ्चरः सिद्धो भवति नान्यत्प्रयोजनमस्ति अस्य सूत्रस्यारम्भे ॥ १६ ॥

इति द्वितीयस्य चतुर्थी कण्डिका ।

---

अथ पञ्चमी कण्डिका ।

चमसं प्रतिगृह्य प्रस्तोता दक्षिणऊरावाधाय दक्षिणेन पाणिनापिधायासीत* ॥ १ ॥

धिष्ण्योपस्थानमुक्तम् अनन्तरं सवनमुखीयांश्चमसानाहरन्ति अत उच्यते, चमसं प्रतिगृह्येति चमन्त्यस्मिन्निति चमसः तच्चमसन्दीय-

---

* द्राह्यायणोऽप्येवम् ।

मानं प्रतिगृह्य दक्षिण ऊरावाधाय दक्षिणेन पाणिनापिधायासीत अपिधानमाच्छादनम् ॥ १ ॥

उपहूयमानायामिडायामनूप धारयेदनुपघ्नन्* ॥ २ ॥

उपहूयमानायामिडायान्तञ्चमसं इडाह्वानसमीपे धारयेदनुपघ्नन् अस्पृशन् । एष उपह्वानधर्मः प्राग्याजमानात् अग्निर्मूर्द्धेत्यादि ॥ २ ॥

वषट्कर्तुरनुभक्षं सर्वत्र भक्षयेयुर्मिथ उपहूय † ॥ ३ ॥

वषट्कर्त्तरि भक्षितेऽस्मिंश्चमसे ततो भक्षयेयुः स्वं चमसं मिथः अन्योन्यमुपहूय, ननु वषट्कर्त्रा चमसं भक्षितं ततोऽनुभक्षयेदिति तदयुक्तं कुतः अन्विति कालापेक्षा न भक्षणप्राप्तिः मिथ उपहूय इत्येतस्माच्च यस्य भक्षणप्राप्तिः स एवोपहवं याचनीयः अनुज्ञार्थत्वात् उपह्वानस्य सर्वग्रहणान्न केवलं सवनमुखीयानां सर्वेषाञ्चमसानां एष भक्षणधर्मः ॥ ३ ॥

उद्गाता प्रथमः† ॥ ४ ॥

चमसं भक्षयेत् असौ चमसः प्रस्तोत्रा प्रथमं प्रतिपन्नः अतोऽस्यैवा-

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे छेदविषये विशेषोऽस्ति ।

नन्तरं भक्षणं प्राप्नोति अतः आहोद्गाता प्रथम इति कथं भक्षये-दित्युच्यते ॥ ४ ॥

दक्षिणमनु बाहुन्दण्डं कृत्वा श्येन इत्यवेक्ष्येन्दविति द्विरल्पं भक्षयेद् यथासवनं छन्दाᳬस्यादिशन्* ॥ ५ ॥

दक्षिणं बाहुमनु चमसस्य दण्डं कृत्वा श्येन इत्यनेन यजुषा अवेक्ष्य सोमम् इन्दवित्यनेन द्विर्भक्षयेदल्पं क्रियाभ्यासे सकृन्मन्त्रः यद्यस्मिन्सवने छन्दो यथासवनं गायत्रछन्दस इति प्रातःसवने त्रिष्टुप्छन्दस इति माध्यन्दिने जगतीछन्दस इति तृतीयसवने एवमादिशन् ॥ ५ ॥

ऊर्ध्व इति मुख्यान् प्राणानभिमृशेत सोमरारन्धीति हृदयं सोमगोभिरिति नाभिम्¶ ॥ ६ ॥

ऊर्ध्व इत्यनेन यजुषा मुख्यान् प्राणानभिमृशेत मुखे भवा-मुख्याः प्राणा इन्द्रियाणि, सोमरारन्धीत्यनेन यजुषा हृदयं सोमगोभिरित्यनेन नाभिम् अभिमृशेतेति वर्त्तते ॥ ६ ॥

एवमितरौ कुर्याताम् † ॥ ७ ॥

---

* द्राह्यायणेऽप्येवम् ।

¶ द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

एवमेव इतरौ प्रस्तोतृप्रतिहर्त्तारौ कुर्यातां ॥ ७ ॥

प्रतिहर्त्ता पश्चात्* ॥ ८ ॥

अथ तयोः कः क्रम इत्युच्यते, प्रतिहर्त्ता पश्चात् ॥ ८ ॥

तꣳ स आप्याययेदभिमृश्याप्यायस्वेति¶ ॥ ९ ॥

तं चमसं स प्रतिहर्त्ता आप्याययेत् अभिमृश्य आप्यायस्वेत्यनेन मन्त्रेण अयातयामार्थम् अथ सग्रहणं किमर्थमिति चेत् उच्यते, वक्ष्यति सुब्रह्मण्यचतुर्था उद्गातृचमसं भक्षयेयुः षट् चान्य इति तैरपि भक्षिते स एवाप्याययेत् प्रतिहर्त्ता ॥ ९ ॥

सर्वे वैतया गायत्र्या¶ ॥ १० ॥

सर्वे वा आप्याययेयुः आप्यायस्वेत्येतया गायत्र्या अथैतया गायत्र्येति किमर्थमिति चेत् उच्यते, संव्यवहारार्थं वक्ष्यति गायत्रीं द्विर्ब्रूयुरिति गायत्र्यैवानुसवनमाप्यायनमिति च ॥ १० ॥

तां तृतीयसवने द्विर्ब्रूयुः सन्ते पयाꣳसीति माध्यन्दिने† ॥११॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

¶ द्राह्यायणेन द्वाभ्यामेकसूत्रं कृतम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

तां गायत्रीं तृतीयसवने सोमाप्यायने द्विर्ब्रूयुः सन्ते पयांसीत्येतयर्चा माध्यन्दिने आप्यायनं छन्दःसम्पदर्थम् ॥ ११ ॥

गायत्र्यैवानुसवनमाप्यायनमिति शाण्डिल्यः* ॥ १२ ॥

गायत्र्यैवाप्यायस्वेत्येतया सकृदुक्तया अनुसवनमाप्यायनमिति शाण्डिल्य आह ॥ १२ ॥

द्वितीयाः सवनेषु नाराशꣳसाः पूर्वयोश्च तृतीयौ¶ ॥ १३ ॥

द्वितीयास्समस्ताः सवनेषु त्रिष्वपि नाराशंससंज्ञाः पूर्वयोः सवनयोः प्रथमद्वितीययोस्तृतीयौ च ॥ १३ ॥

तेषामनवेक्ष्य भक्षणमवमैरिति प्रातःसवन ऊर्वैरिति माध्यन्दिने काव्यैरिति तृतीयसवने¶ ॥ १४ ॥

तेषां नाराशंसानामनवेक्ष्य भक्षणं यदेतच्छ्येन दृत्यवेक्षणं एतत्तेषां न स्यात् अवमैरित्येतदादिभिर्विहितैरनुसवनं भक्षयेयुर्यथाक्रमम् ॥१४॥

पितृभिरिति सर्वत्रानुसꣳहरेत्† ॥१५॥

---

* द्राह्यायणे विशेषोऽस्ति।

¶ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

पितृभिर्भक्षितस्येत्येतदादि सर्वत्रानुसंहरेत् सर्वेषु सवनेषु सर्वग्रहणं अन्येष्वपि मन्त्रेषु पितृशब्दमनुसंहरेत् अवमैस्ते पितृभिरित्येतदादि ॥ १५ ॥

प्रत्यभिमर्शने यथाकामी* ॥ १६ ॥

यदेतदूर्ध्व इति मुख्यान् प्राणानभिमृशेतेत्येतदादि प्रत्यभिमर्शनम् एतत् नाराशंसे कुर्यान्न वा अपरे वर्णयन्ति पितृभिरिति सर्वत्रानुसंहरेत् इत्यस्य पितृशब्दस्यानुसंहरेत् प्रत्यभिमर्शने यथाकामी इन्द्रशब्दस्य स्थाने पितृशब्दं वा कुर्यात् यथाम्नातमेवाभिमर्शनं कुर्यात् सर्वप्राप्तिश्वतत्वार्थत्वादिन्द्रस्य ॥ १६ ॥

प्रथमद्वितीयौ पूर्वयोः सवनयोराप्याययेत् प्रथमं तृतीयसवने † ॥ १७ ॥

प्रथमद्वितीयौ चमसौ पूर्वयोः सवनयोः प्रातःसवनमाध्यन्दिनयोः आप्याययेत् प्रथमञ्चमसं तृतीयसवने आप्याययेत् ॥ १७ ॥

आवर्त्तिषु तृणे प्रतिगृह्य प्रस्तोता प्रयच्छेद्यथा प्रस्तरम्* ॥१८॥

आवर्त्तिस्तोत्रेषु तृणे प्रतिगृह्य प्रस्तोतोद्गात्रे प्रयच्छेत् यथा

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

प्रस्तरं येन प्रकारेण प्रस्तरदानं ब्रह्मन् स्तोष्यामः प्रशास्तरिति प्रस्तोतृग्रहणं किमर्थमिति चेत् यथा प्रस्तरमित्यनेनैव सिद्धे यदा प्रस्तरस्य प्रस्तोतैव सम्प्रदाता अत्रोच्यते, यदाप्यन्यदुपाकरणद्रव्यं तत्रापि प्रस्तोतैव प्रयच्छेत् यथा वैरूपोपाकरणे व्यजनमरणी वैराजे महानाम्नीष्ववकामिश्रा आपः महाव्रते बाणः इत्येतदादि ॥ १८ ॥

अनाह्रियमाणयोर्न मन्त्रं जप्यात्* ॥ १९ ॥

अनाह्रियमाणयोस्तृणयोर्मन्त्रन्नोत्सृजेत् यदा तृणाभ्यामुपकरणम् ॥ १९ ॥

तथैव जङ्गामुपहृत्य युञ्ज्यात् स्तोमन्दीक्षायै तपसो मनसो वाच इति नाना धानञ्जप्यो यत्रानन्तराणि चत्वारि † ॥२०॥

तथैव तेनैव प्रकारेणेत्यर्थः यथैव प्रस्तरेण बहिष्पवमाने उक्तं जङ्गामुपहृत्य युञ्ज्यात् स्तोमं दीक्षायै वर्णेनेत्येतदादिभिः नाना पृथगित्यर्थः यत्र यस्मिन्ननन्तराणि चत्वारि स्तोत्राणि एवं धानञ्जप्य आचार्य आह ॥ २० ॥

अन्तः सर्वेषां प्रजापतिस्त्वेति* ॥ २१ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

यदेतत् प्रजापतिस्त्वेति सर्व्वेषामनन्तरमाम्नातम् एतत् प्रत्येक-मनुषज्यते दीक्षाये वर्ष्णेन प्रजापतिस्त्वा युनक्तु एवं सर्व्वेषु ॥ २१ ॥

उत्तरमुत्तरं लुप्येताऽल्पीयःसु* ॥ २२ ॥

अल्पीयःसु स्तोत्रेषु उत्तरमुत्तरं स्तोमयोजनं लुप्येत यथाग्निष्टोमे त्रीण्युत्तराणि लुप्तानि, अथ किमर्थमिदं सूत्रं आरभ्यते यदा निमि-त्तापाये नैमित्तिकस्याप्यपायो भविष्यत्येव उच्यते, सन्नियोगशिष्टान्ये-तानि स्तोमयोजनानि यत्रानन्तराणि चत्वारीति तत्राकात्स्न्येन संशयः स्यात्, अथाल्पीयःसु किमर्थमिति चेत् उच्यते प्रकारदर्शनार्थं कथम् अन्यत्रापि बहुष्वक्तस्तेषु लोपप्राप्तौ उत्तरमुत्तरं लुप्येत यथा वैराजेऽग्निमन्थने आह, अभ्यात्मं प्रजननं कृत्वा त्रिःप्रदक्षिणमभिमन्थे-द्गायत्रं छन्दोऽनु प्रजायस्व त्रैष्टुभं जागतमानुष्टुभं वैराजमिति गौतम इत्युक्त्वाह चतुर्भिरिति धानञ्जय्यस्त्रिभिरिति शाण्डिल्य इति तथा महाव्रतासन्द्यारोहणं छन्दोभिरुक्त्वाह वैराजपञ्चमैरिति गौतम-श्चतुर्भिरिति धानञ्जय्यस्त्रिभिरिति शाण्डिल्य इति अत्राप्युत्तरमुत्तरं लुप्येताल्पीयःस्विति ॥ २२ ॥

प्रथमेन वाजपेयसाम्नो युञ्ज्यात्* ॥ २३ ॥

प्रथमेन मन्त्रेण वाजपेयसाम्नः स्तोमं युञ्ज्यात् सोऽङ्गिसाम्नः

---

* द्राह्यायणे विशेषोऽस्ति ।

प्रथमेन स्तोमयोजनं कृतम् इहानन्तर्याद्द्वितीयस्य प्राप्तिः तन्मा-भूदित्यत आह प्रथमेनेति ॥ २३ ॥

ततप्रभृतीनि रात्रौ* ॥ २४ ॥

प्रथमप्रभृतीनि रात्रौ स्तोमयोजनानि भवन्ति षोडशिमत्यति-रात्रे द्वितीयप्रभृतीनि रात्रौ प्राप्नुवन्ति तत्प्रतिषेधार्थमाह प्रथम-प्रभृतीनि रात्राविति ॥ २४ ॥

तथातिरिक्तस्तोत्रेषु* ॥ २५ ॥

तथैवातिरिक्तस्तोत्रेषु प्रथमप्रभृतीत्येव सन्धेरनन्तरत्वात्तत्रापि द्वितीयप्रभृतिप्राप्तौ तथेत्युक्तम् ॥ २५ ॥

सर्वैरेकैकं यथाम्नायं शाण्डिल्यः* ॥ २६ ॥

सर्वैर्द्वीचाये वर्णनेत्येतदादिभिरेकैकस्मिन् स्तोत्रे यथाम्नातैः स्तोम-योजनं स्यात् यथापाठमित्यर्थः यथाम्नायग्रहणं विहृतैर्माभूदिति ॥२६॥

आवर्तिन्यायः सन्धौ* ॥ २७ ॥

आवर्त्तिस्तोत्रेषु यो न्यायः स्तोमयोजनादीनां स सन्धौ स्यात् कुतः संशयः पराक्त्वात्सन्धेः ॥ २७ ॥

---

* द्राह्यायणोऽप्येवम् ।

उपवसथ्येऽहनि न समामनेरन्* ॥ २८ ॥

उपवसथ्येऽहनि चतुर्द्दश्यां समाम्नानं न कुर्युः क्व पुनः समाम्नानं प्राप्त-मुपवसथ्येऽहनि निषिध्यत इति उच्यते, स्तोत्रगतस्य साम्नः पाञ्चविध्ये भक्तिष्वाचार्याणां अनेकधा प्रतिपत्तिः तद्यथादावेकः कल्पोनाङ्गीक्रियते तदा स्तोत्रकाले भक्तीः प्रति अन्योऽन्येन विप्रतिपत्तिः स्यात् स चान्यायः तदेवं माभूदित्यत अदावेवोद्गातुः कल्पो य दृष्टः स सम्प्रतिपत्तव्यः अतोऽर्थं समाम्नानमादावेव कर्त्तव्यं स्यात् तस्योपवसथ्येऽहनि प्रतिषेधः ॥ २८ ॥

इति द्वितीयस्य पञ्चमी कण्डिका।

अथ षष्ठी कण्डिका।

प्रस्तोता तु कुशाः कारयेद् यज्ञियस्य वृक्षस्य खदिरस्य दीर्घसत्त्रेष्वेके प्रादेशमात्रीः कुशाः पृष्ठास्वक्ताः समामञ्जतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञाताग्राः कारयित्वा गन्धैः प्रलिप्य

---

* द्राह्यायणोऽप्येवम्।

**सर्पिषा सत्रेष्वेके वेष्टुतेन वसनेन परिवेष्ट्य क्षौमशाणकार्पासानां केनचिदुपर्यौदुम्बर्यां वासयेत्*॥ १॥**

कर्मसूत्रमुक्तं उपवसथ्येऽहनि न समामनेरन्निति किन्तु प्रस्तोता तु कुशाः कारयेत् तुशब्दो विशेषणार्थः उपवसथ्यएवाहनि प्रस्तोता कुशाः कारयेत्, कारयेदित्यन्यं कुशानां कर्त्तारं ज्ञापयति, यज्ञियस्य वृक्षस्य यज्ञमर्हतीति यज्ञियः यज्ञियस्य वृक्षस्येत्यवयवलक्षणा षष्ठी खदिरस्य दीर्घसत्रेष्वेके एके आचार्या मन्यन्ते दीर्घसत्रेषु खादिर्यः कुशाः स्युरिति किं कारणं दारुप्राधान्यात् प्रादेशमात्रीः प्रादेशप्रमाणाः कारयेत् कुशपृष्ठास्त्वक्तः आकृतिरुच्यते त्वचं प्रति कुशपृष्ठाः स्युः समा मज्जतः मज्जां प्रति समाः स्युः अङ्गुष्ठपर्वपृथुमात्रीः पृथुत्वेनाङ्गुष्ठपर्वमात्राः स्युः प्रज्ञाताग्राः कारयित्वा प्रज्ञातानि अग्राणि यथा भवन्ति तथा कारयेत् ननु कारयित्वेति किमर्थं यदा प्रस्तोता तु कुशाः कारयेदिति प्रकृत एव करणे उच्यते प्रणाशे कुशानां भङ्गे वा पुनरन्याः कारयित्वा प्रयुञ्जीत नान्यत् प्रायश्चित्तमस्ति गन्धैः प्रलिप्य कुशाः सर्पिषा सत्रेष्वेके एके आचार्याः सत्रेषु सर्पिषा प्रलेपं मन्यन्ते वेष्टुतेन वसनेन परिवेष्ट्य विष्टतीषु योजितं वेष्टुतं तेन वाससा सर्वतो वेष्टयित्वा क्षौमशाणकार्पासानां केनचित् क्षुमायाः विकारः क्षौमं शणस्य विकारः शाणं कार्पासानां विकारः कार्पासम् एतेषां वाससामेकेन वेष्टयित्वा औदुम्बर्याः सादस्याः शालाया उपविष्टाद्वासयेत्॥ १॥

---

* द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम, तत्र विशेषोऽप्यस्ति।

ताꣳ श्वोभूते कुशैरूर्द्धाग्रैर्वेष्टयित्वैवंजातीयेनैव वसनेन प्रदक्षिणमूर्द्ध्वदशेन परिवेष्ट्य स्पृष्टोऽनपश्रित उद्गायेत्* ॥ २ ॥

तामौदुम्बरीं श्व एव श्वोभूत इत्येवं ब्रुवते तस्मिन् भूते स्तोत्रकाले कुशैरूर्द्ध्वाग्रैर्वेष्टयित्वैवंजातीयेनैव वसनेन यज्जातीयं वेष्टुतं प्रदक्षिणमूर्द्ध्वदशेन परिवेष्ट्य प्रदक्षिणमिति नियमः क्रियते न प्रसव्यम् ऊर्द्ध्वदशेन नाधोदशेन परिवेष्ट्य सर्वतो वेष्टयित्वा स्पृष्टः अनपश्रित उद्गायेत् वक्ष्यति कारणं धिष्ण्योऽयं भवति न धिष्ण्यमासादयेदिति ॥ २ ॥

धृष्टमपश्रयेतेत्येके¶ ॥ ३ ॥

धृष्टं प्रगल्भं स्वल्पमित्यर्थः अपश्रयेत इत्येके तावता अपश्रयणार्थां इयं भवतीभिः सएव तदूर्जिश्रित इति ॥ ३ ॥

स्तोष्यमाणानां मध्ये वैष्टुतं वसनं प्राक्समासं वोदक्समासं वा उपरिदशमास्तीर्य्य प्रस्तोता कुशा विदध्यात् प्रस्तावान्तेषु † ॥ ४ ॥

स्तोष्यमाणानामिति प्रत्युपस्थितं कालं ज्ञापयति स्तोष्यमाणानां

---

* द्राह्यायणेऽप्येवम्।

¶ द्राह्यायणे विशेषोऽस्ति, अधिकोऽप्यस्ति ।

† द्राह्यायणेऽधिकमस्ति।

स्तोत्रकर्तॄणां मध्ये विष्टुतिप्रयोजनं वमनं द्विगुणं कृत्वा प्राक्समासं वा देशान्तपाशान्तयोः संश्लेषः समासः तं समासं प्राङ्मुखम् उदङ्मुखं वा कृत्वा उपरिदशमास्तीर्य्य प्रस्तोता कुशानां विन्यासं कुर्य्यात् प्रस्तावान्तेषु ॥ ४ ॥

आद्येऽनेकप्रस्तावेषु* ॥ ५ ॥

अनेकप्रस्तावेषु सामसु महादिवाकीर्त्त्यैलान्दमहानाम्नादिषु सामसु आद्ये प्रस्तावे कुशाः प्रास्थापयेत् ॥ ५ ॥

उदगग्रं प्रथमं विष्टावं प्राक्सꣳस्थं प्रत्यग्वा* ॥ ६ ॥

उदगग्राभिः कुशाभिः प्रथमं विष्टावं विदध्यात् प्रागपवर्गं प्रत्यगपवर्गं वा ॥ ६ ॥

तं पश्चिमेन मध्यदेशेनोदक्सꣳस्थं प्रागग्रं प्रत्यग्वा* ॥७॥

तस्य प्रथमस्य विष्टावस्य पश्चिमे प्रदेशे द्वितीयं विष्टावं विदध्यात् उदक्संस्थं प्रागग्रं प्रत्यगग्रं वा ॥ ७ ॥

तं पश्चिमेनोदगग्रं प्रत्यक्सꣳस्थमेवं विधाः पर्याया उत्तरोत्तराः † ॥ ८ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

तस्य द्वितीयस्य विष्टावस्य पश्चिमे प्रदेशे तृतीयं विष्टावं विदध्यात् एवमेकः पर्यायो भवति तस्य प्रथमस्य पर्यायस्य उत्तरे प्रदेशे द्वितीयः तस्याप्युत्तरे तृतीयः, ननु किमिदं बहुवचनम् एवं विधाः पर्याया उत्तरोत्तरा इति यावत् यावता उक्त एकः पर्यायः अन्यौ द्वौ विधेयौ उच्यते, बहुवचनं चतुष्टोमार्थं वक्ष्यति चतुष्टोमयोस्त्रतुष्पर्याया इति सर्वौ च पञ्चदशादिषु स्तोमेषु नानापर्यायविष्टावाः स्युः ॥ ८ ॥

पर्यायविष्टावान्सन्दध्यात्* ॥ ९ ॥

पर्यायांश्च विष्टावांश्च सन्दध्यात् संहतान् कुर्यात् संलग्नान् कुर्यात् ॥ ९ ॥

पर्यायादिषु हिंकारेण स्तुवीरन् † ॥ १० ॥

पर्यायस्यादौ हिंकृत्य स्तुवीरन् ननु तत् किमिदमारभ्यते यदा प्रतिपर्यायं हिंकार आम्नात एव ब्राह्मणेन तिसृभ्यो हिंकरोतीत्येवमादि, उच्यते कृतपर्यायेषु स्तोमेषु तदाम्नातम् अकृतपर्यायेषु चतुष्पर्यायादिषु च संशयः स्याद्यद्येवन्नारभ्येत ॥ १० ॥

उत्तमां प्रस्तुत्यैषेति प्रशंसितारमीक्षेत* ॥ ११ ॥

स्तोत्रस्य उत्तमां स्तोत्रीयां प्रस्तुत्य प्रस्तावं दत्त्वा प्रस्तोता एषेति

---

* द्राह्यायणे विशेषोऽस्ति।

† द्राह्यायणेऽप्येवम्।

ब्रुवन् शंसितारमीक्षते कालप्रज्ञापनार्थं होतॄणाम् उत्तमं प्रतिहारं प्रत्याक्रयन्तीति श्रुतेः तत्प्रज्ञापनार्थं तद्यथैषोत्तरमेवेति ॥ ११ ॥

स्तुतस्य स्तुतमसीति यजमानवाचनम्* ॥ १२ ॥

स्तुतस्य स्तुतमसीत्येतद् यजुः यजमानवाचनमावर्त्तिस्तोत्रेषु ॥१२॥

सवनसंस्थासु प्रशास्त्रोक्तो यथेतमपरया द्वारा निष्क्रम्य पश्चिमेनाग्नीध्रीयं बहिर्वेदि मूत्रं कुर्युः* ॥ १३ ॥

सवनसंस्थासु सवनसमाप्तिष्वित्यर्थः प्रशास्त्रा सर्पतेत्युक्ताः यथेतं यथागतं दक्षिणेनौदुम्बर्य्यां गत्वा अपरया द्वारा निष्क्रम्य पश्चिमया पश्चिमेनाग्नीध्रीयं बहिर्वेदि मूत्रं कुर्युः वेदेर्बहिः मूत्रं कुर्युः यदि मूत्रिताः स्युः न नियमः अवधिरुपदिश्यते मूत्रोच्चारयोः अथ किमर्थं बहिर्वेदीति कुतः संशयः यथान्तर्वेदिमूत्रोच्चारयोः क्रिया स्यादिति उच्यते, बहिर्वेदिग्रहणं देशप्रकर्षार्थं न वेदेः समीपदेशे प्रकृष्टे स्यादिति अथ बहुवचनं किमर्थं सवनसंस्थास्विति यदा प्रातः-सवनमाध्यन्दिनयोरेव सवनयोः सर्पणं भवति तृतीयसवनसमाप्तौ निः-सर्पणं तत् किमिदं बहुवचनमिति उच्यते, एतदर्थं बहुवचनं क्रियते सवनसमाप्तौ संस्थासु चेति कथं संस्थासमाप्तौ च सर्पणं स्यादिति यथा अतिरात्रे अग्निष्टोमान्ते सर्पणम् उकथ्येषु तच्छस्त्रेषु च समाप्तेषु सर्पणं स्यात् षोडशिनि स्तुते अनुशस्ते सर्पणम् अप्तोर्य्याप्त्यष्वेवमेव ॥१३॥

---

* द्राह्यायणेऽप्येवम् ।

वाचं यच्छेयुर्यावदुदक्याः स्युः* ॥ १४ ॥

उदकमर्हतीत्युदक्याः यावदकृतशौचाः स्युस्तावद्वाग्यमनं कुर्युः आ उपस्पर्शनात् ॥ १४ ॥

एतन्मृगतीर्थम्* ॥ १५ ॥

यदेतदुक्तं पश्चिमेनाग्नीध्रीयमिति एतस्य संज्ञेयं मृगतीर्थमिति मार्गतामेतत्तीर्थं यद्यर्थिनो भवन्ति निर्गमने अन्ये ब्रुवते मृगतीर्थमिति उक्तम् आग्राम्यान् पशून् लभन्ते आरण्यान् सृजन्तीति तदारण्यानां पशूनामनेनोत्सर्जनमिति ॥ १५ ॥

तेन न भूयः शम्यापरासाद्गच्छेयु* ॥ १६ ॥

तेन मृगतीर्थेन निष्क्रम्य शम्यापरासात्परतो न गच्छेयुः ॥ १६ ॥

यो भूयो जिगमिषेदाम्नानेन स गच्छेत्* ॥ १७ ॥

शम्यापरासात् परतो यः प्रकृष्टतरं देशं गन्तुमिच्छेत् आम्नानेन तीर्थेन निष्क्रम्य स गच्छेत् ॥ १७ ॥

इति द्वितीयस्य षष्ठी कण्डिका।

---

* द्राह्यायणेऽप्येवम्।

अथ सप्तमी कण्डिका ।

अथ धिष्ण्यानुपतिष्ठेरन् समस्तेनोत्तरयोः सवनयोरिति गौतम शाण्डिल्यायनौ* ॥ १ ॥

उक्तं सवनसंस्थासु प्रशास्त्रोक्ता यथेतमपरया द्वारा निष्क्रम्य पश्चिमेनाग्नीध्रीयं बहिर्वेदि मूत्रं कुर्युरिति तद्यदि तावन्निष्क्रमणानन्तरं मूत्रोच्चारे कुर्वन्ति ततः कृतशौचा आचान्तोदकाः यदिदमादिश्यते तत् कुर्युः अथ मूत्रोच्चारे नैव कुर्युः तदा यथोक्तेन विधिना निष्क्रम्यानन्तरं धिष्ण्यानुपतिष्ठेरन् समस्तेन उक्तं तत्रैव तिष्ठन्तः सर्वान्समन्वीक्षमाणाः पातमेति एतत् समस्तोपस्थानम् अनेनोत्तरयोः सवनयोरुपतिष्ठेरन् एवं गौतम शाण्डिल्यायनावाचार्यावाहतुः ॥ १ ॥

सर्वेणेति धानञ्जप्यः† ॥ २ ॥

आहवनीयोपस्थानादारभ्य प्रत्येकं सर्वेण धिष्ण्युपस्थानविधिना उपतिष्ठेरन्निति धानञ्जप्य आचार्य आह ॥ २ ॥

अनुपस्थानं शाण्डिल्यः† ॥ ३ ॥

न उपस्थानमनुपस्थानं एतस्मिन्नेव काले शाण्डिल्य आचार्योऽनुपस्थानं मन्यते ॥ ३ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

**एवमेव निष्क्रम्य पृथक् स्तोत्रेभ्यः समस्तेनोपतिष्ठेरन्यान्यू-र्द्ध्वमुक्थेभ्यः* ॥ ४ ॥**

एवमेव निष्क्रम्य यथासवनसंस्थासु इत्युक्तम् पृथक् स्तोत्रेभ्यः पृथङ्गानेत्यर्थः तदर्थं समस्तेनोपतिष्ठेरन् यान्यूर्द्ध्वमुक्थेभ्यः कतमानि पुनस्तानि पृथक्स्तोत्राणि यदर्थमिदमुच्यते यथा षोड़श्यर्थे वाजपेयसामार्थे वोक्तमेवं सर्पणं संस्थाखिति वक्ष्यति च पर्यायेभ्यस्तु रात्रेरिति उच्यते, यथा षोड़श्यर्थे तथातिरिक्तस्तोत्रेषु च स्तोत्राय स्तोत्राय सन्ध्यर्थे सर्पणं स्यादिति ॥ ४ ॥

**पर्यायेभ्यस्तु रात्रेः* ॥ ५ ॥**

रात्रौ तु पर्यायादौ सर्पणं स्यादिति न पृथक् स्तोत्रेभ्यः एतदर्थं तुशब्दः ॥ ५ ॥

**यथासनमुपविश्य प्रस्तोता हविर्द्धानं गच्छेन्मध्यन्दिने* ॥ ६ ॥**

धिष्ण्योपस्थानानन्तरं द्वारबाहुसंमार्जनप्रभृति सर्वं कृत्वा यदस्य स्वमासनं तस्मिन् यजुषोपविश्य प्रस्तोता हविर्द्धानं गच्छेन्मध्यन्दिने कर्मार्थमुक्तम् एतत् सर्वं कुर्यादुत्तरयोः पवमानयोरिति ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम्।

ऋत आदित्यग्रहे प्रतिहर्त्तार्भवे* ॥ ७ ॥

ऋते आदित्यग्रहे प्रतिहर्त्ता हविर्द्धानं गच्छेत् आर्भवे कर्मार्थम् ॥७॥

उभयत्र सर्वे सत्त्रेषु* ॥ ८ ॥

उभयोः पवमानयोरुत्तरयोः हविर्द्धानं गच्छेयुः सत्त्रेषु सर्वउद्गातारो यजमानत्वात् ॥ ८ ॥

पवमानयोरुत्तरयोर्धिष्ण्यविहरणे मार्ज्जालीयं हरन्तः पश्चिमेन यजमानं हृत्वा तेनैव प्रतिहरेयुः* ॥ ९ ॥

पवमानयोरुत्तरयोर्मध्यन्दिनार्भवयोर्धिष्ण्येष्वग्निविहारे मार्जालीयमग्निं हरन्तः पश्चिमेन यजमानस्य हृत्वा तेनैव पुनर्नयेयुः अव्यवायार्थम् उद्गातॄणामनेन कर्मणा कः सम्बन्ध इति चेत् उच्यते उक्तं याजमानब्रह्मत्वे चेदुद्गाता कुर्यादिति तत्र सम्बन्धः ॥ ९ ॥

मध्यन्दिनेन स्तुत्वा सत्त्रेषु दधिघर्मस्य भक्षयेयुः समुपहूय दधिक्राव्ण इति* ॥ १० ॥

माध्यन्दिनेन पवमानेन स्तुत्वा सत्त्रेषु दधिघर्मस्य एकदेशं भक्षयेयुः सर्वे समुपहूय न मिथः दधिक्राव्ण इत्येतयर्चा ॥ १० ॥

---

* द्राह्यायणेऽप्येवम् ।

## तस्या उत्तमं पदं दशमेऽहन्यभ्यस्येयुः* ॥ ११ ॥

तस्या ऋचः दशमेऽहनि सात्त्विके उत्तमं पदं अभ्यस्येयुः पुनर्ब्रूयुः अनुष्टुप्पारोचार्थम् अथ तस्या इति किमर्थं प्रकृतैव सा उच्यते दशमेऽहनि तार्त्तीयसवनिके दधिभक्षे तस्या ऋचः उत्तमाभ्यासः स्यात् हेतुसमत्वात् तन्माभूदिति ॥ ११ ॥

## पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयं सदश्च दक्षिणा नयेयुस्तीर्थेन* ॥ १२ ॥

पूर्वेण पत्नीशालां गमयित्वा आग्नीध्रीयसदसोरन्तरेण दक्षिणा नयेयुः आम्नानेन तीर्थेन ॥ १२ ॥

## सर्वासान्देवस्य त्वेति पुरस्ताज्जपः* ॥ १३ ॥

सर्वासां दक्षिणानां देवस्यत्वेत्येतदादि मन्त्रः पुरस्ताज्जपः स्यात् ननु सर्वासामिति किमर्थं दक्षिणानामिति बहुवचनात् सिद्धेः उच्यते, उक्तं पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयं सदश्च दक्षिणा नयेयुस्तीर्थेनेति, अनुच्यमाने एतस्मिन्ननेन दक्षिणापथेन नयनं यासान्तासामेवैष पुरस्तात् स्यात् नान्यासामिति तन्माभूदित्यत आरभ्यते सर्वासामिति कथं यास्च न नीयन्ते सर्वासामेव पुरस्ताज्जपः स्यादिति

---

* द्राह्यायणोऽप्येवम् ।

यथा निमित्तं धान्यपल्यम् उदीचीमुद्गाते मुख्येभ्यो ग्रामवरान्ददतीत्येतदादि ॥ १३ ॥

**वरुणस्त्वेति यथादेवतं प्रतिगृह्णीयात्*** ॥ १४ ॥

वरुणस्त्वेत्येतदादि यजुर्जपित्वा यथादेवतं प्रतिगृह्णीयात् यथा दक्षिणाया देवतां नाम्नोद्दिश्य यथा वरुणायाश्वमिति ॥ १४ ॥

**यथाजाति मृगान्*** ॥ १५ ॥

प्रतिगृह्णीयादिति वर्त्तते या यस्य जातिस्तामादिश्य यथावयवे मृगमिति ॥ १५ ॥

**अप्राणञ्च** † ॥ १६ ॥

अप्राणञ्च यद्द्रव्यं यच्च यथाजाति प्रतिगृह्णीयात् न प्राणिति तदप्राणम् अनिन्द्रियमित्यर्थः ॥ १६ ॥

**पुंवन्मिथुनान्यन्यत्राजाभ्यः*** ॥ १७ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे विशेषोऽस्ति ।

पुंवन्मिथुनानि गृह्णीयात् यथा अश्वश्चाश्वी चाश्वौ पुरुषश्च पुरुषी च पुरुषौ अन्यत्राजाभ्यः अजांस्तु मिथुनधर्मेण न प्रतिगृह्णीयात् नानादेवतात्वात् अग्न्यैवाजाया देवता अग्न्यैवाजस्य अग्नयेऽजम् अग्नि-षोमाभ्यामजामिति ॥ १७ ॥

तेन क इदमित्युपरिष्टाज्जपः* ॥ १८ ॥

सावित्रादेर्दक्षिणाप्रतिग्रहमन्त्रस्य तेनामृतत्वमश्यीय क इदं कस्मा अदादित्युपरिष्टाज्जपः ॥ १८ ॥

तत्रोहापादीनि त्वा देवि दक्षिणेऽद इति च यत् तत् स्यात् तेन दात्र इदमाविशैतत्त इति च भुञ्जतीति च भूया-द्विꣳसीरिति च† ॥ १९ ॥

तत्र तस्मिन् दक्षिणाप्रतिग्रहणे ऊहापादीनि ऊहमापद्यन्ते ऊहापादीनि ऊहितव्यं व्यक्तिवचनैः का व्यक्तिः स्त्रीपुंनपुंसकादि-वचनमेकत्वद्वित्वबहुत्वानि ननु अधिकृते मन्त्रे तत्रेति किमर्थम् उच्यते, ऊहनित्यतादर्शनार्थं तत्र तस्मिन् मन्त्रे सति ऊहमेतान्या-पद्यन्ते त्वां देवि दक्षिणे अद इति च यत् तत् स्यात् तेन दात्रे

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

इदं आविश एतत्ते इति च भुञ्जतीति च भूयात् हिंसीरिति च ऊहो वक्ष्यते देवस्य त्वा देवस्य वां देवस्य वः, वरुणस्त्वा नयतु देवि दक्षिणे, वरुणो वां नयतु देव्यौ दक्षिणे वरुणो वो नयतु देव्यो दक्षिणः वरुणायाश्वं वरुणायाश्वौ वरुणायाश्वान् वरुणायाश्वे वरुणायाश्वः, तेनामृतत्वमश्यीय ताभ्याममृतत्वमश्यीय तैरमृतत्वमश्यीय तयामृतत्वमश्यीय ताभ्याममृतत्वमश्यीय ताभिरमृतत्वमश्यीय, वयःशब्दस्य भूयाच्छब्देन सह सामानाधिकरण्यं तद्यद्यप्ययं ऊहपदेषु न परिसंख्यातः तथाप्यूहयितव्यः भूयाच्छब्देन सामानाधिकरण्यात् वयोदात्रे भूयात् वयसी दात्रे भूयास्तां वयांसि दात्रे भूयासुः वयोदातृभ्यां भूयात् वयसी दातृभ्यां भूयास्तां वयांसि दातृभ्यां भूयासुः वयोदातृभ्यो भूयात् वयसी दातृभ्यो भूयास्तां वयांसि दातृभ्यो भूयासुः, क इदं कस्मा अदात् क इमे कस्मा अदात् क इमानि कस्मा अदात् क इमं कस्मा अदात् क इमौ कस्मा अदात् क इमान् कस्मा अदात् क इमां कस्मा अदात् क इमे कस्मा अदात् क इमाः कस्मा अदात्, समुद्रमाविशेत् समुद्रमाविशेतां समुद्रमाविशन् द्विवचनबहुवचनयोर्लङ् आदेशात् सूत्रविधानात्, कामैतत्ते कामैते ते कामैतानि ते कामैष ते कामैतौ ते कामैते ते कामैषा ते कामैते ते कामैतास्ते, कामाय भुञ्जती भुञ्जत्यौ भुञ्जत्यः मा मा हिंसीः मा मा हिंसिष्टम् मा मा हिंसिष्ट ॥ १९ ॥

अश्वरथश्चेद्दद्यात् पूर्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाश्वमुखानि संमृज्याद् द्वाभ्यां द्वाभ्यामश्व-

नामभ्यामेकैकस्याश्वोऽसीत्येतत्प्रभृतिभिरुदक्संस्थमिति धानञ्जप्यः* ॥ २० ॥

यद्यश्वरथं दद्याद् यजमानः तमश्वरथमुद्गाता आग्नीध्रीयस्य पूर्वे प्रदेशे समीपे स्थापयित्वा पुरस्ताज्जपञ्जपित्वा पुरस्ताज्जप उक्तः देवस्य त्वेति दर्भमुष्टिनाश्वमुखानां संमार्जनं कुर्यात् द्वाभ्यां द्वाभ्यामश्वनामभ्यां एकैकस्याश्वस्य अश्वोऽसीत्येतत्प्रभृतिभिरश्वनामभिः उदक्संस्थन्दक्षिणोपक्रमम् एवं धानञ्जप्य आचार्य आह ॥ २० ॥

धुर्य्यौ प्रथममित्यपरम् † ॥ २१ ॥

धुरि युक्तौ धुर्य्यौ अश्वौ तौ प्रथमं संस्कुर्यादित्यपरं विधानम् ॥२१॥

दक्षिणं पूर्वम् † ॥ २२ ॥

दक्षिणस्यान्धुरि योयुक्तस्तं पूर्वं संस्कुर्यात् पश्चादुत्तरमिति ॥२२॥

तथा प्रष्टी † ॥ २३ ॥

यथा धुर्य्यौ तेनैव क्रमेण प्रष्टी संस्कुर्यात् पार्श्ववर्त्तिनौ प्रष्टी ॥२३॥

सर्वाण्येकैकस्मिन् उदक्संस्थमिति शाण्डिल्यः ‡ ॥२४॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

सर्वाण्यश्वनामानि अष्टावपि एकैकस्मिन्नश्वे प्रयुञ्जीत दक्षिणादारभ्यानन्तर्येण उदक्संस्थमिति शाण्डिल्य आचार्य आह ॥ २४ ॥

सर्वाण्येकस्मिꣳस्तूष्णीमितराणीत्यपरम्* ॥ २५ ॥

सर्वैरष्टाभिरश्वनामभिरेकाश्वस्य दक्षिणस्य मुखं संमृज्यात् तूष्णीमितराणि संमृज्यात् उदक्संस्थमेव इत्यपरं विधानम् ॥ २५ ॥

एतान्येवाश्वाश्वतरेष्वश्वतरीषु च यथार्थमूहेत्* ॥ २६ ॥

एतान्येवाश्वनामानि अश्वासु अश्वतरेषु च अश्वतरीषु च यथार्थमूहेत् यद्यश्वाभिर्युक्तः स्यात् अश्वतरैर्वा अश्वतरीभिर्वा तत्र तत्र यथासम्भवमूहेत् ऊह उच्यते अश्वासि अत्यासि मय्यसि हयासि वाजिन्यसि सप्तिन्यसि वृष्ण्यसि अर्वत्यसि इति अश्वतरोऽसि शेषाण्यश्ववत् अश्वतर्यसि शेषाण्यश्वावत् ॥ २६ ॥

त्रिभिश्चेदर्द्धान्येकस्मिन्नर्द्धानि द्वयोर्द्वैधन्द्वयोः* ॥ २७ ॥

त्रिभिश्चेद्युक्तो भवति अर्द्धान्येकस्मिन् प्रयुञ्जीत अर्द्धानि द्वयोः द्वे द्वे नामनी पूर्वोक्तेनैव क्रमेण द्वैधन्द्वयोः यदि द्वाभ्यां युक्तो भवति तदा द्विधा नामानि विभज्य युञ्जीत पूर्वोक्तेनैव क्रमेण ॥ २७ ॥

इति द्वितीयस्य सप्तमी कण्डिका ।

---

* द्राह्यायणेऽप्येवम् ।

अथ अष्टमी कण्डिका ।

आदित्यानामिति रथशिर आलभ्य जपेत्* ॥ १ ॥

आदित्यानामित्येतद्यजुः रथशिर आलभ्य जपेत् शिरःप्रवृत्ती-रथकारेभ्यो ज्ञेया ॥ १ ॥

यद्रथ्यꣳ स्याद्द्यावायोरिति चर्मण्यं प्रतिगृह्णीयात् † ॥ २ ॥

रथस्येदं रथ्यं यत्किञ्चिद्रथाङ्गं चर्मण्यं चर्मणा निर्वृत्तं चर्मण्यं तद्द्यावायोष्ट्वेत्यनेन यजुषा प्रतिगृह्णीयात् ॥ २ ॥

नक्षत्राणामित्यस्थिमयम् † ॥ ३ ॥

यदस्थिमयं रथ्यं तन्नक्षत्राणामित्यनेन यजुषा प्रतिगृह्णीयात् ॥३॥

सूर्यस्येत्ययो लोहे † ॥ ४ ॥

सूर्यस्येत्यनेन यजुषा कार्ष्णायसं यत्स्यात् रथ्यं ताम्ररजतकांस्य-रीतिकादिभ्यो लोहेभ्यो निर्वृत्तं तत् प्रतिगृह्णीयात् ॥ ४ ॥

हिरण्यञ्च † ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन चतुर्भिरेकसूत्रं कृतम् ।

अनेनैव मन्त्रेण प्रतिगृह्णीयात् यद्द्रव्यं वक्ष्यति हिरण्यमिति जातरूपं प्रतिगृह्णीयादिति मन्त्राम्नानसामर्थ्यादेतस्मिन् क्रमेण द्रव्यदेवतोपदेशः कृतः प्रतिग्रहविधिस्तु प्रकरणे एव वक्ष्यते साम्प्रतं रथमिर आलभ्यानन्तरम् ॥ ५ ॥

दक्षिणेन रथं गत्वा रथन्तरमसीति दक्षिणं चक्रमालभेत्* ॥ ६ ॥

दक्षिणेन रथस्य गत्वा रथन्तरमसीत्यनेन यजुषा दक्षिणं चक्रमालभेत् ॥ ६ ॥

वामदेव्यमसीत्यधिष्ठानम्* ॥ ७ ॥

वामदेव्यमसीत्यनेन यजुषा अधिष्ठानमालभेत् रथमारुह्य रथी यत् स्थानमधितिष्ठति तदधिष्ठानम् ॥ ७ ॥

बृहदसीत्युत्तरं चक्रम्* ॥ ८ ॥

बृहदसीत्यनेन यजुषोत्तरं चक्रमालभेत् ॥ ८ ॥

अङ्कान्यङ्कू इति चक्रे एव संमृज्यात्* ॥ ९ ॥

अङ्कान्यङ्कू इत्यनेन यजुषा चक्रयोः संमार्जनं कुर्यात् एवेति प्रवृत्तावधारणं क्रियते ॥ ९ ॥

---

* द्राह्यायणेऽप्येवम् ।

वैश्वानर इति दक्षिणेन प्रादेनारोहेत्* ॥ १० ॥

वैश्वानर इत्यनेन यजुषा दक्षिणेन पादेन प्रथममारोहेत् ॥१०॥

आरुह्य जपेद्गिर्दैषत इति* ॥ ११ ॥

उभाभ्यामारुह्य गिर्दैषत इत्येतद् यजुर्जपेत् ॥ ११ ॥

कृशेति सव्यानभीशूनायच्छेत्* ॥ १२ ॥

कृशेत्यनेन यजुषा यौ रथस्य सव्ये पार्श्वेऽश्वौ तयोरश्मीनायच्छेत् आयतान् कुर्यात् रश्मीनिति बहुवचनमुभयतो रश्मयोभवन्त्यश्वानाम् ॥ १२ ॥

दासेति दक्षिणानवगृह्णीयात्* ॥ १३ ॥

दासेत्यनेन यजुषा दक्षिणयोरश्वयोरश्मीनवगृह्णीयात् अवग्रहणमात्रं नात्यन्तं गच्छेत् ॥ १३ ॥

अवरुह्य सकृद्दारुणमुक्त्वा यथा दैवतमादिश्योपरिष्टाज्जपं जपेदिति गौतमः* ॥ १४ ॥

अवतीर्य्य रथात् सकृद्दारुणं यजुरुक्त्वा यथादैवतमादिश्य

---

* द्राह्यायणेऽप्येवम् ।

उक्तं वायोरिति चर्मण्यं प्रतिगृह्णीयादित्येतदादि द्रव्यानामश्वानां रथस्य गौतम आचार्य आह* ॥ १४ ॥

संमार्जनप्रभृत्येतत् सर्वं कृत्वा विमुच्य नाना पुरस्ताज्जपोपरिष्टाज्जपौ वारुणमश्वेभ्यो रथाय चेति धानञ्जप्यः † ॥१५॥

संमार्जनप्रभृत्यवरोहणान्तं एतत् सर्वं कृत्वा विमुच्याश्वौ नाना एकैकस्मिन् द्रव्ये पुरस्ताज्जपोपरिष्टाज्जपौ भवेतां वारुणन्तु यजुः अश्वार्थमेव स्याद्रथार्थञ्चेति एवं धानञ्जप्य आचार्य आह ॥ १५ ॥

ग्लायेच्चेद् यथासनं व तत् सर्वं जपेत् † ॥ १६ ॥

यद्येतत्कर्म नोत्सहेद्यथादेशं कर्तुं तदा औदुम्बर्यामेवोपविष्ट एतत् सर्वं जपेत् ॥ १६ ॥

पृष्ठ्यश्चेद्दद्यात् प्रागवारुणादश्वनामानि जपेत् † ॥ १७ ॥

---

* पुस्तकत्रयेऽप्यत्र पतितमनुमीयतेऽसंलग्नत्वात्, द्राह्यायणे तु "रथादवरुह्य वरुणस्त्वा नयतु देवि दक्षिणे इत्येकं वारुणं मन्त्रं बहुवचनेनोहेन सकृदुक्त्वा यथादैवतमश्वांश्च रथञ्च आदेश्य तेनामृतत्वमसीयेत्युपरिष्टाज्जपमूहेन सकृद्ब्रूयात् तद् यथा वरुणोवो नयतु देव्या दक्षिणाः वरुणायास्मान् उत्तानायाङ्गिरसाय रथन्तरममृतत्वमसीयेतीति" धन्विकृतटीकास्ति ।

† द्राह्यायणेऽप्येवम् ।

यदि पृष्ठ्यमश्वन्द्याद् यजमानः पृष्ठेन वहतीति पृष्ठ्यः, तदा पुरस्ताज्जपं जपित्वा प्राग्वारुणात् मन्त्रादश्वनामानि जपेत् ॥ १७ ॥

पुरस्ताज्जपाद्वा* ॥ १८ ॥

प्रागिति प्रकृतम् ॥ १८ ॥

तथादान्तेषु* ॥ १९ ॥

तथा अदान्तेष्वश्वेषु यथा पृष्ठ्यः तेन प्रकारेणेत्यर्थः ॥ १९ ॥

यद्रथ्यं स्यात्तेन तत् प्रतिगृह्णीयात्* ॥ २० ॥

रथ्यमिव रथ्यं चर्मणादि यद्द्रव्यं रथेन तुल्यं तेन तत् प्रतिगृह्णीयात् ॥ २० ॥

अन्नस्येति प्राग्वारुणादवेः* ॥ २१ ॥

अन्नस्यान्नपतिरित्येतद्यजुः प्राग्वारुणात् मन्त्रादवेः प्रतिग्रहे जपेत्, ननु तत् किमिदं प्राग्वारुणादिति यदा प्रागेव वारुणात् मन्त्रादयं मन्त्रः पठितः उच्यते विकल्पार्थं वक्ष्यति पुरस्ताज्जपाद्वेति ॥ २१ ॥

पुरस्ताज्जपाद्वा* ॥ २२ ॥

---

* द्राह्यायणेऽप्येवम् ।

वारुणाद्वा प्राक् पुरतस्ताज्जपाद्वा जपेत् ॥ २२ ॥

ग्राम्स्त्वा क्रतं निति वसनस्य* ॥ २३ ॥

ग्राम्स्त्वा क्रतं नित्येतद्यजुः वाससः प्रतिग्रहे प्राग्वारुणात् स्यात् पुरस्ताज्जपाद्वा ॥ २३ ॥

तदुदस्येदतान्तवे* ॥ २४ ॥

तदा ग्राम्स्त्वा क्रतन्निति यजुः उत्क्षिपेत् अतान्तवे वसने यन्न तन्तुभ्योनिर्वृत्तं तदतान्तवं नवतादि चर्मण्यं कुचित्रादि ॥ २४ ॥

हिरण्यमल्पीयो भोगादागच्छेदौदुम्बर्य्यामाश्लेषयेत्* ॥२५॥

हिरण्यमल्पीयः यस्य भोगो नास्ति तदौदुम्बर्यामाश्लेषयेत् ॥२५॥

आग्नीध्रीये वा जुहुयात्* ॥ २६ ॥

आग्नीध्रीये वा तद्धिरण्यं जुहुयात् न भोगाय कल्पेत् ॥ २६ ॥

समस्तान् व्रीहियवानेकक्रतौ प्रतिगृह्णीयात्* ॥ २७ ॥

एकस्मिन् क्रतौ व्रीहियवान् समस्तान् प्रतिगृह्णीयात् न व्यस्तान्

---

* द्राह्यायणेऽप्येवम् ।

न पृथगित्यर्थः, अपरे ब्रुवते एकक्रतावितिज्योतिष्टोमे एतत् तद्य-दाङ्गरेकोयज्ञ इत्येतस्मात् ॥ २७ ॥

तथा तिलमाषान्* ॥ २८ ॥

यथा व्रीहियवान् तथा तिलमाषान् तेन प्रकारेणेत्यर्थः प्रति-गृह्णीयादिति वर्त्तते ॥ २८ ॥

प्राजापत्येनानादिष्टदेवताः प्रतिगृह्णीयात्* ॥ १९ ॥

यासां दक्षिणानां देवता अनादिष्टास्ताः प्राजापत्येन मन्त्रेण गृह्णीयात् प्रजापतये गर्दभमित्येतदादिवत् ॥ २९ ॥

तूष्णीमयज्ञे दक्षिणा इति धानञ्जप्यः* ॥ ३० ॥

या अयज्ञे दक्षिणाः तासु प्रतिग्रहणमन्त्रो निवर्त्तते इत्येवं धान-ञ्जप्य आचार्यो मन्यते कः पुनरयज्ञाधिकार इति उच्यते यज्ञस्य उद्गात्रे कश्चिद्धिरण्यादिकं ददाति यथा हिरण्मय्योयो भोगादागच्छे-दौदुम्बर्यामाश्लेषयेदिति यज्ञस्य ऋत्विजो देव इति च कन्याप्रदानादि तत्र तूष्णीं प्रतिगृह्णीयादिति ॥ ३० ॥

भुर्भुवः स्वरिति गौतमः* ॥ ३१ ॥

भूर्भुवः स्वरित्यनेन प्रतिगृह्णीयात् एवं गौतम आचार्य आह ॥ ३१ ॥

---

* द्राह्यायणोऽप्येवम्।

ओमिति वोमिति वा* ॥ ३२ ॥

ओमित्येवं वा प्रतिगृह्णीयात् एवं मन्यते गौतमः ॥ ३२ ॥

इति द्वितीयस्य अष्टमी कण्डिका ।

---

अथ नवमी कण्डिका ।

पूर्वं नाराशंसम्भक्षयित्वाहवनीये प्रस्तोता पृष्ठहोमं जुहुयाद्यत्पृष्ठꣳ स्यात्तदादिश्यादः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतमिमं यज्ञमभिसम्बसानाहोत्रास्तृप्यन्तु सुमनस्यमानाः स्वाहेति पूर्वाम्* ॥ १ ॥

दक्षिणाप्रतिग्रहविधानमुक्तं साम्प्रतमनन्तरं पृष्ठ्यस्योपाकरणं तत्सम्बद्धं प्रस्तोतृकर्मोच्यते द्वौ नाराशंसौ माध्यन्दिने तयोः पूर्वं भक्षयित्वा आहवनीयेऽग्नौ प्रस्तोता पृष्ठहोमं जुहुयात् तस्मिन्नहनि यत् पृष्ठं स्यात्तदादिश्य अदः पिबतु सोम्यं मध्वायुरित्येतदादिना मन्त्रेण अद इति सर्वनामस्थाने रथन्तरं पिबत्वित्येतदादिवत् ॥ १ ॥

स्वाहाकारेणोत्तराम्* ॥ २ ॥

पूर्वां यथोक्तेन मन्त्रेण हुत्वा उत्तरां स्वाहाकारेण जुहुयात् ॥२॥

---

* द्राह्यायणेऽप्येवम् ।

द्वैधं जुहुयादिति धानञ्जय्योऽदः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतं स्वाहेति पूर्वामिमं यज्ञमित्युत्तराम्* ॥ ३ ॥

द्वैधं द्विधा कृत्वा एवं जुहुयादिति धानञ्जय्य आचार्य आह ॥३॥

होतृकपृष्ठेभ्य इति¶ ॥ ४ ॥

होतृकपृष्ठार्थमेवमभिसम्बन्धं कृत्वा ॥ ४ ॥

रेवतीषु वारवन्तीयमिति षष्ठे पृष्ठादेशं गौतमोमहाव्रतमिति व्रते† ॥ ५ ॥

रेवतीषु वारवन्तीयं पिबतु इत्येव षष्ठेऽहनि पृष्ठादेशं गौतम आचार्यो मन्यते महाव्रतं पिबत्विव्येवं महाव्रते ॥ ५ ॥

रेवत्यश्च वारवन्तीयञ्चेति धानञ्जय्यो यावन्ति पृष्ठस्थानि स्युः सर्वाण्येव प्रसञ्जीत पिबतु दधदिति च यथार्थमूहेत्* ॥ ६ ॥

रेवत्यश्च वारवन्तीयञ्चेत्येवं षष्ठेऽहनि पृष्ठादेशं धानञ्जय्यो मन्यते

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

¶ द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

यावन्ति सामानि महाव्रते पृष्ठस्थानि भवन्ति सर्वेषामेव परिसंख्यानं कुर्यात् पिबतु दधदिति चैते पदे यथार्थमूहेत् प्रयोगस्तु रेवत्यश्च वारवन्तीयञ्च पिबतां सोम्यं मध्वायुर्दधतीति शेषो मन्त्रः सामान्यः एवं षष्ठे गायत्ररथन्तरबृहद्वाजनभद्राणि पिबतु सोम्यं मध्वायुर्दधती दधन्तीति चेत्येवं महाव्रते मन्त्रशेषः सामान्यः एवेत्युक्तम् उभयपक्षेणाम्नातं भद्रे पुच्छे यज्ञायज्ञीये च पुच्छे यथार्थं न केवलमेवं षष्ठमहाव्रतयोः यत्र यत्रानेकसामपृष्ठता तत्र तत्रैवमर्थसमत्वात् ॥ ६ ॥

## बृहता रथन्तरेण वा स्तोष्यमाणः प्राक् स्तोमयोगाद्दश व्याहृतीर्मनसा ध्यायेदैरमिति* ॥ ७ ॥

बृहता रथन्तरेण वा स्तोष्यमाणः स्तोतुमिच्छन् उद्गाता स्तोमयोगात्पूर्वं दश व्याहृतीर्मनसा ध्यायेदैरमित्येतदाद्याः यथाम्नानादेव सिद्धे दशत्वे संख्याग्रहणं किमर्थं दशेति चेत् उच्यते अनुलिङ्गं विभागो माभूदिति, व्याहृतिग्रहणं संव्यवहारार्थं वक्ष्यति ऋचं पूर्वं व्याहृतिभ्य इति ॥ ७ ॥

## रथन्तरएवर्चं यस्ते गोष्विति* ॥ ८ ॥

रथन्तरएव केवले ऋचं ध्यायेत् यस्ते गोष्वित्येतां एवशब्दः अन्यत्र प्रयुक्ते रथन्तरे माभूदिति ऋचमिति संव्यवहारार्थमेव ऋचं पूर्वं व्याहृतीभ्य इति ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

युक्त्वा स्तोममेतद् ब्रूयादिति शाण्डिल्य ऋचं पूर्व्यां व्याहृतिभ्य इति* ॥ ९ ॥

यदेतदुक्तं प्राक् स्तोमयोगादृश व्याहृतीर्मनसा ध्यायेदेरमित्येतदादि एतद्युक्त्वा स्तोमं ब्रूयादिति शाण्डिल्य आचार्य आह अयन्तु क्रमः ऋचं पूर्व्यां व्याहृतीभ्य इति ॥ ९ ॥

इतरं धानञ्जप्यम्* ॥ १० ॥

यत्पूर्वमुक्तं तत् धानञ्जप्यस्य मतम् ॥ १० ॥

रथन्तरे प्रस्तूयमाने सर्वत्र सम्मीलेत्* ॥ ११ ॥

रथन्तरे साम्नि प्रस्तूयमाने सर्वत्र सम्मीलेत् यावत्कालः प्रस्तूयते तावत्कालः सम्मीलनं कुर्यात् अथ सर्वग्रहणं किमर्थमिति चेत् उच्यते एवं ब्राह्मणम् ईश्वरं वै रथन्तरमुद्गातुश्चक्षुः प्रमथितः प्रस्तूयमाने संमीलेत्स्वर्दृशं प्रतिवीक्षेतेति प्रथमायामृच्यस्य विधेः क्रियां दर्शयति स्वर्दृशं प्रतिवीक्षेतेति तेन यद्विषयमेव प्रतिवीक्षमाणमादिश्यते तद्विषयमेवं सम्मीलनं गम्यते सोऽयमाचार्यः सर्वत्रेत्येवमारभते कथमुत्तरयोरपि स्तोत्रीययोः सम्मीलनप्रतिवीक्षणे भवेयातामिति यावता रथन्तरधर्मोऽयं नायमृग्धर्मः स्वर्दृशशब्दः कालमात्रज्ञापकः वक्ष्यति प्राक् प्रतिहारं चतुरक्षरं शिष्ट्वा तत् सर्वत्र प्रतिवीक्षेतेति अपरे वर्ण-

* द्राह्यायणेऽप्येवम्।

यन्ति वच्यत्ययं तस्याप्रष्ठस्य सतो निवर्त्तेरन्धर्मा इति तत्कथं निवर्त्तमानेष्वन्येषु धर्मेषु सम्मीलनं स्यादिति अतः सर्वत्रग्रहण-मिति ॥ ११ ॥

एकैकं मनसाक्षरं स्तोभैर्वाचा संयुञ्ज्यात् प्रथमस्वरैर-कारैर्भकारादिभिरक्रान्तैर्द्वितीयस्वरोत्तमैः* ॥ १२ ॥

एकैकमुद्गीथाक्षरं मनसा ध्यायेत् स्तोभैर्वाचा संयुञ्ज्यात् उक्तं ब्राह्मणे बल्वला कुर्वता गेयमिति एतत् स्तोभरूपं सूत्रकारः श्रुत्य-न्तरं दृष्ट्वा विकल्पयति प्रथमस्वरैरकारैर्भकारादिभिरक्रान्तैरिति अक्षराणां स्तोभानाञ्च युगपत्क्रियां दर्शयति बल्वला कुर्वता गेय-मिति प्रथमस्वरैरकारैः उक्तस्वराः प्रथमद्वितीयतृतीयचतुर्थमन्द्राति-स्वार्या इति तैरकारैर्भकारादिभिर्भकार उच्चारणार्थः भकारैस्ते अकारा उच्चार्यन्ते अक्रान्तैः अक्रान्ताः तान् प्रयुञ्जीत द्वितीयस्वरो-त्तमैः यस्तेषामुत्तमो वर्णः स द्वितीयेन स्वरेण स्यात् ॥ १२ ॥

एतद्यथाधीतमित्याचक्षते* ॥ १३ ॥

एवं प्रयुज्यमानं रथन्तरं यथाधीतं प्रयुक्तं भवतीति एवमाच-क्षते एतच्छ्रुत्यन्तरं यथाधीतं प्रयोक्तव्यमिति अथ एके ब्रुवते एतेषा-मेव बल्वलेति स्तोभानां अनुकरणभ्रकार इति अपरा श्रुतिः रथ-न्तरे लक्षरभ्रकारान्तरवन्ति व्यञ्जनानि यथाक्षरं दर्शयेत् तद्यथा-

---

* द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम्, तथा तेषु छेदविषये विप्रतिपत्तिः।

स्वरेण सर्वाणि व्यञ्जनानि व्याप्तान्येवं सर्वान् कामानवाप्नोति यस्यैवं वेद यस्यैते स्वरवन्तः प्रयुज्यन्ते यस्यैवं विद्वान् प्रयुङ्क्ते यथा चाग्नि-चन्द्रसूर्य्याभास्वन्तोऽपहततमस्कास्तद्वदुद्गातृयजमानौ भवत एवं ह्याह भात्यग्निर्भाति चन्द्रमा भाति सूर्यो भान्ति ज्योतींषि भाति रथन्तर-मिति भकाराणामेव दीप्तिं दर्शयति स्वरवतां रथन्तरं स्तोभानां स्वरवन्तः प्रयोक्तव्या इति यत्र तु व्यञ्जनवन्तः प्रयुज्येरन् चोधुका च वध्यायिनाव प्रजसावुद्गातृयजमानौ स्यातान्तस्मादन्त्वचरं प्रयुञ्जानः स्वरवन्ति व्यञ्जनानि यथाचरं दर्शयेत् एका श्रुतिः तस्माद्विकल्पः स्यात् ॥ १३ ॥

प्राक् प्रतिहाराच्चतुरत्तरं शिष्ट्वा तत् सर्वत्र प्रतिवीक्षेत* ॥१४॥

प्राक् प्रतिहाराच्चलार्य्यत्तराणि शिष्ट्वा तच्चतुरत्तरं प्रतिवीक्षेत सर्वग्रहणस्य प्रयोजनं सम्मीलनविधावेवोक्तम् ॥ १४ ॥

स्तुत्वा वरञ्चोदयेत्¶ ॥ १५ ॥

स्तुत्वा रथन्तरेण यजमानं वरं प्रति प्रेरयेत् ॥ १५ ॥

तस्याप्रष्टस्य सतो निवर्त्तेरन्धर्माः † ॥ १६ ॥

---

* द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम्, तथा तेषु छेदविषये विशेषोऽप्यस्ति।

¶ द्राह्यायणोऽप्येवम्।

† द्रायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

तस्य रथन्तरस्य अपृष्ठस्य सतः निवर्त्तेरन् धर्म्माः व्याहृत्यृग्वाचादयो धर्माः सर्वे निवर्त्तेरन् अतोऽस्य ग्रहणं किमर्थमिति चेत् उच्यते तस्येति तस्यैव न बृहद्वामदेव्ययोस्तु पुनरपि रथन्तरं पृष्ठयोः सतो निवर्त्तेरन्धर्माः तथा सत इति पृष्ठगतस्य तु रथन्तरस्य गुणभूतस्यापि सतो नैव निवर्त्तेरन्धर्माः तथा बृहतः ॥ १६ ॥

## सह स्तोभैरिति गौतमः* ॥ १७ ॥

सह स्तोभैर्धर्म्मा निवर्त्तेरन्नित्येवं गौतम आचार्यो मन्यते ननु सर्वे एवाशेषेण धर्मा निवृत्ताः कुतस्तोभनिवृत्तिर्येन गौतमस्तोभान्निवर्त्तयतीति उच्यते, वक्ष्यति स्तोभा एवान्वियुरिति धानञ्जय्यः इति उक्तं परमतमनुमतमप्रतिषिद्धमिति तेन गौतमस्यानिष्पृष्टा एव स्तोभक्रियाः ॥ १७ ॥

## स्तोभा एवान्वियुरिति धानञ्जय्यः † ॥ १८ ॥

सर्वेऽन्ये धर्माः अपृष्ठस्य निवर्त्तेरन् स्तोभा एव केवला अन्वियुरित्येवं धानञ्जय्यो मन्यते ॥ १८ ॥

## अग्निष्टोमसामसन्धिसाम्नोरेवापृष्ठं स्तोभेदिति शाण्डिल्यः † ॥ १९ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

अग्निष्टोमसाम वा यदा स्यात् सन्धिसाम वा तदा अपृष्टमपि स्तोभेत् एवं शाण्डिल्य आह ॥ १९ ॥

सर्वत्रास्वस्तोत्रीयं न स्तोभेदिति स्थविरो गौतमः* ॥२०॥

सर्वत्र पृष्ठगतत्वान्यत् स्थानगतत्वास्वस्तोत्रीयं न स्तोभेदिति स्थविरो गौतम आह ॥ २० ॥

इति द्वितीयस्य नवमी कण्डिका।

---

अथ दशमी कण्डिका।

वामदेव्येन स्तोष्यमाणः प्राक् स्तोमयोगाद्गावो अश्वा अजावयोव्रीहयोयवा इति मनसा ध्यायेत्* ॥ १ ॥

बृहद्रथन्तरयोः सामान्यविशेषधर्म्मास्तोक्ताः साम्प्रतं वामदेव्यधर्मा विवक्षिताः तान्विवक्षुराह। वामदेव्येन स्तोष्यमाण इति वामदेव्येन साम्ना स्तोष्यमाणः स्तोतुमिच्छन् पूर्वं स्तोमयोगात् गावो अश्वा अजा इत्येतदादि मनसा ध्यायेत् अन्योऽन्यधर्मे उक्तः यथाकुलोपुचानिति, अथ विसमासः किमर्थमिति चेत् गोऽश्वाजाविव्रीहियवाम् मनसा ध्यायेत् इत्येवं वक्तव्यमासीत् उच्यते यद्येवमवक्ष्यत् तदा

---

* द्राह्यायणोऽप्येवम्।

गवादीनां द्रव्याणां ध्यानमभविष्यत् तदेवं माभूदित्यत आह आचार्यो गावो अश्वा इत्येतदादि तेन किं गावो अश्वा इत्येतदादि मन्त्रं मनसा ध्यायेदिति ॥ १ ॥

ब्रह्मसाम्नि यः कामो यजमानस्य स्यात् स सिध्यत्विति ध्यायन्नुपासीत* ॥ २ ॥

ब्रह्मसाम्नि स्तूयमाने यः कामो यजमानस्य भवेत् स सिध्यत्वित्येवं ध्यायन् यजमान उपासीत अत्र सन्देहः किं क्रतुकामस्य ध्यानं उत-यथाकाम्यं कामस्य ध्यानमिति उच्यते, क्रतुकामस्य ध्यानं न यथा-काम्यं कथमेतद्गम्यत इति चेत् उच्यते, उद्देशनिर्देशाभ्यां यः स इति यः क्रतुकामस्तं ध्यायेदिति अन्यथा हि ब्रह्मसाम्नि यजमानः कामं ध्यायेदित्येवमवक्ष्यत्सूत्रम् ॥ २ ॥

तथेतर उद्गायन्* ॥ ३ ॥

तथा इतर उद्गाता यजमानस्य कामः सिध्यत्वित्येवं ध्यायन्नु-द्गायेत् ॥ ३ ॥

आर्भवेण स्तुत्वा पुरोडाशादेकैकं पिण्डन्तीᳲस्तीर्त्वापर-रया द्वारा हविर्द्धानं प्रपद्याधस्तात् स्वस्य चमसस्य कुर्यु-

---

* द्राह्यायणोऽप्येवम् ।

यदासन्नः स्यादत्र पितरोमादयध्वं यथा भागमावृषायध्व-मिति* ॥ ४ ॥

आर्भवेन पवमानेन स्तुत्वा तार्त्तीयसवनिकात्पुरोडाशात् एक-देशं गृहीत्वा एकैकं पिण्डत्रीं स्तीर्त्वा अपरया द्वारा पश्चिमया द्वारा हविर्द्धानं प्रविश्य अधस्तात्स्वस्य चमसस्य समीपे दर्भेषु पिण्डा-न्विदध्युः यस्मिन् काले आसादितः स्यात् हविर्द्धाने चमसः पिण्डा-न्निधाय जपेयुः अत्र पितरोमादध्वं यथा भागमावृषायध्वमिति ॥४॥

तमाह्रियमाणं प्रतिमन्त्रयेरन्नमीमदन्त पितरो यथाभाग-मावृषायिषतेति* ॥ ५ ॥

तं चमसं भक्षार्थमाह्रियमाणं प्रतिमन्त्रयेरन्नमीमदन्त पितर इत्यनेन ॥ ५ ॥

सोम्यमाहृतमुद्गातावेक्षेतायुर्मे प्राण इति* ॥ ६ ॥

सोम्यं चरुमाहृतं उद्गातावेक्षेत आयुर्मे प्राण इत्येतदादिना यजुषा साध्यानां वै देवानां सत्रमासीनानामित्येतदादि ब्राह्मणं सोम्य-स्यावेक्षणं दर्शयति उद्गातृग्रहणं आचार्यशैली सर्वेषां कर्मणि प्रकृते अवश्यमुद्गातृग्रहणं करोति ॥ ६ ॥

पुनरस्मासु दध्मसीत्यन्तः* ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम्।

अस्य सौम्यावेक्षणयजुषः पुनरस्मासु दधसीत्येषोऽन्तः अत्रोच्यते उत्तरादिः पूर्वान्तलक्षणमिति एवं विज्ञायमाने मन्त्रस्यान्ते तत् किमिदं विज्ञापनं क्रियत इति उच्यते वक्ष्यति तं दशमेऽहन्यभ्यस्येयु-रिति तत्रैतावन्मन्त्राभ्यासप्रदर्शनार्थमिति ॥ ७ ॥

तं दशमेऽहन्यभ्यस्येयुः* ॥ ८ ॥

तमवेक्षणमन्त्रस्यान्तं दशमेऽहनि द्विर्ब्रूयुः ॥ ८ ॥

यन्मे यममित्येके* ॥ ९ ॥

आयुर्मे प्राण इत्येतस्य प्राणमन्त्रस्य स्थाने यन्मे यममित्येतमेके आचार्या मन्यन्ते ॥ ९ ॥

पूर्वेण त्वेवावेक्षेत* ॥ १० ॥

तुशब्दो व्यावृत्त्यर्थः यदेतत् पूर्वोक्तमवेक्षणमन्त्रं तेनैवावेक्षेत न द्वितीयेन ॥ १० ॥

तस्मिन्नङ्गुष्ठानामिके अवधायाक्षिणी विमार्जीत येना-ख्याजिमिति † ॥ ११ ॥

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे विशेषोऽस्ति ।

तस्मिन्नुत्तरधृते सोम्ये चरौ अङ्गुष्ठञ्च अनामिकाङ्गुलिञ्चावधाय अक्षिणी विमृशेत् येनाह्याजिमित्येतदादिना यजुषा तस्मिन् ग्रहणं यदि पूर्वेण यद्युत्तरेणावेक्षेत कुर्यादेवैतत् ॥ ११ ॥

एवमितरौ कुर्याताम्* ॥ १२ ॥

एवमनेन विधिना इतरौ प्रष्टी कुर्याताम् ॥ १२ ॥

प्रतिहर्त्ता पश्चात्* ॥ १३ ॥

एष क्रमः प्रस्तोता पूर्वः पश्चात् प्रतिहर्त्ता ॥ १३ ॥

तमुत्तरेण प्रतिहर्त्तारं हरेयुः † ॥ १४ ॥

तमवेक्षितं सोम्यं प्रतिहर्त्तुरुत्तरेण हृत्वा पश्चिमया द्वारा निष्क्रामयेयुः यदि वा ब्राह्मणोक्तेन विधिना प्राश्नीयात् दक्षिणार्द्धं सदसो गत्वैतं सोम्यातिशेषं प्राश्नीयादिति ॥ १४ ॥

यज्ञायज्ञीयस्य हिंकारं प्रति पत्नीमुद्गातेक्षेत † ॥ १५ ॥

पत्नी चोद्गातारमीक्षेत ॥ १५ ॥

निधनं प्रति पत्नी दक्षिणमूरुमभिषिञ्चेत् † ॥ १६ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

निधने उच्यमाने पत्नी पात्रेऽञ्जलीभिरद्भिः स्वं दक्षिणमूरुमभिषिञ्चेत् तत् दक्षिणानूरूनभिषिञ्चन्त इति हि ब्राह्मणम् ॥ १६ ॥

तृतीयायां स्तोत्रीयायां प्रस्तुतायां सर्वं तदुदकं निनयेत्* ॥ १७ ॥

तृतीयायां स्तोत्रीयायां प्रस्तुतायां पत्नी स्वस्मिन्नूरौ सर्वन्तदुदकं निनयेत् सर्वशब्दो निरवशेषवाची उत्पत्तिस्तोत्रीयायां कर्मस्तोत्रीयायां प्रस्तुतायामिति विवदन्ते तृतीयाशब्देन कर्मस्तोत्रीयायां न्याय्यतरम् ॥ १७ ॥

उत्तमायां स्तोत्रीयायां भुवद्वाजायिभुवद्वाजेष्वित्यभ्यस्येन्नामिति च निधनमनुष्टुभमुत्तमामक्षरेणान्तत इति ह्याहेति* ॥ १८ ॥

स्तोत्रस्योत्तमायां स्तोत्रीयायां भुवद्वाजायि भुवद्वाजेष्विति एवमभ्यासं कुर्यात् अस्य चतुरक्षरस्याभ्यासे सति नामिति च निधनं कुर्यात् यस्मादेवं ब्राह्मणम् अनुष्टुभमुत्तमां सम्पादयतीति अक्षरेणान्ततः प्रतिष्ठाप्यमिति च ॥ १८ ॥

अनभ्यासन्त्वाचार्य्या निधनञ्च यथाम्नायं शाण्डिल्यः † ॥१९॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अनभ्यासमेवाचार्या मन्यन्ते चतुरक्षरस्य निधनञ्च यथाम्नायमेव कुर्युरित्येवं शाण्डिल्य आचार्यो मन्यते अनभ्यासञ्चेति चशब्दः तु-शब्दो हेत्वर्थः को हेतुः यस्मात्पञ्चोपन्यासब्राह्मणमेवेदं प्रकरणादितो वा इति हि ॥ १९ ॥

तद्यदानुशंसन् होतापोच्छिष्ठीया ब्रूयात्तदैनमन्वालभेरन्नपावृण्वानाः* ॥ २० ॥

तद्यज्ञायज्ञीयं यदा यस्मिन् काले अनुशंसन् होतापोच्छिष्ठीया ऋचा ब्रूयात् तदा तस्मिन् काले एनं होतारं अन्वालभेरन् स्पृशेयुः अपावृण्वानाः प्रावरणान्यपास्यमानाः अपावृण्वाना इति सर्वेषां पूर्वं प्रावृतानां क्रियां दर्शयति उक्तं प्रावृतेनोद्गेयमिति वैश्वानरेणानभिदाहायेति तत् सूत्रकारः सर्वेषां प्रावरणं दर्शयति हेतुसमत्वात् किं हेतुसमत्वम् अनभिदाहः ॥ २० ॥

अन्यत् स्थानगतस्य निवर्त्तेरन् धर्माः* ॥ २१ ॥

यज्ञायज्ञीयस्याग्निष्टोमसाम्नोऽन्यस्थाने प्रयुज्यमानस्य सर्वे धर्मा निवर्त्तेरन् ॥ २१ ॥

यदन्यदग्निष्टोमसाम स्यात्तस्य स्युः* ॥ २२ ॥

यदन्यदग्निष्टोमसाम भवेत् तस्य धर्मा भवेयुः ॥ २२ ॥

---

* द्राह्यायणोऽप्येवम् ।

**अहिङ्कारे तु प्रतिहारवेलायां पत्नीमुद्गातेक्षेत* ॥ २३ ॥**

अहिङ्कारेऽग्निष्टोमसाम्नि प्रतिहारवेलायां पत्नीमुद्गाता ईक्षेत पत्नी चोद्गातारम् ॥ २३ ॥

**अनुब्राह्मणमार्चिकान् सन्नामान् सर्वत्र कुर्यादप्यन्यस्मिन् साम्नि* ॥ २४ ॥**

ये ब्राह्मणे ऋचं साम्नि प्रतिसन्नामा उक्ताः एवं कृत्वोद्गेयं पश्ये-न्वयमिति सुशंसिषमिति चैतान् सर्वेष्वग्निष्टोमसामसु दर्शयति सर्व-ग्रहणं पवमानगतेऽपि यज्ञायज्ञीये भवति न केवलं यज्ञायज्ञीये अप्यन्यस्मिन् रथन्तरेऽपि अथ साप्नोति किमर्थं उच्यते यदा रथ-न्तरेष्वृचु अन्यत्पृष्ठं क्रियते तत्तदापि अस्तुष इति सुस्तुष इति वा सन्नामयेत् ॥ २४ ॥

इति द्वितीयस्य दशमी कण्डिका ॥

---

अथ एकादशी कण्डिका ।

**तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयुर्ऋतस्य त्वेति* ॥ १ ॥**

---

* द्राह्यायणेऽप्येवम् ।

तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा चमसं स्तोमविमोचनं कुर्युः ऋतस्य त्वेत्यनेन यजुषा, ननु तत् किमिदं तृतीयसवनग्रहणं यदा सर्वेषु स्तोत्रेषु समाप्तेष्वित्युक्तम् उच्यते इदन्तावद्यजुरुपरि सन्धिभक्षात्समाम्नातं तत्र विमोचनं यजुषा तस्मिन्नेव क्रमे प्राप्नोति अतः तृतीयसवनग्रहणं तावत्क्रियते कथं न केवलमुपरि सन्धिभक्षात् स्तोमविमोचनं स्यात् यस्यां यस्यां संस्थायां क्रतुः समाप्यते तस्यान्तस्यां संस्थायां स्यादिति अथ सर्वग्रहणं किमर्थमिति चेत् स्तोत्रेष्विति बहुवचनसामर्थ्यात्सिद्धे सर्वत्वे इदमुच्यते इदं स्तोमविमोचनं क्वचन्तस्तोत्रे दृष्टं प्रतिस्तोत्रञ्च स्तोमयोजनं भवति युक्तस्य च विमोचनं भवत्येव तस्य च युक्तस्य स्तोमस्य यस्मिन् काले विमोचनमित्येष संशयः अतः सर्वग्रहणं करोत्याचार्यः कथं पूर्वेष्वपि स्तोत्रेषु एकैकस्मिन् स्तोत्रे भक्षयित्वा स्तोमं विमुञ्चेयुः अत्र तु तृतीयसवने कथमिति ॥ १ ॥

**दक्षिणैः पाणिभिः कुशाः संलोभयेयुः*** ॥ २ ॥

संलोभनं एकत्रीकरणं कुर्युः ॥ २ ॥

**यजमानवाचनादनन्तरमत्र वा यजमानं वाचयेत्तन्तवे मा ज्योतिषेत्यसावनुमातनु हि ज्योतिषेति यथाज्येष्ठं पुत्राणां नामानि गृह्णीयात्**† ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम्।

यजमानवाचनादनन्तरं यदेतत् स्तुतस्य स्तुतमसीति यजमानवाचनं एतस्मादनन्तरं एतत् कर्म कुर्यात् तदुच्यते अत्र वा अस्मिन् काले कुशानां संलोभनं कृत्वा कुर्युः इति विकल्पः तन्तवे मा ज्योतिषेत्युक्त्वा असावनुमातनुह्यि ज्योतिषेति यथा ज्येष्ठं पुत्राणां नामानि गृह्णीयात् असाविति सर्वनामस्थाने नाम गृह्णीयात् यो यो ज्येष्ठो यथा ज्येष्ठं प्रयोगस्तु तन्तवे मा ज्योतिषा यज्ञदत्त अनुमातनुह्यि विष्णुमित्र अनुमातनुह्यि सोमभूते अनुमातनुह्यि ज्योतिषा अपरे प्रत्येकं पुरस्ताज्जपोपरिष्टाज्जपौ कुर्वन्ति ॥ ३ ॥

जनिष्यमाणा इत्यजातेषु* ॥ ४ ॥

अजातेषु पुत्रेषु जनिष्यमाणा इति सर्वनामस्थाने कुर्यात् प्रयोगस्तु तन्तवे मा ज्योतिषा जनिष्यमाणा अनुमातनुत ज्योतिषा अजातपुत्रस्यैष कल्पः अपरे ब्रुवते जातपुत्रोऽपि पुत्राणां नामानि गृहीत्वा जनिष्यमाणा इति गृह्णीयात् आशीर्योगत्वात् जनिष्यमाणा इत्यजातेष्विति प्रतिपत्तिरियमिति ॥ ४ ॥

जातेष्वजातेषु च पुत्रा इत्येव सर्वेषु* ॥ ५ ॥

जातेषु अजातेषु च पुत्रेषु सर्वेषु पुत्रा इत्येवं नामग्रहणं प्रयोगः तन्तवे मा ज्योतिषा पुत्रा अनुमातनुत ज्योतिषा यद्येकः कुर्यात् तथापि बहुवचनं कुर्य्यात् नोऽहं कुर्य्यात् ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम् ।

वषट्कृते हारियोजनस्य यथेतमपरया द्वारा निष्क्रामन्तो जपेयुः सोमेहीति* ॥ ६ ॥

वषट्कृते हारियोजनस्य हविषः हारियोजनस्येत्यवयवलक्षणा षष्ठी यथेतं यथागतमित्यर्थः दक्षिणेनौदुम्बर्य्या गत्वा पश्चिमया द्वारा निष्क्रामन्तो जपेयुः सोमे हीत्येतदादि यजुः अथापरया द्वारेति किमर्थं यदा यथेतमित्युक्ते सिद्धमेवैतत् ते हि समस्तोपस्थानं कृत्वा अपरयैव द्वारा प्रविष्टाः अत्रोच्यते विसंस्थिते सवने पूर्वया द्वारा सञ्चर इत्युक्तं न चात्र सवनं सन्तिष्ठते तद्यद्यपरयेति न ब्रूयात् विसंस्थिते सञ्चरेण निर्गमणं स्यात् एवं माभूदित्यत आह अपरयेति यथेतमिति चोक्ते ते पिण्डं पितृयज्ञं कृत्वा पूर्वया द्वारा प्रविष्टाः तत्रैषोऽपि सञ्चरो गम्येतापरयेत्यनुच्यमाने ॥ ६ ॥

सुभूरसीत्यादित्यमुपतिष्ठेरन्* ॥ ७ ॥

सुभूरसीत्यनेन यजुषा आदित्यमुपतिष्ठेरन् ॥ ७ ॥

अस्तमितश्चेद्गार्हपत्यम्* ॥ ८ ॥

यद्यस्तमितः स्यादादित्यः ततोऽनेन यजुषा गार्हपत्यमुपतिष्ठेरन् कोऽस्य विषयः षोड़शीवाजपेयौ अन्यस्मिंश्च कालातिक्रमे ॥ ८ ॥

---

* द्राह्यायणेऽप्येवम्।

आग्नीध्रीये द्वे आहुती जुहुयुरपां पुष्पमिति पूर्वां स्वाहाकारेणोत्तराम्* ॥ ९ ॥

आग्नीध्रीयेऽग्नौ द्वे आहुती जुहुयुर्गत्यानुपूर्व्येण अपां पुष्पमित्यनेन यजुषा पूर्वामाहुतिं जुहुयात् स्वाहाकारेणोत्तरां अथाहुती इति द्विवचनेन द्वित्वे सिद्धे किमिदं संख्याग्रहणं द्वे इति उच्यते नियमार्थम् उक्तं ह्यनेन हिरण्यमल्पीयो भोगादागच्छेदौदुम्बर्यामास्लेषयेदाग्नीध्रीये वा जुहुयादिति तस्य हिरण्यस्यायं होमकालः यासौ द्वितीया आहुतिस्तस्यामेव हिरण्यं प्रक्षिप्य जुहुयादिति ॥ ९ ॥

हारियोजन्यो नाम धाना द्रोणकलशे भवन्ति तासामुद्गाता प्रथम आददानः समुपहूता भक्षयिष्याम इति ब्रूयात्* ॥ १० ॥

हारियोजन्य इति संज्ञा धानानां द्रोणकलशे ताः स्थापिता भवन्त्यध्वर्युभिः सोममिश्राः तासां धानानामवयवमुद्गाता आददानः समुपहूता भक्षयिष्याम इति ब्रूयात् आदानं ग्रहणम् ॥ १० ॥

तथेतरौ* ॥ ११ ॥

तथेतरौ यथोद्गाता कुर्यात् तेनैव विधिनेतरौ प्रष्टौ कुर्याताम् ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम् ।

उन्नेतर्युपह्वमिष्ट्वा हारियोजनस्य त इति तिरोह्नस्येत्यतिरात्रे यथाधीतं वा सर्वत्र द्विरूपघ्राय पश्चादाहवनीयस्यान्तः परिधि निवपेयुः* ॥ १२ ॥

उन्नेतरि इत्यधिकरणसप्तमी उपह्वमिष्ट्वा उपह्वं याचित्वा हारियोजनस्य त इत्येतेन यजुषा यद्वक्ष्यते तत् कुर्य्युः तिरोह्नस्येत्यतिरात्रे एतदधिकं कुर्य्युः यथाधीतं वा सर्वत्र अतिरात्रे चानतिरात्रे च द्विरूपघ्राय आहवनीयस्य पश्चिमे प्रदेशे परिधीनामभ्यन्तरतो निवपेयुः नाग्नौ ॥ १२ ॥

अनुप्रहृतेषु भस्मान्ते* ॥ १३ ॥

यदि परिधयः अनुप्रहृताः प्रक्षिप्ता अग्नौ भवन्ति तदा भस्मान्ते समीपे निर्वपेयुः ॥ १३ ॥

अपउपस्पृश्याष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देवकृतस्येत्येतत्प्रभृतिभिरिकारान्तैः* ॥ १४ ॥

उपधानात् अनन्तरं अपः स्पृष्ट्वा एकैकः अष्टौ अष्टौ शकलानि आहवनीये प्रक्षिपेयुः देवकृतस्येत्येतत्प्रभृतिभिर्मन्त्रैः इकारान्तैरिति मन्त्रान्तज्ञापनार्थम् ॥ १४ ॥

---

* द्राह्यायणेऽप्येवम्।

सकृदेव सर्वाण्युत्तमेनेति शौचिवृक्षिः* ॥ १५ ॥

सर्वान् मन्त्रानुक्त्वा सकृदेव सर्वाणि सकलानि उत्तमेन मन्त्रेण प्रक्षिपेयुरिति शौचिवृक्षिराचार्य आह ॥ १५ ॥

अप्सु षोमानाम चमसाश्चात्वाल देशेऽद्भिः पूर्णास्तेषु हरितानि तृणाति प्रास्तानि भवन्ति † ॥ १६ ॥

अप्सु षोमा इति संज्ञा ते अप्सु षोमाश्चमसाश्चात्वालसन्निकृष्टे देशे अद्भिः पूर्णा स्थापिता भवन्ति तेषु हरितानि तृणानि प्रास्तानि भवन्त्यध्वर्युभिः ॥ १६ ॥

ते स्वं चमसं पर्युपविश्याप्सु धौतेत्यवमृश्य जपेयुः* ॥१७॥

ते उद्गातारः स्वकीयचमससन्निधावुपविश्य दक्षिणेन पाणिना स्पृष्ट्वा अप्सु धौतेत्येतदादि यजुर्जपेयुः ॥ १७ ॥

मधुमन्तमिति पाणीनुपजिघ्रेरन्* ॥ १८ ॥

मधुमन्तमित्यनेन यजुषा पाणीनुपजिघ्रेरन् ॥ १८ ॥

श्रमङ्ग्ध्वइत्युदञ्चश्चमसं निनयेयुः* ॥ १९ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अमदभ्य इत्यनेन यजुषा उदङ्मुखं चमसं हत्वा तत्स्था आपः नोचैः चमसैः भूमौ निनयेयुः ॥ १९ ॥

कामेत्यभ्यात्ममावर्त्तयेयुः* ॥ २० ॥

कामेत्यनेन यजुषा अभिमुखमात्मनः चमसमावर्त्तयेयुः ॥ २० ॥

ऊर्गित्युरःसु पाणीन्निदधीरन्* ॥ २१ ॥

ऊर्गित्यनेन यजुषा उरःसु पाणीन्निदधीरन् निधानं स्थापनम् ॥२१॥

प्राणसोमेति मुख्यान् प्राणानभिमृशेरन्* ॥ २२ ॥

प्राणसोमेत्यनेन यजुषा मुख्यान् प्राणानभिमृशेरन् मुखे भवा मुख्याः प्राणा इन्द्रियाणि अक्षिणी नासिके कर्णाविति ॥ २२ ॥

आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुरसमुपहूय दधिक्राव्ण इति* ॥ २३ ॥

आग्नीध्रीयपरिश्रितं गत्वा दधिभक्षं भक्षयेयुरसमुपहूय दधिक्राव्ण इति अनया ऋचा असमुपहूयेति समुपह्वानपूर्वकाः सर्वे भक्षा-विहिताः तदिह भूयस्त्वं गृहीत्वा प्रवर्त्तेत तस्य प्रतिषेधः असमुपहूयेति ॥ २३ ॥

इति द्वितीयस्य एकादशी कण्डिका।

---

* द्राह्यायणेऽप्येवम्।

अथ द्वादशी कण्डिका ।

अग्निष्टपतीत्यवभृथ साम* ॥ १ ॥

अग्निष्टपतीति स्तोभलिङ्गेन अवभृथसामादेशः उक्तो ग्रहणेन चेति ॥ १ ॥

तस्यावृद्यथा प्रथमस्य प्रवर्ग्यसाम्नः* ॥ २ ॥

तस्यावभृथसाम्न आवृद्विधिः यथा प्रथमस्य प्रवर्ग्यस्य साम्नः येन प्रकारेणेत्यर्थः प्रथमं प्रवर्ग्यसाम त्यग्नायिरित्येतत् अथ तस्येति किमर्थमिति चेत् उच्यते अवभृथसामान्तराण्युपदेक्ष्यन्ते अभिषेचनीयास्व त्रिरात्रयोः तदर्थं तस्य ग्रहणम् ॥ २ ॥

सर्वऋत्विजो निधनमुपेयुः* ॥ ३ ॥

तस्यावभृथसाम्नः सर्वऋत्विजो निधनं ब्रूयुः सर्वग्रहणं यथा प्रथमस्य प्रवर्ग्यसाम्नः इत्युक्तं तस्मिंस्व घर्मोपयुक्तानां निधनोपपत्तिः तन्माभूदतः सर्वग्रहणं कथमिह सर्वेषामृत्विजान्निधनोपपत्तिः स्यादिति ॥ ३ ॥

इष्टाहोत्रीयमभिषेचनीये* ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम् ।

अभिषेचनीये क्रतौ द्रष्टाहोत्रीयमवभृथसाम स्यात् ॥ ४ ॥

समस्येति वा* ॥ ५ ॥

समस्येति वावभृथसाम स्यादित्यभिषेचनीये द्रष्टाहोत्रीयं वेति विकल्पयति ॥ ५ ॥

अश्वत्रिरात्रे नानावभृथान्यहानि* ॥ ६ ॥

उक्तमहीनेषु दधिभक्षान्तान्यहानि प्रागुदयनीयादतिरात्रादिति च अयमश्वत्रिरात्रे विशेषः नानावभृथान्यहानीति नाना पृथगित्यर्थः ॥ ६ ॥

तेषां प्रथमस्य सनादग्न इत्यवभृथसाम* ॥ ७ ॥

तेषामाश्वमेधिकानामह्नां प्रथमस्याह्नः सनादग्न इत्येतदवभृथसाम स्यात् अवभृथसामग्रहणं तत्र साममात्रं न कृत्स्नोऽवभृथ इति ॥ ७ ॥

यद्वा उविश्यतिरिति द्वितीयस्य त्यमायिरिति वा* ॥ ८ ॥

यद्वा उविश्पतिरित्येतत् साम द्वितीयस्याह्नोऽवभृथसामेति प्रकृतं त्यमायिरिति वा विकल्पः तृतीयस्य सिद्धं प्राकृतम् ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

अवभृथेऽष्टौ संस्थितायामवभृथनिचुं पुणनिचेरुरसि निचुं पुणावदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतं पुरुराव्णो देव-रिषस्पाहीत्यप उपस्पृश्य त्रिरभ्युक्षेरन्* ॥ ९ ॥

अवभृथेष्टौ समाप्तायां अवभृथनिचुं पुणेत्येतदादिना यजुषा या-स्त्ववभृथेष्टिं कुर्वन्ति ताः स्पृष्ट्वा स्नात्वा त्रिरभ्युक्षेरन् क्रियाभ्यासे सकृन्मन्त्र इत्युक्तम् ॥ ९ ॥

आदित्यमुपतिष्ठेरन्नुद्वयन्तमसस्परिज्योतिः पश्यन्त उ-त्तरं स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्त-ममिति* ॥ १० ॥

अभ्युक्षणानन्तरं आदित्यमुपतिष्ठेरन् उद्वयन्तमसस्परीत्येतदा-दिना मन्त्रेण ॥ १० ॥

अस्तमितश्चेदाहवनीयम्* ॥ ११ ॥

यद्यस्तमित आदित्यः स्यात् तदाहवनीयमुपतिष्ठेरन् उद्वयन्तम-सस्परीत्येतयर्चा विशेष उक्तः प्रागेव अस्तमितश्चेद्गार्हपत्यमित्ये-तस्मिन् ॥ ११ ॥

तस्मिन् समिध आदध्युरेधोस्येधिषीमहीति प्रथमाᳪ समिदसि समेधिषी महीति द्वितीया यदेनश्चकृमावयं

---

* द्राह्यायणोऽप्येवम् ।

**यद्वान्य कृतमारिमानया समिधा वयऌ सर्वन्तदपमृज्य ह इति तृतीयाम्* ॥ १२ ॥**

तस्मिन्नाहवनीये सर्वे समिधआदध्युः आधानं प्रक्षेपः एधोस्येधिषीमहीत्येतदादिभिर्यथोद्दिष्टैर्मन्त्रैः अथ तस्मिन्निति किमर्थमिति चेत् यदास्तमितस्तदाहवनीयमित्यधिकृत एवाहवनीयः अत्रोच्यते उपस्थिते चानुपस्थिते च तस्मिन्समिधआदध्युरेव अन्यथा तस्योपस्थाने सति समिदाधानं स्यात् ॥ १२ ॥

**तमेवोपतिष्ठेरन्नपो अद्यान्वचारिषं रसेन समगन्महि पयस्वानग्न आगमन्तं मा सऌसृज वर्चसेति* ॥ १३ ॥**

तमेवाहवनीयमुपतिष्ठेरन् अपो अद्यान्वचारिषमित्येतदादिना मन्त्रेण अप्शब्देन सोममुपचरति सोममिष्ट्वा भक्षयन्ति तमेवेति प्रकृतावधारणम् आदित्यस्य समुपस्थानमुक्तम् अतः तमेवाहवनीयमित्यवधारयन्ति ॥ १३ ॥

**प्रागुदयनीयादतिरात्रादप्सु षोमान्तमहः सत्रेषु* ॥१४॥**

सत्रेषु उदयनीयादतिरात्रात्पूर्वाणि यान्यहानि तेषु दधिभक्षादिकर्मशेषो न भवति ॥ १४ ॥

**दधिभक्षान्तमहीनेषु* ॥ १५ ॥**

---

* द्राह्यायणोऽप्येवम्।

अहीनेषु दधिभक्षान्तान्यहानि भवन्ति प्रागुदयनीयादतिरात्रादिति वर्त्तते ॥ १५ ॥

**यावन्त्यहानि राजानं भक्षयेयुस्तावत् स्वब्राह्मणयोच्छिष्टं न दद्युरद्भिर्वा प्रोक्ष्य दद्युः* ॥ १६ ॥**

यावन्त्यहानि राजानं सोमं भक्षयेयुः ऋत्विजस्तावत् स्वब्राह्मणयोच्छिष्टं न दद्युः अद्भिर्वा प्रोक्ष्य छादनं कृत्वा दद्युः किमिदम् उच्यते, श्रुत्यन्तरेषु दृष्टं राजन्यवैश्ययोः सोमभक्षाभावो भक्षविशेषाम्नानादिति एवं विधिं सूत्रकारः प्रकारान्तरेण दर्शयामास ॥ १६ ॥

**तदेष श्लोकः सोममेतत् पिबत यत् किञ्चाश्नीत ब्राह्मणा मा ब्राह्मणायोच्छिष्टं दातमायात् सोममसोमप इति † ॥१७॥**

तदेष श्लोक इति एतमेवार्थमनुवदति सोममेतत् पिबतेत्येतदादिना श्लोकेन ॥ १७ ॥

**एतं परिक्रमꣳ सर्वक्रतुषु विद्यात् सर्वक्रतुषु विद्यात् ¶ ॥१८॥**

योऽयं मन्त्रविधिस्तादिग्रहणेनेत्येतदादिविधिः परिक्रान्त एतं

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणोऽप्येवं किन्तु तस्य ग्रन्थे एतस्मादुत्तरे अतिरिक्तं सूत्रद्वयं वर्त्तते ।

सर्वक्रतुषु जानीयात्, ननु उक्तः सर्वक्रत्वधिकार इति तत् किमिदं पुनरुच्यते सर्वक्रतुषु विद्यादिति उच्यते अन्तप्रज्ञापनार्थं कथं अथ विध्यव्यपदेशे सर्वक्रत्वधिकार इति एतदादिविधेरयमन्त इति एतं सर्वक्रतुषु विद्यादिति अपर आह, सर्वक्रतोरधिकारः सर्वक्रत्वधिकार इति सर्वक्रतुः ज्योतिष्टोमः कुतः श्रुतेः एष वा प्रथमो यज्ञानामित्युक्ताह यथा वा इदमग्नेर्जातादग्नयो विक्रियन्त एवमेतस्मादध्यन्ये यज्ञा विह्रियन्त इत्युक्ताह यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तन्दीपयतीत्येतदाद्युक्ताह एतद्यदाङ्गरेको यज्ञ इत्येतद्धि सर्वे ज्योतिष्टोमा भवन्तीति एतद्विधानमापद्यमानाः सर्वे ज्योतिष्टोमा भवन्तीति सर्वक्रतुषु ज्योतिष्टोमः तदादावेव सर्वक्रत्वधिकार इति ज्योतिष्टोमाधिकारः तेषां पुनरुक्तदोषो नास्ति एवं ज्योतिष्टोमविधिं सर्वक्रतुषु विद्यात् अधिकविधेश्च प्रत्याहारं कुर्यात्॥ १८॥

इति द्वितीयस्य द्वादशी कण्डिका।

इति द्वितीयः प्रपाठकः समाप्तः।

---

# तृतीयः प्रपाठकः ।

## अथ प्रथमा कण्डिका ।

षोड़शिसाम्ना स्तोष्यमाणे यथासनमुपविश्य हविर्द्धानं गत्वा षोड़शिग्रहमवेक्षेतोद्गाता यस्मादन्य इति* ॥ १ ॥

उक्तं सार्वक्रतुकं सामान्यविधानं साम्प्रतं षोड़शिनो गुणविधानमुच्यते सार्वक्रतुकोऽयं षोड़शी दशरात्रिके चतुर्थेऽहन्युत्पन्नः अत्रैव चास्य हिरण्यं सम्प्रदानं षोड़शिना स्तुवतइत्येवमादयो धर्म्माः पठिताः तेषां विधानं विवक्षुराह षोड़शिसाम्ना स्तोष्यमाण इति, ननु उक्तं त्वया चतुर्थेऽहनि षोड़शी उत्पन्न इति तत् प्रकरणे चैव धर्मा वक्तव्याः स्युः तत् किमिदं विप्रकरणे गुणविधानम् आरभ्यत इति यदा च तस्मिन्नेव प्रकरणे यस्मादन्यो न परो अस्ति जात इत्येतदादि मन्त्रं विधायोक्तम् उद्गाता ग्रहमवेक्षेत इति इदञ्चावेक्षणविधानं किमर्थमिति चेत् अत्रोच्यते तदिदम् अवेक्षणं प्रकरणे स्तोत्रान्ते उक्तं तत्रायं संशयः किं कालं प्रति तावत् किं तस्मिन्नेव कालेऽवेक्षणमथान्यस्मिन्निति तथा किं हविर्द्धानस्थस्यैव अथावेक्षणप्रवृत्तिः सदसीति अवेक्षणं हि सदसि प्रवृत्तं सोमानां सौम्यस्य च तथा एते धर्मा हिरण्यसम्प्रदानादयः चतुर्थोत्पादाः अयञ्च षोड़शी प्रकरणान्तरेष्वपि श्रूयते

---

* द्राह्यायणोऽप्येवम् ।

सर्वस्तोमातिरात्रादिषु तत् किमेते धर्माः प्रकरणस्थस्य भवन्ति उत प्रकरणान्तरेष्वपि षोड़शिनं भजतइति कुतः पुनरयं संशयः उच्यते, अप्राकृतत्वात् षोड़शिनः तेन किं प्राकृतो हि विधिर्व्विकृतीर्भजत अप्राकृतस्तु न वचनाद्विकृतीर्भजत इति अतोऽयमाचार्य्य एतान्मोहान् परितितीर्षुः सार्वक्रतुकानन्तरं षोड़शिनो विधानमारभते कथम् एतं सार्वक्रतुकं विधानं षोड़शिनः स्यादिति यदि ह्येतं विधानमाचार्य्यः प्रकरण आम्नायस्य तद्विषयमेवाभविष्यत् तन्माभूदतो विप्रकरण आरम्भः षोड़शिसाम्ना स्तोष्यमाणः यथासनमुपविश्य हविर्द्धानं गत्वा षोड़शिग्रहमवेक्षेत उद्गाता यस्मादन्य इति एष पदानां विच्छेदः अर्थो वक्ष्यते षोड़शिसाम्नेति कर्त्तृकरणलक्षणा तृतीया स्तोष्यमाण इति भविष्यत्कालोपदेशः यथासनमुपविश्य संस्थायासने निःसृप्य समस्तोपस्थानं कृत्वा कृत्स्नेन वा अकृत्वा वा स्वस्मिन्नासन उपविश्य हविर्द्धानं गत्वा षोड़शिग्रहमवेक्षेत उद्गाता यस्मादन्य इत्यनेन मन्त्रेण, ननु षोड़शिसाम्नेति सामग्रहणं किमर्थं यदायं षोड़शिशब्दः कृतेऽपि सामग्रहणात् स्तोत्रवाची भविष्यत्येव अयं हि षोड़शिशब्दः त्रिषु वर्त्तते स्तोत्रे ग्रहे संस्थायामिति स्तोत्रे तावत् योगाय त्रीषु द्विपदासु छृहता षोड़शिना स्तुत इति ग्रहे प्रातःसवने षोड़शिनं गृह्णीतं तृतीयसवने प्रजनयतीति स्वआयतने षोड़शी गृह्यतइति च संस्थायां सोऽब्रवीत् षोड़शी तेऽयं यज्ञक्रतुरस्त्विति सोऽयं षोड़शिशब्दः प्रयुज्यमान स्तोत्रग्रहसंस्थासु इत्यर्थात् प्रतीयते तदिह षोड़शिना स्तोष्यमाण इत्युक्ते ऋतेऽपि सामग्रहणात् स्तवनसामर्थ्यात् साम्नेति गम्यतएव तत् किमिदं सामग्रहणमिति अत्रोच्यते अस्य षोड़शिन

उक्थानन्तरविधानं तस्मिन्नेव क्रमे धर्माः प्राप्नुवन्ति इदञ्च षोडशी-सामसंस्थान्तरेऽपि प्रयुज्यते तदस्यान्यस्मिन् स्थाने प्रयुज्यमानस्य धर्मा भवन्ति उत नेत्येष संशयः सोऽयमाचार्यः सामग्रहणं करोति कथं स्थानान्तरेऽपि प्रयुज्यमानस्य धर्मा भवेयुरिति क्व पुनरस्य स्थानान्तरे प्रयोगः अत्यग्निष्टोमे षोडशिनं गृह्णीयादिति ॥१॥

एवमेव प्रातःसवने* ॥ २ ॥

योऽयं षोडशिग्रहस्यावेक्षणे विधिरुक्तः षोडशिसाम्ना स्तोष्यमाण इत्येतदादि तेनैव प्रातःसवनेऽप्यवेक्षेत यदि प्रातःसवनेऽपि गृह्णीत प्रातःसवने षोडशिनं गृह्णीतन्तं तृतीयसवने प्रजनयति ॥ २ ॥

यदि चोत्तरयोरपि गृह्णीयुः* ॥ ३ ॥

यद्युत्तरयोरपि सवनयोर्गृह्णीयुः तयोरप्यनेनैव प्रकारेणा-वेक्षेत ॥ ३ ॥

अश्वः कृष्णः पूर्वस्यां सदसोद्वारि प्रत्यङ्मुखस्तिष्ठेदिति धानञ्जप्यः* ॥ ४ ॥

उक्तः अश्वः कृष्ण उपतिष्ठति साम्नश्छायायै तस्य स्थाननिर्देशः क्रियते अश्व इति प्रतीतपदार्थकः शब्दः कृष्ण इति वर्णनिर्देशः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति धानञ्जप्यः आचार्य आह ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम् ।

अपरस्यां प्राङ्मुख इति शाण्डिल्यः* ॥ ५ ॥

अपरस्यां सदसो द्वारि प्राङ्मुखोऽवतिष्ठेदेवं शाण्डिल्य आचार्य आह ॥ ५ ॥

कृष्णाभावे श्यावः* ॥ ६ ॥

कृष्णस्याश्वस्याभावे श्यावः स्यात् श्याव इत्यनिरुक्तो वर्णः न कृष्णो न श्वेतः तयोरन्तरेण वर्त्तते ॥ ६ ॥

तदभावे यः कश्चाश्वः* ॥ ७ ॥

तस्याभावः तदभावः तदिति पूर्वनिर्द्देशः तस्य श्यावाश्वस्याभावे यः कश्चाश्वः स्यात् अथ यः कश्च इति सिद्धे किं पुनरश्वग्रहणमधिकं क्रियतेऽश्व इति उच्यते, अन्यत्राप्यभावे यः कश्चाश्वः स्यात् यथा तस्मा अमुमादित्यमश्वं श्वेतं कृत्वा दक्षिणामानयन्निति तथा अश्वश्यावो दक्षिणा सह्यनिरुक्तः सब्रह्मणे देय इति तत्रापि श्वेतश्यावयोरभावे यः कश्चाश्वः स्यात् ॥ ७ ॥

गौर्वाजोवाश्वाभावे* ॥ ८ ॥

यद्यश्वो न स्यात् गौर्वाजो वा भवेत् अथेहाश्वग्रहणं पुनः किमर्थम् उच्यते, तदभावे यः कश्चाश्व इत्युक्तं श्वेतश्यावयोरप्यभावे सद्य-

---

* द्राह्यायणेऽप्येवम्।

कोपहव्ययोः यः कस्वास्व इति तयोरपि गौर्वाजो वास्वाभाव इति प्राप्नोति तन्निवृत्त्यर्थमस्वग्रहणं करोति, कथं, षोड़शिन्येव गौर्वाजो वास्वाभावे भवेत् न तथातयोरपीति ॥ ८ ॥

योयः सामाङ्गं ब्रूयात् स हिरण्यं धारयेत्* ॥ ९ ॥

उक्तं हिरण्यसम्प्रदानं षोड़शिना स्तुवत इति तद्विवेकार्थमाह, यो यः षोड़शिसाम्नः अङ्गं ब्रूयात् स स हिरण्यं धारयेत् स्वस्यां स्वस्यां भक्तौ ॥ ९ ॥

उद्गाता निधनमुपयत्स्तु* ॥ १० ॥

उद्गाता निधनं ब्रुवत्सु तं हिरण्यं धारयेत् ॥ १० ॥

सर्वे वाभिम्नृश्येयुः* ॥ ११ ॥

सर्वे वा हिरण्यमभिम्नृशेयुर्निधनमुपयन्तः ॥ ११ ॥

अवसर्पति प्रथमं पर्यायं गायेच्छन्नम्* ॥ १२ ॥

अवसर्पत्यादित्ये षोड़शिसाम्नः प्रथमं पर्य्यायं गायेत् छन्नम् अप्रकाशम् अव अधोभावे सृगतौ ननु कथमेतद्गम्यते यथा अवसर्पत्यादित्यइति उच्यते उपरिष्टाद्दच्युत्यस्तमिते तृतीयमाविरिति ॥ १२ ॥

---

* द्राह्यायणेोऽप्येवम् ।

विषिते द्वितीयम्मध्येन* ॥ १३ ॥

विगते सिते विषिते विगते शुक्ले वर्णे द्वितीयं पर्यायं गायेन्मध्यमेन स्वरेण ॥ १३ ॥

अस्तमिते तृतीयमाविः* ॥ १४ ॥

अस्तङ्गते आदित्ये तृतीयं पर्यायं गायेत् प्रकाशम् ॥ १४ ॥

यदोपाकुर्युस्स्तुवीरन्नेव † ॥ १५ ॥

इह प्रथमं कालनियमः कृतः अवसर्पति प्रथमं पर्यायमित्येतदादि सोऽयं विकल्पयति यदा यस्मिन् काले उपाकुर्युरध्वर्यवः तस्मिन्नेव काले स्तुवीरन् न स्वं कालमाद्रियेरन् अपरे विनिवेशं वर्णयन्ति सन्धिकाले षोड़शिनि अत्यग्निष्टोमेऽहनि अतिरात्रे रात्राविति, अपरे ब्रुवते विचारितं, किमर्थमिदम् षोडशिन उद्गातुरिति उच्यते अत्राचार्य्याणामुभयथा प्रतिपत्तिः येषामहरन्ते तेषामह्न्युपाकरणं येषां रात्रौ तेषां रात्राविति अतोऽयमाचार्य्य आरभते यदोपाकुर्युः तदा अप्रकाशं स्तुवीरन्नेवेति अथ तत्र कः स्वर इत्युच्यते ॥ १५ ॥

अहनि छन्नं रात्रावाविः † ॥ १६ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

यदाहन्युपाकुर्युः तदा अप्रकाशं स्तुवीरन् रात्रौ प्रकाशम् ॥ १६ ॥

उद्गात्रे दद्यादश्वहिरण्ये दक्षिणावत्सु* ॥ १७ ॥

उद्गात्रे दद्याद् यजमानः अश्वहिरण्ये अश्वञ्च हिरण्यञ्चाश्व-हिरण्ये दक्षिणावत्सु यज्ञेषु अथ दक्षिणावत्स्विति किमर्थम् अदक्षि-णेषु दानप्रसङ्ग एव नास्ति उच्यते, पश्यत्ययं सत्रेष्वङ्गदक्षिणाप्रसङ्गं तेन सत्यप्यङ्गदक्षिणाप्रसङ्गे सत्रेषु षोडशिन्यश्वहिरण्ये निवर्त्तयति ॥१७ ॥

सत्र एव ग्रहस्य भक्षयेयुरैन्द्रꣳसह इत्युदस्य हरिवद्-हरिकासु चेत् स्तुवीरन् † ॥ १८ ॥

षोडशिग्रहस्य सत्र एव भक्षयेयुः नेकाहाहीनेषु ऐन्द्रं सह इत्य-नेन यजुषा उदस्य हरिवद्धरिकासु स्तुवीरन् योऽस्मिन् यजुषि हरि-वच्छब्दः तम् उत्क्षिप्य उत्सृज्य यद्यहरिकासु ऋक्षु षोडशिनं स्तुवीरम् अथ पुनः हरिवतीषु स्तुवीरन् नैव हरिवच्छब्दमुदस्येयुः हरिवत् कृत-मेव मन्त्रं प्रयुञ्जीरन् अत्रैवशब्दः किमर्थं सत्र एवेति उच्यते, न केवलं षोडशिग्रहस्य अन्ये ये ग्रहास्तेषामपि च सत्र एव भक्षयेयुः नैकाहाहीनेषु एतस्यान्यतरस्मिन् व्यहे निग्राह्याणां द्रव्याणां भक्ष-येयुरित्येतदादिना ॥ १८ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अनुष्टुप्छन्दसा चमसस्य* ॥ १९ ॥

षोडशिनि स्तोत्रे यश्चमसः तस्यानुष्टुप् छन्दसा भक्षयेयुः ॥१९॥

पूर्वेण वा* ॥ २० ॥

मन्त्रेण चमसस्य भक्षयेयुः ऐन्द्रं सह इत्यनेन उदस्य हरिवद्-हरिकासु सुवीरन्नित्यनुषज्यतएव ॥ २० ॥

तथा कुर्वन्निन्द्रस्य सम्राड्वरुणस्य राजा तौ ते भक्ष्यं चक्रतुरग्र एतं तयोरहमनुभक्ष्यं भक्षयामि वाग्जुषाणा सोमस्य तृप्यन्त्विति ग्रहस्य* ॥ २१ ॥

तथा कुर्वन् पूर्वेण मन्त्रेण चमसस्य भक्षणम् इन्द्रस्य सम्राड्वरुणस्य राजेत्येतदादिना यथासूत्रितेन मन्त्रेण ग्रहस्य भक्षयेयुः ॥ २१ ॥

इन्द्रमिद्धेति वा वाग्देवी सोमस्य पिबत्वित्येतदधिकया* ॥ २२ ॥

इन्द्रमिद्धरिविदित्येतयर्चा वाग्देवी सोमस्य पिबत्वित्येतदधिकया भक्षयेदिति विकल्पः ॥ २२ ॥

---

* द्राह्यायणेऽप्येवम्।

ऐन्द्रं सद इति चमसस्य सत्रे त्रिष्टुप्छन्दसा वाजपेयसाम्नि भक्षयेदिति गौतमः* ॥ २३ ॥

वाजपेयसाम्नि त्रिष्टुप् छन्दसा इत्येव छन्द आदेशं कृत्वा भक्षयेदिति गौतम आचार्य्य आह तच्छन्दस्त्वात् स्तोत्रस्य ॥ २३ ॥

अनुष्टुप्छन्दसेति धानञ्जप्यशाण्डिल्यौ † ॥ २४ ॥

अनुष्टुप्छन्दसा वाजपेयसाम्नि भक्षयेदिति धानञ्जप्यशाण्डिल्यावाचार्यावाहतुः यदूर्द्ध्वमुक्थेभ्यः अनुष्टुभः सभाग इति अनुष्टुप् छन्दसा रात्रौ ॥ २४ ॥

अनुष्टुपछन्दसा रात्रौ † ॥ २५ ॥

न भक्षयेयुः अनुष्टुभत्वात् रात्रेः ॥ २५ ॥

पृथक् तृचेभ्यः सन्धौ हिं कुर्युः † ॥ २६ ॥

पृथङ्नानेत्यर्थः नानातृचेभ्यः सन्धौ हिंकुर्युः नानादैवत्यत्वात्तृचानाम् ॥ २६ ॥

इष्ट यजुष इति भक्ष्यः † ॥ २७ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

दृष्टयजुष इत्यनेन यजुषा सर्वो भक्ष्यः ॥ २७ ॥

गायत्रच्छन्दसातिरिक्तस्तोत्रेष्विति गौतमः* ॥ २८ ॥

अतिरिक्तस्तोत्रेषु गायत्रच्छन्दसा भक्षणमिति एवं गौतम आचार्य्यो मन्यते समाप्तेषु भक्षच्छन्दःसु पुनरुपक्रमे कोऽन्यो गायत्र्यात् स्यादिति ॥ २८ ॥

पृथग्भक्षच्छन्दोभिरनुपूर्वमिति धानञ्जप्यशाण्डिल्यौ* ॥२९॥

यानि चत्वारि भक्षच्छन्दांसि तैः पृथक् पृथक् आनुपूर्व्येण चतुर्व्वनवेत्य तदानुपूर्व्येण भक्षयेयुरिति धानञ्जप्यशाण्डिल्यावाचार्यावाहतुः सम्भवाच्च सर्वेषां भक्षच्छन्दसाम् अर्थाच्च, कोऽर्थः अग्न्यादीनां देवतानाञ्च छन्दोभावात् ॥ २९ ॥

अनुष्टुप्छन्दसा वा* ॥ ३० ॥

मन्त्रेण भक्षयेयुः अनुष्टुप्भागनिमित्तत्वात् यदूर्द्धमुक्थेभ्यः अनुष्टुभः सभाग इति ॥ ३० ॥

अच्छन्दसा वा* ॥ ३१ ॥

अच्छन्दसा वा मन्त्रेण भक्षयेयुः उपयुक्तत्वात् भक्ष्यच्छन्दसाम् ॥३१॥

---

* द्राह्यायणोऽप्येवम्।

सन्धिवद्वा* ॥ ३२ ॥

यथा वा सन्धौ तथा वा भक्षयेयुः प्रवृत्तत्वात् मन्त्रस्य अनुपदेशाद्वान्येषाम् ॥ ३२ ॥

इति तृतीयस्य प्रथमा कण्डिका ।

---

अथ द्वितीया कण्डिका ।

आहिताग्निरसोमयाजी परꣳ सोमेन याजयित्वा परिभक्षं कुर्वीत* ॥ १ ॥

उक्ताः षोडशिनो धर्माः सोमस्य च भक्षविधानमुक्तं यावदतिरिक्तोत्वाणोति साम्प्रतमुपरि भक्षविधानमुच्यते आहिताग्निः आहिता अग्नयो येन स आहिताग्निः असोमयाजी येन सोमेन दृष्टां स सोमयाजी न सोमयाजी असोमयाजी परम् अन्यं सोमेन याजयित्वा अपरिभक्षं कुर्वीत अपरिभक्ष इति कर्मणः संज्ञा परस्याग्निषु येन सोमो भक्षितः तेन स्वाग्नयः परिभक्षिताः पितरश्च तदपरिभक्षार्थमिदं कर्मारभ्यते ननु आहिताग्निग्रहणं किमर्थमिति यदा

---

* द्राह्यायणोऽप्येवम् ।

अवच्छ्यदसोमयाजीति नह्यनाहिताग्नेः सोमयागः स्यात् अन्यार्थे-
न वाहिताग्नित्वं विज्ञाप्यते इह गार्हपत्यदक्षिणाग्न्याहवनीयेषु आ-
ज्याधिश्रयणद्रप्सानिधानाज्यग्रहणान्यादेक्ष्यन्ते कृतायां प्रातराहु-
तावाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत् कंसे चमसे वा द्रप्सानवधाय
दक्षिणाग्नावुपसादयेत् स्फ्यदर्भमुष्टी च पश्चिमेन गार्हपत्यं गत्वा पश्चा-
दाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयाद्यावद्गृहीती स्यादिति
अस्य च कर्मणो नान्तरेणाहिताग्नेः प्रसिद्धिः तदेवमर्थादाहिताग्नित्वे
सिद्धे यदुच्यते आहिताग्निरित्येतदनर्थकं तस्मादाहिताग्निग्रहणं न
कर्त्तव्यं क्रियमाणे कारणं वक्तव्यम् उच्यते, यद्याहिताग्निग्रहणं न
कुर्य्यात् अनाहिताग्नेर्याजनप्रसङ्गो न स्यात् सोऽयमाहिताग्निग्रहणं
करोति आहिताग्निरसोमयाजी परं सोमेन याजयित्वा इत्थं कर्म
कुर्यात् अनाहिताग्निर्याजयित्वापि परं न वेदं कुर्य्यात् यावता
तस्याग्नयो नैव सन्ति येषामपरिभचार्थनैवेदं कर्म्म क्रियते अथा-
सोमयाजीति किमर्थं यावता वक्ष्यति सोमयाज्यपीति शाण्डिल्य
इति असोमयाजिग्रहणं कथमुच्यते अनिष्टप्रथमस्येदं कर्म स्यात्
इति सोमयाजी हि अनाहिताग्निरपि भवति सत्रेषु तथाप्यसा-
वसोमयाज्येव अथ परग्रहणं किमर्थं यदा याजयितृत्वं सिद्धमेतत्
परमिति उच्यते, परग्रहणं परमेव याजयित्वा न पितरं वा पुत्रं
वा भ्रातरं वेति निर्गुणः स्वजनः एभ्यो योऽन्यः परः पर एव सः ॥१॥

**सोमयाज्यपीति शाण्डिल्यः* ॥ २ ॥**

---

* द्राह्यायणोऽप्येवम्।

सोमयाज्यप्येतत् कर्म कुर्यादिति शाण्डिल्यः आचार्य आह, साम्प्रतमस्यापरिभवस्य कर्मणः कर्त्तव्यतोच्यते ॥ २ ॥

हुतायां प्रातराहुतावाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत्* ॥ ३ ॥

हुतायां प्रातराहुतौ हुतेऽग्निहोत्रे आज्यं घृतं गार्हपत्याग्नावधिश्रित्य उदक् उद्वासयेत् ॥ ३ ॥

कंसे चमसे वा द्रप्सानवधाय दक्षिणाग्नावपसादयेत्* ॥ ४ ॥

कंसे वा भाजने दारवे वा चमसे दधिद्रप्सानवधाय दध्यवयवान् दक्षिणाग्नेः समीपे स्थापयेत् ॥ ४ ॥

स्फ्यदर्भमुष्टी च* ॥ ५ ॥

स्फ्यश्च दर्भमुष्टिश्च स्फ्यदर्भमुष्टी दक्षिणाग्नेः समीपे स्थापयेत् ॥५॥

पश्चिमेन गार्हपत्यं गत्वा पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयाद्यावद्गृहीती स्यात्* ॥ ६ ॥

द्रप्सान् स्फ्यदर्भमुष्टी च स्थापयित्वा अनन्तरं पश्चिमेन प्रदेशेन

---

* द्राह्यायणेऽप्येवम् ।

गार्हपत्यस्य गत्वा आहवनीयस्य पश्चिमे प्रदेशे उपविश्य यत्तदाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासितं तस्मात् स्रुवेण स्रुचि गृह्णीयात् यावद्गृहीती स्यात् यदि चतुर्गृहीती यदि पञ्चगृहीती ॥ ६ ॥

तञ्जुहुयादिमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरमापिः पिता प्रमतिः सोम्यानां भृमिरस्यृषि कृन्मर्त्यानाꣳ स्वाहेति* ॥ ७ ॥

यदि चतुर्गृहीतं यदि पञ्चगृहीतं तञ्जुहुयादिमामग्ने इत्येतदादिना यथासूत्रितेन मन्त्रेण ॥ ७ ॥

एवमेव गृहीत्वापां पुष्पमस्योषधीनाꣳ रसोऽग्नेः प्रियतमा तनूरिन्द्रस्य प्रियतमꣳ हविः स्वाहेति* ॥ ८ ॥

एवमेव गृहीत्वा यदि चतुर्गृहीतं यदि पञ्चगृहीतं अपां पुष्पमित्येतदादिना यथासूत्रितेन मन्त्रेण जुहुयात् ॥ ८ ॥

आज्यस्य पूर्वान् ग्रहान् गृहीत्वा दध्न उत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति* ॥ ९ ॥

आज्यस्य पूर्वान् ग्रहान् गृहीत्वा यदि चतुर्गृहीतं त्रीनाज्यस्य

---

* द्राह्यायणोऽप्येवम् ।

गृहीत्वा दध्न उत्तमं यदि पञ्चगृहीतं चत्वार आज्यस्य गृहीत्वा दध्न उत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति अनेन यजुषा जुहुयात् ॥ ९ ॥

दधिशेषꣳ स्रुच्यानीयोदङ्ङावृत्य प्राश्नीयात्तव सोम व्रते वयं मनस्तनूषु पिप्रतः प्रजावन्तो अशीमहीति* ॥ १० ॥

दध्नो गृहीतावदानस्य अवयवः स्यात् तं स्रुच्यानीय स्रुचि कृत्वोदङ्ङावृत्य प्राश्नीयात् तव सोम व्रते वयमित्येतदादिना यथासूचितेन मन्त्रेण ॥ १० ॥

प्रक्षाल्य स्रुचं यथेतं प्रत्याव्रज्य प्राचीनावीती भूत्वा दक्षिणा दक्षिणाग्नेः स्थण्डिलꣳ समुह्याद्भिः सम्प्रोक्ष्य स्फ्येन सकृदुल्लिख्योल्मुकमुपनिधाय दर्भानुपस्तीर्याप उपनिनीयामीषां द्रप्सानान्निपृणुयादवमेभ्यः पितृभ्यः स्वधा सह भक्षेभ्य इति प्रथमम्* ॥ ११ ॥

प्राश्य दधिशेषम् आचम्य प्रक्षाल्य स्रुचं अद्भिस्तत्क्षणं सोचप्राग्नेः यथागतं प्रत्याव्रज्य दक्षिणाग्नेः समीपं प्राचीनावीतिलमुक्तं गृह्ये एवं प्राचीनावीती भवतीति तत्कृत्वा दक्षिणाग्नेः दक्षिणे प्रदेशे स्थण्डिलं समुह्य शोधयित्वा अद्भिः सम्प्रोक्ष्य स्फ्येन सकृदुल्लिख्य उल्लेखनं कृत्वा उल्मुकं उपनिधाय उल्मुकं लेखायाः समीपे निधाय दर्भा-

---

* द्राह्यायणोऽप्येवम्।

नुपस्तीर्य अपो निनीय दर्भेषु अमीषां द्रप्सानान्निपृणुयात् ये ते दधिद्रप्साः कंसे चमसे च कृत्वा दक्षिणाग्नेः समीपे स्थापिताः तेषामेकदेशं गृहीत्वा तेषु दर्भेषु निपृणुयात् निदध्यात् अवमेभ्य इत्यनेन यथासूचितेन मन्त्रेण प्रथमम् ॥ ११ ॥

ऊर्वेभ्यः काव्येभ्य इत्येवमेव दक्षिणा पृथक्* ॥ १२ ॥

योऽयं विधिरुक्तः प्रथमस्य निपरणस्य अनेनैव विधिना तस्य दक्षिणार्द्धे द्वितीयस्य निपरणं कुर्यादूर्वेभ्य इत्यनेन मन्त्रेण तदनन्तरमनेनैव विधिना तृतीयं निदध्यात् काव्यम् इत्यनेन उक्तं पितृभिरिति सर्वत्रानुसंहरेदित्येतदादि ॥ १२ ॥

अत्र पितरो मादयध्वं यथाभागमित्युक्त्वोदङ्ङावर्त्तेतासित्वा यावन्मन्येत तावदभिपर्य्या वर्त्तमानो जपेदमी मदन्त पितरो यथाभागमनन्तरिताः पितरः सोमपीथादिति †॥ १३॥

एवं सर्वेषां निधानं कृत्वा अत्र पितरो मादयध्वं यथाभागमित्युक्त्वा आसित्वा यावत् मन्येत तावत् यावन्तं मन्येत मनुष्याणां भोजनकालं तावन्तमासित्वा भुक्तं पितृभिरिति मत्वा ततः आभिमुख्येन पर्य्यावर्त्तमानो जपेत् अमीमदन्त पितर इत्येतं यथासूचितं मन्त्रम् ॥ १३ ॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायनेनैतेन सूत्रद्वयं कृतम्।

तान् दर्भान् द्रप्सांश्च दक्षिणाग्नौ प्रहरेत्* ॥ १४ ॥

तान् दर्भान् येषु निपरणं कृतं तांश्च द्रप्सान् ये निहिताः तान् दक्षिणाग्नौ प्रहरेत् प्रक्षिपेत् ॥ १४ ॥

इति तृतीयस्य द्वितीया कण्डिका ।

---

अथ तृतीया कण्डिका ।

अतोऽनन्तरं कर्त्तव्यमित्युच्यते ।

यज्ञोपवीती भूत्वाप उपस्पृश्य गृहान् व्रजञ्जपेद्गृहा मा बिभीत मावेपिढ्वमूर्जं बिभ्रत एवमस्यूर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा दैवेन येषामध्येति प्रवसन्नेषु सौमनसो बहुर्गृहानुपह्वयामहे तेनोजानन्तु जान उपहूता इह गाव उपहूता अजावयोऽथो अन्नस्य यो रस उपहूतो गृहेषु न इति* ॥ १ ॥

इह प्राचीनावीतिना कर्म्म कृतं पैतृकमनन्तरमाह यज्ञोपवीती भूत्वेति यज्ञोपवीती भूत्वाप उपस्पृश्य अपः स्पृष्ट्वा गृहान् व्रजन् जपति गृहामाबिभीतेत्येतदादि यथासूत्रितं मन्त्रम् अत्रोच्यते गृहान् व्रजन् जपेदित्याह अथेदं पूर्वं कर्म कस्मिंश्चिद्देशे कृतमिति

---

* द्राह्यायणोऽप्येवम् ।

येनेदानीमाह गृहान् व्रजन् जपेदिति तत्रैके तावद्वर्णयन्ति सोऽग्नि-होत्र एवासौ यज्ञभूमिगतः अतस्तस्मिन् देशे इदं कर्म कृतमिति अतोऽनन्तरं गृहान् व्रजन्निदञ्जपेदिति, अपरे वर्णयन्ति त्रेताग्निशरणं हविर्गृहेभ्यः पृथगेव भवति तस्मिन्निदं कर्म कृत्वा गृहान् व्रजन्नेत-ज्जपेदिति, उभयमविरुद्धम् ॥ १ ॥

पश्चाच्छालाग्नेरुपविश्य जपेदिह गावः प्रजायध्वमिहाश्वा इह पुरुषा इहो सहस्रदक्षिणोऽपि पूषा निषीदत्विति* ॥२॥

गृहान् प्रविश्य शालाग्नेः पश्चिमे प्रदेशे उपविश्य जपेदिह गावः प्रजायध्वमित्येतदादि यथासूचितम् ॥ २ ॥

अग्नेस्तृणानि प्रत्युह्य यः सुहृत्तमभिभाषेत* ॥ ३ ॥

शालाग्नेः समीपे यानि तृणानि प्रातर्होमस्तरणसम्बन्धीनि तानि प्रत्युह्य योऽस्य सुहृत्तस्य पिता वा पुत्रो वा भार्य्या वा तं प्रथम-मभिभाषेत ॥ ३ ॥

गोषु गा अपि सृजेदुपेदमुपपर्चनमासु गोषूपपृच्यता-मुपर्षभस्य रेतस्युपेन्द्र तव वीर्य्य इति* ॥ ४ ॥

गोषु गा अपिसृजेत् या अस्य स्वागावः तासु या दक्षिणा प्राप्ता-स्तामिश्रयेत् उपेदमुपपर्चनमिति यथासूत्रितेन मन्त्रेण ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम्।

सत्रेषु सर्वानध्वर्युर्दीक्षयेत्* ॥ ५ ॥

साम्प्रतमस्य गवामयनस्य विधिः विवक्षितः तं विवक्षुः सर्वसत्राणां सामान्यं विधानमारभते सत्रेषु सर्वानध्वयुर्दीक्षयेदिति सत्रेष्वित्यधिकरणे सप्तमी सर्वानिति निरवशेषवाची शब्दः सत्रेषु सर्वान् सत्रिणः अध्वर्युर्दीक्षयेत् ॥ ५ ॥

दीक्षिष्यमाणान्दर्शयेत् स्वस्त्यात्रेयमरुन्धतीं ध्रुवमुदपात्रं य एषोऽक्षिणि पुरुषो दृश्यते* ॥ ६ ॥

दीक्षिष्यमाणान् स्वस्त्यात्रेयादीनि दर्शयेत् दृशिरो प्रेक्षणे स्वस्त्यात्रेय आदर्शः ऋज्जन्यत् ॥ ६ ॥

नैतानि परासुः पश्यतीति † ॥ ७ ॥

किमर्थं पुनरेषां दर्शनमुच्यते नैतानि परासुः पश्यति येषां पराभूताः असवः प्राणाः मुमूर्षवस्ते स्वस्त्यात्रेयादीनि न पश्यन्तीति ॥ ७ ॥

तान्न दीक्षयेत् † ॥ ८ ॥

तान् परासून्न दीक्षयेत् कस्माद्यतः असमाप्ते सत्रे तेषां मृत्यु-

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

भंवति एतत् विधानं संवत्सरसत्रं यावद्गृष्ठ्यं ऊर्द्धं मृतस्य विधान-दर्शनात् ॥ ८ ॥

दीक्षिष्यमाणाः संवदेरन् सह नः साधुकृत्या नाना पाप-कृत्या यास्मिन् सत्रे* ॥ ९ ॥

दीक्षाकाले उपस्थिते संवदेरन् एतत् समयं कुर्युः सह नः साधु-कृत्याः साधूनां कर्मणां या क्रिया सा नः साधारणी या पापानां सा पृथक् अस्मिन् सत्रे ॥ ९ ॥

अथ यत् पुरा चकृम कर्त्तास्मस्य यथोपस्थितमेव नस्त-दिति* ॥ १० ॥

अथ यत्पुरासन्नाः कृतवन्तः कर्त्तास्मः यथोक्तं करिष्यामः यथोप-स्थितमेव नस्तदिति यद्यः करोति तस्यैव तदिति, ननु अनुक्तेऽप्येवमेव नह्यन्येन कृतमन्यस्मिन्नृच्छति कर्मकर्त्तारं गच्छति अचोच्यते, प्राक् सत्रदीक्षायाः तेषां साधारणं दृष्टकापशुर्भवति ऊर्द्धञ्च वक्ष्यति संवत्सरं संवसेयुर्द्वादशरात्रमहोरात्रौ वा यावद्वा सुनुयुरिति तत्का लनिवृत्यर्थमारभते यास्मिन् सत्रे इति ॥ १० ॥

तेषां दीक्षाप्रभृति पत्नीशालायां भोजनसंवेशने स्या-ताम्* ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम्।

तेषां सत्रिणां दीक्षामारभ्य पत्नीशालायां भोजनं संवेशनञ्च भवेतां प्रभृति शब्द आदौ ॥ ११ ॥

उपवसथ्यप्रभृत्याग्नीध्रीये* ॥ १२ ॥

उपवसथ्यादह्न आरभ्य सत्रिणां भोजनसंवेशने आग्नीध्रीये भवेयाताम् ॥ १२ ॥

सन्धिवेलयोर्वाचं यच्छेयुः* ॥ १३ ॥

द्वयोरपि सन्धिवेलयोर्वाग्यमनं कुर्य्युः आसूर्य्योदयादानक्षत्रदर्शनाच्च ॥ १३ ॥

विचक्षणान्तां वाचं भाषेरन्* ॥ १४ ॥

वाग्यमनादनन्तरं यां वाचं भाषेरन् तां विचक्षणान्तां विचक्षणमन्ते यस्याः सा विचक्षणान्ता, अपरे ब्रुवते विचक्षणान्तामिति साध्वन्तां वाचं ब्रूयुरिति पूर्वएव तु यः श्रेयान् तस्य साधुवचनप्रसङ्गोऽस्ति ॥ १४ ॥

न कञ्चनाभिवादयेरन्* ॥ १५ ॥

योऽप्यवश्यमभिवादनीयः तमपि नाभिवादयेरन् चनेत्ययं निपातः नेत्ययं प्रतिषेधः ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम् ।

न शूद्रेण सम्भाषेरन्* ॥ १६ ॥

न शूद्रेण सह सम्भाषणं कुर्युः ॥ १६ ॥

नाधिष्ण्य उत्तपेरन्* ॥ १७ ॥

ये परिगृहीता अग्नयः तान्मुक्त्वा अन्येष्वग्निषु नोत्तपेरन् ॥ १७ ॥

न प्रतीच्या द्वारा पत्नीशालाया निष्क्रामेयुः* ॥ १८ ॥

ऋज्वर्थः ॥ १८ ॥

प्राञ्चमुदञ्चं वोच्चारं कुर्वीरन्* ॥ १९ ॥

देवयजनस्य प्रागुदग्वा निष्क्रम्य मूत्रपुरीषे कुर्वीरन् ॥ १९ ॥

न बहु वदेयुः* ॥ २० ॥

नाप्रयोजनं बहु वदेयुः ॥ २० ॥

न दन्तान् दर्शयेरन्* ॥ २१ ॥

न कस्यचिद्दन्तान् दर्शयेरन् जायते वाव दीक्षयेति ॥ २१ ॥

नाहुतस्याश्नीयुः* ॥ २२ ॥

हविरुच्छिष्टभक्षाः स्युः ॥ २२ ॥

---

* द्राह्यायणोऽप्येवम्।

ननानन्यो अतः पश्येत्* ॥ २३ ॥

नैनान् भुञ्जानानन्यः पश्येत् परिवेष्टृभ्योऽन्यत्र ॥ २३ ॥

सर्वेषां सवनानां प्राश्नीयुः* ॥ २४ ॥

सर्वेषां सवनानां सवनमुखीयान् भक्षयित्वा सन्नेषु नाराशंसेषु भोजनं कुर्युः ॥ २४ ॥

क्रोधानृते वर्जयेयुः* ॥ २५ ॥

स्पष्टार्थः ॥ २५ ॥

एतानि व्रतानि दीक्षासु † ॥ २६ ॥

एतानि यथोद्दिष्टव्रतानि दीक्षासु भवन्ति ॥ २६ ॥

दीक्षोपसत्सु वा † ॥ २७ ॥

अथवा दीक्षासु चोपसत्सु च ॥ २७ ॥

आवा सत्रान्तात् † ॥ २८ ॥

यावद्वा सत्रसमाप्तिरिति एतानि यथासम्भवं स्युः ॥ २८ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे एतदत्र नास्ति ।

उदयास्तमयावभ्याश्रावणञ्च बहिर्वेदि प्रसूते वर्जयेयुः* ॥ २८॥

आदित्यस्य उदयास्तमयौ अभ्याश्रावणञ्च हविषः प्रसूते सुत्यासु बहिर्वेदि वर्जयेयुः एतेषु कालेषु बहिर्वेदिस्थानमासनं वा वर्जयेयुः॥२८॥

इति तृतीयस्य तृतीया कण्डिका ।

अथ चतुर्थी कण्डिका ।

तेषाञ्चेदेनाऽन्यतमयाणां किञ्चिदेयाद् गृहपतावुपह्वमिच्छेरन् † ॥ १ ॥

तेषां उदयास्तमयाभ्याश्रावणानां बहिर्वेदि स्थानं किञ्चिदागच्छेत् गृहपतावुपह्वमिच्छेरन् उपह्वे गृहपतिरधिकरणभूतः गृहपतेः सकाशादुपह्वमिच्छेयुः ॥ १ ॥

तञ्चेदुद्गातरि † ॥ २ ॥

तं यदि गृहपतिः एषां त्रयाणां किञ्चिदागच्छेत् उद्गातुः सकाशादुपह्वं गच्छेत् ॥ २ ॥

दीक्षानुपूर्व्येण वा सर्वेषाम् † ॥ ३ ॥

---

* द्राह्यायणे विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

दीक्षानुपूर्व्येण वा यो यस्यानन्तरं दीक्षितः स तस्मादुपह्वमिच्छेत् ॥ ३ ॥

परिहृतासु वसतीवरीषु संविशेयुः* ॥ ४ ॥

वसतीवरीपरिहरणे कृते ततः स्वपेयुः ॥ ४ ॥

तेषाञ्चेत् कश्चित् प्रेयादतीर्थेन निर्हृत्याहार्येणानाहिताग्निं दहेयुः* ॥ ५ ॥

तेषां सत्रिणां यदि कश्चित् म्रियेत तमतीर्थेन निर्हृत्य निष्क्राम्य आहार्येणाग्निना अनाहिताग्निन्दहेयुः तेषां सत्रिणां आहार्येण लौकिकेनेत्येतद्विधानं अनाहिताग्नेरपि सत्रासनं दर्शयति ॥ ५ ॥

अरण्योरग्नीं समारोप्य ते आम्नानेन निर्हृत्य निर्मन्थ्येनाहिताग्निम्* ॥ ६ ॥

अरण्योः अग्नीन् समारोपणं कृत्वा मन्त्रवत्ते अरणी आम्नानेन तीर्थेन निर्हृत्य निर्मन्थ्येनाग्निना आहिताग्निं दहेयुः ते इति किमर्थम् उच्यते, प्रेतोऽत्राधिकृतः अतस्ते इत्याह, ते अरणीतीर्थेन निर्हरेयुः नत्वाहिताग्निमपि तीर्थेन, ननु यदा तावदुक्तं दीक्षिष्यमाणान् दर्शयेत् स्वस्त्यात्रेयादीनि नैतानि परासुः पश्यतीति तान्न दीक्षयेदिति तददर्शिता नैव दीक्षन्ते तत् किमिदमारभ्यते तेषाञ्चेत्

---

* द्राह्यायणेऽप्येवम् ।

कस्मित् प्रेयादित्यादि अथ पुनस्तद्दर्शितोऽपि म्रियन्ते ततः तद्विधानानर्थक्यम् उच्यते यान्येतानि निमित्तानि तानि परिमित-कालानि तेषां दीर्घसत्रेष्वसम्भवः अतोविधानं तदर्थम् ॥ ६ ॥

मध्यमस्य रात्रिपर्य्यायस्य दैवोदासं होतृषाम स्याद्दैर्घ्य-सद्मनं वा* ॥ ७ ॥

इह सत्रिप्रकरणे मध्यमे पर्य्याये द्वे होतृषामनी पठिते तयोश्च द्वयोरेकस्मिन् क्रतौ सम्भवो नास्ति एकार्थत्वात् अतो ब्रवीति दैवो-दासं होतृषाम स्याद्दैर्घ्यसद्मनञ्चेति विकल्पयति सत्रे ॥ ७ ॥

अभिप्लवस्य द्वितीयेऽहनि भर्गोयशसी इति प्राग्विषुवतो व्यत्यासं स्यातामिति गौतमः* ॥ ८ ॥

इह मशकः पठत्याभिप्लविके द्वितीयेऽह्नि परितोषिञ्च तासु तं मिति माधुच्छन्दसञ्च भर्गश्च यशो वेति तत् किमयं विनिवेशार्थं विभाषितः अथैकत्र यद्द्वयमेव विकल्पयति सोऽयमाचार्य्यो विनिवेशं विकल्पयति अभिप्लवस्य द्वितीयेऽहनि भर्गो यश इति प्राग्विषुवतो-व्यत्यासं स्यातामिति ये प्राग्विषुवतोऽभिप्लवाः तेषु भर्गस्य यशसीति द्वितीयेऽहनि व्यत्यासं स्यातामिति प्रथमे भर्गः द्वितीये यश इति ॥८॥

ऊर्द्धञ्च त्रिष्वभिप्लवेषु* ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम्।

ऊर्ध्वञ्च विषुवतः ये त्रयोऽभिप्लवाः तेषु च भर्गो यशो भर्ग इति ॥ ९ ॥

यशोभर्ग इति परेषु* ॥ १० ॥

तेषामप्यूर्द्ध्वं येऽभिप्लवाः उत्तरस्मिन् पक्षसि † तेषु यशो भर्ग इत्येवं व्यत्यासः स्यात् ॥ १० ॥

सकृद्द्विर्वा यशः पुरस्तात्तथोपरिष्टाद्भर्ग इतरेष्वित्यपरम्* ॥ ११ ॥

अपरमन्यद्विधानं सकृद्द्विर्वा यशः पुरस्ताद्भवेत् तथोपरिष्टाद्विषुवतः त्रिष्वभिप्लवेषु सकृद्द्विर्वा यशो भवेत् भर्ग इतरेषु अभिप्लवेषु स्यात् ॥ ११ ॥

भर्गः पूर्वस्मिन् पक्षसि यश उत्तरस्मिन्नित्यपरम्* ॥ १२ ॥

अपरम् अन्यत्तृतीयं विधानं भर्गः पूर्वस्मिन् पक्षसि स्यात् यश उत्तरस्मिन्निति अभिप्लवेष्विति प्रकृतम् ॥ १२ ॥

एताभ्यामुक्ते वीङ्क प्राङ्वाप्राङ्वोये* ॥ १३ ॥

---

* द्राह्यायणोऽप्येवम् ।

† पक्षसीत्यसंस्कृतः पाठः पक्षे इति साधुः किन्तु पञ्चसु पुस्तकेष्वप्यनेकत्र सूत्रे वृत्तौ चैवं दर्शनात्तथैव रक्षितः ।

आभिप्लविक एवं चतुर्थेऽहनि पठति वौङ्कशृङ्गाशृङ्गीयञ्चेति तयोरप्येत एव विकल्पाः स्युः ये भर्गयशसः ॥ १३ ॥

विषुवत ऊर्द्ध्वं वौङ्कमेव स्यादिति धानञ्जप्यः* ॥ १४ ॥

विषुवत ऊर्द्ध्वं येऽभिप्लवास्तेषु वौङ्कमेव स्यात् न शृङ्गाशृङ्गीयम् इत्येवं धानञ्जप्य आचार्यो मन्यते एवशब्दोऽवधारणार्थः ॥ १४ ॥

पञ्चमे यदहर्ग्रामे गेयꣳ सन्ततिः स्यान्मानवात्पूर्वञ्चाम्रꣳ स्यात्* ॥ १५ ॥

पञ्चमेऽभिप्लवे यस्मिन्नहनि ग्रामे गेयं सन्ततिः स्यात् तस्मिन्मानवात् पूर्वञ्चाम्रं स्यात् इहत्याम् अजाम्यर्थेन उत्तमर्षासोम द्युमत्तम इति गायत्रञ्च य एवञ्चापत्यं सन्ततिः शाक्वरवर्णान्तान्युत्तरेष्विति ॥ १५ ॥

इषोवृधीयसमन्ते पृष्ठ्यानन्तर्ये षष्ठे* ॥ १६ ॥

एवं मशकः पठति आभिप्लविके षष्ठेऽहनि इन्द्रायेन्दो मरुत्वत इति गायत्रञ्चाश्वसूक्तञ्च सकृदिषोवृधीयं कुर्यात् मृज्यमानः सुहस्त्येत्यैडञ्चौरोरन्धं त्रिनिधनञ्चाप्यास्यं सकृत् समन्तं कुर्यात् सकृत् सकृदित्युक्तेन वै स्पष्टं कतरस्मिन्नभिप्लव इति सोऽयमाचार्यः स्पष्टी-

---

* द्राह्यायणोऽप्येवम्।

करोति पृष्ठ्यानन्तर्ये षष्ठेऽहनि इषोवृधीयञ्च समन्तञ्च इषोवृधीयसमन्ते यस्याभिप्लवस्यानन्तरः पृष्ठ्यः स्यात्तस्य षष्ठेऽहनि कुर्य्यात् अथ षष्ठग्रहणं किमर्थमिति चेत् यदा षष्ठे विषये एव एते उक्ते उच्यते आवृत्तस्याप्येतस्मिन् पक्षसि नियमार्थम् ॥ १६ ॥

पूर्वस्मिन् पक्षसि त्रिषु चतुर्थोऽभिप्लवो लुप्येत* ॥ १७ ॥

पूर्वस्मिन् पक्षसि षष्ठे मासि त्रीनभिप्लवान् पठति तत्र त्रिषु कर्त्तव्येषु प्रथमो लुप्यताम् उतान्य इति संशयः सोऽयमाचार्य्य आह त्रिषु कर्त्तव्येषु चतुर्थो लुप्येत शाक्वरवर्णवानिति ॥ १७ ॥

एत एवावृत्ताऊर्द्ध्वं विषुवतोऽभिप्लवाः* ॥ १८ ॥

य एते पूर्वस्मिन् पक्षसि अभिप्लवा अनुक्रान्ताः एत एव सर्वे उत्तरस्मिन् पक्षसि आवृत्ता भवेयुः उत्तमादुत्तमादारभ्येरन् नतु प्रतिमासम् ॥ १८ ॥

तेषां प्रतिलोममहान्युपेयुः* ॥ १९ ॥

तेषामभिप्लवानाम् आवृत्तानां सताम् अहान्यपि प्रातिलोम्येन कुर्युः षष्ठादह्न आरभ्य प्रातिलोम्येन यावत् प्रथमम् ॥ १९ ॥

पृष्ठ्यस्वरसाम्नाञ्च* ॥ २० ॥

---

* द्राह्यायणोऽप्येवम् ।

पृष्ठ्यस्य स्वरसामानस्य पृष्ठ्यस्वरसामानः तेषां पृष्ठ्यस्वरसाम्नां उत्तरस्मिन् पञ्चसि प्रातिलोम्येन अहान्युपेयुः ॥ २० ॥

दशरात्रसमीपे त्रिषु चतुर्णामावृत्तानां प्रथमो लुप्येतेति धानञ्जप्य उत्तम इषोवृधीयसमन्ते स्यातामिति* ॥ २१ ॥

दशरात्रस्य सन्निकर्षे ये गोआयुषः पूर्वास्वयोऽभिप्लवाः तेषु चतुर्णामावृत्तानां यः प्रथमः स लुप्येत एवं धानञ्जप्यो मन्यते उत्तमे चाभिप्लविके उत्तमे इषोवृधीयसमन्ते स्यातामिति ॥ २१ ॥

विपरीतमेतच्छाण्डिल्यायनस्य † ॥ २२ ॥

एतद्विधानं विपरीतं शाण्डिल्यायनस्य विपर्ययः प्रातिलोम्यं उत्तमो लुप्येत प्रथम इषोवृधीयसमन्ते स्यातामिति ॥ २२ ॥

विषुवत्समीपे च † ॥ २३ ॥

विषुवत्समीपे च येऽभिप्लवास्त्रयस्तेषु चैवमेव शाण्डिल्यायनस्य ॥ २३ ॥

त्रिष्वभाव इषोवृधीयसमन्तयोः † ॥ २४ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

त्रिष्वभिप्लवेषु कर्त्तव्येषु अभावः अक्रिया दूषोवृधीयसमन्तयोः ॥ २४ ॥

भावस्त्वाचार्य्याणां भावस्त्वाचार्य्याणाम्* ॥ २५ ॥

दूषोवृधीयसमन्तयोः भावः आचार्य्याणां मतेन, तुशब्द अक्रियापेक्षानिवृत्यर्थः ॥ २५ ॥

इति तृतीयस्य चतुर्थी कण्डिका ।

---

अथ पञ्चमी कण्डिका ।

पृष्ठ्ये रथमतिवह्येयुः पश्चात् प्राञ्चं दक्षिणतो वोदञ्चं बहिर्वेदि रथन्तरस्य स्तोत्रे* ॥ १ ॥

अभिप्लवे ये संशयास्ते निर्णीताः साम्प्रतं पृष्ठ्यस्य धर्म्मा विवक्षिताः तद्विवक्षुराह पृष्ठ्ये रथमतिवह्येयुरिति दूह ब्राह्मणं प्रजापतिर्वा एतां गायत्रीं योनिमपश्यत् स आदीधीतास्माद्योनेः पृष्ठानि सृजा इति स रथन्तरमसृजत तद्रथस्य घोषोऽन्वसृज्यतेत्येतदादि षण्णां पृष्ठानां रथन्तरादीनां घोषादयो धर्म्मा ज्योतिष्टोमप्रकरणे आम्नाताः तेषाञ्च समुदितानामसम्भवः ज्योतिष्टोमे तैश्च धर्म्मैः प्रतिप्रयोगमवश्यं

---

* द्राह्यायणोऽप्येवम् ।

भवितव्यं ततः तत्प्रत्यनुष्ठेयाः यावता अनुब्राह्मणस्यान्तर्घोषाः पृष्ठ-धर्म्माः तत्प्रत्यनुष्ठेया इति तेषां समुदितानां प्रयोगविषयोऽयं विधि-स्तमाह पृष्ठ्ये रथमतिवहेयुरिति अत्रोच्यते, तत् किमिदं पृष्ठ्यग्रहणं यावता अभिप्लवस्यानन्तरः पृष्ठ्य एव आभिप्लविकस्तु विधिरुक्तः त-च्छेषो विधिरुच्यमानः आनन्तर्यादत्र पृष्ठ्यो भवत्येव वैरूपादीनाञ्चा-सम्भवादभिप्लव इति उच्यते पृष्ठ्यग्रहणं क्रियते विशेषविध्यर्थं पृष्ठ्यानां समस्तानां धर्म्मार्थं पृष्ठान्यस्मिन् सन्तीति पृष्ठ्यः एतद्दर्शयति यत्र यत्र समुदितानि पृष्ठानि भवेयुः तत्र तत्र धर्मा भवेयुरिति यथा विश्वजिति विश्वजिच्छिल्पोऽप्तोर्यामीति पृष्ठ्य इत्यधिकरणे सप्तमी आधारोऽधिकरणं आध्रियते रथघोषादयो धर्मा रथमतिवहेयुः शीघ्रं वहेयुः पश्चात्प्राञ्चन्देवयजनस्य पश्चात् प्राङ्मुखं वहेयुः दक्षिणतो वा उदञ्चम् अतिवहेयुः बहिर्वेदि वेदेर्बहिः रथन्तरस्य स्तोत्रे रथन्त-रस्य साम्नः स्तोत्रे स्तूयमाने आस्तोत्रान्तात् ॥ १ ॥

बृहतो दुन्दुभिमाहन्युः* ॥ २ ॥

बृहतः स्तोत्रे स्तूयमाने दुन्दुभिमाहन्युः स्तनयित्नुशब्दोऽनुकर्ष-णार्थः नहि शक्यं स्तनयित्नुशब्दं बलादुपपादयितुम् अतो दुन्दुभिं वादयेयुः बहिर्वेदीति प्रकृतम् ॥ २ ॥

उपवाजयमाना वैरूपेण स्तुवीरन्नुपवाज्यमाना वा* ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम्।

व्यजनेन इतरेतरम् उपवाजयमानाः सन्तः वैरूपेण साम्ना स्तुवीरन् अन्यैर्वोपवाज्यमानाः इतरेतरमेकेन व्यजनेन ॥ ३ ॥

वाचयित्वा यजमानं स्तुतमसीत्यनेन वातआवात्विति तृचेनानुमन्त्रयेत्* ॥ ४ ॥

कतमस्यानुमन्त्रणं व्यजनस्य यो घोषवाहः ॥ ४ ॥

वैराजस्य स्तोत्र उपाकृत उपर्य्यनूरुसकलं निधाय तृणे च तस्योपरि तिरश्चीमरणिं निधायाभ्यात् संप्रजननं कृत्वा त्रिः प्रदक्षिणमभिमन्थेद्गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभं वैराजमिति गौतमः* ॥ ५ ॥

वैराजस्य साम्नः स्तोत्रे उपाकृते पुरस्ताज्जपं जपित्वा उरोरुपरिष्टात् सकलम् आनुलोम्येन निधाय प्रस्थापयित्वा तृणे च तस्य सकलस्योपरि तिरश्चीमरणिं स्थापयित्वा अभिमुखमात्मनः अग्नेः प्रजननं कृत्वा येन प्रदेशेनाग्निः अवतार्य्यते तदुत्तरारण्या त्रिः प्रदक्षिणमभिमन्थेत् गायत्रं छन्दोऽनुप्रजायस्वेत्येतदादिना मन्त्रेण एवं गौतम आचार्य्य आह ॥ ५ ॥

चतुर्भिरिति धानञ्जप्यः* ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम् ।

चतुर्भिश्छन्दोभिरिति धानञ्जय्य आचार्यो मन्यते गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभमिति ॥ ६ ॥

त्रिभिरिति शाण्डिल्यः* ॥ ७ ॥

त्रिभिश्छन्दोभिरिति शाण्डिल्य आचार्य्य आह, गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमिति क्रियायाः सर्वत्रानुवचनम् ॥ ७ ॥

अरण्योः सन्धानमालभ्योपजिघ्रेत् तेजोऽसि तेजो मयि धेहीति* ॥ ८ ॥

अरण्योः सन्धानमालभ्य स्पृष्ट्वा उपजिघ्रेत्तेजोऽसि तेजो मयि धेहीत्यनेन मन्त्रेण, घ्रा गन्धोपादाने ॥ ८ ॥

मथ्यमाने स्तोमं युञ्ज्यात्* ॥ ९ ॥

मथ्यमानेऽग्नौ यथाविधानं स्तोमयोजनं कुर्य्यात् ॥ ९ ॥

जाते स्तुवीरन्* ॥ १० ॥

जातेऽग्नौ स्तुवीरन् अग्निघोषे ॥ १० ॥

वाचयित्वा यजमानं पुनरूर्जा निवर्त्तस्व पुनरग्न इषायुषा पुनर्नः पाह्यंहसः सह रय्या निवर्त्तस्वाग्नेऽपिन्वस्व धारया

---

* द्राह्यायणोऽप्येवम् ।

विश्वस्या विश्वतस्परीत्यनुमन्त्याभिजुहुयात् तदुक्तं ब्राह्मणेन* ॥ ११ ॥

वाचयित्वा यजमानं सुतस्य सुतमसीति पुनरूर्जा निवर्त्तस्वेत्येतदादिना यथासूचितेन मन्त्रेण अग्निमनुमन्त्य प्राहरत्याहवनीये आज्येनाभिजुहुयात् तदुक्तं ब्राह्मणेन प्रेद्धो अग्ने दीदिहि पुरो न इति विराजाभिजुहोतीति ॥ ११ ॥

स्वाहाकारेणोत्तराम्* ॥ १२ ॥

उत्तरामाहुतिं स्वाहाकारेण जुहुयात् आगत्योपरिष्टाज्जपः ॥ १२ ॥

अपः सावका उपनिधाय महानाम्नीभिः स्तुवीरन्* ॥१३॥

अप इति कर्मणि द्वितीया सह अवकाभिः सावकाः अवकाः सैवालाः ॥ १३ ॥

यो यः सामाङ्गं ब्रूयात् स उद्घोषं जनयेत्* ॥ १४ ॥

यो यः स्वभक्तिं ब्रूयात् स उद्घोषं कुर्य्यात् निधने तु सर्वे ॥ १४ ॥

---

* द्राह्यायणेऽप्येवम्।

वाचयित्वा यजमानं ता निनयेदास्तावेऽनाधृष्टासि तान्वा सोमोराजावनुयाम पीता उपतिष्ठन्त आपोये शाक्करा ऋषभा ये स्वराजस्ते अर्षन्तु ते वर्षन्तु ते कृण्वन्त्विषमूर्जꣳ राय-स्पोषन्तद्विदेयेति* ॥ १५ ॥

वाचयित्वा यजमानं आपः अवकामिश्रा निनयेत् निक्षिपेत् आ-स्तावे अनाधृष्टासीत्येतदादिना यजुषा यथासूचितेन आस्तावस्था-त्वालदेशे प्रसिद्धः ॥ १५ ॥

समन्यायन्तीति वा † ॥ १६ ॥

समन्यायन्तीति एतयर्चा वा निनयेत् ॥ १६ ॥

समुद्रं वः प्रहिणोमीति वा † ॥ १७ ॥

समुद्रं वः प्रहिणोमीत्येतदादिना यजुषा वा निनयेत् ॥ १७ ॥

सर्वैर्व्वा* ॥ १८ ॥

सर्वैर्व्वा निनयनमन्त्रैः अनाधृष्टासीत्येतदादिभिः निनयेत् ॥ १८ ॥

अष्ठीवतोरवका उपोह्येरन्* ॥ १९ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

३०

सर्वेऽर्वा अष्ठीवतोरङ्गप्रदेशयोः स्थापयेयुः अष्ठीवतोरिति जानुभ्यामुपरि ॥ १९ ॥

छदिषि वर्षकामोऽध्यासयेदिति शाण्डिल्यः* ॥ २० ॥

छदिषि छादनस्योपरि वर्षकामः निदध्यात् एवं शाण्डिल्य आचार्य्य आह ॥ २० ॥

गोष्ठे पशुकामः* ॥ २१ ॥

अवका निदध्यात् ॥ २१ ॥

सभायां यशस्कामः* ॥ २२ ॥

यशस्कामः सभायामवका निदध्यात् ॥ २२ ॥

श्मशानेऽभिचरन्* ॥ २३ ॥

अभिचरन् अभिचारं कुर्वन् श्मशाने अवका निदध्यात् श्मं शरीरं तद्यस्मिन् शेते तत् श्मशानम् ॥ २३ ॥

इति तृतीयस्य पञ्चमी कण्डिका ।

---

* द्राह्यायणेऽप्येवम् ।

अथ षष्ठी कण्डिका।

वारवन्तीयस्य स्तोत्रे धेनुः संवाशयेयुर्दक्षिणतः कृत्वो-त्तरतो वत्सान्* ॥ १ ॥

उक्तं स रेवतीरसृजत तद्वत्वा घोषोऽन्वसृज्यतेति तास्तु रेवत्यः पवमाने प्रयुज्यन्ते रथन्तरादीनां पञ्चानां पृष्ठानां पृष्ठस्थानेषु प्रयुज्य-मानानां सन्निधौ रथव्यतिवर्त्तनादयो धर्म्माः प्रयुक्ताः तत्सन्निधित्वात् धर्म्माणां किं सन्निधौ रेवतीनां पवमान एव क्रियते धर्माः अथ पृष्ठस्थाने इत्यत्राह, वारवन्तीयस्य स्तोत्रे धनूः संवाशयेयुरिति अपां वा एष रसो यद्रेवत्यो रेवतीनां रसो यद्वारवन्तीयमिति रेवतीनां वारवन्तीयं रसः सारमिति तद्वारवन्तीयमिति सन्निधौ प्रयुज्यमाना रेवत्यः प्राप्नुवन्ति वारवन्तीयस्य साम्नः स्तोत्रे धेनुः संवासयेयुः कथं संवासयेयुः देवयजनस्य दक्षिणे प्रदेशे कृत्वा गा उत्तरतो वत्सान् कृत्वा ॥ १॥

पूर्वेण सदः संसृज्य पश्चिमेनाग्नीध्रीयमुदीचीरत्यजेयुः* ॥२॥

समाप्ते स्तोत्रे सदसः पूर्वे प्रदेशे मिश्रयित्वा वत्सैः समाधाय आग्नीध्रीयस्य पश्चिमे प्रदेशे उदीचीन्दिशं प्रति प्रस्थापयेयुः निष्काल-येयुः इदमुद्गातृकर्म तत्संयोगात् रथप्रवर्त्तनादिधेन्वन्ताः पृष्ठधर्माः

---

* द्राह्यायणोऽप्येवम्।

सर्वत्र भवेयुः तेषामुपदिष्टत्वात् यस्य येन कर्मणा संयोगः सतद्द्रव्यं लभते प्रतिस्तोत्रमुद्गात्रे एतत् दद्यात् ॥ २ ॥

वाचयित्वा यजमानं गोनामभिरनुमन्त्रयेत हव्ये काम्ये चन्द्रे ज्योत इडेरन्ते जुष्टे स्वर्मारि मयि वोरायः अयन्तामिड़ एह्यदित एहि जुष्टे जुष्टिन्ते गमेयमुपहूता उपह्वं वोऽशी-येति* ॥ ३ ॥

वाचयित्वा यजमानमुद्गाता गाः गोनामभिरनुमन्त्रयेत हव्ये काम्ये इत्येतदादिभिर्यथासूचितैः अत्रोच्यते गोनामभिरिति कि-मर्थं यदा सर्वाणि निर्दिष्टान्येव, उच्यते गोनामग्रहणं संव्यवहारा-र्थम् अन्यत्रापि यत्र गोनामानीति ब्रूयात् तत्रैतान्येव प्राप्तव्यानि यथा दक्षिणेऽस्याः कर्णे गोनामानि जपित्वेति यानि च प्रकरणाम्ना-तान्येव तानि च ॥ ३ ॥

सहर्षभा इति वा* ॥ ४ ॥

सहर्षभा इत्येतयर्चा वा उपमन्त्रयेत् ॥ ४ ॥

उभाभ्यां वा* ॥ ५ ॥

सहर्षभा हव्ये काम्ये इत्येतदादिना मन्त्रेण वानुमन्त्रयेत् ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम्।

अद्भिश्चेदुपाकुर्युस्तानिनयेदास्तावे आपोहिष्ठीयाभिः* ॥६॥

यद्यद्भिरुपाकरणं कुर्युरध्वर्यवः ता आपः निनयेदास्तावे आपोहिष्ठीयाभिः ऋग्भिः अद्भिरुपाकरणस्य कः सम्बन्धः आपोवै रेवत्य इति ॥ ६ ॥

षष्ठेऽहनि सꣳस्थितेऽबह्वादिनः स्युर्न्न चाधीयीरन्नोत्तरस्याह्न उपाकरणात् † ॥ ७ ॥

ब्राह्मणे च ऊरुषी वा एतर्हि वाग्यदा षडहः सन्तिष्ठते न बह्वदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयात् मधु वाग्नये घृतं वा यथोरुषेवहं प्रत्यनक्ति तथा तदिति एते संस्थाधर्म्माः सूयन्ते अत आह षष्ठेऽहनि संस्थितेऽबह्वादिनः स्युरिति षष्ठेऽहनि समाप्तेऽबह्वादिनः स्युः न चाधीयीरन् आ उत्तरस्याह्न उपाकरणात् उपाकरणं नाम प्रारम्भः एतद्दर्शयति अन्येद्युरहःसमाप्तिष्वध्ययनं कुर्वीतेति अथ षष्ठग्रहणं किमर्थमिति उच्यते नियमार्थमेव यदा षड़हः सन्तिष्ठतइति तदा वृत्तस्य प्रथमेऽहनि संस्थानं तत्र संस्थाधर्म्माः प्राप्नुवन्ति सोऽयमाचार्य्यः षष्ठग्रहणं करोति कथं आवृत्तेऽप्येतस्मिन् स्युरिति एतदावृत्तेरूपं य इह उपक्रमधर्म्मास्ते आवृत्तेः संस्थाधर्माः ये तत्र संस्थाधर्मास्ते इह उपक्रमधर्मा इति ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

सर्पिर्मधुभ्यामृत्विजोभोजयेदहीनेषु* ॥ ८ ॥

सर्पिषा मध्वा च यजमानः ऋत्विजो भोजयेदहीनेषु सर्पिरिति घृतस्य पर्यायः ॥ ८ ॥

अन्यतरेण वा* ॥ ९ ॥

सर्पिषा मध्वा वा एकेन भोजयेत् ॥ ९ ॥

सर्पिषैव तृतीयसवने सत्त्रेषु † ॥ १० ॥

सर्पिषैव तृतीयसवने भोजनं सत्रिणाम् एवशब्दो मधु निवर्त्तयति अथ तृतीयसवनग्रहणं किमर्थमिति चेत् उच्यते षष्ठेऽहनि संस्थिते एतेनोक्तं तत् सत्त्रेषु यदेव तार्त्तीयसवनीकभोजनमुपदिष्टम् तदेव सर्पिषा स्यात् तत् संस्थितेऽहनि भोजनमस्तु सत्रिणां न अनुसवनन्तु सत्त्रेष्विति तद्यथाकाम्यादेवेति ॥ १० ॥

एतस्यान्यतरस्मिꣳस्त्र्यहेति ग्राह्याणां भक्षयेयुः स्तुत्वा पृष्ठेन † ॥ ११ ॥

एतस्य पृष्ठ्यस्य षड़हस्य अन्यतरस्मिंस्त्र्यहे अतिग्राह्याणां भक्षयेयुः अतिग्राह्या ग्रहाः अतिरिक्ताः प्रकृतेभ्यो गृह्यन्ते इत्यतिग्राह्या यस्मिं-स्त्र्यहे गृह्येरन् तस्मिंस्तेषां भक्षयेयुः, कस्मिन् काले स्तुत्वा पृष्ठेन ॥११॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

विषुवद्गतयोश्च* ॥ १२ ॥

विषुवद्गतयोश्च अतिग्राह्याणां भक्षयेयुः ॥ १२ ॥

त्रिष्टुपच्छन्दसा † ॥ १३ ॥

त्रिष्टुपछन्दसा मन्त्रेण भक्षयेयुः ॥ १३ ॥

पूर्वं चमसेभ्यः † ॥ १४ ॥

पूर्वं सर्वचमसेभ्यो भक्षयेयुः ॥ १४ ॥

अन्यत्र चैतस्मिन् काले यानाहरेयुः* ॥ १५ ॥

अन्यत्र च अन्ययज्ञेषु च एतस्मिन् काले यान् ग्रहान् भक्षानाहरेयुस्तेषां त्रिष्टुपच्छन्दसा पूर्वं चमसेभ्यो भक्षयेयुः ॥ १५ ॥

सह धर्मैः सर्वत्र पृष्ठ्यः स्यात्* ॥ १६ ॥

एते पृष्ठ्यस्य धर्मा गवामयनप्रकरण आम्नाताः एते यत्र यत्र पृष्ठाः प्रयुज्यन्ते तत्र तत्र स्युर्न केवलं गवामयने ॥ १६ ॥

दशमव्रते च* ॥ १७ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

दशमञ्चाहव्रतञ्च यत्र यत्र क्रियेतां तत्र तत्र सहधर्म्मौं ॥ १७ ॥

आभीवर्त्तस्तोत्रीयानाभिप्लविकान् पृष्ठ्ये संशयेद्ब्राह्मणाच्छंसिना कालेयर्चोऽच्छावाकेन सर्व्वत्र यदा पवमाने स्याताम्* ॥ १८ ॥

ये आभीवर्त्तस्तोत्रीयाः आभिप्लविकाः तान् सर्वत्र पृष्ठ्ये संशयेत् ब्राह्मणाच्छंसिना यदाभीवर्त्तपवमाने स्यात् कालेयस्यर्चः अच्छावाकेन संशयेत् यदा तत् पवमाने स्यात् न केवलं पृष्ठ्ये कालेयस्य अन्यत्रापि यदा कालेयं पवमाने स्यात् तत्राऽप्येतस्य स्तोत्रीयं शंसयेदच्छावाकेन यथा विश्वजितीति ॥ १८ ॥

सर्वत्रेन्द्रक्रतुं ब्राह्मणाच्छंसिनोर्द्ध्वं विषुवतः प्रागतिरात्रात्* ॥ १९ ॥

ऊर्द्ध्वं विषुवतः यान्यहानि तेषु सर्वेष्विन्द्रक्रतुं ब्राह्मणाच्छंसिनः शंसयेत् प्रागतिरात्रात् उदयनीयम् अतिरात्रं वर्जयित्वा सर्वशब्दो निरवशेषवाची ॥ १९ ॥

विश्वजिति वैराजे धर्म्मान् कुर्यात्* ॥ २० ॥

उक्तं यत्र यत्र समुदितानि पृष्ठानि प्रयुज्येरन् तत्र तत्र एषां

---

* द्राह्यायणोऽप्येवम् ।

रथन्तरवर्जमानादयो धर्माः स्युरिति तदिह सर्वपृष्ठविश्वजित् तस्मिन् विश्वजिति रथन्तरादीनां सर्वेषां पृष्ठ्यादीनां वैराजेऽधिकरणे धर्मान् कुर्य्यात् एतद्धि धर्माणां स्थानं होतापि सर्वेषां तस्मिन्नेव योनीः शंसतीति ॥ २० ॥

इतरेष्वपि पृष्ठेष्वित्याचार्य्यमतिः* ॥ २१ ॥

इतरेष्वपि पृष्ठेषु धर्मान् कुर्य्यात् एषा आचार्य्याणां मतिः सन्निकृष्टन्यायबलाद्धर्माणाम् इतरेषु त्रिषु पृष्ठेषु महानाम्नीविरूपरेवतीषु स्वधर्माः स्युः बृहद्रथन्तरवैराजानां वैराजा धर्माः स्युरिति ॥ २१ ॥

सप्तमेऽहन्यग्नेरर्कोऽध्यर्द्धेडश्च सोमसाम मौक्षस्य पूर्वयोः* ॥ २२ ॥

इह ब्राह्मणे अष्टमनवमयोरह्नोः स्वाशिरामर्कदीर्घतमसोऽर्कावाम्नातौ अग्नेरर्कोऽन्तरितः तमग्नेरर्कं सप्तमेऽहनि कल्पयत्याचार्य्यः सप्तमेऽहन्यग्नेरर्कोऽध्यर्द्धेडश्च सोमसाम मौक्षस्य पूर्वयोरिति यस्ते मदो वरेण्य इति गायत्रं तृचे कृत्वा एतस्मिन्नेव सामतृचः स्यात् अग्नेरर्कोऽध्यर्द्धेडश्च सोमसाम मौक्षमिति ॥ २२ ॥

मौक्षसोमसामनी गायत्रस्योत्तरयोरग्नेरर्कस्तिसृष्विति वा* ॥ २३ ॥

---

* द्राह्यायणेऽप्येवम्।

अथवा गायत्रमेकर्चं कृत्वा तस्योत्तरयोर्मौक्षसामसामनी कृत्वा तस्मिन्नेव तृचे अग्नेरर्कस्त्रिष्टुप्सु कुर्यात् अरण्ये गेयमिदमपवित्र-मिति ॥ २३ ॥

साकमश्वेडानां संचारौ व्यतिहरन्त्येके* ॥ २४ ॥

साकमश्वस्य इडानां संचारस्य च अष्टमनवमयोरह्नोर्व्यतिहार-मेके आचार्याः कुर्वन्ति आष्टमिकी इडा विभक्तिर्नवमेऽहनि कृत्वा अष्टम एव कल्पयति इडा संचारोऽष्टमस्य विभक्तिर्नवमेऽहनि क्रियत इति व्यतिहारो नाम अन्योऽन्यस्थानोपादानं इडानां संचारौ साक-मश्वस्य स्थाने कुर्वन्ति साकमश्वमिडानां संचारस्येति ॥ २४ ॥

सुरूपक्रौञ्चे एकर्चयोरेके* ॥ २५ ॥

अष्टमेऽहनि सुरूपं गायत्र्यृचस्थमाम्नातं क्रौञ्चं चानुष्टुभि उष्णिक्ककुभावेकर्चौ कृतौ तदेके आचार्या लिङ्गं दृष्ट्वा विकल्पयन्ति प्राणाग्निरुर्महीनामिति प्राणवत्यो भवन्तीति अस्य च बहुवचनस्य उष्णिक्ककुभोरेकर्चे क्रियानर्थक्यं तदेके उष्णिक्ककुभौ तृचयोः कुर्वन्ति उष्णिक्ककुभोस्तृचैकर्चत्वमन्यथा तेनेति सुरूपक्रौञ्चे एक-र्चयोः ॥ २५ ॥

नवमस्य ज्योतिष्टोमः पर्यासः† ॥ २६ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

नवमेऽहनि बहिष्पवमाने एवं ब्राह्मणं पठति सवा उत्तमः षड़ृचो भवतीत्युक्ताह तृच उत्तमो भवतीति न च तस्यानन्तरस्तृचोऽस्ति षड़ृचः तस्यानन्तरः नचावच्छेदं कृत्वा कल्पना युक्ता ऋते वचनात् सोऽयमाचार्य्यः प्राकृतं पर्य्यासं विधित्सुराह नवमस्य ज्योतिष्टोमः पर्य्यास इति अनादेशे प्रकृतिप्रत्ययात् ॥ २६ ॥

## साप्तमिक इत्येके* ॥ २७ ॥

एके आचार्याः साप्तमिकः पर्य्यासः स्यादित्येवमाहुः कस्मात् सप्रभृतित्वात् उक्तं सप्रभृतयो भवन्तीति ताः श्वसनादयः ॥ २७ ॥

## तस्य बृहत्यामरण्ये गेयानि तृचेषु पृष्ठ्यश्च † ॥ २८ ॥

तस्य ग्रहणं यदि ज्योतिष्टोमः पर्य्यासः यदि साप्तमिकः तस्य बृहत्यामेकादशसामानि पठितानि तेषां तृचैकर्चत्वकॢप्तिः कल्पयति यान्यरन्ये गेयानि तानि तृचेषु स्युः पृष्ठ्यश्च अन्याऽन्येकर्च्चेषु ॥ २८ ॥

## वासिष्ठमध्यास्यायाम् † ॥ २९ ॥

तत् किमिदमारभ्यते अनुप्राप्तमेव वासिष्ठमध्यास्यायाम् आचार्य्यैरपि प्रकरणेऽध्यास्यायामेव गीतम् उच्यते नियमार्थमारभ्यते वक्ष्यते सप्तैव तृचेषु सैरजामीत्यपरमिति न तत् कल्पे वासिष्ठं स्यात् अध्यास्याविषयमेव वासिष्ठमिति ॥ २९ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

वैयश्वं प्रागभर्गादाभीशवं यशसः* ॥ ३० ॥

पाठक्रमं विकल्पयति अजाम्यर्थेन वैयश्वं प्रागभर्गाद्भवेत् अभीशवं यशसः प्रागिति वर्त्तते ॥ ३० ॥

सन्नेव तृचेषु येरजामीत्यपरम्* ॥ ३१ ॥

अपरः कल्पः बृहत्यां सन्नेव तृचेषु स्युः यैः क्रियमाणैर्जामि न भवति एतदपरं आचार्य्यमतं प्रथमः कल्पो यथाम्नातानां क्रियाशेषे विकल्पः ॥ ३१ ॥

दीर्घतमसोऽर्कोऽन्त्यः सामराजं वा* ॥ ३२ ॥

अन्ते दीर्घतमसोऽर्कः सामराजञ्च तयोश्च द्वयोरेकस्मिन् सम्भवो नास्ति तस्माद् विकल्पः स्यात् एकार्थत्वात् ॥ ३२ ॥

पृष्ठस्योत्तरयो दीर्घतमसोऽर्को माण्डवश्चैडं साम-राजेऽन्त्ये* ॥ ३३ ॥

यदा तावत् दीर्घतमसोऽर्कोऽन्त्यः स्यात् तदा सामराजस्याभाव एव यदा पुनः सामराजमन्त्यं स्यात् तदा पृष्ठस्योत्तरयोः स्तोत्रीययोः दीर्घतमसोऽर्कः स्यात् माण्डवं चैडं दीर्घतमसोऽर्कः अर्कोऽनुग्रहार्थः माण्डवं स्तोमपूर्णार्थम् ॥ ३३ ॥

इति तृतीयस्य षष्ठी कण्डिका ।

---

* द्राह्यायणेऽप्येवम् ।

अथ सप्तमी कण्डिका ।

**दशमस्य बहिष्पवमानं द्वितीयप्रभृतीनां पञ्चानामह्ना-मनुरूपाः प्रथमाच्च बहिष्पवमानं तन्नवर्चम्* ॥ १ ॥**

दशानां पूरणः दशमः दशमस्येति सम्बन्धलक्षणा षष्ठी बहिष्पवमानमिति स्तोत्रोपदेशः द्वितीयप्रभृतीनामिति निदध्युरुपदेशः प्रभृतिशब्दः आद्याभिधायी पञ्चानामिति संख्या अह्नामिति अहर्निर्देशः अनुरूपा इति बहिष्पवमानं तन्नवर्चं नवर्चमिति संज्ञा बहिष्पवमानस्य आद्यद्वितीयान्त्यास्तृचः प्रतिपदनुरूपपर्यासः प्रथमाच्चाह्नः बहिष्पवमानन्तन्नवर्चं नवर्चमिति संज्ञा एतद्दशमस्याह्नो बहिष्पवमानम् अत्रोच्यते यदा तावदेव बहिष्पवमानं दाशमिकं क्लृप्तमेव सर्वं ब्राह्मणे पञ्चानामह्नामनुरूपैः प्रत्यवयन्ति नवर्चा भवन्ति या एवामूः प्रयच्छन् या आवदधातीति च सम्बन्धोऽस्य दर्शितः प्राथमिकस्य नवर्चस्य वारुण्येका भवति आदित्येका भवतीति च लिङ्गचोदना तत् किमिदं सिद्धे सति पुनरारभ्यते दशमस्य बहिष्पवमानमिति उच्यते, आचार्य्यस्येयं प्रवृत्तिः यत्र हि कालो वा विशेषो वा कश्चिद्विवक्षितो भवति तत्र सिद्धस्यापि सतो विधिः पुनरुपादानं करोति यथा एकत्रिके सद्यः सर्वं कुर्युरेकदीक्षस्त्युपसत्क इति गौतमस्तस्य गायत्रपार्श्वमार्भवो या रुचेति पुरोजित्यमिति शाण्डिल्य इति एतद् विवक्षुः सिद्धमिदं गायत्रपार्श्वं पुनरामनति

* द्राह्यायणेोऽप्येवम् ।

एवमिह विधिशेषं विवक्षुः सिद्धोपादानं करोति कः पुनर्विधिः शिष्यते यो वक्तव्यः उच्यते, ब्राह्मणं पञ्चानामह्नामनुरूपैः प्रत्यवयन्तीति तथा वक्तव्यम् एतदर्थं सिद्धमपि सन्तं पुनराददते उच्यते यद्येवं सिद्धेऽपि सति पुनराददते दशमग्रहणं तावन्न कर्त्तव्यं कस्मात् नावमिकं विधानमुक्तं शेषोऽपि विधिरुच्यमानः संख्यानात् दशमादन्यत्र क्व भवेत् तस्माद्दशमग्रहणं शक्यमवक्तुं बहिष्पवमानग्रहणं शक्यमेव वक्तुं बहिष्पवमानस्य ग्रहणस्य किं कारणं तच्छक्यत्वात् तत् विवक्तव्यम् अत्र होतुराज्यादारभ्य सुसमिद्धो न आवहेत्येतस्माद्दाशमिकानि स्तोत्राणि प्रत्यक्षशिष्टानि तस्मात् कारणं न वक्तव्यं द्वितीयप्रभृतीनामित्येतदप्यनारब्धव्यमेव यस्माद्द्वितीयप्रभृतिष्वहःसु बहिष्पवमानद्वितीयास्तृचस्तेषामनुरूपा इति संज्ञा पवस्वेन्दोवृषासुत इत्येतदादीनां अह्नामनुरूपा इत्येतच्च न वक्तव्यं कस्मात् उक्तं पञ्चानामह्नामनुरूपैः प्रत्यवयन्तीति प्रथमाच्च बहिष्पवमानन्तन्नवर्चमित्येतदपि न वक्तव्यं कस्मात् उक्तं नवर्चो भवतीति या एवामूः प्रयच्छन् या अवदधाति ता एता उदस्यतीति प्राथमिकेनैव बहिष्पवमानेन सम्बन्धं दर्शयति तस्मात् सर्वमेव सूत्रं नारब्धव्यम् आरम्भे वा प्रयोजनं वक्तव्यम् अत्रोच्यते, यदुक्तं नारब्धव्यमित्यारब्धव्यमिति ब्रूमः शेषविध्यर्थं यत्तावदुच्यते दशमग्रहणं न कर्तव्यमिति अत्र ब्रूमः कर्त्तव्यमेव छन्दोमा इति पठति अभ्यसङ्ख्यः पञ्चाहस्तारः छन्दोमा विश्वजिदतिरात्र इति तत्रेदं संख्यानतो नवमं तत्रायं संशयः किमत्र दाशमिकं बहिष्पवमानं भवत्यत उत्पत्तिकत्वात् नावमिकं माभूदिति यावता निदानकारेणापि विचारितं कथं

दशमधर्मा मानसमिति कर्त्तव्या इत्येके तच्चाहर्जायत इति अकर्तव्य इत्यपरमदशमञ्च लुप्तञ्च दशरात्र इति सोऽयमाचार्य्योऽनियमार्थं दशमग्रहणं करोति कथं अदशमेऽप्येतस्मिन् बहिष्पवमानं स्यादिति, अथ यदुक्तं बहिष्पवमानग्रहणं न कर्त्तव्यमित्यत्र ब्रूमः बहिष्पवमानग्रहणं क्रियते नियमार्थं कथं एतस्मिन्नहनि न कदाचिदन्यं बहिष्पवमानं स्यादिति कुतः पुनराशङ्का यथान्यं बहिष्पवमानं स्यादिति उच्यते, मशकः पठति द्वादशाहविचारेषु अपि वा प्रतिपदावेवान्योन्यस्याः स्थानं व्यतिहरेदिति न कदाचिदपि बहिष्पवमानस्य विकारः स्यात् दशमेऽहनीति, अथ यदुक्तं द्वितीयप्रभृतीनामिति न वक्तव्यमित्यत्र ब्रूमः अन्योन्यस्य स्थानं द्वितीयप्रभृतीनामेव स्युः, अथ यदुक्तं पञ्चानामित्यत्र ब्रूमः अविद्यमानेष्वपि पञ्चानामेव कुर्युः यथा छन्दो भवति दशरात्रे, अथ यदुक्तमह्नामिति न वक्तव्यमित्यत्र ब्रूमः अहर्व्यत्यासेऽप्यानुपूर्व्येण स्यात्, अथ यदुक्तमनुरूपा इति न वक्तव्यमित्यत्र ब्रूमः अनुरूपग्रहणं साप्तमिकप्रतिषेधार्थं कथं समूहिते द्वादशाहे एता अनुरूपा न स्युरिति येषामेवानुरूपा संज्ञा ता एवेति, अथ यदुक्तं प्रथमाच्च बहिष्पवमानं तन्नवर्चमित्येतदपि न वक्तव्यमित्यत्र ब्रूमः अवछिन्नबहिष्पवमानं कॢप्तं छन्दोमा मति दशरात्रे तन्माभूदिति तस्मात् सूत्रमारब्धव्यम् ॥ १ ॥

**अनुरूपेषु तृचा प्रतिलोमा ऋचो नवर्चं इति गौतमः* ॥२॥**

---

* द्राह्यायणोऽप्येवम्।

उक्तं पञ्चानामक्षामनुरूपैः प्रत्यवयन्ति यथाभ्यारुह्य प्रत्यवरोहेत्तथा तदिति तत्प्रत्यवरोहणं किं ऋक्प्रातिलोम्येन अथवा तृचः प्रातिलोम्येनेति उच्यते अनुरूपेषु तृचा प्रतिलोमा ऋचो नवर्चे षाष्टिकादनुरूपादारभ्य प्रातिलोम्येन तावद्यावद्द्वितीयक इति तैः प्रत्यवरोहः न ऋचामपि असृक्षत प्रवाजिनः पवमानस्य विश्ववित्पवमानो अजीजनद्दिते असृग्रमिन्दवः पवस्वेन्दोवृषासुत इत्येष कर्म्मक्रमः तत ऋचः प्रतिलोमाः स्युः उपास्मै गायतानर इत्यत आरभ्य यावदस्य प्रत्नामनुद्युतमिति एवं प्रत्यवरोहणं गौतम आचार्य्यो मन्यते ॥ २ ॥

## सर्वत्र तृचा इति धानञ्जप्यः* ॥ ३ ॥

सर्वत्र सर्वस्मिन् बहिष्पवमाने तृचा प्रातिलोम्येन धानञ्जप्य आचार्य्यो मन्यते अनुरूपाणां यथोक्तं नवर्चे तु उपशिक्षाय तस्युष एष प्रत्नेन जन्मनास्य प्रत्नामनुद्युतमित्येवन्तृचः प्रातिलोम्यम् ॥ ३ ॥

## यथाधीतं नवर्चमिति शाण्डिल्यायनः* ॥ ४ ॥

अनुरूपाणां यथोक्तमेव प्रातिलोम्यं नवर्चे तु यथाधीतमेवेति एवं शाण्डिल्यायन आचार्य्यो मन्यते ॥ ४ ॥

## सर्वत्रर्चः प्रतिलोमा इति शाण्डिल्यः* ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

सर्व्वत्रानुरूपेषु नवर्च्चेष्वृचः प्रतिलोमाः स्युरित्येवं शाण्डिल्य आचार्य्यो मन्यते, द्वितीयकादनुरूपादारभ्य यावत् षाष्टिक इति एते ऋक्प्रतिलोमाः स्युः अन्यथा हि यदि षाष्टिकादारभ्येरन् एवमुभयप्रातिलोम्यं स्यात् ऋक् प्रातिलोम्यन्तृचप्रातिलोम्यञ्च नवर्च्चे तु सर्वमृक्प्रतिलोममेव स्यात् उपास्मै गायतानर इत्यत आरभ्य यावदस्य प्रत्नेति ॥ ५ ॥

अप्रतिभामेतस्मिन्नहन्यनुष्टुम्मात्रां कृत्वाचक्षीरन्* ॥ ६ ॥

अप्रतिभां न प्रतिभाम् अनवस्थानमित्यर्थः यदेतस्मिन्नहनि प्रतिभायाः स्तोत्राङ्गं किञ्चित्तदनुष्टुम्मात्रां कृत्वाचक्षीरन् उक्तं यावत्यनुष्टुप्तावतीं वाचं सम्पाद्य विब्रूयुरिति अथ मात्राग्रहणं किमर्थमिति उच्यते ऋक्न्यायन्नाद्रियेरन् द्वात्रिंशन्मात्रां कृत्वाचक्षीरन् ॥६॥

ज्यायसि छन्दसि लुम्पेयुरक्षराणि कनीयस्यभ्यस्येयुः † ॥७॥

ज्यायस्त्वं नाम वृद्धिः कनीयस्त्वं ह्रासः ज्यायसि छन्दस्याख्यातव्ये अनुष्टुम्मात्रां कृत्वा अधिकान्यक्षराणि लुम्पेयुः कनीयसी अभ्यस्येयुः के येषामुद्गातृणामिदं कर्म्म उपदिष्टम् ॥ ७ ॥

अग्निष्टोमसाम्ना स्तुत्वा प्राक् पत्नीसंयाजेभ्योयदेभिः प्रस्तुते पराध्यं व्रजितं स्यात्तद्गत्वा प्रत्याव्रज्य मनसानुत्साहे

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

**हुतेषु पत्नीसंयाजेषु गार्हपत्य उद्गाता जुहुयादुपसृजन्धरुणं मात्रे मातरं धरुणोधयन् रायस्पोषमिषमूर्जमस्मासु दीधरत्-स्वाहेति पूर्वम्* ॥ ८ ॥**

अग्निष्टोमसाम्ना स्तुत्वा प्राक् पत्नीसंयाजेभ्यः षडेभिरुद्गातृभिः प्रस्तुते सोमे प्रस्तवादारभ्य सर्वैर्दूरङ्गतं स्यात् तद्गत्वा प्रत्याव्रज्य मनसानुत्साहे यद्युत्साहो न स्यात् गमनागमने मनसा गमनागमने कृत्वा हुतेषु पत्नीसंयाजेषु गार्हपत्य उद्गाता जुहुयात् उपसृजन्धरुणं मात्र एतदादिना यथासूत्रितेन मन्त्रेण उद्गातृग्रहणं न सर्वे एव ॥८॥

**स्वाहाकारेणोत्तराम्* ॥ ९ ॥**

उत्तरामाहुतिं स्वाहाकारेण जुहुयात् ॥ ९ ॥

**आहवनीयं गत्वा पश्चात्तिष्ठन्तोऽयं सहोहा इति त्रिरुद्गाता गायेत् निधनमितरावनूपेयाताम् † ॥ १० ॥**

गार्हपत्ये उद्गाता हुत्वा अध्वर्युणा सम्प्रेषिते आहवनीये गत्वा तस्य पश्चिमे प्रदेशे तिष्ठन्तो यदुच्यते तत् कुर्युः किं पुनस्तत् अयं सहोहा इत्येतत्साम त्रिरुद्गाता गायेत् निधनमितरौ प्रस्तोतृप्रतिहर्त्तारौ

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणेनानेन सूत्रद्वयं कृतम्।

उद्गातारमुपयन्तं अनुपेयातां गानग्रहणं उक्तमतिछन्दसाहवनीयमुपतिष्ठन्त इति ऋचा माभूदिति ॥ १० ॥

यजमानसञ्चरेण गत्वा पूर्वया द्वारा सदः प्रविशेयुः* ॥११॥

यजमानस्य यः सञ्चरस्तेन गत्वा नोद्गात्रसञ्चरेण पूर्वया द्वारा सदः प्रविशेयुः ॥ ११ ॥

इति तृतीयस्य सप्तमी कण्डिका।

---

अथ अष्टमी कण्डिका।

यदा अध्वर्युरुपाकुर्य्यादथ मानसेन स्तुवीरन् नायं गौः पृश्निरक्रमीदिति गायत्रेण पृथक् स्तोत्रीयाभ्यो हिंकारं त्रिकेन स्तोमेनास्तोमयोगा यजमानवाचनेन† ॥ १ ॥

यस्मिन् काले अध्वर्युरुपाकरणं करोति अथानन्तरं मानसेन स्तोत्रेन स्तुवीरन् मनसा क्रियत इति मानसम् उक्तं मनसोपावर्त्तयत्येतदादि अयङ्गौः पृश्निरक्रमोदित्येतस्मिंस्तृचे गायत्रेण साम्ना उक्तं सार्पराज्ञा ऋग्भिः स्तुवन्तीति एता सार्पराज्ञ्यः पृथक् स्तोत्री-

---

* द्राह्यायणे विशेषोऽस्ति।

† द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम्।

याभ्यो हिङ्कारं पृथक् नानेत्यर्थः स्तोत्रीयाभ्यो हिंकारं कुर्युः त्रिवृता स्तोमेन उक्तं पराचीभिः स्तुवन्तीति एवं पराक्रम् अस्तोमयोगा यजमानवाचनेन नात्र स्तोमयोजनं स्यात् न च यजमानवाचनम् ॥ १ ॥

प्रतिहारवेलायां प्रतिहर्त्तापान्यात्* ॥ २ ॥

प्रतिहारदेशकाले प्रतिहर्त्ता अपान्यात् उक्तं तस्माद्रूपं प्राणेन करोति प्राणिति चापानिति च तदपानसंज्ञकवायुरन्तः प्रवेशयेत् ॥२॥

उत्तमां प्रस्तुत्यैषेति होतारमीक्षेत* ॥ ३ ॥

उत्तमां स्तोत्रीयां प्रस्तुत्यैषेत्यनेन होतारमीक्षेत् ॥ ३ ॥

सर्वमेतस्मिन् स्तोत्रे मनसा कुर्युः* ॥ ४ ॥

समीक्षणेन विज्ञापयन्तः* ॥ ५ ॥

यत्किञ्चिदस्मिन् स्तोत्रे पुरस्ताज्जपादि तत्सर्वं मानसं कुर्युः समीक्षणेन विज्ञापयन्तः ब्रह्मंस्तोष्यामः प्रशास्तरित्यतः आरभ्य समीक्षणमात्रेण विज्ञापनं कुर्वन्तः सर्वप्रैषेषु प्रज्ञापनं मनसैव स्यादिति ॥४॥५॥

यमध्वर्युर्भक्षं प्रयच्छन् मन्येत तस्य मनसोपहूय कस्त्वा कं भक्षयामीति भक्षयेयुः* ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम् ।

यमध्वर्युर्भक्षं प्रयच्छन्मन्येत यदि ग्रहं यदि चमसं तस्य मनसोपहूय कस्त्वा कं भक्षयामीति भक्षयेयुः मनसैव उक्तं ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपावर्त्तयतीति न भक्षं स्तोत्रेण सम्बध्यतेऽतः पुनर्मनसेत्याह ॥ ६ ॥

ब्रह्मोद्यं वदन्तीति गायत्रीं त्रिर्ब्रूयुरिति धानञ्जप्यः* ॥७॥

उक्तं ब्रह्मोद्यं वदन्ति ब्रह्मवर्चस एव प्रतितिष्ठन्तीति किं पुनर्ब्रह्मोद्यमिति उच्यते गायत्रीं त्रिर्ब्रूयुरिति धानञ्जप्य इति गायत्र्यास्त्रिर्वचनं ब्रह्मोद्यं सा च गायत्री परिभाषिता तं स आप्याययेदभिमृश्याप्याययेत्युक्ताह सर्वं वैतया गायत्र्येति ॥ ७ ॥

चतुर्होतारमभिप्रेत्यैतदिति गौतमः † ॥ ८ ॥

चतुर्होतारं ब्रह्मोद्यमभिप्रेत्य एतद्ब्राह्मणम् इति गौतम आचार्यो मन्यते ॥ ८ ॥

यथाश्वत्रिरात्र इति शाण्डिल्यः † ॥ ९ ॥

स्वाहाकृतिभिश्चरते पूर्वेण सद उपविश्य ब्रह्मोद्यं वदेयुरिति एतद्ब्रह्मोद्यमिहापि स्यादिति शाण्डिल्य आह ॥ ९ ॥

एतस्यां वेलायां वरान् वृणीरन् मनसा यानिच्छेयुः † ॥१०॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

एतस्यां वेलायां वरान् वृणीरन्मनसा यो यस्येप्सितः स तं वरं वृणीते ॥ १० ॥

उत्तरत उद्गातौदुम्बरीं गृह्णीयात् पश्चात् प्रतिहर्त्ता दक्षिणतो ब्रह्मा पुरस्तादितरे सर्वे* ॥ ११ ॥

उत्तरे प्रदेशेऽवस्थित उद्गाता औदुम्बरीं गृह्णीयात् अन्वारभेत् पश्चात्प्रतिहर्त्ता पश्चिमे प्रदेशे चावस्थितः प्रतिहर्त्ता अन्वारभेत् दक्षिणतो ब्रह्मा अन्वारभेत् पूर्वप्रदेशेऽवस्थिता इतरे सर्वे अन्वारभेरन् ॥११॥

अथ जपेयुरिह धृतिरिह स्वधृतिरिह रन्ति रिह रमध्वं, मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमध्वमिति वा* ॥ १२ ॥

अथशब्द आनन्तर्ये अन्वारभ्यायानन्तरं जपेयुः इह धृतिरित्येतदादि यथासूचितं मन्त्रं मयि धृतिरित्येतदादि वा ॥ १२ ॥

उभौ वा* ॥ १३ ॥

उभौ वा मन्त्रौ जपेयुः ॥ १३ ॥

वाग्यता अपिधाय द्वारे आसीरन्नानक्षत्रप्रवचनात्* ॥१४॥

एवं जपित्वानन्तरं वाग्यता वाचं यमयित्वा अपिधाय द्वारे

---

* द्राह्यायणेऽप्येवम् ।

आसीरन् आकुतः कालात् आ नक्षत्रप्रवचनात् यावन्नक्षत्रं प्रोक्तमिति उक्तं वाचं यच्छन्ति दुग्धानीव वै तर्हि छन्दांसि यातयामान्यन्तगतानि तान्येव तद्रसेनाप्यायत्यन्यथोऽस्वस्तनामेवाभिसन्तन्वन्तीति ॥ १४ ॥

प्रोक्ते नक्षत्रे पूर्वया द्वारा निष्क्रम्य सुब्रह्मण्याप्रणवैर्वाचं विसृजेरन्निति धानञ्जप्यः* ॥ १५ ॥

उक्तम् आसीरन् आनक्षत्रप्रवचनादिति ततोऽन्येन प्रोक्ते नक्षत्रे पूर्वया द्वारा सदसो निष्क्रम्य सुब्रह्मण्याप्रणवैः सुब्रह्मण्योमित्येभिः वाग्विसर्गं कुर्युरिति धानञ्जप्यः आचार्यो मन्यते ॥ १५ ॥

श्रुत्वैवाहूयमानाया इति शाण्डिल्यः* ॥ १६ ॥

वसतीवरीपरिहरणस्यान्ते सुब्रह्मण्येनाहूयमानायाः सुब्रह्मण्यायाः प्रणवान् श्रुत्वा वाचं विसृजेयुरित्येवं शाण्डिल्य आचार्यो मन्यते न स्वयं प्रणवं ब्रूयुरिति ॥ १६ ॥

वरवरणवाग्यमने यजमान एव कुर्यादहीनेषु* ॥ १७ ॥

वरवरणञ्च वाग्यमनञ्च ते वरवरणवाग्यमने यजमान एव कुर्यादहीनेषु एवशब्दोऽवधारणार्थः सर्वकर्त्तृकमिदं कर्मोपरिष्टं तद् यजमानः कुर्यादहीनेषु इति सर्वर्त्विजो न कुर्युः ननु यदा द्वावेवाहीनौ ताण्डके ययोर्दशममहः तयोश्च अहीनद्वादशाहछन्दोमवांश्च

---

* द्राह्यायणेऽप्येवम् ।

दशरात्रः तत् किमिदं बहुवचनं अहीनेष्विति उच्यते शाखान्तराभि प्रायेण अथवा पौण्डरिके चतुष्टोमे च विचारितं कथं दशमधर्मा मानसमित्यकर्त्तव्या इत्येके तत्त्वेन नामधेयेनैकाह आदिश्यते चतुष्टोमोऽग्निष्टोमे इत्यथापि न दाशमिकं लिङ्गं दृश्यते यथैतद् बहिष्पवमानस्यावृत्तिसाम्नां विप्रच्यावनमनुष्टुभं परोक्षीचिकीर्षेदिति शाण्डिल्यः कर्त्तव्या इत्याचार्या येऽन्ये मानससंयुक्तेभ्यः संस्थापनीयं मानसं चतुष्टोमेऽग्निष्टोम इति सोऽयमाचार्य्य अनेनैव बहुवचनेन एवं विधिमादर्शयतीति॥ १७॥

कृत्वेतरे यथार्थं कृत्वेतरे यथार्थम्* ॥ १८ ॥

वरवरणवाग्यमने यजमान एव कुर्यादहीनेषु इतरे ऋत्विजः वरवरणवाग्यमनाभ्यां यदन्यत्कर्मोक्तं तत् कृत्वा यथार्थं स्युः इति कर्मणः समाप्तिं दर्शयति ॥ १८ ॥

इति तृतीयस्य अष्टमी कण्डिका ।

---

अथ नवमी कण्डिका ।

महाव्रतस्य पृष्ठ्य उपाकृते युक्त्वा स्तोमं परिमादो गायेदिति भाण्डितायनः* ॥ १ ॥

---

* द्राह्यायणोऽप्येवम् ।

इह महाव्रतप्रकरणे त्रयोदशपरिमादः पठिता ब्राह्मणेन पुरस्ता-दाहवनीयमुपतिष्ठन्त इत्यत आरभ्य यावद्गार्हपत्योपस्थानमिति तद-नन्तरं पठति आसन्दीमारुह्योद्गायतीति परिमादगानानन्तरं महा-व्रतस्य स्तवनं दर्शयति तेषां परिमादां क्रियाविधिं विवक्षुरिदं सूत्र-मारभते महाव्रतस्य पृष्ठे उपाकृते युक्त्वा स्तोमं परिमादो गायेदिति महाव्रत इति कर्मणो नामधेयं तस्येति सम्बन्धलक्षणा षष्ठी पृष्ठमिति स्तोत्रसंज्ञा तस्मिन् पृष्ठे उपाकृते उपाकरणं नामाध्वर्यवं कर्म उपा-वर्त्तध्वमिति युक्त्वा स्तोमं स्तोमयोजनं कृत्वा यथोक्तेन मन्त्रेण परि-माद इति संज्ञा परिमाद्भिश्चरन्ति त्वक् च वा एतल्लोम च महाव्रतस्य यत्परिमाद इति गायेदिति क्रियोपदेशः भाण्डितायन इत्याचार्य्य-मतसंकीर्त्तनं एष सूत्रार्थः महाव्रतस्य क्रतोः होतृपृष्ठे उपाकृते स्तोमयोजनं कृत्वा ततः परिमादगानमिति उच्यते, दशममहः निरव-शेषमुक्तं तस्मादनन्तरं महाव्रतसाम्ना तं द्वादशाहस्य द्वादशाहानि महाव्रतञ्चेति तदेवमानन्तर्यादेव प्राप्ते महाव्रतके विधौ परिमाद-सम्बन्धाच्च यावता महाव्रतादन्यत्र परिमादो न भवन्ति तत् किमिदं महाव्रतग्रहणं महाव्रतस्य पृष्ठे इति उच्यते नियमार्थं महाव्रतग्रहणं महाव्रतस्यैव प्राप्तावेतस्मिन् पृष्ठ उपाकृते नान्यत्र पृष्ठमात्रे यथा वक्ष्यति महेन्द्रस्य महाव्रतपृष्ठ इति ॥ १ ॥

**प्रतिगृह्य तृणे अयुक्तेति गौतमशाण्डिल्यौ धानञ्ज-प्यश्च* ॥ २ ॥**

---

* द्राह्यायणोऽप्येवम्।

प्रतिगृह्य तृणे उपाकरणिके अयुक्त्वा स्तोमं परिमादो गायेदित्येवं गौतम शाण्डिल्यावाचार्यावाहतुः धानञ्जय्यश्च ॥ २ ॥

प्रागेव स्तोत्रोपाकरणादित्येके* ॥ ३ ॥

एके आचार्या मन्यन्ते प्रागेव स्तोत्रोपाकरणात् परिमादो गायेदिति ॥ ३ ॥

दक्षिणेनाग्नीध्रीयं गत्वोत्तरेणाग्निं प्राणप्रभृतिभिरुपतिष्ठेरंस्तदुक्तं ब्राह्मणेन* ॥ ४ ॥

आग्नीध्रीयस्य दक्षिणेन गत्वा इष्टकाचितस्याग्नेः उत्तरेण गत्वा प्राणप्रभृतिभि ऋच्यस्य सामान्तैः आहवनीयादिगार्हपत्यान्तानि ब्राह्मणोक्तानि उपतिष्ठेरन् तदुक्तमुपस्थानविधानं ब्राह्मणेन प्राणेन पुरस्तादाहवनीमुपतिष्ठन्तइत्येतदादि ॥ ४ ॥

सर्वाण्युद्गाता सकृत्सकृद्गायेत् †॥ ५ ॥

सर्वाण्येतानि प्राणप्रभृतीनि सकृत्सकृदुद्गाता गायेत् अथ किं सकृत्सकृदिति उच्यते, उक्तं अयं सहोहा इति त्रिरुद्गाता गायेदिति तद्दर्शनमपि गम्यते अत आह सकृत्सकृदिति ॥ ५ ॥

निधनमितरावनूपेयाताम् † ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

इतरौ प्रस्तौ उद्गात्रा सह निधनमुपेयातां प्राणेन पुरस्तादाहव-नीयमुपतिष्ठन्तइति सर्वेषामुपस्थानमुक्तन्तत्सूत्रकार उद्गातुः प्राणा-दीनि विधाय इतरयोर्निधनमुपेत्य बहुवचनस्यार्थवत्त्वं दर्शयति ॥६॥

अपि मध्ये निधनेषु* ॥ ७ ॥

मध्ये निधनेष्वपि सामसु इतरावनूपेयातान्निधनानि ॥ ७ ॥

आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत्* ॥ ८ ॥

यान्याद्यन्तस्तुब्धानि सामानि तेष्वनुपदं स्तोभं कुर्यात् तत् किमिदं सिद्धे सति पुनरारभ्यते उच्यते, एतेषां सत्रस्यर्द्ध्याद्यन्तस्तुब्धं पठ्यते अयच्चानुपसंहार आविकेषु पादेषु विहितः तत्र च दैवतानि तिष्ठन्ति तेष्वपि पदाय पदाय स्तोभेदित्यत आरभ्यते ॥ ८ ॥

तेनैव प्रत्याव्रज्य पुच्छम्* ॥ ९ ॥

येनैव गतास्तेनैव प्रत्याव्रज्य पुच्छमुपतिष्ठेरन् यथोक्तेनैव साम्ना प्राङ्मुखाः ॥ ९ ॥

व्रतपक्षयोः पूर्वेण दक्षिणं पक्षम्* ॥ १० ॥

उक्तं व्रतपक्षाभ्यां पक्षावुपतिष्ठन्त इति तयोर्व्रतपक्षयोः पूर्वेण दक्षिणं पक्षमुपतिष्ठेरन् अर्थादापन्नमुत्तरेणोत्तरमिति ॥ १० ॥

---

* द्राह्यायणोऽप्येवम्।

उत्तरमपि कक्षमुपतिष्ठेरन्* ॥ ११ ॥

उक्तं प्रजापतेर्हृदयेनापि कक्षे उपतिष्ठन्त इति तत्र द्वावपि कक्षौ कतरस्योपस्थानमिति अत्राह, उत्तरमपि कक्षमुपतिष्ठेरन्निति ॥ ११ ॥

विश्वेदेवा इति वसिष्ठनिह्नवमूहेत्* ॥ १२ ॥

ब्राह्मणं वसिष्ठस्य निह्नवेन चात्वालमुपतिष्ठते वैश्वदेव्यामृचि भवतीति सोऽयमाह, विश्वेदेवा इत्येतस्यामृचि वसिष्ठस्य निह्नवमूहेदिति अस्य हि अन्यत्रोत्पत्तिः अत ऊहेदित्युक्तम् ॥ १२ ॥

चात्वालमुपस्थायोत्तरेणाग्नीध्रीयं गत्वा पश्चात्तिष्ठन्तः*॥१३॥

चात्वालमुपस्थायाग्नीध्रीयस्योत्तरेण प्रदेशेन गत्वा पश्चिमे प्रदेशे तिष्ठन्तः तस्योपस्थानं कुर्युः उक्तं सत्रस्यर्द्ध्याग्नीध्रमुपतिष्ठन्त इति॥१३॥

तत एव प्रत्यङ्मुखा इति धानञ्जप्यः* ॥ १४ ॥

चात्वालस्योपस्थानं कृत्वा तस्मिन्नेव देशेऽवस्थिताः प्रत्यङ्मुखाः आग्नीध्रीयमुपतिष्ठेरन्नित्येवं धानञ्जय्यः आचार्यो मन्यते ॥ १४ ॥

तस्योत्तमं निधनमातमितोरूपेयुः* ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम् ।

यदि पश्चात्तिष्ठन्तः यदि चात्वालदेशे तस्य वचसर्द्धैः उत्तम-निधनमातमितोः उपेयुः तावद्वर्द्धयेयुर्यावन्नान्तः उक्तम् आतमितो-र्निधनमुपयन्तीति ॥ १५ ॥

पूर्वेण हविर्द्धाने पुरस्तात् प्रत्यङ्मुखाः* ॥ १६ ॥

ब्राह्मणं श्लोकानुश्लोकाभ्यां हविर्द्धाने उपतिष्ठन्त इति हवि-र्द्धानयोः पूर्वे प्रदेशेऽवस्थिताः प्रत्यङ्मुखाः श्लोकानुश्लोकयोः साम्नोः पूर्वेण श्लोकेनेत्यर्थः हविर्द्धानयोरुपस्थानं कुर्युः ॥ १६ ॥

पश्चादितरेण* ॥ १७ ॥

पश्चिमे प्रदेशे तयोरेव स्थिताः प्रत्यङ्मुखाः अनुश्लोकेनोपतिष्ठेरन् त एव हविर्द्धाने ॥ १७ ॥

तत एवेक्षमाणा मार्जालीयं यत् इन्द्रेषु नाके सुपर्ण-मिति † ॥१८॥

तत्रैव देशेऽवस्थिताः ईक्षमाणा मार्जालीयं यामेनोपतिष्ठेरन् उक्तं यामेन मार्ज्जालीयमुपतिष्ठन्त इति तत्र सर्वेषां यामानां प्राप्तौ नियमयति यदिन्द्रेष्विति यामानामनेकत्वान्नियमयति यन्नाके सुपर्णमिति यामन्तत् स्यादिति ॥ १८ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

यथा हविर्द्धाने तथा सदः* ॥ १९ ॥

यथा हविर्द्धाने उपस्थिते तेनैव प्रकारेण सद उपतिष्ठेरन् उक्तमायुर्नवस्तोभाभ्यां सद उपतिष्ठन्त इति पूर्वे प्रदेशे सदसः प्रत्यङ्मुखा अवस्थिताः तमायुषा साम्नोपतिष्ठेरन् पश्चादितरेण पश्चिमे प्रदेशे प्राङ्मुखा अवस्थिताः नवस्तोभेन साम्नोपतिष्ठेरन् ॥ १९ ॥

अन्तर्वेदेः प्रत्यङ्मुखा गार्हपत्यमिति धानञ्जप्यः* ॥ २० ॥

उक्तं कृष्यस्य साम्ना गार्हपत्यमुपतिष्ठन्त इति अन्तर्वेदेरन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्त गार्हपत्यमुपतिष्ठेरन् यथोक्तेनैव साम्ना ॥ २० ॥

तस्यैव पश्चात्तिष्ठन्त इति शाण्डिल्यः* ॥ २१ ॥

तस्यैव गार्हपत्यस्य पश्चिमे प्रदेशेऽवस्थिताः प्राङ्मुखा उपतिष्ठेरन्नित्येवं शाण्डिल्य आचार्यो मन्यते ॥ २१ ॥

इन्द्रप्रभृति प्रत्यक्षं निधनमुपेयुः* ॥ २२ ॥

ब्राह्मणं यत्परोक्षं निधनमुपेयुर्ह्रीतमुखं प्रतिमुञ्चेरन् यत्प्रत्यक्षमुपयन्ति ह्रीतमुखमेवापजयन्तीति इन्द्रशब्दादारभ्य प्रत्यक्षं निधनं ब्रूयुः लोकवत् प्रत्यक्षपरोक्षे आमन्त्रितं प्रत्यक्षं निर्दिष्टं परोक्षं देवदत्तः सः देवदत्तः इन्द्रेति प्रत्यक्षम् स इन्द्र इति परोक्षम् ॥ २२॥

---

* द्राह्यायणोऽप्येवम् ।

इति तृतीयस्य नवमी कण्डिका ।

अथ दशमी कण्डिका।

अथ राजानꣳ सन्नाहयेत्* ॥ १ ॥

परिमादः गीत्वा अथानन्तरं राजानं सन्नाहयेत् अथशब्द आनन्तर्य्ये राजानमिति क्षत्रियं सन्नाहयेत् अन्यत् उक्तं सन्नद्धाः कवचिनः परियन्तीति ॥ १ ॥

तस्य द्व्यवरार्द्ध्यौ रथावनुयायिनौ स्याताम्* ॥ २ ॥

तस्य राज्ञः द्व्यवरार्द्ध्यौ रथौ अनुयायिनौ स्यातां भवेयातां पश्चाद्यायिनौ सर्व्वे निकृष्टौ द्वौ यदि बहवो रथा न स्युः ननु तस्य द्व्यवरार्द्ध्या रथा अनुयायिनः स्युरित्येवं सूत्रं कर्त्तव्यमासीत् तत्रैवमपरे वर्णयन्ति द्व्यवरार्द्ध्यौ मनुष्यौ यस्मिन् रथे सोऽयं द्व्यवरार्द्ध्यो रथः द्व्यवरार्द्ध्यश्च द्व्यवरार्द्ध्यश्च द्व्यवरार्द्ध्यौ एकस्मिन्नेव एकस्मिन् रथे बहवो मनुष्या अभिप्रेताः तत आह द्व्यवरार्द्ध्या इति ॥ २ ॥

पूर्व्वेण देवयजनꣳ सन्नह्येरन्नन्ये तस्मात्* ॥ ३ ॥

देवयजनस्य पूर्व्वे प्रदेशे सन्नह्येरन् राजानं मुक्त्वान्ये अनुयायिनः॥३॥

दक्षिणेन परियायुः* ॥ ४ ॥

सन्नद्धाः सन्तः दक्षिणेन देवयजनं परिगच्छेयुः ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम्

पूर्वेण पत्नीशालामुद्गाता गत्वा दक्षिणे वेद्यन्ते प्राञ्चो दर्भानास्तीर्य्य तेष्वेनं प्राङ्मुखमुपवेशयेत्* ॥ ५ ॥

उद्गाता पत्नीशालायाः पूर्वेण प्रदेशेन गत्वा महावेदेर्दक्षिणे वेद्यन्ते दर्भान् प्रागग्रान् आस्तीर्य तेषु दर्भेषु एनं राजानं प्राङ्मुखम् उपवेशयेत् ॥ ५ ॥

अथास्मै वर्म्माभिहरेदन्यं वाभिहरन्तमनुमन्त्रयेत उत्तिष्ठ राजन् परिवर्म्मास्यस्य युक्तो रथो विततो दैव आखणोविशां राजा ब्राह्मण एधि गोप्तेति † ॥ ६ ॥

अथशब्द आनन्तर्य्ये प्रागग्रेषु दर्भेषूपवेश्य राजानम् अनन्तरमस्मै वर्म्म बध्नीयात् उत्तिष्ठ राजन्नित्येतदादिना यथासूचितेन मन्त्रेण अन्यं वाभिहरन्तमेनं मन्त्रं ब्रूयात् ॥ ६ ॥

पश्चिमेन परियाहीत्युक्त्वा तेनैव प्रत्याव्रज्योत्तरएनं वेद्यन्तेऽवस्थाप्य ब्रूयाद् हस्तत्रं बध्नीष्वाज्यमायुधं कुरुष्व त्रीनिषूनुपकल्पयस्वायस्मायान्यमेव कुरुष्व चतुर्थमिति* ॥ ७ ॥

राजानं पश्चिमेन देवयजनं परियाहीत्युक्त्वा येनैव गतस्तेनैव पुनराव्रज्य उत्तरे वेद्यन्ते एनं राजानम् अवस्थाप्य ब्रूयात् हस्तत्रं

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

बध्नीष्व उज्यमायुधं कुरुष्व त्रीनिषूनुपकल्पयस्व अनुगृह्णीष्व आयस्मा-
यान् कार्ष्णायसान् यमेव कञ्च चतुर्थमिति यं कञ्चेषुचतुर्थन्न नि-
यमः ॥ ७ ॥

प्रतिधत्स्वेति ब्रूयात्* ॥ ८ ॥

इषुं प्रतिधत्स्वेति ब्रूयात् ॥ ८ ॥

तं प्रतिदधानमनुमन्त्रयेत वैणवताय प्रतिधत्स्व शंकुमा-
पप्रोऽष्टमो तेति पप्रद्ब्रह्मणो गुप्त्यै विधृत्यै धारयात्रेति* ॥ ९ ॥

तं राजानं प्रतिदधानम् इषुं सन्दधानं अनुमन्त्रयेत वैणवताय
प्रतिधत्स्व शंकुमित्येतदादिना यथासूत्रितेन मन्त्रेण ॥ ९ ॥

संहत्यातिष्ठेति ब्रूयात्* ॥ १० ॥

संहतेषु रथमारोहेति ब्रूयात् राजानम् ॥ १० ॥

दक्षिणेन रथपथं कृत्वोत्तरेणाग्नीध्रीयं पूर्वापरे चर्मणी
विबध्नीयुः* ॥ ११ ॥

दक्षिणेन प्रदेशेन रथपथं कृत्वा कस्य दक्षिणेन वक्ष्यति पूर्वापरे
चर्मणी विबध्नीयुरिति तयोश्चर्मणोर्दक्षिणेन उत्तरेणाग्नीध्रीयम् एन-
प्रयोगे द्वितीया आग्नीध्रीयस्य उत्तरे प्रदेशे पूर्वापरे चर्मणी विब-

---

* द्राह्यायणोऽप्येवम्।

भ्नीयुः पूर्वञ्च अपरञ्च पूर्वापरे चर्मप्रहाराक्तर्द्दानं ते चर्मणी द्वे विबभ्नीयुः ॥ ११ ॥

तं ब्रूयात् प्रदक्षिणं देवयजनं परीयात् पूर्वञ्चर्मागमनेषु विध्येरेकैकेनोत्तरोत्तर्यनतिपातयन्* ॥ १२ ॥

तं राजानं ब्रूयादुद्गाता प्रदक्षिणं देवयजनं परीयात् पूर्वं चर्म यत्तदागमनेषु विध्येः आगमनागमनेषु एकैकेनेषुणा विध्येः उक्तं त्रीनिषूनुपकल्पयस्वेति उत्तरोत्तरा वेधस्य वेधस्योपरिष्टादुत्तरोत्तरो प्रथमस्योपरिष्टाद्द्वितीयः द्वितीयस्योपरिष्टात् तृतीय इति अनतिपातयन् भूमावपातयन्निषुं तथा विध्येद्यथा तस्मिन्नेव चर्मणि संसक्ता भवन्ति ॥ १२ ॥

अपरस्मा इतरे यथाभिप्रेतमस्येयुः* ॥ १३ ॥

अपरस्मै चर्मणि इतरे रथिनः यथाभिप्रेतं यथेष्टं क्षिपेयुः ॥ १३ ॥

तृतीयेन विध्वोदङ् प्रयायाः* ॥ १४ ॥

एवं ब्रूयाद्राजानं तृतीयेनेषुणा विध्वा उदङ्मुखः प्रयायाः गच्छेत् ॥ १४ ॥

तदा चतुर्थमिषुं यान्दिशं मन्येथास्तामस्येर्गा दृष्ट्वावतिष्ठेथाः* ॥ १५ ॥

---

* द्राह्यायणेन सूत्रपञ्चकेनैकसूत्रं कृतम् ।

तदा तस्मिन् काले उदङ् गच्छत् चतुर्थमिषुम् उक्तं यमेव कञ्च चतुर्थमिति यान्दिशं मन्येथाः इच्छा भवेत् तामस्येः एतदुक्तं भवति उदङ्गच्छन् चतुर्थवाणं यान्दिशं प्रति इच्छा भवति तां दिशं क्षिपेत् यस्मिन् देशे गाः पश्येयुः तस्मिन्नेव देशे अवतिष्ठेया अवस्थानं कुर्वीरन् ॥ १५ ॥

तत्र त्वा विस्रम्भयेयुः* ॥ १६ ॥

तत्र यस्मिन्देशे अवतिष्ठेरन् तस्मिन् देशे त्वा विस्रम्भयेयुः वर्मादि-सन्नहनमपनयेयुः ॥ १६ ॥

ब्राह्मणमुक्तेमम् † ॥ १७ ॥

हिङ्कारवेलायां कारयेरिति † ॥ १८ ॥

भूमिदुन्दुभिमाव्रजेत् † ॥ १९ ॥

एवं सम्प्रेष्य राजानं अनन्तरं ब्राह्मणं ब्रूयात् यदिदं मया राज्ञे उपदिष्टम् एतत्सर्वं राजानं हिङ्कारवेलायां कारयेरिति एवमुक्त्वा भूमिदुन्दुभिमाव्रजेत् क्व भूमिदुन्दुभिर्भवतीत्यत आह ॥१७॥१८॥१९॥

---

* द्राह्यायणेन सूत्रपञ्चकेनैकसूत्रं कृतम्।

† द्राह्यायणेन सूत्रत्रयेनैकसूत्रं कृतम्।

इति तृतीयस्य दशमी कण्डिका।

अथ एकादशी कण्डिका ।

पश्चादाग्नीध्रीयस्यार्द्धमन्तर्वेदि श्वभ्रस्य खातꣳ स्यादर्द्धं बहिर्वेदि* ॥ १ ॥

उक्तं भूमिदुन्दुभिर्भवतीति स भूमिदुन्दुभिरुच्यते आग्नीध्रीयस्य पश्चिमे प्रदेशे वेदेरन्तः अन्तर्वेदि अर्द्धं श्वभ्रस्य खातं स्यात् श्वभ्रः गर्त्तः अर्द्धं बहिर्वेदि श्वभ्रस्य खातं स्यादिति ॥ १ ॥

आर्षभेणोत्तरलोम्ना चर्मणाभिविहितं स्यात्* ॥ २ ॥

स श्वभ्रः आर्षभेण चर्मणा ऋषभस्य अवयवमार्षभं तेन आर्षभेण उत्तरलोम्ना उपरि लोमानि यस्य चर्मणः तदिदमुत्तरलोम्ना तेन आर्षभेन उत्तरलोम्ना चर्मणा अभिविहितं स्यात् सर्वतः अवनद्धः स्यात् ॥ २ ॥

त्वं वागसि ये नः सत्रे अनिन्दिषु दीक्षायाꣳ श्रान्त आसितेराद्धिन्तेभ्यो दुन्दुभेराद्धिमस्मभ्यमावदेति, परावदद्विषन्त घोरां वाचं परावदाथास्मभ्यꣳ सुमित्रियां वाचं दुन्दुभे कल्याणीं कीर्त्तिमावद्वेति, परावदद्विषतो वाद्यन्दुर्हार्दो ये विषूकुहाथास्मभ्यं पुष्टिं राद्धिꣳश्रियमावदुन्दुभ इत्येनमेतैः पृथगाहत्य बालधानेनान्यं बाध्नन्तमनुमन्त्र्याप उपस्पृश्य

* द्राह्यायणेऽप्येवम् ।

पश्चात्तिष्ठन्तोऽग्निमुपतिष्ठेरन् नमस्ते गायत्राय यत्ते पुरो यत्ते शिरो नमस्ते रथन्तराय यत्ते दक्षिणतो यत्ते दक्षिणः पक्षो नमस्ते बृहते यत्ते उत्तरतो यत्ते उत्तरः पक्षो नमस्ते यज्ञायज्ञीयाय यत्ते पश्चाद्यत्ते पुच्छं नमस्ते वामदेव्याय यत्ते आत्मा यत्ते मध्यमित्येतैः पृथगङ्गान्यन्वर्थम्* ॥ ३ ॥

त्वं वागसीत्येतदादिभिः यथासूत्रितैर्मन्त्रैः इतिकरणप्रज्ञापितान्तैः एतैर्भूमिदुन्दुभिं पृथगाहत्य बालधानेन पृथक् नानेत्यर्थः वाला अस्मिन् धीयन्ते इति बालधानं पुच्छं तेन बालधानेन वादयित्वा अन्यं वा ब्राह्मणं वादयमानं अनुमन्त्र्य अपः स्पृष्ट्वा पश्चात्तिष्ठन्तोऽग्निमुपतिष्ठेरन् पश्चिमे प्रदेशे इष्टकाचितस्याग्नेः तिष्ठन्तः शिर-आदीनामङ्गानामात्मनश्चोपस्थानं कुर्युः नमस्ते गायत्राय यत्ते पुरो यत्ते शिर इत्येतदादिभिर्यथासूत्रितैर्मन्त्रैः पृथक् नानेत्यर्थः अर्थमनु अन्वर्थं अर्थानुसारेण नमस्ते गायत्रायेति शिरः नमस्ते रथन्तरायेति दक्षिणं पक्षं नमस्ते बृहत इत्युत्तरं नमस्ते यज्ञायज्ञीयायेति पुच्छं नमस्ते वामदेव्यायेति आत्मानम् ॥ ३ ॥

अथ समस्तेन तस्मै ते सुभोः सुभवो भूयास्म नामासि नाम भूयासमाविरस्याविर्म्माकुरु सवितः प्रमासुवयां मनुष्याणां भूतौ सम्पश्यसि तेष्वभिभूयासᳪश्रियं मयि धेहीति † ॥ ४ ॥

---

* द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम्।

† द्राह्यायणोऽप्येवम्।

व्यस्तानामुपस्थानं कृत्वा अथानन्तरं समस्तानां सामस्त्येनैव मन्त्रेणोपस्थानं कुर्युः तस्मै तद्इत्येतदादिना मन्त्रेण यथासूत्रितेन॥ ४ ॥

उपस्थाय सदः प्रविशेयुः* ॥ ५ ॥

उपस्थाय व्यस्तसमस्तैस्ततोऽनन्तरं सदः प्रविशेयुः ॥ ५ ॥

इति तृतीयस्य एकादशी कण्डिका ।

---

अथ द्वादशी कण्डिका ।

अपरया द्वारौदुम्बरीमासन्दीमौञ्जविवानाम् अतिहरेयुः* ॥१॥

उक्तम् उपस्थाय सदः प्रविशेयुरिति साम्प्रतं पृष्ठेन स्तवनमुक्तम् आसन्दीमारुह्योद्गायतीति तस्या आसन्द्याः प्रवेशनमुच्यते अपरया द्वारा सदसः पश्चिमयेत्यर्थः औदुम्बरीमासन्दीमुदुम्बरस्य विकारः औदुम्बरी आसन्दी संज्ञा आस्यते अस्यामित्यासन्दीं मौञ्जविवानामतिहरेयुः मौञ्जं विवानं मुञ्जेभ्यो निर्वृत्तां मौञ्जविवानामतिहरेयुः प्रविशेयुः ॥ १ ॥

---

* द्राह्यायणेऽप्येवम् ।

यज्ञियस्य वृक्षस्यौदुम्बराभावे* ॥ २ ॥

यद्युदुम्बरो न स्यात् यस्य कस्यचित् यज्ञियस्य वृक्षस्यावयव-निष्पन्ना स्यात् आसन्दी यज्ञमर्हति यज्ञियः ॥ २ ॥

मुञ्जाभावे दार्भम्* ॥ ३ ॥

यदि मुञ्जो न स्यात् दर्भमयं विवानं स्यात् अभावोऽनुपपत्तिः ॥३॥

प्रादेशमात्राः पादा अरत्निमात्राणीतराण्यङ्गानि † ॥ ४ ॥

उक्तं प्रादेशमात्री भवतीति तस्या आसन्द्याः प्रादेशमात्राः पादा इतराण्यङ्गानि अरत्निप्रमाणानि स्युः अङ्गुलं प्रादेशोऽरत्निरित्येतदादीनि परिमाणानि सिद्धानि ग्रन्थान्तरे ॥ ४ ॥

दक्षिणेनौदुम्बरीꣳ हृत्वा तस्या उत्तरतोनिदध्युः* ॥ ५ ॥

तामासन्दीमौदुम्बर्य्या दक्षिणेन प्रदेशेन हृत्वा तस्या उत्तरार्द्धे सन्निकर्षे स्थापयेयुः तस्या इति किमर्थम् उच्यते, सदोह्यधिकृतम् अतस्तस्या इति ब्रवीति तस्या औदुम्बर्य्या उत्तरतो न सदसः ॥ ५ ॥

तामुत्तरेणोद्गाता गत्वा पश्चादुपविश्य भूमिस्पर्शोऽस्याः पादान् कृत्वा कूर्चावधस्तादुपोह्याभिमृशेद् बृहद्रथन्तरे ते

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

पूर्वौ पादौ श्यैतनौधसे अपरौ वैरूपवैराजे अनूची शाक्वररैवतेतिरश्ची इत्येतैः पृथगङ्गान्यन्वर्थम्* ॥ ६ ॥

तस्या आसन्द्या उत्तरेण प्रदेशेनोद्गाता गत्वा पश्चिमे प्रदेशे उपविश्य भूमिस्पृशः अस्या आसन्द्याः पादान् कृत्वा कूर्चौ तस्या अधस्तादुपोह्य तानभिमृशेत् बृहद्रथन्तरे ते पूर्वौ पादावित्येतदादिभिर्यथासूत्रितैर्मन्त्रैः पृथगासन्द्यङ्गान्यन्वर्थं पृथङ्गानेत्यर्थः अर्थमनु अन्वर्थं यथालिङ्गमित्यर्थः ॥ ६ ॥

विवयनमालभ्यर्चः प्राञ्च आताना यजूꣳषि तिर्यञ्चः सामान्यास्तारणꣳ श्रीरुपबर्हणं वाकोवाक्यमतोरीका वारवन्तीयꣳ सन्धयेराजनमात्मा प्रतिष्ठा यज्ञायज्ञीयमिति* ॥ ७ ॥

यदि मौञ्जं यदि दार्भं विवानमालभ्य स्पृष्ट्वा ऋचः प्राञ्च इत्येतदादिना यथासूत्रितं मन्त्रं जपेत् ॥ ७ ॥

तां मुखेनोरसा बाहुभ्यामिति स्पृष्ट्वारोहेत् वसवस्त्वा गायत्रेण छन्दसा रोहन्तु तानन्वधिरोहामि राज्याय, रुद्रास्त्वा त्रैष्टुभेन छन्दसा रोहन्तु तानन्वधिरोहामि वैराज्यायादित्यास्त्वा जागतेन छन्दसा रोहन्तु तानन्वधिरोहामि स्वाराज्याय, विश्वे त्वा देवा आनुष्टुभेन छन्दसा रोहन्तु तानन्वधिरोहामि साम्राज्यायेति* ॥ ८ ॥

---

* द्राह्यायणेऽप्येवम् ।

तामासन्दीं मुखेनोरसा बाहुभ्याञ्च स्पृष्ट्वोद्गाता आरोहेत् वसवस्त्वेत्येतदादिभिर्यथासूचितैर्मन्त्रैः तामिति किमर्थम् उच्यते, विवानमालभ्येति प्रकृतम् अतस्तामित्याह ॥ ८ ॥

अथैतैरेव देवता उदस्य राजशब्दञ्चामुना त्वा छन्दसा रोहामीत्यारोहेत्* ॥ ९ ॥

अथशब्दो विकल्पार्थः अथागमपरः विकल्प एतैरेव मन्त्रैर्देवता उत्क्षिप्य पदानामन्विष्य राजशब्दञ्च अमुना त्वा छन्दसा रोहामीत्यारोहेत् प्रकारमुपदिश्यते गायत्रेण त्वा छन्दसा रोहामि त्रैष्टुभेन त्वा छन्दसा रोहामि जागतेन त्वा छन्दसा रोहामि आनुष्टुभेन त्वा छन्दसा रोहामि इति ॥ ९ ॥

वैराजपञ्चमैरिति गौतमः* ॥ १० ॥

एतैः उदस्य देवताराजशब्दैः वैराजपञ्चमैरारोहेत् इत्येवं गौतम आचार्यो मन्यते वैराजेन त्वा छन्दसा रोहामीत्येव पञ्चमे प्रयोगः ॥ १० ॥

चतुर्भिरिति धानञ्जय्यः † ॥ ११ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

एतेषामेवोदस्य देवताराजशब्दानां चतुर्भिः पूर्वैः स्तोमैरारोहेदित्येवं धानञ्जय्य आचार्यो मन्यते ॥ ११ ॥

त्रिभिरिति शाण्डिल्यः* ॥ १२ ॥

एतेषामेव पूर्वैस्त्रिभिरिति शाण्डिल्य आचार्यो मन्यते उक्तार्थानामेव, ननु आनन्तर्यार्थो अथशब्दः कस्मान्न भवति अथानन्तरमेतैरुदस्य देवताराजशब्दैः आरोहेदिति उच्यते, उक्तं छन्दोभिरारोहतीति तदेकेनैवारोहणस्यार्थवत्त्वं कृतं भवति अथ पुनः समुच्चयः कल्प्यते तदा पूर्वेण कल्पेनारुह्य पुनरारोहणार्थमवरोहणं स्यात् तन्माभूदित्यतो विकल्पार्थोऽथशब्दः कल्प्यते ॥ १२ ॥

आरुह्य जपेत् स्योनामासदꣳ सुखदामासदं नमस्तेऽस्तु मा मा हिꣳसीरिति* ॥ १३ ॥

आरुह्य आसन्दीं स्योनामासदमित्येतं मन्त्रं जपेत् ॥ १३ ॥

तस्मिन्नारोहति कूर्चानारोहेयुः प्रष्टी ब्रह्मा गृहपतिः * ॥ १४ ॥

तस्मिन्नुद्गातरि आरोहति आसनार्थान् पूर्वकल्पितान् कूर्चानारोहेयुः के प्रष्टी पार्श्ववर्त्तिनौ प्रष्टी प्रस्तोतप्रतिहर्त्तारौ ब्रह्मा गृहपतिश्च ॥ १४ ॥

---

* द्राह्यायणेऽप्येवम् ।

आसन्द्या व्याख्यातं द्रव्यं वाणस्य द्रव्यं वाणस्य * ॥ १५ ॥

आसन्द्या व्याख्यातम् उक्तं निर्दिष्टं द्रव्यं वाणस्य उक्तं वाणं वितन्वन्तीति तत् किंमयो वाणो भवति तदुच्यते आसन्द्या व्याख्यातं द्रव्यं वाणस्येति औदुम्बरो वाणः स्यात् उदुम्बराभावे यज्ञियवृक्षस्य ॥१५॥

* द्राह्यायणोऽप्येवम् ।

इति तृतीयस्य द्वादशी कण्डिका ।

इति तृतीयः प्रपाठकः समाप्तः ।

## चतुर्थः प्रपाठकः ।

### अथ प्रथमा कण्डिका ।

रोहितेनानडुहेनोत्तरलोम्ना चर्मणापिहितः स्यात्* ॥१॥

उक्तम् औदुम्बरो वाण इति वाणो वीणा स वाण रोहितेनानडुहेनोत्तरलोम्ना चर्मणा पिहितः स्यादिति रोहितेनेति वर्णनिर्देशः अनडुहेनेति अनडुहविकारमानडुहम् उपरिष्टाल्लोमानि कृत्वा तेन उत्तरलोम्ना चर्मणा अपिहितः स्यात् योवाण अपिनद्धः ॥ १ ॥

तस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्यो बद्धाः स्युर्मौञ्ज्यो दार्भ्यो वा* ॥ २ ॥

तस्य वाणस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्यो बद्धाः स्युः एकस्मिन्नेकस्मिंश्छिद्रे दश दश तन्त्र्यो बद्धाः स्युः उक्तं शततन्त्रीको भवतीति अग्रमालोक्य पश्चाच्छब्दः इह तन्त्र्यः नाड्यः स्नायुमय्यः लोके प्रसिद्धः तासामत्र द्रव्यविशेषमारभते मौञ्ज्यो दार्भ्यो वेति अन्यथा हि आसन्द्या व्याख्यातं द्रव्यं वाणस्येति सिद्धमेव ॥ २ ॥

---

* द्राह्यायणेऽप्येवम् ।

त्रिष्विति शाण्डिल्यश्चतुस्त्रिꣳशन्मध्यमे त्रयस्त्रिꣳशतावभित इति* ॥ ३ ॥

त्रिषु पश्चाच्छिद्रेषु इति शाण्डिल्य आचार्यो मन्यते त्रीणि पश्चाच्छिद्राणि स्युर्न दशेति तेषां त्रयाणां पश्चाच्छिद्राणां मध्यमे चतुस्त्रिंशत्तन्त्र्यो बद्धाः स्युः ये मध्यमस्याभितश्छिद्रे तयोः त्रयस्त्रिंशत्त्रयस्त्रिंशत्तन्त्र्यो बद्धाः स्युः ॥ ३ ॥

पुरस्तादेकैकशस्तास्त्रैधं विभज्य भूर्भुवः स्वरित्येताभिः पृथगुत्तरोत्तर्युदूहेत्* ॥ ४ ॥

तास्तन्त्र्यः यदि दशसु पश्चाच्छिद्रेषु यदि त्रिषु बद्धाः त्रैधं विभज्य त्रिधा कृत्वा चतुस्त्रिंशन्मध्यमे त्रयस्त्रिंशतावभित इति भूर्भुवः स्वरित्येताभिर्व्याहृतिभिः पृथक् एकैकया उत्तरोत्तर्युदूहेत् उत्क्षिपेत् मूलत आरभ्य तत उपरिष्टादिति ॥ ४ ॥

तमभिमृशेद्वदो वद वदा वदी वदो वदोरुः पृथुः सुगः सुगं त्वः कर्मः करणः करः करस्युरभीषाट्चाभीषाही चाभिमातिहश्चाभिमातिहा च सासहिश्च सहीयाꣳश्च सहस्वाꣳश्च सहमानाश्चोदयाश्च बृहद्वयाश्च सवयाश्च बृहद्वयाश्चैन्द्रीं वाचं बृहतीं विश्वरूपाꣳ शतायुषीं प्रवद देव वाणेति* ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम् ।

तं वाणमभिमृशेत् वदो वद इत्येतदादिना यथासूत्रितेन मन्त्रेण ॥ ५ ॥

शिथिलाꣳस्तन्तुना यच्छेदेभिर्नो वाण तन्तुभिः शतं राद्ध्री-रिहावहारातस्त्र सर्वैतार्श्मजीवा ज्योतिरश्नीमहीति* ॥ ६ ॥

शिथिलान् मन्दायत्तान् आयच्छेत् यो यो वाणस्य शिथिल-स्तन्तुतन्तम् आयच्छेत् आयत्तं कुर्य्यात् बध्नीयात् एभिर्नो वाण तन्तु-भिरित्येतदादिना यथासूत्रितेन मन्त्रेण ॥ ६ ॥

वाक्त्वं मनोज्योतिर्मा नो भद्र इति जपित्वा वादयेदि-न्द्रेण तयेषीकया वेतसशाखया च सपलाशया मूलतः* ॥७॥

वाक्त्वं मन इत्येतदादि यजुर्जपित्वा वादयेद्वाणं इन्द्रेण तयेशीकया इषीका काशः वृन्द्रः कालः स्वभावनतया न वाणवन्ना-मितया वेतसशाखया च सपलाशया तया इषीकाशाखयोर्मूलाभ्यां वादयेन्नाग्राभ्याम् ॥ ७ ॥

प्राणाय त्वेत्यूर्द्धमुल्लिखेदपानाय त्वेत्यवाचम्* ॥ ८ ॥

प्राणाय त्वेत्यनेन मन्त्रेणोर्द्धमुल्लिखनं कुर्य्यात् अपानाय त्वेत्य-वाचम् प्रातिलोम्यम् ॥ ८ ॥

---

* द्राह्यायणेऽप्येवम् ।

व्यानाय त्वा व्यानाय त्वेति त्रिः संलिख्योदञ्चं प्रो-
क्षेत्* ॥ ९ ॥

व्यानाय त्वा व्यानाय त्वेति त्रिः संलिख्य वाणम् उदञ्चम् उदङ्मुखं प्रोक्षेत् ॥ ९ ॥

ब्राह्मणमुक्त्वेममुल्लिखन्नास्वेति* ॥ १० ॥

ब्राह्मणं विधिज्ञम् एवमुक्त्वा इमं वाणमुल्लिखं नास्वेति ॥ १० ॥

आहत दुन्दुभीन् प्रवदन्तु वीणा इति ब्रूयात् † ॥ ११ ॥

आघ्नध्वं दुन्दुभीन् प्रवदन्तु वीणा इति एवं ब्रूयात् ॥ ११ ॥

इति चतुर्थस्य प्रथमा कण्डिका।

---

अथ द्वितीया कण्डिका।

अलावुवीणां वक्राकपिशीर्ष्ण्यौ च पूर्वस्यां द्वारि बहिः-
सदसम् † ॥ १ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

उक्तं प्रवदन्तु वीणा इति ब्रूयादिति अलाबुवीणां वक्रा कपिशीर्ष्णौ च सदसः पूर्वस्यां द्वारि बहिर्भवेयुः अलाबुवीणां वक्रा कपिशीर्ष्णौ चेति वीणाविकारः अलाबुवीणा प्रजाता वक्रात्यर्थं कुटिला कपिशीर्ष्णा बध्नीत कः ॥ १ ॥

वक्राकपिशीर्ष्ण्यौ दुन्दुभिꣳश्च प्रतिमन्त्रयेत या वक्रायां कपिशीर्ष्ण्यां दुन्दुभौ यच्च वाद्यं घोषो यो महतो महाꣳस्तेन नोराद्धि मावदेति* ॥ २ ॥

वक्रा कपिशीर्ष्णौ दुन्दुभींश्च प्रतिमन्त्रयेत यो वक्रायां कपिशीर्ष्णामित्येवमादिना यथासूचितेन मन्त्रेण ॥ २ ॥

महावीणापि शीलवीणे चापरस्यामन्तरिति गौतमशाण्डिल्यौ बहिरिति धानञ्जप्यः* ॥ ३ ॥

महावीणापथ्यापि शीलवीणा अपरे ब्रुवते शूर्पवीणेति अपरस्यां द्वारि सदसोऽन्तः स्यातामिति एवं गौतमशाण्डिल्यावाचार्यौ मन्येते बहिःस्यातामिति धानञ्जप्य आचार्यो मन्यते ॥ ३ ॥

अलाबुवीणापि शीलवीणे च प्रतिमन्त्रयेतालाबुवीणेऽपि शीली च यं मन्त्रमधिजग्मतुस्तेनेदमुपगायतां ते साममह्वयेप्यत इति* ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम् ।

आहतदुन्दुभीन् प्रवदन्तु वीणा इत्येतच्च सर्वं कुर्यात् अलावुवीणापिशीलवीणे च प्रतिमन्त्रयेत अलावुवीणापिशीली चेत्येतदादिना यथासूचितेन मन्त्रेण ॥ ४ ॥

पश्चिमेनोपगातॄन् द्वे द्वे एकैका पत्नी काण्डवीणां पिच्छोराञ्च व्यत्यासं वादयेत्* ॥ ५ ॥

उपगातॄणां पश्चिमे प्रदेशे उपरिष्टाद् द्वे द्वे वीणे एकैका पत्नी वादयेत् व्यत्यासं किं वीणे काण्डवीणां पिच्छोराञ्च वक्रायां वेणुमय्याञ्च पिच्छोरा वैणवी ॥ ५ ॥

उपमुखं पिच्छोरां वादनेन काण्डमयीम्* ॥ ६ ॥

मुखस्य समीपे उपमुखं काण्डमयीं वादनेन वादयेत् ॥ ६ ॥

ता अपघाटिला इत्याचक्षते* ॥ ७ ॥

ता वीणाः काण्डमय्यः पिच्छोराश्च अपघाटिला इत्याचक्षते उक्तं तं पत्न्योऽपघाटिलाभिरुपगायन्त्यार्त्विज्यमेव तत् पत्न्यः कुर्वन्तीति ॥७॥

ताः प्रतिमन्त्रयेत या पत्न्यपघाटिला मृदुकं वादयिष्यति सारातिमपवाधता द्विषन्तं तैजनित्वगिति* ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम्।

ता अपघाटिलाः प्रतिमन्त्रयेत यां पत्न्यपघाटिलाम् इत्येतदादिना मन्त्रेण ॥ ८ ॥

सर्वमनुवीक्षमाणो जपेदाक्रन्दा उलूलयः प्रक्रोशा यवाचष्टति सर्वा सत्रस्य सा राद्धिस्तथेदं साम गीयत इति* ॥९॥

दुन्दुभ्यादि सर्वमनुवीक्षमाणो जपेत् आक्रन्दा उलूलयः प्रक्रोशा इत्येतदादिमन्त्रम् ॥ ९ ॥

जपेदेव सुपर्णोऽस्मि गरुत्मान् प्रेमां वाचं वदिष्यामि बह्व करिष्यन्तीं बह्व करिष्यन् स्वर्गमयिष्यन्तीं स्वर्गमयिष्यन् मामिमान् यजमानानिति* ॥ १० ॥

इमं मन्त्रं जपेदेव मन्त्रा हि कर्म्मकारणाः कर्म तद्धि भवति इमं मन्त्रं जपेदेव किञ्चिदनेन कुर्य्यात् ॥ १० ॥

इति चतुर्थस्य द्वितीया कण्डिका ।

---

अथ तृतीया कण्डिका ।

ब्राह्मणोऽभिगरः पूर्वस्याः सदसो द्वारि प्रत्यङ्मुख उपविशेत्* ॥ १ ॥

---

* द्राह्यायणोऽप्येवम् ।

अभिगृणातीत्यभिगरः अभिष्टौतीत्यर्थः सदसः पूर्वस्यां द्वारि प्रत्यङ्मुख उपविशेत् ॥ १ ॥

वृषलोऽपगरोऽपरस्यां प्राङ्मुखः* ॥ २ ॥

वृषलः शूद्रः अपगृणातीत्यपगरः स अपरस्यां द्वारि प्राङ्मुख उपविशेत् ॥ २ ॥

स ब्रूयान्नारात्सुरिमे सत्रिण इति* ॥ ३ ॥

वृषलोऽपगरो ब्रूयात् न अरात्सुरिमे सत्रिण इति ॥ ३ ॥

अरात्सुरित्यभिगरः* ॥ ४ ॥

अरात्सुरित्येवमभिगरो ब्रूयात् ॥ ४ ॥

दक्षिणेन मार्जालीयमर्योऽन्तर्वेदि दक्षिणामुखस्तिष्ठेत् बहिर्वेदि शूद्र उदङ्मुखः † ॥ ५ ॥

मार्जालीयस्य दक्षिणे प्रदेशे अर्यो वैश्यः वेदेरन्तः अन्तर्वेदि दक्षिणामुखस्तिष्ठेत् बहिर्वेदि शूद्र उदङ्मुखः वेदेर्बहिः बहिर्वेदि तिष्ठेदिति च प्रकृतम् ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अर्याभावे यः कश्चार्यो वर्णः* ॥ ६ ॥

यदि वैश्यो न लभ्यते यः कश्चार्य्यो वर्णः स्यात् ब्राह्मणो वा क्षत्रियो वा ॥ ६ ॥

तौ श्वेतं परिमण्डलं चर्म व्यायच्छेतां † ॥ ७ ॥

उक्तं शूद्रार्य्यौ चर्म्म व्यायच्छेते इति तौ शूद्रार्य्यौ श्वेतं परिमण्डलं चर्म पृथक् आयच्छेताम् आक्षिपेताम् उक्तं परिमण्डलं चर्म भवत्यादित्यस्यैव तद्रूपं क्रियत इत्येवं रूप आदित्य उपलभ्यते श्वेतं वर्णतः परिमण्डलम् आकृतितः ॥ ७ ॥

शूद्रः पूर्वः † ॥ ८ ॥

शूद्रः पूर्व आक्षिपेत् चर्म्म आत्माभिमुखं पश्चादार्यो वर्ण इति ॥८॥

पूर्वेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङ्मुखस्तिष्ठेद्बहिर्वेदि पुंश्चली दक्षिणामुखी* ॥ ९ ॥

आग्नीध्रीयस्य पूर्वे प्रदेशे वेदेरभ्यन्तरतः ब्रह्मचारी उदङ्मुखस्तिष्ठेत् ब्रह्म मैथुननिवृत्तिः तच्चरतीति ब्रह्मचारी आदिष्टव्रतो गृहीतनियमः बहिर्वेदि पुंश्चली दक्षिणामुखी पूर्वेणाग्नीध्रीयमित्ये-

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

तत् प्रकृतम् तस्मिन् देशे पुंश्चली दक्षिणामुखी तिष्ठेत् पुमांसं प्रति चलतीति पुंश्चली ॥ ९ ॥

सा ब्रूयाद्दुश्चरितिं नवकीर्णिन्निति* ॥ १० ॥

सा पुंश्चली ब्रह्मचारिणं ब्रूयात् दुश्चरितिन्नवकीर्णिन्निति ॥१०॥

धिक्काजाल्मिपुंश्चली ग्रामस्य मार्जनि पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ब्रह्मचारी* ॥ ११ ॥

ब्रह्मचारी पुंश्चलीमेवं ब्रूयात् धिक्काजाल्मि पुंश्चली ग्रामस्य मार्जनि पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ॥ ११ ॥

एवमातृतीयं व्यत्यासम्* ॥ १२ ॥

एवमनेन प्रकारेण व्यत्यासधर्म्मेण सर्वेषान्त्रिस्त्रिः क्रिया स्यात् ॥१२॥

सर्वेषां कर्मणि निष्ठिते तदेवाभिगरस्त्रिर्ब्रूयात्* ॥ १३ ॥

सर्वेषामधिकृतानां कर्मणि समाप्ते यदुक्तं पूर्वमभिगरेण तदेव पुनस्त्रिर्ब्रूयात् अरात्सुरिति ॥ १३ ॥

अवव्रज्य शूद्रः प्रद्रवेत्* ॥ १४ ॥

शीघ्रं प्रयायात् दुष्प्रकर्षगतौ ॥ १४ ॥

---

* द्राह्यायणोऽप्येवम्।

तं तेनैवावक्षिणुयात्* ॥ १५ ॥

तं शूद्रं प्रद्रावन्तं आर्य्यस्तेनैव चर्मणा हन्यात् ॥ १५ ॥

यथाभिप्रेतमितरौ ब्रह्मचार्य्याक्रोशेत्* ॥ १६ ॥

यो योऽस्याभिप्रेतः आक्रोशः तेन तेन ब्रह्मचारी पुंश्चलीमाक्रोशेत् ॥ १६ ॥

पश्चिमेनाग्नीध्रीयं बहिर्वेदि परिश्रिते मिथुनौ सम्भवेतां यौ वर्णौ लभेरन्* ॥ १७ ॥

आग्नीध्रीयस्य पश्चिमे प्रदेशे वेदेर्बहिः परिश्रिते प्रदेशे परिश्रयणमावरणं मिथुनौ स्त्रीपुमांसौ मिथुनौ सम्भवेताम् एकत्र भवेतां मिथुनधर्म्मेण यौ वर्णौ लभेरन् यौ वर्णौ ऋत्विजः परिलभेरन् तौ सम्भवेतां तत् किमिदं यौ वर्णौ लभेरन्निति उच्यते तुल्यवर्णासम्भवे वर्णसङ्करो न स्यादिति वर्णेष्वनियमः ॥ १७ ॥

गृहपतेर्दास्यो नवानुदहरणान् पूरयित्वा प्रदक्षिणं मार्जालीयं परियन्त्य हैँमहा३इदं मध्विदं मध्विति वदत्यः पञ्चावरार्ध्याः पञ्चशतम्परार्ध्याः पञ्चविꣳशतिः साम्प्रताः † ॥ १८ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

उक्तं परिकुम्भिन्यो मार्जालीयं यन्तीदम्मध्विदम्मध्विति इति गृह-पतेर्दास्यकर्मकराः नवानुदहरणान् कुम्भान् उदकस्य पूरयित्वा प्रद-क्षिणं मार्जालीयं कुर्वन्त्यः परीयुः हैमहा २ इदम्मध्विदं एवं वदन्त्यः कियत्यस्तादास्य इत्युच्यते पञ्चावरार्ध्याः सर्वनिकृष्टाः पञ्च परार्ध्याः किं वत्य इत्युच्यते पञ्चशतं परार्ध्याः सर्वोत्तमाः पञ्चविंशतिः साम्प्रताः पञ्चविंशतिर्युक्ताः अनुरूपास्य कर्मणः पञ्चविंशं महाव्रतमिति एवन्ताः सम्प्रयुक्ता भवन्ति एवं लोकेऽपि भवति साम्प्रतमनुरूपं युक्तम् अनेन चेष्टितमिति ॥ १८ ॥

## सर्वासु स्रक्तिषु दुन्दुभीनाबध्नीयुः* ॥ १९ ॥

सर्व्वासु स्रक्तिषु दुन्दुभयो वदन्तीति ब्राह्मणं सर्व्वासु स्रक्तिषु सदसः दुन्दुभीनाबध्नीयुः स्रक्तयः कोणाः ॥ १९ ॥

## उत्तरोत्तरि वाचो व्याहारयेयुर्यावतीरधिगच्छेयुः* ॥२०॥

उत्तरोत्तरीति तारतरा इति अपरे ब्रूवते शास्त्राण्यधिकृत्य कथाः कारयेयुरिति परस्परतः उत्तरोत्तरयुक्ताः यावतीर्लभेयु-रिति ॥ २० ॥

## घोषांश्च* ॥ २१ ॥

उत्तरोत्तरं कारयेयुः भेरीशङ्खपटहमृदङ्गहस्त्यश्वाश्वतरगर्दभा-दीनां यावतोऽधिगच्छेयुः उक्तं हि सर्वा वाचो वदन्तीति ॥ २१ ॥

---

* शाह्वायनेऽप्येवम्।

हिंकारमन्वभिगरः प्रभृतयः कृत्वा यथार्थꣳस्युः* ॥ २२ ॥

स्तोत्रस्य हिंकारमनु अभिगरप्रभृतयः स्वानि कर्माणि कृत्वा यथार्थं स्युः यो योऽर्थो यथार्थः ॥ २२ ॥

आस्तोत्रान्तात्कुम्भिन्यः सर्वे च घोषाः* ॥ २३ ॥

आस्तोत्रसमाप्तेः एताः कुम्भिन्यः सर्वे च घोषाः स्युरिति ॥ २३ ॥

इति चतुर्थस्य तृतीया कण्डिका ।

---

अथ चतुर्थी कण्डिका ।

पञ्चविꣳशे चतुर्विꣳशस्योत्तमे पर्याये परिचरायामावपेदिति गौतमः* ॥ १ ॥

उक्तं यद्वा अदश्चतुर्विंशं प्रायणीयं तदेतदुदयनीयं यत्संवत्सरमन्नं सम्भरन्ति सैषा पञ्चविंश्युपजायतइति तच्चतुर्विंशे पञ्चविंशः श्रूयते या सा पञ्चविंशी स्तोत्रीयोपजायते तस्याः स्थानं कल्पयत्याचार्य्यः पञ्चविंशे स्तोमे कर्त्तव्ये चतुर्विंशस्य स्तोमस्य उत्तमे पर्य्याये तां पञ्चविंशतिपरिचरायामावपेदिति गौतम आचार्य्यो मन्यते परिचरा मध्यमे विष्टावे उत्तमे पर्य्याये आवापस्थानं परिचरा तृचाभागेत्युत्तमे इति ॥ १ ॥

---

* द्राह्यायणोऽप्येवम् ।

आवापस्थान इति धानञ्जप्यः* ॥ २ ॥

चतुर्विंशस्य स्तोमस्योत्तमे पर्य्याये यदावापस्थानं तस्मिन्नावपेदित्येवं धानञ्जप्य आचार्य्यो मन्यते ॥ २ ॥

प्रथमस्यावापस्थान इति शाण्डिल्यः* ॥ ३ ॥

चतुर्विंशस्तोमे यः प्रथमः पर्य्यायः तस्य यदावापस्थानं तस्मिन्नावपेदित्येवं शाण्डिल्य आचार्य्य आह ॥ ३ ॥

चतुर्विꣳशेन वा स्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तुयात्* ॥ ४ ॥

चतुर्विंशेन वा स्तोमेन स्तुत्वा तृचस्य मध्यमां स्तोत्रीयां ताम् अहिंकृतां प्रस्तुयात् ॥ ४ ॥

स आस्कन्दो नाम* ॥ ५ ॥

सविधिरास्कन्दो नाम तस्येयं संज्ञा आस्कन्द इति ॥ ५ ॥

तन्न कुर्यादिति शाण्डिल्यायनः* ॥ ६ ॥

तमास्कन्दं न कुर्य्यादित्येवं शाण्डिल्यायन आचार्य्यो मन्यते तमिति निर्देशः किमर्थमिति चेत् उच्यते, वक्ष्यत्ययम् आस्कन्दन्तु

---

* द्राह्यायणोऽप्येवम् ।

३७

गैतमस्वलारिंग्ये धानञ्जय्य इतरेष्विति तत्रापि शाण्डिल्यायनस्या-निष्ट एवास्कन्दः अत आह तमिति ॥ ६ ॥

**उत्तमायां स्तोत्रीयायामस्तुतायां पादावुपावहरेत् सह-निधनेन भूमौ प्रतिष्ठापयेत्* ॥ ७ ॥**

ब्राह्मणं, एकस्यां स्तोत्रीयायां स्तुतायां पादावुपावहरति सह निधनेन प्रतिष्ठामुपयन्त्येष्वेव लोकेषु प्रतितिष्ठन्तीति तदुच्यते, समाप्ते स्तोत्रे आत्मन एकस्यां स्तोत्रीयायामवशिष्टायां उद्गाता आसन्द्याः पादावुपावहरेत् सह निधनेन भूमौ प्रतिष्ठापयेत् निधनं ब्रुवन् भूमौ प्रतिष्ठापयेत् ॥ ७ ॥

**आह्रियमाणे भक्ते प्रतिलोमैरारोहणीयैरवरुह्य जपे-न्मही द्यौः पृथिवी च न इमं यज्ञम्मिमिक्षतां पिपृतान्नोभरीम-भिरिति † ॥ ८ ॥**

आह्रियमाणे भक्ते यैर्मन्त्रैः आसन्दीमारूढ़ः तैः प्रतिलोमैः अव-रुह्य अवतीर्य जपेत् मही द्यौः पृथिवी च न इत्येतदादि मन्त्रं यथा-सूत्रितं प्रातिलोम्येन विश्वे त्वा देवा आनुष्टुभेन छन्दसावरोहन्तु तानन्ववरोहामि साम्राज्याय आदित्यास्त्वा जागतेन छन्दसावरोहन्तु तानन्ववरोहामि स्वाराजाय रुद्रास्त्वा त्रैष्टुभेन छन्दसावरोहन्तु

* द्राह्यायणेनानेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

तानन्ववरोहामि वैराज्याय वसवस्त्वा गायत्रेण छन्दसावरोहन्तु तानन्ववरोहामि राज्यायेत्येवं प्रातिलोम्यं अथ यद्युद्धृतदेवताराज्यशब्दैः आरोहेत् तत्राप्येवमेव प्रातिलोम्यम् आरोहणे ॥ ८ ॥

अथ आसीनाः शेषेण स्तुवीरन्* ॥ ९ ॥

अवरुह्य आसन्दीकूर्चेभ्यो यानि स्तोत्राणि अवशिष्टानि तैः स्तुवीरन् ॥ ९ ॥

उदयनीयेऽतिरात्रे सꣳस्थितेऽवभृथमभ्यवेयुरनुपमज्जन्तः† ॥ १० ॥

महाव्रतस्य विधिरुक्तः अनन्तरम् उदयनीयेऽतिरात्रे उदयन्त्येतस्मिन्नित्युदयनीयः अस्मिन्नुदयनीयेऽतिरात्रे संस्थिते समाप्ते अवभृथं गच्छेयुः उक्तं प्रागुदयनीयादतिरात्रादप्सुषोमान्तमहःसत्रेषु दधिभक्षान्तमहीनेष्विति तत् उदयनीयेऽतिरात्रे समाप्ते अवभृथमभ्यवेयुरनुपमज्जन्तः तस्मिन्नुदकेन मज्जेयुः ॥ १० ॥

पाणिभिस्तु सन्धावेरन् † ॥ ११ ॥

पाणिभिस्तूदकं गृहीत्वा उद्घर्षणं कुर्युः ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये छेदविषये विशेषोऽस्ति ।

**यस्यात्र पत्नी स्यात् पृष्ठन्तया व्युद्वावयेत्* ॥ १२ ॥**

यस्यास्मिन्नवभृथे पत्नी स्यात् पृष्ठन्तया व्युद्धावयेत् उद्वर्षयेत् यस्यात्र पत्नी स्यादित्यपत्नीका अपि भवन्त्येतद्दर्शयति यस्यात्रेति किम् उच्यते, विद्यमानास्वपि पत्नीषु कस्यचिदस्मिन्नेवावभृथे पत्नी सन्निहिता न स्यात् रजतादिस्त्रीधर्मात् सोऽन्यस्याः सकाशात्पृष्ठं व्युद्धावयेत् अत आह यस्यात्रेति ॥ १२ ॥

**तानुन्नेतोदानयेत्* ॥ १३ ॥**

तान् सत्रिणः तस्मादवभृथात् उन्नेता उदानयेत् उत्थाप्यानयेत् ॥ १३ ॥

**उदेत्य गृहपतिः सोमोपनहनं परिदधीत* ॥ १४ ॥**

उदेत्य तस्मादवभृथात् गृहपतिः सोमोपनहनं वासः परिदधीत ॥ १४ ॥

**वस्त्राणीतरे* ॥ १५ ॥**

उदेत्यावभृथात् इतरे सत्रिणः अन्यानि वस्त्राणि अहतानि परिदधीरन् ॥ १५ ॥

**अभ्युक्षणप्रभृति समापयेयुः* ॥ १६ ॥**

---

* द्राह्यायणोऽप्येवम्

परिधीय वस्त्राण्यप उपस्पृश्य अभ्युत्थणादारभ्य शेषं कर्म समापयेयुः यावदाहवनीयोपस्थानमिति ॥ १६ ॥

येनेतोगच्छेयुरन्येन प्रत्याव्रजेयुः* ॥ १७ ॥

येन मार्गेन इतो देवयजनादवभृथं गच्छेयुः तेनैव न प्रत्याव्रजेयुः अन्येन प्रत्याव्रजेयुः ॥ १७ ॥

अनूबन्ध्य वपायां हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूणि वापयेरन्* ॥ १८ ॥

अनूबन्ध्य पशोः वपायां हुतायां दक्षिणे प्रदेशे केशांश्च श्मश्रूणि च वापयेरन् ॥ १८ ॥

तस्मिन् सꣳस्थिते प्राञ्च उदञ्चो वा गत्वा पृथगुदवसानीयाभिरिष्टिभिराहिताग्नयो यजेरन्* ॥ १९ ॥

तस्मिन्ननूबन्ध्ये संस्थिते समाप्ते अरणीष्वग्निं समारोप्य प्राञ्च उदञ्चो वा गत्वा पृथक् नानेत्यर्थः उदवसानीयाभिरिष्टिभिराहिताग्नयो यजेरन् इष्टिग्रहणमतिरिक्तमिति चेत् उच्यते इयमिष्टिः प्रकृतौ यथा गृहीता विकल्पते तदिहेष्टिग्रहणं नियमार्थं क्रियते विकल्पो न स्यादिति आहिताग्नयो यजेरन्निति अनाहिताग्नीनामपि सत्रासनं दर्शयति ॥ १९ ॥

---

* द्राह्यायणोऽप्येवम्।

गृहपतिं यजमानमनाहिताग्नय उपासीरन्* ॥ २० ॥

ये अनाहिताग्नयः ते गृहपतिं यजमानं उदवसानीययेष्ट्या उपासीरन् यजमानग्रहणं तदिष्टिप्रतिषेधार्थं गृहपतिमेव यजमानं न दृष्टिनम् ॥ २० ॥

तद्देवत्यैः स्थालीपाकैर्यजेरन्निति धानञ्जप्यः* ॥ २१ ॥

ये आहिताग्नयस्ते यद्देवत्या उदवसानीयेष्टिस्तद्देवत्यैः स्थालीपाकैर्यजेरन्निति धानञ्जप्य आचार्य्य आह ॥ २१ ॥

संवत्सरꣳ संवसेयुः* ॥ २२ ॥

उदेत्य सत्रात् संवत्सरं एकस्मिन् एकत्र नयेयुः ॥ २२ ॥

द्वादशरात्रमहोरात्रौ वा* ॥ २३ ॥

द्वादशरात्रं वा संवत्सरं संवसेयुः अहोरात्रौ वा अहश्च रात्रिश्च अहोरात्रौ अहोरात्रमित्यर्थः ॥ २३ ॥

यावद्वा सुनुयुर्यावद्वा सुनुयुः* ॥ २४ ॥

यावदेव वा सुनुयुः तावदेव संवासः ऊर्द्ध्वं सत्रात् याथाकाम्य-

---

* द्राह्यायणोऽप्येवम् ।

मित्यपरे ब्रुवते उक्तं सत्रं सार्वक्रतुकमिदं तद्गवामयने संवत्सरं संवसेयुः द्वादशरात्रमहोरात्रौ वा अन्येषु सत्रेषु यावन्तमेव कालं सोमं सुनुयुः तावन्तमेव कालं संवसेयुरिति ॥ २४ ॥

इति चतुर्थस्य चतुर्थी कण्डिका ।

---

अथ पञ्चमी कण्डिका ।

अथातो गवामयनविकल्पाः* ॥ १ ॥

उक्तङ्गवामयनम् अनन्तरं विकल्पा वक्ष्यन्ते अथ अतः गवामयनविकल्पाः अथ इत्ययं निपातः आनन्तर्य्ये उक्तङ्गवामयनम् अथानन्तरं तस्यैव विकल्पाः वक्ष्यन्ते इति वाक्यशेषः ॥ १ ॥

सर्वं ज्योतिष्टोमेनैके* ॥ २ ॥

सर्वङ्गवामयनं प्रायणीयादतिरात्रादारभ्य यावदुदयनीया इति ज्योतिष्टोमेन पक्षे आचार्य्याः कल्पयन्ति सर्वग्रहणं किमर्थमिति चेत् उच्यते, यावन्त्यः संस्था गवामयने स्युस्तावत्सु विकृतो ज्योतिष्टोमः स्यादिति संस्थायाः स्थाने तत्संस्थो ज्योतिष्टोमः स्यादिति ॥२॥

अतिरात्रचतुर्विंशनवाहव्रतातिरात्रावा यथास्थानं स्युः शेषा ज्योतिष्टोमेन* ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

प्रायणीयातिरात्रचतुर्विंशमहःप्रायणीयमेव अभिजित्त्रयः स्वरसामानो विषुवान् आवृत्तास्त्रयः स्वरसामानो विश्वजिदित्येष नवाहः महाव्रतमुदयनीयोऽतिरात्र इत्येतान्यहानि यथास्थानं स्युः यस्य यत्र स्थानं यथास्थानं शेषो ज्योतिष्टोमेन अन्यः सत्रे ह्यहः शेषः सर्वो ज्योतिष्टोमेन भवेत् पुनः ज्योतिष्टोमग्रहणं किमर्थमिति चेत् उच्यते, पूर्वस्मिन्नुक्तं गवामयनसंस्थानं विकृतौ ज्योतिष्टोमः सर्वत्र स्यादिति तदिह पुनः ज्योतिष्टोमग्रहणं क्रियते अतिरात्रादिभ्यो यथास्थानकॢप्तेभ्यः योऽन्यः सत्रे शेषः सोऽग्निष्टोमसंस्थेन ज्योतिष्टोमः स्यादिति ॥ ३ ॥

अत्र वा गोआयुषी पृष्ठ्याभिप्लवौ दशरात्रमित्युपाहरेत् स संवत्सरप्रवर्हः* ॥ ४ ॥

अत्र वास्मिन् कल्पे योऽयमुक्तस्तस्मिन् तस्मिन् स्थाने गोआयुषी पृष्ठ्याभिप्लवौ दशरात्रमित्येतत् कुर्य्यात् संकल्पः सम्वत्सरः प्रवर्ह इति संवत्सरोत्पादितः संवत्सरः प्रबर्हः बृह उद्यमे ॥ ४ ॥

शङ्खाहृतञ्च* ॥ ५ ॥

शंखाहृतमिति चैतद्विधानमुच्यते ॥ ५ ॥

नाना होभिर्वयं कल्पयामो यथैतद्ब्राह्मणम् † ॥ ६ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

नाना पृथगित्यर्थः यदेतद्गवामयनस्य संखा ब्राह्मणं अतिरात्र-स्चतुर्विंशं प्रायणीयमह इत्यत आरभ्यते एतेषामह्नां प्रत्यहमेकैकस्य विकल्पं करिष्यामः॥ ६॥

**अतिरात्रमुभयसामानं कुर्वन्नान्धीगवादुत्तरे उद्दल-बृहती षोड़शिमाꣳश्चेदौद्दलस्थाने नानदम्*॥ ७॥**

यदि प्रायणीयमतिरात्रमुभयसामानं कुर्य्यात् तदा आन्धी-गवस्योत्तरयोः स्तोत्रीययोः उद्दलवृहती कुर्य्यात् उद्दलञ्च बृहच्च उद्दलबृहती यदि षोड़शन्तमतिरात्रं कुर्य्यात् तत उद्दलस्य स्थाने नानदं कुर्य्यात् उक्तं योऽनुष्टुभि नानन्दं कुर्य्यात् गौरीवितेन षोड़शिना स्तुवतेजसा श्रियमुपैति न श्रिया अवपद्यते इति॥ ७॥

**पूर्वी बृहतः सामतृचः †॥ ८॥**

बृहतः पूर्वः सामतृचः स्यात् बृहत्तृचस्यम्॥ ८॥

**चतुर्विंशमरथन्तरमेके †॥ ९॥**

चतुर्विंशमहः प्रायणीयं अरथन्तरमेके आचार्य्या इच्छन्ति नात्र रथन्तरं स्यादिति॥ ९॥

---

* द्राह्यायणेनानेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

**रथन्तरपृष्ठं वा बृहदनुष्टुप्कम्* ॥ १० ॥**

रथन्तरं वा पृष्ठं कृत्वा बृहदनुष्टुभि कर्त्तव्यमिति अथ रथन्तरं वा स्यादेतदिति ॥ १० ॥

**अग्निष्टोमसꣳस्थश्चेत्त्रिꣳशान्याज्यानि षट्त्रिꣳशानि पृष्ठानि* ॥ ११ ॥**

ब्राह्मणम् अथोखल्वाहुरग्निष्टोममेव कार्य्यमिति अथ तद्यद्यग्निष्टोमसंस्थं स्यात् त्रिंशस्तोमान्याज्यानि स्युः षट्त्रिंशस्तोमानि पृष्ठानि ॥ ११ ॥

**षट्त्रिꣳशानि वा होत्रकसामानि* ॥ १२ ॥**

मैत्रावरुणादीनां होत्रकाणां सामानि षट्त्रिंशानि स्युः होतुराज्यपृष्ठञ्च चतुर्विंशमेव स्यादिति वा ॥ १२ ॥

**पृष्ठानां वाष्टाचत्वारिꣳशानि* ॥ १३ ॥**

पृष्ठानां वाष्टाचत्वारिंशानि स्युः होत्रकसामानीति प्रकृतं होतुः पृष्ठञ्चतुर्विंशमेव एवं वा स्यात् ॥ १३ ॥

**सर्वाणि वा त्रिꣳशानि स्तोत्राणि* ॥ १४ ॥**

---

* द्राह्यायणेऽप्येवम् ।

अथवा द्वादशस्तोत्राणि त्रिंशस्तोमेन स्युः ॥ १४ ॥

**व्यत्यासं वा त्रिणवत्रयस्त्रिꣳशौ* ॥ १५ ॥**

व्यत्यस्य व्यत्यस्य व्यत्यासं त्रिणवत्रयस्त्रिंशौ स्तोमौ व्यत्यासं स्यातां त्रिणवं बहिष्पवमानं त्रयस्त्रिंशं होतुराज्यं एवमुत्तराणि सर्वाणि व्यत्यासेन एवं वा स्यात् ॥ १५ ॥

**एतदन्तरुक्थ्यम्* ॥ १६ ॥**

एतत्प्रायणीयं अन्तरुक्थ्यं या स्तोत्रीया सम्पत् प्रायणीये उक्तं यावत्यश्चतुर्विंशस्योक्थ्यस्य स्तोत्रीयास्तावत्यः संवत्सरस्य रात्रय इति तां सम्पदं प्रायणीये अग्निष्टोमसंस्थे स्तोमव्यत्यासेन उक्थ्यसंस्था सम्पद्यते अत आहैतदन्तरुक्थ्यमिति ॥ १६ ॥

**अभिप्लवꣳ स्वरसाम्नश्च ज्योतिष्टोमतन्त्र एके कल्पयन्ति* ॥ १७ ॥**

अभिप्लवं स्वरसाम्नश्चेति कर्मणि द्वितीया अभिप्लवं षड़हं स्वरसाम्नश्च एके आचार्य्या ज्योतिष्टोमस्य तन्त्रे कल्पयन्ति उक्तं भूयिष्ठं तन्त्रलक्षणमुत्तरयोः सवनमुखीये गायत्र्याविति शाचिवृत्तिर्माध्यन्दिनीयाचार्य्याणामिति इह तु भूयिष्ठं तन्त्रलक्षणमित्येतदेव

---

* द्राह्यायणोऽप्येवम्।

अस्मिन् ज्योतिष्टोमे एव कृत्स्नं भवति अभिप्लवस्वरसामसु स्तोमं तन्त्रविशेषः स एतान् स्तोमानपश्यत् ज्योतिर्गौरायुरित्यभिप्लवे सप्तदशा भवन्तीति स्वरसामसु अभीवर्त्तसुज्ञानगौरीवितानि श्रुतत्वात् तत्र द्वितीयेऽहनि पञ्चदशं बहिष्पवमानन्तृचन्त्याज्यानि सप्तदशम्माध्यन्दिनं सवनं एकविंशं तृतीयसवनं सोक्थं तत्र बहिष्पवमाने आवापः एते असृग्रमिन्दवः राजा मेधाभिरीयत इति सुचकल्पेषु दृष्टत्वात् रथन्तरपृष्ठे साम्नः पुनानः सोमधारयेति द्विहिङ्कारन्तिसृषु मेधातिथमेकस्यां रौरवं* विष्टारपङ्क्तौ यौधाजयन्तिसृषु एष व्यत्यासन्यायः उष्णिक्ककुभौ तृचस्य ज्योतिषाण्येवोक्थानि एतदेव तृतीयमहः बहिष्पवमानन्त्वविकृतन्त्रिवृत्स्तोमत्वात् चतुर्थं तृतीयेनैव व्याख्यातं पञ्चमं द्वितीयेनैव षष्ठं प्रथमेनैव व्याख्यातं स्वरसामसु ज्योतिष्टोमतन्त्रे उपास्मै गायता नर उपोषु जातमप्तुरन्तन्त्वा वृषानि बिभ्रतं पवमानस्य ते वयं पवमानस्य ते कवे अग्न आयाहि वीतय इत्याज्यानि प्रसोमासो विपश्चित इति गायत्रञ्चाश्वञ्चाभिसोमास आयव इति पौरुहन्मनञ्चदैगतञ्च गौगवञ्च यौधाजयञ्चौशनमत्य यज्ञा यथा अपूर्व्येति रथन्तरं स्वासु वामदेव्यं तं वोदस्मम्तीषहमित्यभीवर्त्तः स्वासु कालेयं स्वादिष्टया मदिष्टयेति गायत्रं चत्तुल्लकवैष्टम्भञ्च या पवस्व देवयुः पवते हर्यतोऽहरिति सफसुज्ञाने काशीतम्वा प्रसुन्वानायान्धस इति गौरीवितन्तिसृषु गौरीवितमेकस्यां गौतमसेकस्यामौदलमेकस्यामिति वा स्वरन्तिसृषु यत्पयोनिधगमभिप्रियाणीत्यैडं कावमन्त्यं स्वरं यदि विकल्पयेद्यज्ञा-

---

* नानदमिति पुस्तकान्तरपाठः ।

यज्ञीयमग्निष्टोमसाम एतावेव द्वितीयतृतीयौ स्वरसामानौ स्वरन्तु बृहन्निधनयोर्यत्पूर्वं तत् स्यादुत्तरमावृते तृतीये प्रथमस्वरं ज्योतिषाण्युक्थ्यानि यद्युक्थ्याः अग्निष्टोमसमस्त्वेव ॥ १७ ॥

तथा सताꣳ शाट्यायनिनः षड़हविभक्तीरनुकल्पयन्ति* ॥ १८ ॥

तथा सतान्तेषां अभिन्नवस्वरसाम्नां ज्योतिष्टोमतन्त्रे कल्पमानानां संयोगाय शाट्यायनकं ब्राह्मणं अधीयते ये ते दशरात्रप्रकरणे याः षड़हस्य देवताविभक्तयः सामान्तविभक्तयश्च पठिताः ता अनुकल्पयन्ति अग्न आयाहि वीतयेऽग्निं दूतं वृणीमहेऽग्निनाग्निः समिध्यतेऽग्निर्वृत्राणि जङ्घनदग्ने स्तोमं मनामहे यमग्ने पृत्सु मर्त्यमित्येता अग्निविभक्तयः एकैकं प्रत्यहं होतुराज्यानि आयाहि सुषमाहित इन्द्रमिन्द्राथिनो बृहदिन्द्रेण सन्दिदृक्षस इन्द्रो दधीचो अस्थभिरुत्तिष्ठन्नोजसा सह भिन्धि विश्वा अपद्विष इत्येता इन्द्रविभक्तयः ब्राह्मणाच्छंसिन आज्यानि प्रत्येकमेव अथ सामान्तविभक्तयः उशनं प्रथमे वासिष्ठं द्वितीये उभयतस्तोभं गौतमं तृतीये आभीशवञ्चतुर्थे आनूपं पञ्चमे इहवद्वामदेव्यं षष्ठे एताः स्वरविभक्तयः नौधसम्प्रथमे श्यैतं द्वितीये महावैष्टम्भं तृतीये आथर्वणं चतुर्थे बार्हद्गिर पञ्चमे गोष्ठः षष्ठे एता निधनविभक्तयः कालेयं प्रथमे माधुच्छन्दसं द्वितीये

---

* द्राह्यायणोऽप्येवम्।

रौरवं तृतीये पृश्निश्चतुर्थे रायोवाजीयं पञ्चमे गोष्ठ एव षष्ठे एता ऊड़ाविभक्तयः तासां कल्पना उग्रनन्तावत्प्रथमेऽहनि माध्यन्दिनान्त्यमेव स्थितं द्वितीयेऽहनि इह वद्वासिष्टं गौतमं माध्यन्दिने तृतीयेऽहनि पुनानः सोमधारयेति कालेयन्तिसृषु विष्टारपङ्क्तौ रौरवं गौतमं प्रथमायां यौधाजयन्तिसृषु चतुर्थेऽहनि पुनानः सोमधारयेति कालेयमेकस्यां आथर्वणन्तिसृषु आभीशवं प्रथमायां यौधाजयन्तिसृषु प्रथमेऽहनि पुनानः सोमधारयेति कालेयन्तिसृषु आनूपमेकस्यां रौरवं विष्टारपङ्क्तौ यौधाजयन्तिसृषु षष्ठेऽहनि उच्चातेजातमन्धस इति गायत्रन्तिसृष्वामहीयवमेकस्याञ्जराबोधीयमेकस्यां इह वद्वामदेव्यमेकस्याम् एताः सामान्तविभक्तयः अथ निधनविभक्तयः नौधसम्प्रथमेऽहनि ब्रह्मसामसिद्धं श्यैतं द्वितीये महावैष्टम्भं तृतीये चतुर्थेऽहन्याथर्वणम् अन्यत्र विकल्पितं विभक्त्यर्थेन बार्हद्गिरं पञ्चमे ब्रह्मसाम षष्ठेऽहनि पुनानः सोमधारयेति कालेयमेकस्यान्दैर्घश्रवसमेकस्यां रौरवमेकस्यां पुनस्त्रिभिर्निवृत्यान्य उद्वत्प्राजापत्यमेकस्यां गोष्ठ एकस्यां स्तोमवशेन जाम्यर्थेन च सामान्तकल्पना अथ ऊड़ाविभक्तयः कालेयं प्रथमे सिद्धमच्छावाकसाम माधुच्छन्दसं द्वितीये कालेयस्य च उतानुग्रहो बृहत्या पुनानः सोमधारयेति कालेयन्तिसृषु मेधातिथमेकस्यां रौरवं विष्टारपङ्क्तौ यौधाजयन्तिसृषु रौरवं तृतीयेऽच्छावाकसामपृश्निः चतुर्थे रायोवाजीयं पञ्चमे षष्ठेऽहनि गोष्ठ उभयथा कॢप्तः स्वरसामानः आभिप्लविके रौरवाद्यैस्त्रिभिः सिद्धाः एषां ज्योतिष्टोमतन्त्रे कॢप्तानामभिप्लवस्वरसाम्नां षड़हिकानां विभक्तीनामनुकल्पना शाट्यायनिकानाम् ॥ १८ ॥

**द्विविधमभिप्लवमेक उपवत्यग्रियवती च व्यत्यासम्प्रति-पदौ राथन्तरबार्हतानि चाज्यानि* ॥ १९ ॥**

द्विविधमभिप्लवमेके आचार्य्याः कल्पयन्ति द्विः प्रकारं द्विविधं किं द्विविधं उपवती अग्रीयवती च व्यत्यासम्प्रतिपदौ व्यत्यस्य व्यत्यस्य रथन्तरवार्हतानि चाज्यानि व्यत्यासमेवेति प्रकृतम् राथन्तरेषु तस्योपास्मै गायतानर इति प्रतिपत् अग्न आयाहि वीतय इत्येतदादीनि राथन्तराण्याज्यानि बार्हतेषु पवस्व वाचो अग्रिय इति प्रतिपत् अग्निं दूतं वृणीमह इत्येतदादीनि बार्हतान्याज्यानि एतद्द्वैविध्यम् ॥१९॥

**आज्यप्रतिपदावौशनकावे अन्त्ये पार्थयामे वा बार्हतानां स्वयोन्यभीवर्त्तौ रथन्तरपृष्ठेषु श्यैतर्चं बृहत्पृष्ठेषु† ॥ २० ॥**

एवं वा द्वैविध्यं स्यात् आज्यप्रतिपदौ आज्यञ्च प्रतिपच्चाज्य-प्रतिपदौ उपवतीति प्रतिपत् अग्न आयाहि वीतय इति होतुराज्यं माध्यन्दिनार्भवयोरौशनकावे अन्त्ये स्वयोन्यभीवर्त्तः एष प्रथमतृतीय-पञ्चमेष्वहःसु आभिप्लविकेषु अन्यत्प्रकृतिवत् अग्रियवती प्रतिपत् अग्निं दूतं वृणीमह इति होतुराज्यं माध्यन्दिनार्भवयोः पवमानयोः पार्थयामे अन्त्ये श्यैतर्चं अभीवर्त्तः एष द्वितीयचतुर्थषष्ठेषु द्रव्य-विशेषः अन्यद्यथा प्रकृति पूर्वं वा यथोक्तं द्वैविध्यं एतद्वा ॥ २० ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणेनानेन सूत्रपञ्चकं कृतम्।

व्यूढं पृष्ठ्यमेके* ॥ २१ ॥

उक्तं मशकेन पृष्ठ्यः षडहः मूढो वा व्यूढो वेति तमिह पृष्ठ्यमेके आचार्य्या व्यूढमिच्छन्ति ॥ २२ ॥

तस्य समूढात्प्रथमस्यान्हो बहिष्पवमानम्* ॥ २२ ॥

तस्य समूढस्य सतः पृष्ठ्यस्य षडहस्यैव समूढात् प्रथमस्याह्नो बहिष्पवमानं स्यात् समूढादित्यपादानलक्षणा पञ्चमी ननु च समूढे व्यूढे चाऽच्छिन्ने समूढादेव बहिष्पवमानमेकमेव पठितमधिकृतं तत् किमिदं तस्य समूढात् प्रथमस्याह्नो बहिष्पवमानमिति उच्यते, दाशरात्रिकं पृष्ठं प्रकृतित्वेनाभिप्रेत्यैवमुच्यते अनादेशे प्रकृतिः प्रत्ययो भवति तत्प्रकृतित्वेन बहिष्पवमानम् ॥ २२ ॥

समूढमेके रथन्तरबृहत्पृष्ठम्* ॥ २३ ॥

एके आचार्य्याः समूढमेवेच्छन्ति पृष्ठ्यं अयन्तु विशेषः रथन्तरबृहत्पृष्ठं भवति ॥ २३ ॥

नाना पृष्ठे चोत्तरे चतुरहे रथन्तरबृहती व्यत्यासम्पवमानेषु बृहतीषु रथन्तरमनुष्टुप्सु बृहते द्वितीये † ॥ २४ ॥

बृहद्रथन्तरमिति प्रकृतं अत आह नाना पृष्ठ इति नाना पृष्ठे

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

च्चास्मिन् पृष्ठ्ये षड़हे उत्तरे चतुरहे पवमानेषु रथन्तरबृहतो व्यत्यासं कुर्य्यात् व्यत्यस्य व्यत्यस्य व्यत्यासं बृहतीषु रथन्तरं कुर्य्यात् अनुष्टुप्सु बृहत् तृतीयपञ्चमयोः रथन्तरं बृहतीषु कुर्य्यात् चतुर्थ-षष्ठयोर्बृहदनुष्टुप्सु बृहती अनुष्टुप् रथन्तरं बृहतीषु षष्ठयोः बृहत्सु इति बहुवचनस्य विषयस्ते द्वितीये रथन्तरबृहतो द्वितीये स्यातां रथन्तरं बृहत्यां द्वितीयम् अनुष्टुभि बृहद्द्वितीयम् ॥ २४ ॥

बृहदुत्तमꣳ समूढ़े ॥ २५ ॥

यदि समूढ़ः स्यात् अनुष्टुभि बृहदुत्तमं स्यात् चतुर्थषष्ठयो-रह्नोरजाम्यर्थेन अर्थादापन्नं द्वितीयं व्यूढ़ इति ॥ २५ ॥

आष्कारणिधनात् पूर्वं कौल्मलबर्हिषम्* ॥ २६ ॥

तृतीयेऽहन्याष्कारणिधनादर्वाक् कौल्मलबर्हिषं स्यात् रथन्तरा-गमे अजाम्यर्थेन ॥ २६ ॥

आन्धीगवाच्छ्यावाश्वम्* ॥ २७ ॥

चतुर्थेऽहन्यान्धीगवात्पूर्वं श्यावाश्वं स्यात् बृहदागमे स्तोम-वशेन ॥ २७ ॥

उपोत्तमꣳ समूढे* ॥ २८ ॥

---

* द्राह्यायणेऽप्येवम् ।

यदि समूढः स्यात् अनुष्टुभि उपोत्तमं स्यात् नानदस्यावास्वस्य अजाम्यर्थेन ॥ २८ ॥

इति चतुर्थस्य पञ्चमी कण्डिका ।

---

अथ षष्ठी कण्डिका ।

आनूपोपक्रमा बृहती पञ्चमे* ॥ १ ॥

आनूपारम्भणा बृहती स्यात् पञ्चमेऽहनि रथन्तरागमे अजाम्यर्थेन ॥ १ ॥

मानवात्पूर्वꣳ हारायणम्* ॥ २ ॥

पञ्चमेऽहनि मानवात्पूर्वं हारायणं स्यात् स्तोमवशेन ॥ २ ॥

मधुश्च्युन्निधनादाकूपारम्* ॥ ३ ॥

षष्ठेऽहनि बृहदागमे मधुश्च्युन्निधनात्पूर्वं आकूपारं स्यात् ॥ ३ ॥

उपोत्तमꣳ समूढे* ॥ ४ ॥

यदि समूढः स्यात् तदा उपोत्तमं आकूपारं स्यात् ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम् ।

बृहतः पूर्वे त्रय एकर्चाः* ॥ ५ ॥

बृहतः पूर्वे त्रय एकर्चाः स्युः स्तोमवशेन ॥ ५ ॥

रथन्तरादुत्तरे* ॥ ६ ॥

रथन्तरादुत्तरे त्रय एकर्चाः स्युरिति रथन्तरं प्रकृत तृतीयपञ्च-मयोरह्नोः ॥ ६ ॥

षष्ठे च बृहतो व्यूढे* ॥ ७ ॥

यदि व्यूढः स्यात् ततः षष्ठेऽहनि बृहतः उत्तरे त्रय एकर्चाः स्युः समूढे तु पूर्वे एवं चतुर्थे व्यूढे च समूढे च पूर्व एव ॥ ७ ॥

नित्यौ च शशकर्णा तृतीये पृष्ठ्ये* ॥ ८ ॥

तृतीयेऽहनि रथन्तरादुत्तरे त्रय एकर्चाः स्युः नित्यौ च शशकर्णौ पौरुमद्गाष्कारणिधने, अथ किमर्थमिदमारभ्यते नित्यौ च शशकर्णा-विति स्थितयोः उच्यते नियमिते रथन्तरादुत्तरे त्रय एकर्चा इति तद्यदि नारभेत सञ्चारदोषः स्यात् तयोः रथन्तरबृहतोः वृत्यामनु-ष्टुप्सु कल्पना तृतीयेऽहन्यभिसोमास आयव इति पौरुमद्गं प्रथमायां रथन्तरन्तिसृषु गौतमान्तरिक्षकौल्मलबर्हिषाणि सामतृचः आष्कार-णिधनमध्यास्यायां चतुर्थेऽहनि पुरोजिती वो अन्धस इति नानद-

* द्राह्यायणेऽप्येवम्।

मेकस्यां बृहच्छ्यावाश्वान्धीगवानि तृचेषु उष्णिक्ककुभो तृचस्थे पञ्चमेऽहनि सोमउश्वाणः स्तोत्रभिरिति आनूपरथन्तरे तृचयोः हारायणमानववाम्राणि सामतृचः सामतृचाग्नेस्त्रिणिधनन्तृचे षष्ठे सोमाः पवन्त इन्दव इति गौरीवितबृहतीतृचयोः आकूपारमधुश्चुत्रन्निधनक्रौञ्चानि सामतृचः मध्ये निधनमैडं क्रौञ्चे चतुर्थे पुरोजिती वो अन्धस इति मानदान्धीगवश्यावाश्वानि सामतृचः बृहत्तृचे एते एष व्यूढकल्पः समूढकल्पे सोमाः पवन्त इन्दवः इति गौरीवितमधुश्चुत्रन्निधने तृचयोः क्रौञ्चे द्वे आकूपारञ्च सामतृचः बृहति समूढे पृष्ठ्ये ॥ ८ ॥

अभीवर्त्तकालेये बृहतीष्वनुकल्पयेदिति गौतमः* ॥ ९ ॥

अभीवर्त्तकालेये बृहतीष्वनुकल्पयेदित्येवं गौतम आचार्य्य आह नित्यं सांवत्सरिकं कल्पमनुवदति ॥ ९ ॥

नेति धानञ्जप्यः* ॥ १० ॥

धानञ्जप्योऽभीवर्त्तकालेये न कल्पयितव्ये इत्येवमाह ॥ १० ॥

व्यूढं नानुकल्पयेदिति शाण्डिल्यायनः* ॥ ११ ॥

व्यूढं पृष्ठं प्रति अभीवर्त्तकालेये नानुकल्पयेदित्येवं शाण्डिल्यायन आचार्य्य आह समूढमनुकल्पयेदिति ॥ ११ ॥

---

* द्राह्यायणोऽप्येवम ।

एकविंशत्यहकारिण उपरिष्टादभिजितः पृष्ठ्यमुपयन्ति प्राक् च विश्वजितः स्वरसाम्नस्रोक्थ्यान्* ॥ १२ ॥

योऽयं संवत्सरस्य मध्ये नवाहः पठितः अभिजित्त्रयः स्वरसामानोर्दिवाकीर्त्त्यमहस्त्रयः स्वरसामानो विश्वजिदिति एतस्य स्थाने अपरे एकविंशत्यहं कुर्वन्ति उपरिष्टादभिजितः प्राक् स्वरसामभ्यः पृष्ठ्यमुपयन्ति प्राग्विश्वजितः स्वरसाम्नः कृत्वा पृष्ठ्यमुपयन्ति स्वरसामानस्रोक्थ्यान् कुर्वन्ति, विचारितमिदं ब्राह्मणेन तानाहुरुक्थ्याः कार्य्या३ अग्निष्टोमा३ इत्येवमुक्त्वाह तदाहुर्विवीवधमिव वा एतद्यदग्निष्टोमौ विषुवानग्निष्टोमौ विश्वजिदभिजितावथेतरउक्थ्याः स्युरित्यग्निष्टोमा एव सर्वे कार्य्या इति यदग्निष्टोमन्तमेव शब्देन नियमितमेवं नियमिते सति किमुक्थ्यत्वं स्वरसाम्नां प्रत्याम्नातमेव अथ विकल्प इति उच्यते, न प्रत्याम्नायते न च विकल्प्यते ये एकविंशत्यहकारिणः ते उक्थ्यान् कुर्वन्ति ये नवाहकारिणः ते अग्निष्टोमानेव एवञ्च कृत्वा निदानकारोऽप्याह अथैते स्वरसामानस्तानग्निष्टोमान्नवाहकारिणः कुर्युरुक्थ्यानेकविंशत्यहकारिणो योऽन्यथा कुर्यादकुशलः पुरुष इति विद्यादिति ॥ १२ ॥

अभिजिद्विश्वजितौ व्यतिहरन्त्येके* ॥ १३ ॥

अभिजिच्च विश्वजिच्चाभिजिद्विश्वजितौ तावेके आचार्य्या व्यति-

---

* द्राह्यायणोऽप्येवम् ।

हरन्ति व्यतिहारो नामान्योऽन्यस्य स्थानापत्तिः अभिजितः स्थाने विश्वजित् विश्वजितः स्थाने अभिजित् ॥ १३ ॥

अभिजितो रथन्तरपृष्ठस्य राथन्तरी प्रतिपद्धोतुराज्यञ्चाभिवायुमित्यौशनं ज्योतिष्टोमं परꣳ सुज्ञानमुष्णिहि श्यावाश्वात् पूर्वे गौरीवितबृहती* ॥ १४ ॥

एके अभिजितं रथन्तरपृष्ठं कुर्वन्ति तस्याभिजितो रथन्तरपृष्ठस्य राथन्तरी प्रतिपत् स्यात् उपास्मै गायता नर इति होतुराज्यञ्च राथन्तरमेव अग्न आयाहि वीतय इति अभिवायुमित्यौशनं माध्यन्दिनान्त्यं स्यात् ज्योतिष्टोमं परं ऊशनाद्यत् परं तत् सर्वं द्रव्यं ज्योतिष्टोमं पौष्कलस्य तु स्थाने सुज्ञानं श्यावाश्वात्पूर्वे गौरीवितबृहती स्तोमकल्पनाय गौरीवितसत्वात् बृहदुभयसामत्वात् ॥ १४ ॥

स्वयोनिनी रथन्तरबृहती स्वरसामस्वेके† ॥ १५ ॥

एके आचार्य्याः स्वरसामिकान् पृष्ठस्तोत्रीयान् व्यावर्त्य स्वयोनिनी रथन्तरबृहती कुर्वन्ति ॥ १५ ॥

स्वरपृष्ठाश्चेत्स्वारसामिकेषु पृष्ठस्तोत्रीयेषु यथास्वꣳ स्वाराणि चार्भवान्त्यानि द्वैगतगौतमयोः स्थाने रथन्तरमन्तरिक्षस्य गौतमꣳ स्वरस्य बृहत्द्वितीये नित्यस्य सामतृचः¶ ॥ १६ ॥

---

* द्राह्यायणेनैतेन सूत्रपञ्चकं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

¶ द्राह्यायणेनानेन सूत्रषट्कं कृतम् ।

यदि स्वरपृष्ठाः स्वरसामानः चिकीर्षिताः स्युः स्वरसामान एते भवन्तीति सामशब्दस्य प्रकृतस्य पृष्ठगामित्वात् ततः स्वरसामिकेषु पृष्ठस्तोत्रीयेषु मशकाम्नातेषु यथा स्वरसामानि स्युः पयोनिधनं प्रथमे बृहन्निधनं पूर्वं द्वितीये प्रथमं तृतीये स्वाराणि चार्भवान्यानि स्युः नेतराणि द्वैगतगौतमयोः स्थाने रथन्तरं स्यात् द्वैगतस्य प्रथमे गौतमस्य तृतीये अन्तरिक्षस्य स्थाने गौतमं स्यात् तृतीयस्य स्वरस्य स्थानेऽनुष्टुभि बृहत् स्यात् द्वितीये नित्यस्य सामतृचः गौरीवितमेकस्यां क्रौञ्चमेकस्यामासितमेकस्यां बृहदनुष्टुभि द्वितीये प्रथमतृतीययोरङ्कोरनुष्टुभः॥ १६॥

ऊद्लत्वाष्ट्रीसाम्नोरुद्धारः* ॥ १७॥

गौरीवितमेव तृचस्थमनुष्टुभि प्रथमतृतीययोरङ्कोः ऊद्लत्वाष्ट्रीसाम्नोरुद्धारः कुर्य्यात्॥ १७॥

विषुवतोदिवैके प्रातरनुवाकमुपाकुर्वन्ति* ॥ १८॥

विषुवतः दिवा एव एके आचार्य्याः प्रातरनुवाकस्योपाकरणमिच्छन्ति॥ १८॥

बहिरस्यैके बहिष्पवमानेन स्तुवते* ॥ १९॥

सदसि स्तवनं प्रकृतं तदस्य विषुवत एके आचार्य्या बहिरिच्छन्ति

---

* द्राह्यायणोऽप्येवम्।

अध्वर्योरुद्गातुश्चायं प्रातरनुवाकवद्बहिष्पवमानयोरेष विधिर्दृष्टः दिवा-कीर्त्यत्वादह्नः ॥ १९ ॥

अग्निरिन्द्रायेपास्मै पवस्व वाच इति स्तोत्रीयꣳ शृङ्गाः* ॥ २० ॥

अग्निरिन्द्राय पवते उपास्मै गायता नरः पवस्व वाचो अग्रिय इत्येतास्तिस्र ऋचः सम्भार्यतृचं कृत्वा एतत् स्तोत्रीयं शृङ्गा आचार्या मन्यन्ते ॥ २० ॥

वात आवात्विति माषशरावयः* ॥ २१ ॥

माषशरावय आचार्या वात आवात्वित्येवं स्तोत्रीयं कुर्वन्ति स्तोत्रीया बहिष्पवमानाद्यस्तृचः ॥ २१ ॥

यज्ञायज्ञीयभासे व्यतिहरन्त्येके* ॥ २२ ॥

एके आचार्या यज्ञायज्ञीयभासयोः व्यतिहारं कुर्वन्ति अन्योऽन्य-स्थानापत्तिर्व्यतिहारः यज्ञायज्ञीयमग्निष्टोमसाम कुर्वन्ति भासमनु-ष्टुभि ॥ २२ ॥

बण्महाꣳ असि सूर्येन्द्रमिद्देवतातये आयन्तइव सूर्यमिति महादिवाकीर्त्यस्तोत्रीया विकल्पते* ॥ २३ ॥

---

* द्राह्यायणोऽप्येवम् ।

महादिवाकीर्त्त्यस्य नित्यस्तोत्रीयस्य स्थाने एतेषां यथोद्दिष्टानां एकः स्याद्विकल्पेन विकल्पो नाम तुल्यार्थप्राप्ताविष्टताध्यवसायः ॥२३॥

इति चतुर्थस्य षष्ठी कण्डिका।

---

अथ सप्तमी कण्डिका।

बृहत्पृष्ठश्चेदग्नियवती प्रतिपत्तृतीयात् साहस्रादाज्यानि नित्यैर्विकल्पन्त उत्सेधस्थाने रथन्तरं तस्य महादिवाकीर्त्य-मयं सोम इति पार्थमाभिजितानि पृष्ठानीन्द्रक्रतौ श्यैतङ्गोः ककुबुष्णिहावुद्वरति पिपीलिकमध्याः श्यावाश्वविकर्णगौरी-वितान्धीगवौदलभासान्यनुष्टुभ्यौदलस्थाने वा वाङ्निधनं क्रौञ्चमरण्ये गेये तृचयोर्व्रतात्परे* ॥ १ ॥

यदि बृहत्पृष्ठो विषुवां स्यात् ततस्तस्मिन्नग्नियवती प्रतिपद्भवेत् तृतीयात्साहस्रादाज्यानि च स्युः अग्निं दूतं वृणीमह इत्येतदादीनि नित्यानि वा यानि विषुवति तानि स्युः नित्यैर्विकल्पन्त इत्येतदुक्तं उत्सेधस्थाने रथन्तरं बृहत्यान्तस्य महादिवाकीर्त्यान्तस्य रथन्तरस्य स्थाने महादिवाकीर्त्यं भवेत् अयं सोम इति पार्थं स्यात् शिशुं जज्ञानायाः स्थाने आभिजितानि पृष्ठानि, आभिजितानीति किमर्थ-

---

* द्राह्यायणेनैतेन द्वादशसूत्राणि कृतानि।

मारभ्यते यदा बृहत्पृष्ठस्येदिति बृहत्पृष्ठत्वात् सिद्धम् इन्द्रक्रतौ श्यैतमिति च वक्ष्यति अनेनैव श्यैतेन सिद्धिर्भवति उच्यते, आभि-जितानि पृष्ठानीत्यनेन सिद्धस्यैव स्तोत्रीयाविशेषणार्थम् अभिजितस्य ग्रहणम् इन्द्रक्रतौ श्यैतम् इन्द्रक्रतु न आभरेत्येतस्मिन् प्रगाथे श्यैतं स्यात् गोः ककुबुष्णिहौ गोरित्यपादानलक्षणा पञ्चमी विषुवतो ककुबुष्णिहौ अपोह्य गोः आहरेत् तदेतदवाच्यमविशेषादुष्णिहं कथ-न्तर्हि वाच्यमेव गोः ककुबुष्णिहाविति उच्यते, बृहत्पृष्ठस्येदधि-कृत्य कथं ज्योतिष्टोमेन बृहत्पृष्ठे गोरेव ककुबुष्णिहौ स्याताम् उद्धरति पिपीलिकमध्यां पर्य्युष्वित्येतामनुष्टुभं पिपीलिकमध्यामुद्धरति साम पुरोजित्यां कल्पयत्यतस्तामुद्धरति श्यावाश्वविकर्णे गौरी-वितान्धीगवौद्दलभासान्यनुष्टुभि एतानि यथाम्नातान्यनुष्टुभि भवन्त्व-द्दलस्थाने वाङ्निधनं क्रौञ्चं भवेद्वा न वा अरण्ये गेये विकर्णभासे द्व्यचयोः स्याताम् अन्यानि सर्वाण्येकर्चानि स्युः अनुष्टुभि व्रतात्परे ये सामनी ते व्रतादाहरेत् सूर्यवतीषु कावं कुर्यात् यज्ञायज्ञीयमग्नि-ष्टोमसाम्नः ॥ १ ॥

विश्वजिति यज्ञायज्ञीयबृहती व्यतिहरन्त्येके * ॥ २ ॥

एके आचार्य्याः विश्वजिति यज्ञायज्ञीयबृहतो व्यतिहारं कुर्वन्ति यज्ञायज्ञीयमग्निष्टोमसाम तस्य स्थाने बृहदनुष्टुभि ॥ २ ॥

बृहत्पृष्ठस्येत्तृतीयात् साहस्रात् प्रातःसवनं कालेयस्थाने

---

* द्राह्यायणोऽप्येवम् ।

समन्तमाभिजितानि पृष्ठानीन्द्रक्रतौ श्येतङ्गोः ककुबुष्णि-ह्वावुद्धरति पिपीलिकमध्या अनुष्टुप्प्रभृति व्रतात्* ॥ ३ ॥

यदि विश्वजित् बृहत्पृष्ठः स्यात् ततस्तृतीयात् साहस्रात् प्रातः-सवनं भवति पवस्व वाचो अग्रिय इत्येवमादि कालेयस्य स्थाने सम्मतं भवति बृहत्यां आभिजितानि पृष्ठानि अत्र न भवन्ति बृह-दादीनि इन्द्रक्रतौ श्येतं भवति गोः ककुबुष्णिहौ भवतः पर्य्यूष्वित्ये-तदाद्या उद्धरति अनुष्टुप्प्रभृति व्रतात् अनुष्टुभमारभ्य योऽन्यो द्रव्य-विशेषः सांवत्सरिकाङ्गवति ॥ ३ ॥

उत्तरे पक्षस्ययनविकल्पाः † ॥ ४ ॥

यदुक्तं नानाहोभिर्वयं कल्पयामो यथैतद्ब्राह्मणमिति सा विकल्पना समाप्ता साम्प्रतमुत्तरे पक्षस्ययनविकल्पा वक्ष्यन्त इति वाक्यशेषः अयनविकल्पा गतिविकल्पा इत्यर्थः अयनङ्गतिः ॥ ४ ॥

अभिप्लवपृष्ठ्यान् प्रतिलोमानुपयन्त्यहरावर्त्तकारिणः † ॥५॥

अभिप्लवाश्च पृष्ठ्याश्च अभिप्लवपृष्ठ्याः तानभिप्लवपृष्ठ्यान् प्रति-लोमान् कुर्वन्ति ये अहरावर्त्तकारिण आचार्य्याः अभिप्लवपृष्ठ्यानहः प्रतिलोमान् कुर्वन्ति ॥ ५ ॥

---

* द्राह्यायणेनानेन सूत्रत्रयं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

पृष्ठ्याभिप्लवाननुलोमान् मासावर्त्तकारिणः* ॥ ६ ॥

ये मासावर्त्तकारिण आचार्य्याः ते पृष्ठ्योपक्रमान् अभिप्लवावसानान् कुर्वन्ति अह्नः आनुलोम्यम् ॥ ६ ॥

गो आयुषी च विपरिहरन्ति* ॥ ७ ॥

ये मासावर्त्तकारिणः ते गो आयुषोर्व्यतिहारं कुर्वन्ति ॥ ७ ॥

उत्तमं सम्भार्य्यं कुर्वन् सप्तमान्मासान् पृष्ठ्याभिप्लवानुद्धरेत् पञ्चायनमासान् कृत्वा दशरात्रमिश्रादभिप्लवमुद्धरेत् † ॥ ८ ॥

यद्युत्तमं मासं सम्भार्य्यं कुर्य्यात् ततः सप्तमान्मासान् पृष्ठ्यं चौंद्धाभिप्लवानुद्धरेत् स्वरसामानो विश्वजितञ्च कृत्वा अन्यान् अयनमासान् कुर्य्यात् पृष्ठ्यञ्चत्वारश्चाभिप्लवाः षड़हाः एषोऽयनमासः पञ्चायनमासान् कृत्वा दशरात्रमिश्रान् मासान् अभिप्लवमुद्धरेत् त्रयः स्वरसामानो विश्वजित् अभिप्लवौ षड़हौ आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतञ्चातिरात्रञ्चेत्येतत्परिसंख्यं सम्भार्य्यं मासस्योत्तमस्य ॥ ८ ॥

तथा सति पूर्वे पक्षसि विकल्प्यः* ॥ ९ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

तथा सति विकल्पे उत्तमे सम्भार्य्ये क्रियमाणे पूर्वे पचसि विकल्पो भवति पचःसामान्यात् ॥ ९ ॥

षष्ठादभिप्लवपृष्ठानुद्धृत्य चतुर्विंशादुत्तरान् कुर्यात्* ॥१०॥

षष्ठात्त्रीनभिप्लवान् पृष्ठ्यश्चोद्धृत्य चतुर्विंशात् प्रायणीयादह्न उत्तरान् कुर्य्यात् अतिरात्रं कृत्वा तत्र चतुर्विंशं प्रायणीयमहः तत्र-त्रीनभिप्लवान् पृष्ठ्यञ्च कृत्वाभिजितं त्रयः स्वरसामानः॥ १० ॥

समौ पचौ चिकीर्षन् पञ्चायनमासान् कृत्वा दशरात्र-मिश्रं मासमुद्धरेत् पञ्चदशौ पचौ व्रतस्यापरिमात्कं बृहत्-पृष्ठं विश्वजितम् † ॥ ११ ॥

समौ पचौ कर्त्तुमिच्छन् उत्तरस्य पचस्य प्रथमे मासि त्रयः स्वरसामानो विश्वजित्पृष्ठ्यस्त्रीनभिप्लवान् कृत्वा ततः परं पञ्चायन-मासान् कुर्य्यात् पञ्च कृत्वा दशरात्रमिश्रं मासमुद्धरेत् पञ्चदशौ पचौ व्रतस्य कुर्य्यात् परिमादश्च तस्मिन् कुर्य्यात् एवं पञ्चविंशाद्व्रतात् पञ्चदशस्तोत्रीयाः ह्रसन्ते ततस्ते पञ्चदशचतुर्विंशाः सम्पद्यन्ते एवं प्रायणीयेन चतुर्विंशेन समत्वं भवति बृहत्पृष्ठं विश्वजितं करोति एवं यावन्तः पूर्वस्मिन् पचसि पृष्ठोपायास्तावन्त एवोत्तरस्मिन् भवन्ति एतत्पचसामत्वमुक्तम् ॥ ११ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

विश्वजित उपरिष्टादायुषमेक उपयन्ति* ॥ १२ ॥

एके आचार्य्या विश्वजित उपरिष्टाद्दायुषं कुर्वन्ति ॥ १२ ॥

तथा सति गो आयुषेरैकाह्निके बृहत्यौ* ॥ १३ ॥

तथा सति विकल्पे गो आयुषेरैकाह्निके बृहत्यौ भवेतां ॥ १३ ॥

दशरात्रमेक आवर्त्तयन्ति* ॥ १४ ॥

एके आचार्य्या दशरात्रमथावर्त्तयन्ति आवर्त्तं सर्वमुत्तरं पक्षं कुर्वन्ति ॥ १४ ॥

तस्माद्व्रतं यदा परं व्रतान्ते मानसं सांवर्ग्यजिता गोतमाः* ॥ १५ ॥

तस्मादावृत्ताद्दशरात्रात्परं यदा व्रतं भवति तदा तस्य परस्तान्मानसम्भवति एवं सांवर्ग्यजिता गोतमा आचार्य्या मन्यन्ते नतु तेन समयमिति ॥ १५ ॥

---

* द्राह्यायणेऽप्येवम् ।

इति चतुर्थस्य सप्तमी कण्डिका ।

---

अथ अष्टमी कण्डिका।

ज्योतिषामयनविकल्पाः* ॥ १ ॥

इह गवामयनस्य षष्ठ्यधिकं त्रिंशतं पठितान्यहानि ब्राह्मणेन संवत्सरविकल्पास्त्वनेके श्रूयन्ते ज्योतिर्नक्षत्रादयस्तेषां कल्पना चिकीर्षिता पुरा तदारभते ज्योतिषामयनविकल्पा इति ज्योतींषि नक्षत्रादीनि तेषाङ्गतिविकल्पा वक्ष्यन्त इति वाक्यशेषः ॥ १ ॥

तत्र यदादितोऽन्ततस्तदूर्द्ध्वं विषुवतः* ॥ २ ॥

तत्र तेषु ज्योतिषाङ्गतिविकल्पेषु पूर्वस्मिन् पक्षसि यद्यदादितो वक्ष्यन्ते तदूर्द्ध्वं विषुवतः अन्ततः प्रत्येतव्यम् ॥ २ ॥

मासि मास्याद्यस्याभिप्लवस्य स्थाने त्रिकद्रुकाः* ॥ ३ ॥

ये ते सावना मासाः त्रिंशिनः कल्पिताः तेष्वेकैकस्मिन्मासि आद्यस्याभिप्लवस्य स्थाने त्रिकद्रुकाः त्र्यहा भवन्ति आभिप्लव एवेत्यर्थः उत्तरे पक्षस्यान्त्यस्य ॥ ३ ॥

स षट्त्रिंशदूनो नाक्षत्रः सप्तविंशिनो हि मासाः † ॥४॥

स एवं क्रियमाणः संवत्सरः सावनात् संवत्सरात् षट्त्रिंशता-

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणीये छेदविषये विशेषोऽस्ति।

होभिः ऊनो भवति नाक्षत्रः नक्षत्रसम्मितः सप्तविंशिनो मासा भवन्ति तत्र सप्तविंशतिर्नक्षत्राणीति ॥ ४ ॥

षष्ठाद्यस्याभिप्लवस्य स्थाने ज्योतिर्गौरायुर्ज्योतिरेवावृत्ते स नवोनो नाक्षत्र एव त्रयोदशी* ॥ ५ ॥

षष्ठस्य मासस्य य आद्योऽभिप्लवः तस्य स्थाने ज्योतिर्गौरायुः स्यातां ज्योतिरेवावृत्तः स्यात् न गौः उक्तं तत्र यदादितोऽन्ततस्तदूर्द्ध्वं विषुवत इति स सावनात् संवत्सरान्नवभिरहोभिरूनः चत्वार्यहानि पूर्वस्मिन् पञ्चस्वि लुप्तानि पश्चोत्तरस्मिन् स नाक्षत्र एव संवत्सरो भवति त्रयोदशी तत्रापि सप्तविंशिन एव मासाः त्रयोदश भवन्ति ॥ ५ ॥

युग्ममासेष्वाद्यस्याभिप्लवस्य स्थाने तत्पञ्चाहः स षडूनश्चान्द्रमसः* ॥ ६ ॥

युग्ममासेषु द्वितीयचतुर्थषष्ठेषु प्रथमस्याभिप्लवस्य स्थाने तत्पञ्चाहः अभिप्लवपञ्चाहः तत्र यदादितोऽन्ततस्तदूर्द्ध्वं विषुवत इत्येतदनुवर्त्तते एवं सावनात् संवत्सरात् षड्भिरहोभिरूनश्चान्द्रमसः एषा चान्द्रमसी गतिः ॥ ६ ॥

षष्ठादौ त्रिकद्रुकानभिप्लवश्चोपदध्यात् सोऽष्टादशाधिकः पौर्णमासी प्रसवस्तैर्य्यगयनिक आदित्यस्य* ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

षष्ठस्य मासस्यादौ त्रिकद्रुकानभिप्लवञ्चोपदध्यात् उपधानं कुर्य्यात् ज्योतिषं दर्शावधि मासमुशन्ति चान्द्रं सौरं तथा भास्कर-राशिचारात्। त्रिंशद्दिनं सावनसंज्ञमार्य्या नाक्षत्रमिन्दोर्भगणभ्र-माच्च। बृहस्पतिः अभ्युदये रवेर्मासश्चान्द्रश्च पितृकर्मणि। यज्ञे सावन-मित्याङ्गिराश्च सर्वव्रतादिषु। पूर्वस्मिन् पक्षसि यदादितोऽन्ततस्तदूर्द्ध-मित्यनुवर्त्तते एवं सावनात् संवत्सरादष्टादशभिरहोभिरधिकः पूर्व-स्मिन् पक्षसि अतिरिच्यते नवोत्तरस्मिन् एवमष्टादशाधिकः पौर्णमास्यां चास्य प्रसवः स्यात् स आदित्यः संवत्सरः तैर्यगयनिकः कदाचिदा-दित्यस्यैषा गतिर्भवति तिर्य्यग्गतिः आन्तरिक्षी गतिः तिरश्ची ॥ ७ ॥

उत्सर्जनानि मासि मासि* ॥ ८ ॥

ब्राह्मणं आ वा एते संवत्सरं प्याययन्ति य उत्सृजन्ति यथा वै दृतिराध्मात एवं संवत्सरोऽनुत्सृष्ट इत्येतान्युत्सर्जनान्यादर्शयति ततस्तदुत्सर्जनानि उच्यन्ते, उत्सर्जनानि मासि मासि भवन्ति ॥८॥

यथान्त एवमावृत्तानामादिः* ॥ ९ ॥

यथा अन्तः वक्ष्यते पूर्वस्मिन् पक्षसि एवमावृत्तानामादिः उत्त-रस्मिन् पक्षसि स्यात् ॥ ९ ॥

पूर्वेष्वभिप्लवेषु षष्ठमहरुक्थ्यं कृत्वाग्निष्टोममुत्तमे* ॥१०॥

---

* द्राह्यायणेऽप्येवम्।

मासि मासि पूर्वेष्वभिप्लवेषु षष्ठमहरुक्थ्यं कृत्वा उत्तमेऽभिप्लवे चतुर्थे षष्ठमहरग्निष्टोमं कुर्य्यात् उक्तं यद्युत्सृजेयुरुक्थ्यान्युत्सृजेयुरिति उत्सर्गिणामेष विधिः यथान्त एवमावृत्तानामादिरित्युत्तरपाक्षिको विधिरुक्तः ॥ १० ॥

तद्वैकत्रिकस्तोमम्* ॥ ११ ॥

तद्वा अहः उत्तमस्याभिप्लवस्य षष्ठं यदग्निष्टोमसंस्थमुक्तं तदेकत्रिकस्तोमं स्यात् उक्तं अथ खल्वाऊरेकत्रिकं कार्य्यन्तदेव साक्षादुत्सृष्टमिति तस्यैकत्रिकस्तोमस्य द्रव्यमुच्यते ॥ ११ ॥

असृक्षतेति बहिष्पवमानं गायत्रं गायत्र्यामाश्वमेड़ं बृहत्यां गोष्ठो वायारुचेति गायत्रपार्श्वमार्भवः † ॥ १२ ॥

असृक्षतेत्यस्यां बहिष्पवमानेऽवस्थितायां गायत्र्यां यथा गायत्रं स्यात् आश्वमेड़ं बृहत्याम् अवस्थितायामेव गोष्ठो वा अयारुचेत्यस्यामृचि गायत्रपार्श्वमार्भवः अन्यत् समानमेव ॥ १२ ॥

सवनविधं पशुं कुर्वन्नुत्तममभिप्लवपञ्चाहं कृत्वा षष्ठस्थाने सवनविधः पशुः* ॥ १३ ॥

उक्तम् अभ्युत् सुवन्ति छिद्रो वा एतेषां संवत्सर इत्याऊर्य्ये

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

स्तोममुत्सृजन्तीति पशुमालभन्तइति प्रातः पशुमालभन्ते तस्य वपया प्रचरन्तो येतदादिविधिरुक्तः सवनविधस्य पशोः तं सवनविधं पशुं कुर्वन्नुत्तममभिप्लवपञ्चाहं कृत्वा षष्ठस्याह्नः स्थाने सवनविधं पशुं कुर्य्यात् उत्तरपाञ्चिको विधिरुक्तः ॥ १३ ॥

प्रथमस्याभिप्लवं पञ्चाहं कृत्वा मासान्ते सवनविधः पशुः* ॥ १४ ॥

षष्ठमासस्याद्याभिप्लवस्य स्थाने तत्पञ्चाहं कृत्वा मासान्ते सवनविधं पशुं कुर्य्यात् ॥ १४ ॥

सर्व्वानूनानेके प्रथममभिप्लवपञ्चाहं कुर्युः † ॥ १५ ॥

एके आचार्य्याः सर्व्वान्मासानूनानिच्छन्ति केन न्यायेनेत्युच्यते प्रथममभिप्लवपञ्चाहं कुर्युः मासि मास्याद्यस्याभिप्लवस्य स्थाने तत्पञ्चाहं कुर्युः ॥ १५ ॥

अह्नो वा समस्येयुरभिप्लवपृष्ठ्ययोः सान्निपातिके* ॥१६॥

अह्नोर्वा समासं कुर्युः मासि मास्यभिप्लवपृष्ठ्ययोः आभिप्लविकञ्च षष्ठमहः षाष्ठिकञ्च प्रथमन्ते एकस्मिन्नहनि कुर्युः ॥ १६ ॥

अभिप्लवयोरुत्तमे* ॥ १७ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनानेन सूत्रद्वयं कृतम्।

उत्तमे गवामयनस्य मासि अभिप्लवयोः सान्निपातिके अहनी समस्येयुः तत्र ह्यनन्तरं पृष्ठ्यो नास्ति ॥ १७ ॥

तथा सत्येकादश्यां पूर्वपक्षस्य दीक्षित्वा त्रयोदशदीक्षाः कुर्वीरन्* ॥ १८ ॥

तथा सति विकल्पे एकादश्यां पूर्वपक्षस्य दीक्षित्वा सत्रिणः त्रयोदशदीक्षां कुर्व्वीरन् ॥ १८ ॥

सप्तदश वा* ॥ १९ ॥

स्पष्टार्थः ॥ १९ ॥

व्यत्यासं वा पूर्णां नानूनपूर्णां नावृत्ताच्छालङ्कायनिनः† ॥ २० ॥

व्यत्यासं वा व्यत्यस्य वा पूर्णम् न ऊनं पूर्णमिति एवं पूर्वस्मिन् पक्षसि मासानां क्रिया मन्यन्ते एवम् ऊनं पूर्णम् ऊनं पूर्णमित्युत्तरस्मिन् पक्षसि शालङ्कायनिनो मन्यन्ते ॥ २० ॥

एकाष्टकादीक्षिण उपसर्गिणस्ते तूष्णीमेकत्रिंशमहरासीरन् † ॥ २१ ॥

उपसर्गविधानमुक्तम् अन्ये उपसर्गिणो भवन्ति ये उपसर्गिणस्ते

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

एकाष्टकायान्दीक्षिते ते किं कुर्युरित्युच्यते एकाष्टकादीक्षिण उपसर्गिणः मासि मासि तूष्णीमेकत्रिंशमहरासीरन् ॥ २१ ॥

सवनविधेन वा पशुना यजेरन्* ॥ २२ ॥

तस्मिन् मासि मास्येकत्रिंशेऽहनि सवनविधेन वा पशुना यजेरन् सवनविधस्य पशोर्विधानमुक्तम् ॥ २२ ॥

अध्वर्युबह्वृचैः समयं कृत्वा दीक्षेरन्नेवमविलोपो भवतीति भवतीति* ॥ २३ ॥

अध्वर्युभिर्बह्वृचैश्च सह समयं कृत्वा विधिं प्रति ये विकल्पाः तेषाम् एककल्पं सर्वेऽङ्गीकृत्य दीक्षेरन् एवं क्रियमाणे न विवादो भवति कर्मणः हेतूपादानं किमर्थमिति चेत् उच्यते, एतत्प्रकरणविषयमेव केवलं विधानं माभूदिति कथं सर्वकर्मस्वध्वर्युबह्वृचैः सह समयं कृत्वा दीक्षेरन् अलोपहेतुत्वादिति ॥ २३ ॥

इति चतुर्थस्य अष्टमी कण्डिका।

---

अथ नवमी कण्डिका।

सर्वत्र ब्रह्मा दक्षिणत उदङ्मुखः कुर्याद्धोमेभ्योऽन्यत्† ॥ १ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनानेन सूत्रद्वयं कृतम्।

उक्तं गवामयनं सविकल्पं साम्प्रतं ब्रह्मत्वं विवक्षितं इन्द्रो ह वै विश्वामित्रायोक्थमुवाच वसिष्ठाय ब्रह्मवागुक्थमित्येवं विश्वामित्राय मनो ब्रह्म वसिष्ठाय तद्वा एतद्वासिष्ठं ब्रह्मापि हैवंविदं वा वासिष्ठं वा ब्राह्मणं कुर्वीतेति एवं ब्राह्मणपरामर्शः क्रियते उद्गात्रे तस्य ब्रह्मणः कर्मोच्यते तद्विवक्षुराह सर्वत्र ब्रह्मा दक्षिणतः उदङ्मुखः कुर्य्यादिति सर्वत्र सर्वकर्म्मस्वित्यर्थः सर्वशब्दो निरवशेषवाची ब्रह्मेति कर्त्ता निर्द्दिश्यते दक्षिणत इति दिक्परिग्रहः क्रियते कस्य दक्षिणतः उच्यते, कर्मणः क्रियमाणस्य दक्षिणे प्रदेशे स्यात् उक्तं तस्माद्ब्राह्मणं दक्षिणत आसयतीति उदङ्मुख इति कर्मसूदङ्मुखता निर्द्दिश्यते ब्राह्मणः कुर्य्यादिति क्रियोपदेशः सर्वेषां कर्म्मणां क्रियमाणानां दक्षिणतो ब्रह्मा स्यादिति एष सूत्रार्थः होमेभ्योऽन्यत्कर्म उदङ्मुखः कुर्य्यात् होमस्तु प्राङ्मुख एव प्राङ्मुखकरणस्थानादेश इति अत्रोच्यते, सर्वग्रहणन्तावन्न कर्त्तव्यं किं कारणम् अधिकृतत्वात् सर्वकर्मणां विध्यव्यपदेशे सर्वक्रत्वधिकार इति सोऽयं विधिरव्यपदेशे आदिश्यमानः सार्वक्रतुको भविष्यत्येव तस्मात् सर्वग्रहणं शक्यमवक्तुम्, अथ पुनः क्रियते कारणं वक्तव्यम् उच्यते, अत्र तावदयं सर्वशब्दोऽधिकारनिवृत्त्यर्थः सत्रेषु सर्वानध्वर्युर्दीक्षयेदित्येषोऽधिकारः प्रवृत्तः तस्मात् सर्वशब्दो युक्तो ब्रह्मणः कर्मादौ उच्यते, यद्येवं तथापि न कर्त्तव्यः सर्वशब्दः कस्मात् अर्थसमाप्तेः योऽसौ सत्राधिकारः प्रवृत्तः तस्यार्थः समाप्तः किञ्चान्यत् न प्रकृतमतिदेशा बाधन्त इति च न्यायोपदेशात् न ह्यातिदेशिको विधिः सामान्यस्याधिकारस्य प्रवृत्तस्य बाधको भवति तस्मात् सर्वशब्दस्तदवस्थ एव

उच्यते, एवं तावदयं सर्वशब्दः शेषविध्युपसंग्रहार्थोऽस्तु उद्गात्रं सोममधिकृत्योत्पन्नं सर्वक्रत्वधिकार इति सोऽयमाचार्यः सर्वशब्दं करोति कथं एतद्ब्रह्मत्वं पाकहविः सोमेषु सर्वेषु स्यादिति उच्यते, यद्येवमर्थं सर्वग्रहणं तथापि न कर्त्तव्यमेव अक्रियमाणेऽप्येतस्मिन् न गम्यत एवैतत् यथा सर्वत्रेति कथं पाकयज्ञादीन् वक्ष्यति एकाग्नौ यज्ञास्तेषां होष्यत्सु तूष्णीमुपविशेत् अग्न्याधेये दक्षिणया द्वारा प्रपद्य चातुष्प्राश्यन्निर्वप्स्यत्सु तूष्णीमुपविशेत् इष्ट्यादिषु सर्वेषु यजुषोपविशेत् मिथुनौ दक्षिणान्वारम्भणीयायामिष्टौ अमावास्यायान्दोहनपवित्रे मार्जयेरन्नापोहिष्ठीयाभिः चातुर्मास्येषु वरुणप्रघासानांस्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत् पशूनां यूपाहुतिं होष्यत्सु तूष्णीमुपविशेत् सौत्रामण्यां सुराकर्मस्वाब्राजमासीतेति एवमेकविंशतिसंस्थापि यज्ञे सिद्धे ब्रह्मत्वे सर्वग्रहणं न तदवस्थमेव तस्मान्न कर्त्तव्यमिति उच्यते, कर्त्तव्यमेव अक्रियमाणे एतस्मिन् ये सोमाङ्गभूताः पाकहविर्यज्ञास्तास्तेषु न प्रतीयेत यद्वार्षद्रतमधिकृत्य ब्रवीति नैतन्ध्वानामामीः सरस्वत्यान्तेषामेकोऽध्वर्युस्तस्मिन् संवत्सरमग्निमिन्धीत तयैकाग्नेः परिचर्य्या तयेति संवत्सरादूर्द्ध्वं परिणमनस्यालौ कुरुक्षेत्रे तस्यामग्नीनाधाय यथाकालमन्वारम्भणीययेष्ट्वा प्रसज्येतेति तथा कौण्डपायिनो मासन्दीक्षिता भवन्ति ते मासि मासि सोमं क्रीणन्ति तेषां द्वादशोपसदमुपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं जुहृति मासन्दर्शपूर्णमासाभ्यां यजते मासं वैश्वदेवेन मासम्वरुणप्रघासैः मासं साकमेधैर्मासं शुनाशीर्येणेति एवमेते पाकहविर्यज्ञाः सोमाङ्गभूता इष्टाः तदक्रियमाणे सर्वशब्दे एतेष्वेवैतद्ब्रह्मत्वं न प्रतीयेत

तन्माभूदित्यत आह सर्वत्रेति उच्यते, यद्येवमर्थं तथापि न कर्त्तव्यम् अस्मिन्नेव पाकहविर्यज्ञप्रकरणज्ञापकानि वक्ष्यन्ते यथा शूलगवे च बलीन् क्रियमाणाननुगच्छेत् दृष्ट्यादिषु सर्वेषु यजुषोपविशेत् एतत् सर्वेष्टीनां ब्रह्मत्वम् अङ्गभूतानां वेत्येतदुक्तं भवति पशूनां यूपाहुतिं होष्यत्सु यजुषोपविशेत् वपायां हुतायामिदमाप इति चात्वाले मार्जयित्वा सर्वपशूनां यथार्थं स्यात् अङ्गभूतानां चानङ्गभूतानाञ्चेति सिद्धे एकविंशतिसंस्थे यज्ञे ब्रह्मत्वे सर्वत्रग्रहणं तदवस्थमेव तस्माच्छक्यमकर्त्तुम् उच्यते, न कर्त्तव्यं कर्त्तव्यमेव अस्य तावत्सर्वशब्दस्य ब्रह्मणैव समानाधिकरणमस्तु सर्वत्र ब्रह्मा सर्वं त्रायत इति सर्वत्रं सर्वत्रं चासौ ब्रह्मा च सर्वत्र ब्रह्मा कथं सर्वं त्रायते एवंविदं ह वा एष ब्रह्माणमनुगाय्येत्येवमधिकृत्याह ब्राह्मे वैकल्पिकुहृतश्चाभिरक्षति एवंवित् ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्राह्मणं कुर्वीतेति सोऽयं सूत्रकारः एवंलक्षणं ब्रह्माणं दर्शयति सर्वत्र ब्रह्मेति किञ्चान्यत् यत्र च ब्रह्मणः कर्म्मास्ति सर्वेषां कर्म्मणां क्रियमाणानां सुब्रह्मण्यप्रभृतीनां ब्रह्मा हि दक्षिणतः स्यात् एवञ्च शाखान्तरेऽप्याह वाग्यतः कर्म्माणि स्मर्य्यमाण आसीत तस्याः तस्याः चेष्टाया दक्षिणत एव स्यात् दक्षिणायाश्च दिशो न व्यवेतेति तस्मात् सर्वत्र ब्रह्मा दक्षिणतः आवसथ्योऽपि ब्रह्मणो देवयजनस्य दक्षिणत एव स्यात् तस्माद्युक्तं सर्वग्रहणम् ॥ १ ॥

**पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान्* ॥ २ ॥**

---

* द्राह्यायणोऽप्येवम् ।

पाकयज्ञा इत्येवमाचक्षते य एकाग्नौ यज्ञाः पाकयज्ञा इति संव्यवहारार्था संज्ञा वक्ष्यति तूष्णीं पाकयज्ञे दक्षिणामोमिति वा प्रतिगृह्णीयादिति अथ यज्ञग्रहणं किमर्थमिति चेत् उच्यते ये एवाङ्गीभूताः पाकयज्ञास्तेषामेतद्विधानमुपदिश्यते अन्येषां गृह्योक्तमेव ॥२॥

तेषां होष्यत्सु तूष्णीमुपविशेद्धुते यथार्थं स्यात्* ॥ ३ ॥

तेषां पाकयज्ञानां होष्यत्सु होमकालात्पूर्वं तूष्णीमुपविशेत् हुते यथार्थं स्यात् यथार्थं स्यादित्यपवर्गं कर्म्मणो दर्शयति ॥ ३ ॥

शूलगवे च बलीन् ह्रियमाणाननुगच्छेन्निधीयमानानां दक्षिणतः स्थित्वा निहितेष्वप उपस्पृश्यानपेक्षं प्रत्याव्रजेत्* ॥ ४ ॥

शूलगवानामपशूर्भवत्यध्वर्यूणामेकाग्नौ तत्र यथाविधानमास्थित्वा बलीनरण्ये ह्रियमाणाननुगच्छेत् तेषां बलीनां निधीयमानानां दक्षिणतः स्थित्वा निहितेषु तेषु बलिषु अप उपस्पृश्य अनपेक्ष्य प्रत्याव्रजेत् ननु दक्षिणतः स्थित्वा इति किमर्थम् उच्यते, आचार्य्यस्य प्रवृत्तिरियं यत्र यत्रानुगमनं तत्र तत्र वक्ष्यति । अथ शूलगवे चेति चशब्दः किमर्थं उच्यते, तत्र केचिद्बलीन् हरति केचिन्न तद्येषां ह्रियते तेषामनुगच्छेत् ॥ ४ ॥

तूष्णीं पाकयज्ञे दक्षिणामोमिति वा प्रतिगृह्णीयात् † ॥५॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

पाकयज्ञे दक्षिणा दीयमानाः तूष्णीं प्रतिगृह्णीयात् ओमिति वा, शूलगवः प्रकृतः अतः पुनः पाकयज्ञग्रहणं करोति कथं, सर्वेषु पाकयज्ञेषु तूष्णीमोमिति वा प्रतिगृह्णीयादिति ॥ ५ ॥

पशुरेव पशोर्दक्षिणा पूर्णपात्रं स्थालीपाकस्य* ॥ ६ ॥

एकाग्नौ यः पशुः तस्य पशुरेव दक्षिणा, पूर्णपात्रं स्थालीपाकस्य दक्षिणा, पूर्णपात्रस्य लक्षणमुक्तं गृह्ये पशुरेवेत्येवशब्दः क्रियते दक्षिणात्वे अनादेशे पशुर्दृष्टः स एव स्यात् न यज्जातीय आलभ्यत इति ॥ ६ ॥

उभयोर्वा यथोत्साहम् † ॥ ७ ॥

उभयोर्वा पशुस्थालीपाकयोर्यथोत्साहं दक्षिणां दद्यात् यजमानः येषां होत्र्यत्सु तूष्णीमुपविशेत् ऋते यथार्थं स्यात् तेषामेतद्विधानमुपदिश्यते अन्येषां गृह्योक्तमेव ॥ ७ ॥

कर्मादिषु सर्वेषु अध्वर्युसंप्रैषमागमयेत् † ॥ ८ ॥

कर्मणामादिषु सर्वेषु अध्वर्य्युसंप्रैषमागमयेत् कः कस्मिन् कर्म्मणि सम्प्रैष इति सर्वग्रहणम् इति पाकयज्ञाः प्रकृताः ॥ ८ ॥

पूर्वया च द्वारानादेशे प्रविशेत् † ॥ ९ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

अनादेशे पूर्वया द्वारा प्रविशेत् कर्म्मशालायां चशब्दः सर्वकर्मस्विति प्रकृतानुकर्षणार्थः अनादेश इति वच्यत्यग्न्याधेये दक्षिणया द्वारा प्रतिपद्यते ॥ ९ ॥

अग्न्याधेये दक्षिणया द्वारा प्रपद्य चातुष्प्राश्यं निर्वप्स्यत्सु तूष्णीमुपविशेत्* ॥ १० ॥

पाकयज्ञेषु ब्रह्मत्वमुक्तं साम्प्रतं हविर्यज्ञेषूच्यते, अग्न्याधेयन्नाम प्रथमं हविर्यज्ञिकं कर्म तस्मिन्नग्न्याधेये दक्षिणया द्वारा प्रपद्य कर्मशालाया चतुष्प्राश्यं नाम हविः चत्वारः प्राश्नन्ति तमिति चातुष्प्राश्यन्तदर्थं द्रव्यनिर्वपणं करिष्यत्सु तूष्णीमुपविशेत् ॥ १० ॥

निरुप्ते यथार्थं स्यात्* ॥ ११ ॥

निरुप्ते तस्मिंश्चातुष्प्राश्ये हविषि यथार्थं स्यात् यथार्थं स्यादिति गच्छेदित्येतदुक्तं भवति ॥ ११ ॥

तदुद्धरिष्यत्स्वेवमेव* ॥ १२ ॥

तच्चातुष्प्राश्यं हविःसृतमुद्धरिष्यत्सु एवमेव दक्षिणया द्वारा प्रपद्य तूष्णीमुपविशेदिति । उद्धरिष्यत्स्वतन्त्वं बहुवचनम् ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम्

तच्चेदृत्विग्भिः प्राशयेयुस्तन्दुलानादायापविध्येयुर्नेष्टाविद्धंकृतानीति* ॥ १३ ॥

तच्चातुष्प्राश्यं केचिदृत्विग्भिः प्राशयेयुः, केचिदन्यैर्ब्राह्मणैस्तस्यादि तदृत्विग्भिः प्राशयेयुः तत्तस्मात्तन्दुलानादोत्वा अपविध्येयुः नेष्टाविद्धंकृतानीत्यनेन मन्त्रेण अपवेधः अधःप्रक्षेपः, तन्दुलशब्दः खिन्नेषु च भूतपूर्व्वगत्या प्रवर्त्तते ॥ १३ ॥

अथान्यान् कृताखाश्वत्थीष्वनुदधीरन्* ॥ १४ ॥

अथान्यान् तन्दुलान् कृताखाश्वत्थीषु समित्सु प्राश्नीयुः अपरे ब्रुवते तस्मिन्नेवाग्नौ प्रक्षिपेयुरिति ॥ १४ ॥

आधास्यमानस्यारण्योः प्रत्तयो यथार्थं स्यात्* ॥ १५ ॥

योऽग्नीनाधाययिता स आधास्यमानः तस्याधास्यमानस्य अरण्योरर्पितयोर्यथार्थं स्यात् यो यस्यार्थः यथार्थः ॥ १५ ॥

पूर्वाह्णे दक्षिणेनाग्न्यायतनानि गत्वा यत्राग्निं मन्थिष्यन्तः स्युस्तद्दक्षिणतो निरस्तः परावसुरिति दक्षिणा तृणं निरस्येदावसोः सदने सीदामीत्युपविशेत् भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुषओमित्येतेनोपविशेत् यजुषेति यत्र स्यात् † ॥ १६ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

इदमपरेद्युः कर्मोपदिश्यते पूर्वाह्णे अह्नः पूर्वो भागः पूर्वाह्णः तस्मिन् पूर्वाह्णे दक्षिणेनाग्न्यायतनानि गत्वा अग्नीनां स्थानानि अग्न्यायतनानि न तावदद्यापि अग्नयो भवन्ति स्थानानि तावत् कृतानि भवन्ति तान्यग्न्यायतनानि दक्षिणेन गत्वा यस्मिन् देशे अग्निमन्थनं करिष्यन्तः स्युः तस्य दक्षिणात्प्रदेशात्तृणं गृहीत्वा निरस्तः परावसुरित्यनेन दक्षिणतः तृणं निरस्यति निरसनं प्रक्षेपः आवसोः सदने सीदामीत्यनेनोपविशेत् यस्माद्देशात् तृणं गृहीत्वा निरस्तम् एतदुपवेशनस्थानं ततः भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष इत्येवं जपेत् एतेनोपविशेद्यजुषेति यत्र स्यात् अयमुपवेशनं चतुष्प्रकारं वक्ष्यति एकत्र तावद्यजुषोपविशेदिति वक्ष्यति अन्यत्र उपविशेदिति वक्ष्यति अन्यत्र तूष्णीमुपविशेदिति वक्ष्यति आसीनेत्यन्यत्र यत्र तावद्यजुषेति ब्रूयात् तत्र कृत्स्नं स्यात् मन्त्रवत् तृणनिरसनम् उपवेशनं मन्त्रवदेव उपरिष्टाज्जप इति यत्रोपविशेदिति ब्रूयात् तत्र तृणनिरसनोपवेशने मन्त्राभ्यामेव उपरिष्टाज्जपो न स्यात् यत्र तूष्णीमुपविशेदिति ब्रूयात् तत्र तृणनिरसनं मन्त्रवत् तूष्णीमुपवेशनं न चोपरिष्टाज्जपः यत्रासीनेति ब्रूयात् तत्र तृणनिरसनादि सर्वमेव निवर्त्तेत केवलमासनमेव ॥ १६ ॥

अग्निं प्रणीयमानं यथेतमनुगच्छेत्* ॥ १७ ॥

मन्थनविधिमतिक्रम्य अग्निप्रणयनविधिस्तावदुच्यते अग्निं प्रणी-

---

* द्राह्यायणोऽप्येवम्।

यमानं यथागतमनुगच्छेत् उत्तरेणाग्न्यायतनानामग्निं प्रणीयते अयन्तु दक्षिणेनाग्न्यायतनानाङ्गतः तत्तेनैवानुगच्छेत् पश्चाद्गच्छेत्तमनुगच्छेत् ॥ १७ ॥

निधीयमानस्य दक्षिणतः स्थित्वा निहिते यजुषोपविशेत्* ॥ १८ ॥

निधीयमानस्याग्नेर्दक्षिणतः स्थित्वा निहिते यजुषोपविशेदिति उक्तं यजुषोपवेशनं नित्ये ॥ १८ ॥

अत्र प्रथममिति शाण्डिल्यः* ॥ १९ ॥

अस्मिन् देशे प्रथमं युजुषोपविशेदिति शाण्डिल्य आचार्य्यो मन्यते यत्तु पूर्वमुक्तं यजुषोपवेशनम् अग्निमन्थनप्रदेशे तच्छाण्डिल्यस्य नेष्टम् ॥ १९ ॥

द्वितीयमिति धानञ्जप्यः* ॥ २० ॥

द्वितीयमेतद् यजुषोपवेशनमित्येवं धानञ्जप्य आचार्य्यो मन्यते यच्च पूर्वोक्तं यथेदमुभे यजुषा स्यातामिति ॥ २० ॥

जाते रथन्तरं गायेद्वामदेव्यꣳ ह्रियमाणे बृहन्निहिते सर्वाणि तृचेषु मनसा † ॥ २१ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

जातेऽग्नौ रथन्तरं साम गायेत् वामदेव्यं ह्रियमाणे प्रणीयमाणे बृहन्निहिते आहवनीये स्थापितेऽग्नौ बृहत्साम गायेत् सर्वाणि तृचेषु मनसा सर्वाण्येतानि तृचेषु गायेत् मनसा न वाचा सर्वग्रहणं किमर्थमिति चेत् उच्यते वक्ष्यति प्रथमोत्तमयोः स्थाने वारवन्तीययज्ञायज्ञीय इति अतः सर्वग्रहणं करोति कथं वामदेव्ये यज्ञायज्ञीये च क्रियमाणे तृचस्थे भवत इति ॥ २१ ॥

**प्रथमोत्तमयोः स्थाने वारवन्तीययज्ञायज्ञीय इति लामकायनः* ॥ २२ ॥**

प्रथमोत्तमयोः रथन्तरबृहतोः स्थाने वारवन्तीययज्ञायज्ञीये गायेदित्येवं लामकायन आचार्यो मन्यते अरण्येगेयत्वात्पूर्वयोः ॥२२॥

**पूर्वे कल्पे भूयांसीति धानञ्जप्यः* ॥ २३ ॥**

यानि भूयांसि वक्ष्यन्ते तानि पूर्वस्मिन् कल्पे स्युः रथन्तरबृहत्कल्पेनोत्तरस्मिन् वारवन्तीययज्ञायज्ञीयकल्पे ॥ २३ ॥

इति चतुर्थस्य नवमी कण्डिका ।

---

अथ दशमी कण्डिका ।

**मन्थिष्यत्स्वरणी आलभ्यारण्योरिति गायेत्* ॥ १ ॥**

---

* द्राह्यायणोऽप्येवम् ।

उक्तं पूर्वं कल्पे भूयांसीति यत्र रथन्तरबृहतोः क्रिया तत्रै-तानि भवन्ति अग्निमन्थिष्यत्सु अरणी आलभ्य स्पृष्ट्वा अरण्योरित्ये-तत् साम गायेत् ॥ १ ॥

**मथ्यमानेऽग्निं नर इत्येतयोरन्यतरत्* ॥ २ ॥**

मथ्यमान इति वर्त्तमानकालोपदेशः मथ्यमानेऽग्नौ अग्निनर इत्येतयोः साम्नोः अन्यतरत् एकं साम गायेत् ॥ २ ॥

**धूम उदिते त्वेषस्ते धूम ऋण्वतीति* ॥ ३ ॥**

मथ्यमानेऽग्नौ धूमे उत्थिते त्वेषस्ते धूमः ऋण्वतीति एतत् साम गायेत् ततः जाते रथन्तरं गायेदित्येतत् प्रागेवोक्तम् ॥ ३ ॥

**प्रज्वलितेऽदर्शिगात्विति* ॥ ४ ॥**

प्रज्वलितेऽग्नौ अदर्शिगातुवित्तम इत्येतत् साम गायेत् ॥ ४ ॥

**निधीयमाने गवां व्रतं यदग्निमीड इति* ॥ ५ ॥**

गार्हपत्ये निधीयमानेऽग्नौ गवां व्रतं साम गायेत्, यदग्निमीड इत्येतस्यामृच्युत्पन्नं ततः प्रणीयमाने वामदेव्यं गायेत्, तत्प्रागुक्तं वामदेव्यं ह्रियमाण इति आहवनीये निहिते बृहद्गायेदित्येतदपि प्रागुक्तमेव ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

## यानि वैनमध्वर्युर्ब्रूयात् तानि गायेत्* ॥ ६ ॥

एतानि वा यथोक्तानि गायेत् यानि वा एनं ब्रह्माणं अध्वर्युः सम्प्रेष्यति तानि गायेत् ॥ ६ ॥

## तान्युद्गातृकर्मक उद्गाता सामवेदेनेति श्रुतेः † ॥ ७ ॥

तानि सामानि यथोद्दिष्टानि यानि वा अध्वर्युः सम्प्रेष्यति तान्येऽके आचार्य्या उद्गातृकर्म मन्यन्ते यस्मादियं श्रुतिः यानि सामवेदेन कर्माणि तान्युद्गाता करोति ऋग्वेदेन होता करोति यजुर्वेदेनाध्वर्युः उद्गाता सामवेदेनेति इयं श्रुतिस्तत्रैव स्यात् । ब्रह्मणः प्रकरणे श्रूयमाणानि कथमुद्गातुर्भवन्तीति चेत् तद्ब्रवीति ॥ ७ ॥

## यथा विहव्यसजनीयकयाशुभीयानि होतुः* ॥ ८ ॥

यथा उद्गातृप्रकरणे श्रूयमाणानि विहव्यादीनि विहव्यं शस्त्रं सजनीयं शस्त्रं अगस्त्यस्य कयाशुभीयं शस्त्रमिति होतुरेव भवन्त्यसामर्थ्यादुद्गातुः एवमेतानि सामानि ब्रह्मत्वेऽपि श्रूयमाणानि उद्गातुरेव भवन्ति किञ्च ॥ ८ ॥

## प्रस्तोतुश्च वैराजशक्करीप्रस्तावाः* ॥ ९ ॥

वैराजशक्करीषु चैवं श्रुतिः प्रस्तावं प्रस्तुत्य विष्टम्भान् विष्टम्भातीति यः आभिः क्षिप्रं प्रस्तुत्य क्षिप्रमुद्गायतीति इति च समान-

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनानेन सूत्रद्वयं कृतम् ।

कर्त्तृकेऽपि सति आदेशे प्रस्तावमात्रमेव भवति प्रस्तोतुः उद्गीथ-मुद्गातुरेव भवति । किञ्चान्यत् ॥ ९ ॥

सर्वैश्चाविधानाद् ब्रह्मत्वकारिभिः* ॥ १० ॥

न च सर्वैर्ब्रह्मत्वकारिभिरग्न्याधेये सामगानं ब्रह्मणो विहितं तस्मादुद्गातुरेव स्यात् ॥ १० ॥

कर्मयोगाच्चोद्गातुश्चत्वारो महर्त्विजः प्राश्नन्तीति ह चातुष्प्राश्यप्राशनम्* ॥ ११ ॥

यस्माच्चोद्गातुस्तेन कर्मणा सह संयोगः श्रूयते चत्वारो महर्त्विजः प्राश्नन्तीत्येषा श्रुतिः एभिः कारणैरुद्गातुरेव सामगानं स्यात् ॥ ११ ॥

अधिकारात्तु ब्रह्मणः* ॥ १२ ॥

अत्र व्यावृत्तः पक्षः सर्वत्र ब्रह्मा दक्षिणतः उदङ्मुखः कुर्य्यादिति ब्रह्माधिकृतः तस्मात्तस्यैवेदं सामगानं स्यादधिकारात् ब्रह्मणो ह्यधिकारः सामवेदेन ऋग्वेदेन होता करोति यजुर्वेदेन चाध्वर्युरुद्गाता सामवेदेन अथ पुनर्ब्रह्मा † अनयैव त्रय्येति अतस्तस्यैवाधिकारः अधिकृतो ब्रह्मा भवति सामवेदेन तस्मादधिकाराद्ब्रह्मणः स्यात् ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम् ।

† अथ केन ब्रह्मेति पुस्तकान्तरपाठः ।

उद्गात्रे चाविधानात्* ॥ १३ ॥

किञ्चान्यत् यदि चेदमग्न्याधेये सामगानमुद्गातृकर्माभविष्यत् तदा उद्गातृप्रकरणे एवं विधास्यदाचार्य्यः सार्वक्रतुके तस्मादेतद् ब्रह्मण एव स्यात् ॥ १३ ॥

दृष्टश्चानेन सामगानं वाजपेयसौत्रामण्योः* ॥ १४ ॥

दृष्टश्चानेन ब्रह्मणः सामगानं वाजपेयसौत्रामण्योः केन दृष्टम् ऋषिणा ऋषिशब्देन ब्राह्मण उच्यते वाजिनां साम ब्रह्मा रथचक्रेऽभिगायतीति वाजपेये ऐन्द्रं साम बृहत्यां सामानि गायतीति सौत्रामण्याम् ॥ १४ ॥

उद्गातेति यथाभूयसो वादः* ॥ १५ ॥

यदुक्तं उद्गातृकर्म्मैक उद्गाता सामवेदेनेति श्रुतेरिति अत्र ब्रूमः यथा भूयसो वादः भूयस्त्वं गृहीत्वा प्रवृत्तः उद्गाता सामवेदेनेति ॥ १५ ॥

हौत्रे विधेर्विहव्यादीनि* ॥ १६ ॥

यदुक्तमुद्गातृप्रकरणे श्रूयमाणानि विहव्यादीनि होतुर्भवन्तीति अत्र ब्रूमः हौत्रे विधिरस्ति अतस्तानि होतुर्भवन्ति होतुरेव सामर्थ्यात्तत्र उद्गातुरसामर्थ्यादेव न भवन्ति ब्रह्मणस्तु पुनस्तत्र त्रयीकर्त्तृकत्वासामर्थ्यमस्ति सामगाने ॥ १६ ॥

---

* द्राह्यायणोऽप्येवम्।

स्तोत्रवत् प्रस्तावाः* ॥ १७ ॥

अथ यदुक्तं प्रस्तोतुश्च वैराजशक्करीप्रस्तावा इत्यत्र ब्रूमः प्रस्तोतुर्यथैवान्येषु स्तोत्रेषु प्रस्तावा भवन्ति तथैवेहापि समाख्यानविनियुक्ता एव योऽपि समानकर्त्तृक आदेशः सोऽप्यन्यार्थः वादसम्बन्धेन प्रवृत्तः ॥ १७ ॥

विराट्सु स्तुवन्ति पुरीषेण स्तुवत इति बहुश्रुतेः* ॥ १८ ॥

इयञ्च तयोरेव स्तोत्रयोः श्रुतिः विराट्सु स्तुवन्ति वैराजाविष्टम्भाः शक्करीभिः स्तुत्वा पुरीषेण स्तुवत इति च तयोस्तोत्रयोस्त्रिकर्त्तृकत्वमेवाभिवदति ॥ १८ ॥

अविधानं विधिद्वैधात् † ॥ १९ ॥

अथ यदुक्तं सर्वैस्त्राविधानात् ब्रह्मत्वकारिभिरित्यत्र ब्रूमः अत्राविधानं विधिद्वैधात् केषाञ्चिदिष्टं केषाचिन्नेष्टं सामगानं एभिरेतैर्विहितं येषामिष्टन्तैर्विहितम् ॥ १९ ॥

यावद्वचनं कर्मयोगः † ॥ २० ॥

अथ यदुक्तं कर्मयोगाच्चोद्गातुरित्यत्र ब्रूमः यावदेव कर्म श्रूयते

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणेऽप्येतम् ।

तावदेवास्तु चातुष्प्राश्यप्राशनं श्रूयते न सामगानं तस्माच्चातुष्प्राश्य-प्राशनमस्तु सामगानं माभूदश्रुतत्वादुद्गातुः अथ वा अत्र ब्राह्मणे-नोद्गातुः कल्पितं सूत्रेण विचारितम् एकपक्षेण तस्माद्विकल्प एव स्यात् ॥ २० ॥

हुतायां पूर्णाहुतौ यथार्थꣳ स्यात्* ॥ २१ ॥

सामगानं विचारितं अतोऽनन्तरं ब्रह्मा पूर्णाहुतौ हुतायां यथार्थं स्यात् यथार्थमिति गतार्थम् ॥ २१ ॥

अक्षाꣳश्चेदभिजुहुयुस्तत्र गत्वा तूष्णीमुपविशेत्* २२॥॥

क्वचिदध्वर्यवः अक्षाभिर्होमं कुर्वन्ति अक्षानामविभीतकफलानि तद्यद्यक्षानभिजुहुयुः तत्र तस्मिन् गत्वा तूष्णीमुपविशेत् सिद्धमिदं सर्वत्र ब्रह्मेत्यत्र उपवेशनविधिविशेषणार्थमारभ्यते तूष्णीमिति तदु-क्तम् ॥ २२ ॥

तैर्द्यूते यथार्थꣳ स्यात्* ॥ २३ ॥

तैरक्षाभिर्हुते द्यूते प्रवृत्ते यथार्थं स्यात् ॥ २३ ॥

इष्ट्यादिषु सर्वेषु यजुषोपविशेत् † ॥ २४ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम्।

पूर्णाहुत्यनन्तरमग्न्याधेयेष्टयो भवन्ति तास्विष्टिषु ब्रह्मत्वमुच्यते इष्टीनामादिषु सर्वेषु यजुषोपवेशयेत् स प्रकार उक्तः अथ सर्वग्रहणं किमर्थमिति चेत् बहुवचनसामर्थ्यात्सिद्धमिदं इष्टिष्विति उच्यते, अग्न्याधेयेष्टिष्वितीदं बहुवचनं कृतार्थम् अग्न्याधेयेष्टिष्वत्र वर्त्तते सोऽयमाचार्य्यः सर्वग्रहणं करोति कथं सर्वेष्टिष्विदं स्यादिति ॥ २४ ॥

पूर्वो यजमानात् † ॥ २५ ॥

अथ कस्मिन् प्रदेशे इत्युच्यते यजमानासनस्य पूर्वे प्रदेशे ॥ २५ ॥

आहवनीयं प्रति † ॥ २६ ॥

आहवनीयस्याभिमुख्येन प्रतिशब्द आभिमुख्ये वर्त्तते ननु सिद्ध-माभिमुख्यम् उदङ्मुखव्यावृत्तौ चेति उच्यते, विकल्पार्थमार-भ्यते ॥ २६ ॥

परिध्योर्वा सन्धिꣳ स्रुचां वाग्राण्युत्करं वा ‡ ॥ २७ ॥

परिध्योर्वा सन्धिं प्रत्याभिमुख्यं स्यात् स्रुचां वाग्राण्युत्करं वा प्रतिशब्दः प्रत्येकं परिसमाप्यते ॥ २७ ॥

तमन्तरेणाहवनीयञ्च यजमानञ्च सञ्चरो नान्येषाम्¶ ॥२८॥

---

† द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम् ।

‡ द्राह्यायणेन एतेन सूत्रत्रयं कृतम् ।

¶ द्राह्यायणेऽप्येवम् ।

तं ब्रह्माणमन्तरेणाहवनीयञ्च यजमानस्य सञ्चरः स्यात् नान्येषामिति नियमार्थम् अन्तरेण युक्त इति द्वितीया ॥ २८ ॥

तं यदाध्वर्य्युर्ब्रूयाद् ब्रह्मन्निदं करिष्यामीति सवितृप्रसूतोऽदः कुरु भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतेनानुमन्त्रयेत* ॥ २९ ॥

तं ब्रह्माणं यदा यस्मिन् कालेऽध्वर्युर्ब्रूयात् ब्रह्मन्निदं करिष्यामीति तस्मिन् काले ब्रह्मा ब्रूयात् सवितृप्रसूतोऽदः कुरु अद इति सर्वनामस्थाने यत्कर्म करिष्यन् भवति तस्य नाम गृहीत्वा यथा-ब्रह्मन्नपः प्रणेष्यामि सवितृप्रसूतोऽपः प्रणीय एष प्रकारः सर्वानुज्ञासु भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतेनानुमन्त्रयेतेति अनुज्ञानस्योपरिष्टादेतं मन्त्रं जपेत् ॥ २९ ॥

इति चतुर्थस्य दशमी कण्डिका।

---

अथ एकादशी कण्डिका।

प्रणीतासु प्रणीयमानासु वाचं यच्छेदातासां विमोचनात्* ॥ १ ॥

उक्तम् इष्ट्यादिषु सर्वेषु यजुषोपविशेदिति ततोपविष्टस्य ब्रह्मण इष्टिष्विदं प्रथमं कर्मोपदिश्यते प्रणीता इति संज्ञा वक्ष्यति विमु-

---

* द्राह्यायणोऽप्येवम्।

क्तासु प्रणीयमाणासु समिध आदध्यादिति पात्रस्था आपः प्रणीयन्ते अप्सु बहुवचनं प्रणीता इति न पात्रे प्रणीयमानास्विति वर्त्तमानकालनिर्द्देशः वाचं यच्छेत् आकुतः कालात् उच्यते आतासां विमोचनात् यावत्तासां विमोचनं कृतमिति सौमारौद्रार्थं तस्य हि घृतेनोदकार्थाः क्रियन्ते घृतं प्रणीतार्थेन प्रणीयते तत्राप्यातासां विमोचनात् ॥ १ ॥

तास्वेव प्रणीयमानास्वाहविष्कृतस्तम्बयजुषश्चाध्यासमिधः प्रस्थानीयाया इति वा* ॥ २ ॥

वाग्यमनस्य कालविकल्प आरभ्यते तास्वेव प्रणीतासु प्रणीयमानासु वाचं यच्छेत् आकुतः कालात् आहविष्कृतः यावद्धविष्कृदेहीत्येतद्यजुः प्रयुक्तमिति तत ऊर्द्ध्वं वाग्विसर्गः आकस्मात् कालात् आस्तम्बयजुर्हरणात् स्तम्बयजुर्हरणं यद्वेदि पांशूनुत्कीर्य्य उत्कर उत्किरति ततस्तम्बयजुषः अधि उपरिष्टात्तावद्वाग्यमनं यावत्समित्प्रस्थानीयेति समिधः प्रस्थानीयाया ऊर्द्ध्वं वाग्विसर्गः ॥ २ ॥

यत्र वाध्वर्य्युब्रह्माणौ चेष्टेतां यत्र वा न चेष्टेतां वागयतः प्रायस्त्वेव स्यात् † ॥ ३ ॥

उक्तं यावद्वा ऋचा होता करोति होतृष्वेव तावद्यज्ञो यावद्यजुषाध्वर्युरध्वर्य्युष्वेव तावद्यावत्साम्नोद्गातोद्गातृष्वेव तावत् ब्रह्मण्येव ताव-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम ।

द्यज्ञो यत्रोपरतस्तस्मात् तस्मिन्नन्तर्द्धौ ब्रह्मा वाचंयमो बभूवेति सोऽयमाचार्य्य आह यत्र वाध्वर्युबर्कृचौ कर्म कुर्य्यातां यत्र वा न कुर्य्यातां दाग्यतः प्रायस्त्वेव ब्रह्मा स्यादिति प्रायोवचनात् कुर्य्यादिति कदाचित् किञ्चिदिति ॥ ३ ॥

प्रायश्चित्तञ्चेत्कर्त्तव्यꣳ स्याद् भूः स्वाहेति गार्हपत्ये जुहुयात् भुवः स्वाहेति दक्षिणाग्नावाग्नीध्रीये सुत्याचेत् स्वः स्वाहेत्याहवनीये भूर्भुवःस्वः स्वाहेति तत्रैव* ॥ ४ ॥

इह प्रायश्चित्तेषु ब्रह्माधिकृत अतस्तत्प्रकरण आह यज्ञोऽहमित्यस्य कर्मठोऽप्तूनादाय वृक्षमापुपुवे रुहारुणिराहुतिर्भुवत्योवाच पुनर्वैनान्निर्वप्स्यस्यतो वावमथोवप्स्यम इति स होवाच किं होष्यसीति प्रायश्चित्तमिति किं प्रायश्चित्तमिति सर्वप्रायश्चित्तमिति किं सर्वप्रायश्चित्तमिति महाव्याहृतीरेव मघवन्निति यदि प्रायश्चित्तं नाम कर्मदोषनिधानार्थं क्रियते दोषे उत्पन्ने प्रायश्चित्तं भवति तद्यदि प्रायश्चित्तं कर्त्तव्यं स्यात् भूः स्वाहेति गार्हपत्ये जुहुयात् भुवः स्वाहेति दक्षिणाग्नौ यदि सुत्या स्यादाग्नीध्रीये स्वः स्वाहेत्याहवनीये भूर्भुवःस्वः स्वाहेति तत्रैव तत्रैवेति प्रकृतावधारणं क्रियते। ननु यदि प्रकृतावधारणं भूर्भुवःस्वः स्वाहेत्येवमेव कर्त्तव्यं स्यात् अत्रोच्यते तत्केचिद्वर्णयन्ति एवं क्रियमाणे भूर्भुवःस्वः स्वाहेत्येतमेव केवलामाहुतिं स्यात् या अन्या व्याहृती

---

* द्राह्यायणोऽप्येवम्

गार्हपत्यादिषु दृष्टाः ता न स्युरिति एवञ्चाह यदाहुतिमनूचिषे तस्मादेतामेव जुहुयादिति च, ननु चेच्छब्देन यद्यर्थसिद्धेः कर्त्तव्यं स्यादितीदं किमर्थमुच्यते उच्यते, एष वै ब्रह्म चाप्नोति य एतदनोयुक्तं सुब्रह्मण्याय ददाति ब्रह्मणा चैवास्य श्रिया च यज्ञं समर्द्धयति य एवं वेदायो खल्वाहुर्यच्चावगतं यच्चानवगतं सर्वस्यैषैव प्रायश्चित्तिरिति तद्यदि तावदनेनैव प्रायश्चित्तार्थं कृतं मन्येत नैव कुर्य्यात् अथ पुनः प्रायश्चित्तार्थमकृतं मन्येत ततः कर्त्तव्यमिदम् अथ स्याच्छब्दः किमर्थमिति चेत् उच्यते, नियमार्थं स्याच्छब्दः क्रियते अथ कृते चाकृते च प्रायश्चित्तार्थं स्यादेवेदम् सर्वत्रेति ॥ ४ ॥

हुत्वा ब्रूयाच्चेष्टताकार्ष्मप्रायश्चित्तमिति* ॥ ५ ॥

हुत्वा यद्येकामाहुतिं यदि बह्वीः ब्रूयात् चेष्टताकार्ष्मप्रायश्चित्तमित्येवं मन्त्रम् ॥ ५ ॥

अवेलायां चेद्व्याहरेदयज्ञियं वापद्येतैता एव व्याहृतीरनुप्रेक्षेतेदं विष्णुरिति वर्चम्† ॥ ६ ॥

उक्तं यस्मात् तस्मिन्नन्तर्द्धौ ब्रह्मा वाचंयमो बुभूषेदिति स यदि प्रयतः व्याहरेदेता व्याहृतीर्मनसानुद्रवेत् भूर्भुवःस्वरिति वैष्णवीं

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

वर्चमिदं विष्णुर्विचक्रमे इति वाग्यमनस्य कालः सूत्रकारेण नियमितः तद्यद्यवेलायां किञ्चिद्व्याहरेदयज्ञियं वा किञ्चित्कर्मापद्येत यज्ञमर्हति यज्ञियं न यज्ञियमयज्ञियन्तद्यदि बहिस्तन्त्रिकं वाचं वदेत् अनैष्टिकमयज्ञियं वाङ्मनसा आपद्येत एता एव व्याहृतीरनुप्रेक्षेत याभिः प्रायश्चित्तं कृतम् अनुप्रेक्षेत मनसानुद्रवेत् वैष्णवीं वा ऋचं मनसा ध्यायेत् विष्णुर्देवता अस्येति वैष्णवी उरुक्रमिदं विष्णुरिति ॥ ६ ॥

अमावास्यायां दोहनपवित्रे मार्जयेरन्नापोहिष्ठीयाभिः*।७.

दर्शपौर्णमासिकं विधानं प्रवृत्तं तत्रामावास्यायां विशेष उच्यते, अमावास्यायामिति दर्शमुपचरन्ति अमावास्यायामिष्टौ दोहनपवित्रेऽधिकरणे मार्जयेरन् आपोहिष्ठीयाभिर्ऋग्भिः अभ्युक्षेरन् मार्जनमभ्युक्षणम् ॥ ७ ॥

तदभावे दार्भे* ॥ ८ ॥

तस्याभावस्तदभावः तस्य दोहनपवित्रस्याभावे दार्भे दर्भमये पवित्रेऽधिकरणे मार्जयेरन् यस्य सान्नाय्यं न पवित्रं† तस्य दोहनपवित्रं नास्ति ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

† प्रवृत्तमिति पुस्तकान्तरे समीचीनः पाठः ।

**सर्वेष्टिष्विति शाण्डिल्यायनः* ॥ ९ ॥**

सर्वेष्टिष्वेव मार्जनं शाण्डिल्यायन आचार्यो मन्यते न केवल-ममावास्यायामिति ॥ ९ ॥

**प्राशित्रमाह्रियमाणं प्रतिमन्त्रयेत मित्रस्य त्वा चक्षुषा प्रतिपश्यामीति* ॥ १० ॥**

प्राश्नन्ति तदिति प्राशित्रं तत्प्राशित्रमाह्रियमाणं प्रतिमन्त्रयेत ब्रह्मा मित्रस्य चक्षुषा प्रतिपश्यामीत्यनेन यजुषा ॥ १० ॥

**अप आचम्य प्रतिगृह्णीयाद्देवस्य त्वेति* ॥ ११ ॥**

अप आचम्येति कृत्स्नमाचमनविधिं दर्शयति अप आचम्य तत् प्रतिगृह्णीयात् प्राशित्रं देवस्य त्वेति प्रतिगृह्णन्मन्त्रं पुरस्ता-ज्जपेत् ॥ ११ ॥

**व्यूह्य तृणानि पुरस्ताद्दण्डं सादयेत् पृथिव्यास्त्वा नाभौ सादयामीति* ॥ १२ ॥**

बर्हिषस्तृतस्य इतश्चेतश्च व्यूह्य तृणानि पुरस्ताद्दण्डं सादयेत्

---

* द्राह्यायणोऽप्येवम् ।

तत् प्राशित्रहरणं पात्रं भूमौ स्थापयेत् पृथिव्यास्त्वा नाभौ साद-यामीत्यनेन मन्त्रेण ॥ १२ ॥

अङ्गुष्ठेनानामिकया चादायाग्नेष्ट्वास्येन प्राश्नामीति प्राश्नीयादसंखादन्निगिरेत्* ॥ १३ ॥

अङ्गुष्ठेन अनामिकया वाङ्गुल्या आदाय गृहीत्वा अग्नेष्ट्वास्येन प्राश्नामीत्यनेन मन्त्रेण प्राश्नीयात् असंखादन्दन्तैरभिमर्द्दन्निगिरेत् ॥ १३ ॥

अप आचम्योरसि पाणिं निदधीतेन्द्रस्य त्वा जठरे सादयामीति† ॥ १४ ॥

अप आचम्योरसि पाणिं स्थापयेत् इन्द्रस्य त्वा जठरे सादयामीत्यनेन मन्त्रेण ॥ १४ ॥

प्रक्षाल्य प्राशित्रहरणं तत्र निदध्यात्† ॥ १५ ॥

प्रक्षाल्य प्राशित्रहरणं यस्मिन्नेव देशे प्रथमं प्रति व्यूह्य तृणानि स्थापितं तस्मिन्नेव देशे निदध्यात् स्थापयेत् ॥ १५ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणेऽप्येवम्।

यथाहृतं वा प्रतिहारयेत्* ॥ १६ ॥

येनैव वा यथा वाहृतन्तेनैव पुनराहारयेत् ॥ १६ ॥

ब्रह्मभागमाहृतं तत्रोपनिदधीत* ॥ १७ ॥

यदि तस्मिन् देशे स्थापितं ततो ब्रह्मभागमाहृतं तत्रोपनिदधीत ॥ १७ ॥

तमिष्टौ सꣳस्थितायां प्राश्नीयात्* ॥ १८ ॥

तं ब्रह्मभागं दृष्टौ संस्थितायां प्राश्नीयात् तमिष्टयजुष ऊर्द्ध्वम् ॥ १८ ॥

अन्वाहार्य्यमाहृतं तूष्णीमालभेत* ॥ १९ ॥

दर्शपौर्णमासवत् अन्वाहार्यं दक्षिणा तमाहृतं ब्रह्मा तूष्णीमालभेत ॥ १९ ॥

प्रजापतेर्भागोऽसीति वा* ॥ २० ॥

ब्रह्मा आलभेतेति प्रकृतम् ॥ २० ॥

अथापरं प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वानक्षितोऽस्यक्षित्यै

---

* द्राह्यायणेऽप्येवम् ।

त्वा प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मयि धेहीति* ॥ २१ ॥

अथापरमन्वारम्भणम् । इदमन्यदिदमपरं, प्रजापतेर्भागोऽसीत्येतदादिना यथासूचितेन मन्त्रेण एतेषां त्रयाणां विकल्पः ॥ २१ ॥

तत्रैव यजमानं वाचयेत् प्रजापतिं त्वया समक्षाद्ध्यासमागम्या अन्वाहार्य्यं ददानि ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वा ऋताद्ध्या मा मा हिꣳसीरऋतो मह्यꣳ शिवा भवेति* ।२२।

तस्मिन्नन्वाहार्य्येऽधिकरणे यजमानं वाचयेत् प्रजापतिं त्वया समक्षाद्ध्यासमित्येतदादि मन्त्रम् ॥ २२ ॥

इति चतुर्थस्यैकादशी कण्डिका ।

---

अथ द्वादशी कण्डिका ।

समिधं प्रस्थानीयामनुमन्त्रयेत देव सवितरेतत्ते यज्ञं प्राऊर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं

---

* द्राह्यायणोऽप्येवम् ।

**यज्ञꣳ समिमं दधातु विश्वे देवा स इह मादयन्तामित्युपाꣳशु प्रतिष्ठेत्युच्चैः* ॥१॥**

प्रतिष्ठन्त्यनयेति प्रस्थानीया ब्रह्मन् प्रस्थास्यामीति तां समिधं प्रस्थानीयामनुमन्त्रयेत देव सवितरित्येतदादिना यथासूत्रितेन मन्त्रेण उपांशु प्रतिष्ठेत्युच्चैर्ब्रूयात् भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष इत्युपांश्वोमित्युच्चैः भूर्भुवःस्वरित्येतदादि यजुरुपांशूद्गातुमित्युच्चैः ब्रूयात् एष उपरिष्टाज्जपः ॥ १ ॥

**सर्वानुमन्त्रणेन वा* ॥ २ ॥**

समिधं प्रस्थानीयामनुमन्त्रयेत तत्सर्वेषां कर्मणामनुमन्त्रणं सवितृप्रसूतः प्रतिष्ठ भूर्भुवःस्वरित्येतदादिना उपरिष्टाज्जपः ॥ २ ॥

**विमुक्तासु प्रणीतासु समिध आदध्यात् यथावभृथादुदेत्य* ॥ ३ ॥**

प्रणीताविमोचने कृते आहवनीये तिस्रः समिध आदध्यात् यथावभृथादुदेत्य समिदाधानमुक्तम् एधोस्येऽधिषीमहीत्यत आरभ्य यावदाहवनीयोपस्थानमिति ॥ ३ ॥

**एतत्सर्वेष्टीनां ब्रह्मत्वम्* ॥ ४ ॥**

---

* द्राह्यायणेऽप्येवम् ।

यदेतदुक्तमिध्मादिषु सर्वेषु यजुषोपविशेदित्यत आरभ्य दर्शपौर्णमासिकविधानम् एतत्सर्वेष्टीनां ब्रह्मत्वं यथेष्टीनामिति बहुवचनात् सिद्धेः सर्वेष्टिषु किमर्थं सर्वेष्टीनामिति सर्वग्रहणम् उच्यते हविर्यज्ञाधिकारः प्रवृत्तः सोऽयमाचार्य्यः सर्वशब्दं करोति कथं सोमाङ्गभूतानामपीष्टीनामेतदेव ब्रह्मत्वं स्यादिति ॥ ४ ॥

समानाह्न्येकासने न पुनर्यजुषोपविशेदिति शाण्डिल्यः* ।५।

एकस्मिन्नहनि यद्येकहविष्का बह्व्य इष्टयो भवन्ति तस्मिन्नेकासने न पुनर्यजुषोपविशेत् एवं शाण्डिल्य आचार्य्यो मन्यते एकासनमिति यत्प्रथमायामिष्टौ आसनं कल्पितं तदेवोत्तरासु भवति पृथगेकासनम् अथ पुनः पृथगिष्टिष्वासनं कल्पते न तदेकासनम् ॥ ५ ॥

अग्न्याधेयेष्विष्टिषु प्रथमायां यजुषोपविशेत उत्तमायाᳪ समिध आदध्यादिति गौतमः* ॥ ६ ॥

एवं गौतम आचार्य्यो मन्यते ॥ ६ ॥

पृथगिष्टिष्विति धानञ्जय्यः* ॥ ७ ॥

पृथगेकस्यामेकस्यां यजुषोपविशेत् समिधश्चादध्यात् एवं धानञ्जय्य आचार्य्य आह ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

चातुष्प्राश्यश्च प्राश्नन्तु धेनुं दद्याद् ब्रह्मणेऽध्वर्यवे चाग्निपदं धेनूर्होत्रे वत्सतरी ब्रह्मणेऽनडुहोऽध्वर्यवे तथोद्गात्रे सर्वे त्रिवर्गाः पष्ठौहीमग्नीध्राय सर्वेभ्योऽश्वरथं कुण्डले चेति* ॥ ८ ॥

चातुष्प्राश्यश्च प्राश्नन्तु धेनुं दद्याद्ब्रह्मणे चशब्दो धानञ्जप्यमतानुकर्षणार्थः अध्वर्यवे चाग्निपदं दद्यात् अग्निपदोऽश्वः धेनूर्होत्रे दद्याद्वत्सतरी ब्रह्मणे दद्यात् अनडुहोऽध्वर्यवे दद्यात् तथोद्गात्रे अनडुहो दद्यात् सर्वे त्रिवर्गाः यदेतद्धेनूर्होत्रे दद्यात् इत्यत आरभ्य बहुवचनम् तस्मिन् परिमाणं सर्वे त्रिवर्गा इति सर्वग्रहणं किमर्थमिति चेत् अत्रोच्यते अन्यत्राप्येवंप्रकारत्रिवर्गा इति यथा विश्वजित्छिल्पे वक्ष्यति धेनूरिति पष्ठौहीमाग्नीध्राय दद्यात् पष्ठौहीशब्दो वयसि सर्वेभ्योऽश्वरथं कुण्डले च दद्यात् यजमानः कर्णयोराभरणं लोकप्रसिद्धेः ॥ ८ ॥

एवमेव धेनुमग्निपदञ्चेति शाण्डिल्यः † ॥ ९ ॥

यदुक्तं धेनुं दद्याद्ब्रह्मणेऽध्वर्यवे चाग्निपदमिति एतद्धेनुमग्निपदं वा ‡

---

* द्राह्यायणेनैतेन पञ्च सूत्राणि कृतानि ।

† द्राह्यायणेऽप्येवम् ।

‡ यदुक्तं सर्व्वेभ्योऽश्वरथं कुण्डले चेति एवं धेनुमग्निपदञ्च सर्व्वेभ्यो दद्यात् इति पुस्तकान्तरपाठः ।

सर्वेभ्य एव दद्यात् तयोर्दक्षिणान्तरविधानात् एवं शाण्डिल्य आचार्यो मन्यते ॥ ९ ॥

धेनुमनड्वाहं वत्सतरीं वत्सतरमजं पूर्णपात्रं तत्प्रथमायामिष्टौ दद्यात्* ॥ १० ॥

यदेतद्धेन्वाद्युक्तं एतत्प्रथमायामिष्टौ दद्यात् ॥ १० ॥

तथोत्तरयोरन्यत्राजपूर्णपात्राभ्यामिति* ॥ ११ ॥

तथोत्तरयोरिष्ट्योः प्रथमायामिष्टौ यदुक्तं दक्षिणाजाति उत्तरयोरपीष्ट्योः एवंप्रकारमेव दद्यात् अन्यत्राजपूर्णपात्राभ्यामिति ॥ ११ ॥

वरः सप्तमो दक्षिणानां त्रयोदशो वा पञ्चविंशो वैतद्वाजसनेयकम्* ॥ १२ ॥

षड्गावो दक्षिणाः तासां सप्तमो वरः स्यात् त्रयोदशो वा अथवा द्वादश गावः त्रयोदशो वरः स्यात् पञ्चविंशो वा अथवा चतुर्विंश गावः वरः पञ्चविंशः एतद्वाजसनेयकं विधानमग्न्याधेये दक्षिणानां वरः प्रज्ञातः ॥ १२ ॥

अग्न्याधेयान्तान् कुर्वते पूर्णाहुतिमत्त्वाभिहोममिष्टीरिति* ॥ १३ ॥

---

* द्राह्यायणेऽप्येवम् ।

अग्न्याधेयस्य अन्तान् कुर्वते अध्वर्यवे पूर्णाहुत्यादि केषाञ्चित् पूर्णाहुत्यन्तं केषाञ्चिदग्निहोमान्तं केषाञ्चिदिष्ट्यन्तम् ॥ १३ ॥

मिथुनौ दक्षिणान्वारम्भणीयायामिष्टौ* ॥ १४ ॥

मिथुनौ गावौ दक्षिणा स्त्रीपुमांश्च गौरेव ॥ १४ ॥

वाजिनाश्विनघर्माणामृत्विक्षूपह्वमिष्ट्वा प्राणभक्षं भक्षयेत् प्रत्यक्षभक्षᳬ स्वे यज्ञे† ॥ १५ ॥

अग्न्याधेये दर्शपूर्णमासयोऽश्च ब्रह्मत्वमुक्तं साम्प्रतं चातुर्मास्येषु विवक्षितं तद्विवक्षुरिदं सूत्रमारभते वाजिनाश्विनघर्माणामिति वाजिनस्य आश्विनस्य घर्मस्य वाजिनाश्विनघर्माः तेषां वाजिनाश्विनघर्माणां ऋत्विक्षूपह्वमिष्ट्वा प्राणभक्षं भक्षयेत् प्रत्यक्षभक्षं भक्षयेत् मुखेन स्वे तु यज्ञे प्रत्यक्षभक्षं भक्षयेत् स्वे यज्ञे इति सत्रे वाजिनश्चातुर्मास्येषु आश्विनः सौत्रामण्यां घर्मः सोमे अत्र तु लाघवार्थमाचार्यो वाजिनप्रकरणे सामान्यविधानमारभते सर्वेषां किं पुनः सामान्यम् ऋत्विक्षूपह्वमिष्ट्वा प्राणभक्षं भक्षयेत् प्रत्यक्षभक्षं स्वे यज्ञे इति तत्रैवाश्विनघर्मयोः स्वस्मिन् प्रकरणे भक्षणमन्त्रौ वक्ष्यति साम्प्रतं वाजिनस्यैवोच्यते ॥ १५ ॥

यन्मे रेतः प्रसिच्यते यद्वामेऽपि गच्छति यद्वा जायते

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

पुनस्तेन माशिवमाविश तेन मा वाजिनं कुरु तस्य ते वाजपीतस्योपहूत उपहूतस्य भक्षयामीति वाजिनस्य* ॥ १६ ॥

यन्मे रेतः प्रसिच्यत इत्येतदादिना मन्त्रेण यथापठितेन वाजिनस्य भक्षणं कार्य्यम् ॥ १६ ॥

ऋतूनान्त्वा वाजिना वाजिनं भक्षयामीति वा* ॥ १७ ॥

अनेन वा मन्त्रेण भक्षयेत् ॥ १७ ॥

उभाभ्यां वोभाभ्यां वा* ॥ १८ ॥

उभाभ्यां वा मन्त्राभ्यां भक्षयेदिति शेषः ॥ १८ ॥

* द्राह्यायणोऽप्येवम् ।

इति चतुर्थस्य द्वादशी कण्डिका ।

इति चतुर्थः प्रपाठकः समाप्तः ।

## पञ्चमः प्रपाठकः ।



### अथ प्रथमा कण्डिका ।

चातुर्मास्येषु वरुणप्रघासानाᳬ स्तम्बयजुर्हरिष्यन्स्तु यजुषोपविशेत्* ॥ १ ॥

चातुर्मास्यान्यधिकृतानि वाजिनाधिकारात् चातुर्मासिके प्रथमे पर्व्वणि वाजिनं भवति तस्य भक्षणविधानमुक्तम् अन्यदैष्टिकं सामान्यविधानं सिद्धं वैश्वदेवे साम्प्रतं वरुणप्रघासिकं ब्रह्मत्वमुच्यते चातुर्मास्येष्वित्येवमादि चतुर्षु चतुर्षु मासेषु पर्वाणि क्रियन्त इति चातुर्मास्यानि चातुर्मास्येष्वित्यधिकारसप्तमी वरुणप्रघासानां वरुणप्रघासा इति पर्व्वणः संज्ञा सांव्यवहारिकी वक्ष्यति वरुणप्रघासैर्व्याख्यातं ब्रह्मत्वं हविर्यज्ञेष्विति वरुणप्रघासानामिति सम्बन्धलक्षणा षष्ठी स्तम्बयजुर्हरिष्यन्सु स्तम्बयजुरिति कर्मणः संज्ञा तदुक्तं दर्शपूर्णमास प्रकरणएव वेदेः पांशूनुत्कीर्य्य उत्करमुत्किरतीति यजुषोपविशेदिति प्रागुक्तमेव, ननु चातुर्मास्यग्रहणं किमर्थं क्रियते वैश्वदेविकं विधानमुक्तं वाजिनस्य भक्षयेदिति, ननु चातुर्मास्येभ्योऽन्यत्र वरुणप्रघासानां प्रयोगोऽस्ति तदेवं सिद्धेः चातुर्मास्यत्वे किं पुनश्चातुर्म्मास्यग्रहणम् क्रियते इति उच्यते, संवत्सरप्रभृतीनि चातुर्म्मास्यानि

---

* द्राह्यायणोऽप्येवम् ।

चतुर्षु चतुर्षु मासेषु पर्वाणि क्रियन्त इत्युक्तं तेषाञ्च बहवो विकल्पा दृष्टाः सद्य आदि पञ्चाहःकॢप्तानि पञ्च पञ्च सांवत्सरिकाणीति सोऽयमाचार्य्यः चातुर्मास्यशब्दं करोति चातुर्मास्येष्वप्येतेष्वेषविधिः स्यादिति ॥ १ ॥

विलिखिते चात्वालेऽध्वर्युणा सह प्रत्याव्रज्याहवनीय उपविशेत्* ॥ २ ॥

दक्षिणे प्रदेशे वेदेराहवनीयमुखमभिमुखम् उपविशेत् योऽध्वर्य्योः स एव सञ्चरः एतदौपवसथिकं कर्म ॥ २ ॥

अग्नौ प्रणीयमाणौ यथेतमनुगच्छेत्* ॥ ३ ॥

अपरेद्युरग्निप्रणयनं तत्र द्वावग्नी अति प्रणयन्ति तावग्नी प्रणीयमानौ यथागतमनुगच्छेत् अनुगच्छेदिति प्रणयनमार्गेणैवानुगमनं प्राप्तं तन्मार्भूदित्यत आह यथेतमिति दक्षिणेनैव देशेन वेद्योरनुगच्छेत् ॥ ३ ॥

अध्वर्युश्चेद् ब्रूयाद् ब्रह्मन्नेकस्फ्ययोपसम्भिन्धीति स्फ्येनाहवनीयात् प्राञ्चमनुपहत्योत्तरस्या वेदेर्दक्षिणादन्तात् कर्षन्नियादावेदि* ॥ ४ ॥

यद्येतस्मिन् काले अध्वर्युः ब्रूयाद् ब्रह्मन्नेकस्फ्ययोपसम्भिन्धीति

---

* द्राह्यायणोऽप्येवम्।

स्फ्येनाहवनीयात्पांशूहन् प्रचिप्य योत्तरा वेदिः तस्या दक्षिणादन्तात्कर्षन्नियादावेदि यावदैष्टिकी वेदिरिति एवमसम्भेदनं कृतं भवतीति कृष विलेखने ॥ ४ ॥

मध्यादेका चेत्* ॥ ५ ॥

यद्येका वेदिर्भवति तस्या मध्यात्कर्षन्नियात् यावदैष्टिकी वेदिरिति ॥ ५ ॥

प्रोह्य स्फ्यं पश्चिमेन वेदी गत्वा निधीयमानयोरग्न्योस्तूष्णीमुपविशेत् † ॥ ६ ॥

प्रोह्य स्फ्यं यस्माद्देशात् गृहीतः तस्मिन्नेव स्थापयित्वा पश्चिमेन वेद्योर्गत्वा एनया द्वितीयया अग्न्योर्निधीयमानयोर्निधानकालमेव तूष्णीमुपविशेत् तूष्णीमित्यस्य प्रकारउक्तः ॥ ६ ॥

एतत् कर्माग्निप्रणयनेषु सर्वेषु † ॥ ७ ॥

यदेतदुक्तमग्निप्रणयनं कर्म्म एतत्सर्वेष्वग्निप्रणयन एष स्यात् न केवलं वरुणप्रघासेषु ननु सर्वग्रहणं किमर्थमग्निप्रणयनेष्विति बहुवचनात् सिद्धमेतदुच्यते हविर्यज्ञाधिकारो वर्त्तते अतः सर्वग्रहणं कृतं कथं अन्येष्वप्यग्निप्रणयनेषु सोमाङ्गभूतेषु एतत्कर्म्म स्यादिति ॥ ७ ॥

---

* द्राह्यायणे छेदविषये विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

अवभृथन्यङ्गं गच्छत्सु पूर्वेणाग्नी चात्वालञ्च गच्छेत् पश्चिमेन वेदी चात्वालञ्च स्वे यज्ञे हविर्यज्ञेष्वेष सञ्चर उत्तरेण विहारं कर्मभ्यः* ॥ ८ ॥

अवभृथन्यङ्गं गच्छत्सु अवभृथएवावभृथन्यङ्गः अथवा अवभृथैकदेशः अक्तस्तोऽवभृथः तत्र तमवभृथन्यङ्गं गच्छत्सु सहकर्तृषु पूर्वेणाग्नी चात्वालञ्च गच्छेत् अग्न्योश्चात्वालस्य च पूर्वेण प्रदेशेन गच्छेत् पश्चिमेन वेद्योश्चात्वालस्य च गच्छेत् स्वे यज्ञे कौण्डपायिने विषयः हविर्यज्ञेष्वेष सञ्चरः उत्तरे प्रदेशे विहारस्य यानि कर्माणि यथा इडाप्राशनमुत्तरेण दक्षिणा प्रतिग्रहः केषाञ्चित्, अथ हविर्यज्ञग्रहणं किमर्थं सिद्धम् एष सञ्चर उत्तरेण विहारं कर्मभ्य इति यावता वक्ष्यति वरुणप्रघासैर्व्याख्यातं ब्रह्मत्वं हविर्यज्ञेष्विति उच्यते एते हविर्यज्ञाः कौण्डपायिनेऽपि भवन्ति सोऽयमाचार्यो हविर्यज्ञेष्वित्याह कथं कौण्डपायिने दीक्षितसञ्चर एवेति ॥ ८ ॥

यथा चात्वाले तथा यूपे शामित्रे च पशौ † ॥ ९ ॥

एतानि चातुर्मास्यपर्वाणि पशुमन्त्यपि भवन्ति तद्यदा वरुणप्रघासेषु पशुः स्यात् तदा यथा चात्वालस्य पूर्वेण सञ्चरः तथा यूपस्य च शामित्रस्य च स्यात् अथ पशुग्रहणं किमर्थमिति चेत्

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

† द्राह्यायणेऽप्येवम्।

नह्यते पशोर्यूपशामित्रौ भवतः तस्मात्पशुग्रहणमतिरिच्यते उच्यते पशुग्रहणमेतदर्थं न केवलं वरुणप्रघासेषु सर्वेषु पर्वस्विति ॥ ९ ॥

**अवभृथन्यङ्गं प्राप्याभ्युक्षणप्रभृति सौत्यं कर्म समापयेयः * ॥ १० ॥**

उक्तमवभृथन्यङ्गं गच्छन्तु साम्प्रतं तस्मिन्नवभृथन्यङ्गे कर्मोच्यते अवभृथन्यङ्गं प्राप्याध्वर्यवे कर्मणि समाप्ते सौत्यादभ्युक्षणादारभ्य समिदाधानाहवनीयोपस्थानान्तं कर्म सर्वं कुर्युः अथ किं कर्मग्रहणम् अभ्युक्षणप्रभृति सौत्यं कर्म समापयेयुरिति सिद्धेः उच्यते, कर्मग्रहणं नियमार्थं वक्ष्यत्यग्निहोत्रोपस्थानं विष्णुक्रमाः समिष्टयजूंषीति न क्रियेरन्नवभृथन्यङ्गश्चेति शाण्डिल्य इति एतद्दर्शयति सूत्रकारो धानञ्जय्यपक्षोऽत्रेष्ट इति सर्वं क्रियतेति धानञ्जय्य इति ॥ १० ॥

**साकमेधेषु क्षीरौदनस्य यथार्थं प्राश्नीयात् * ॥ ११ ॥**

उक्तं वरुणप्रघासेषु ब्रह्मत्वं साम्प्रतं साकमेधेषूच्यते साकमेधा नाम तृतीयं पर्व साकमेधेष्वित्यधिकरणलक्षणा सप्तमी क्षीरेण संस्कृत ओदनः क्षीरौदनः तस्य यथार्थं प्राश्नीयात् यावतार्थी स्यात् तावत्प्राश्नीयात् परिमाणे अनियमः यदि सौहित्येच्छुः सौहित्यं कुर्यात् एतद्गृहमेधीये कर्मणि भवति पूर्वेद्युः ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम् ।

यजमानं ब्रूयात् प्रभूतमन्नं कारय सुहिता अलङ्कृता भवतेत्यमात्यान् ब्रूहि वत्सांश्च मातृभिः सह वासयेत* ॥ १२ ॥

यजमानं ब्रूयाद्ब्रह्मा प्रभूतमन्नं कारय प्रभूतं बहु सुहितास्चाल- ङ्कृतास्च भवतेति अमात्यान् ब्रूहि सुहितास्तृप्ता आश्रिता भवत अलङ्कृतास्च गन्धमाल्यादिभिरलङ्कारैर्भूषयध्वमात्मानम् अमात्याः पुत्रपौत्रादयः भृत्यास्च वत्सांस्च मातृभिः सह वासयेतेत्येवं यजमानो वक्तव्यो ब्रह्मणा ॥ १२ ॥

पूर्वाह्णेऽध्वर्युः क्षीरौदनमृषभस्य रवथे जुहोति ब्रह्माण- मुपवेश्य* ॥ १३ ॥

अस्मिन्नहनि पूर्वाह्णेऽध्वर्युः क्षीरौदनमृषभस्य रवथे जुहोति रवथशब्दो रभसि वर्त्तते क्षीरौदनमग्नौ जुहोति ब्रह्माणं तस्याग्नेः समीपे उपवेश्य ननु उक्तं सर्वत्र ब्रह्मेति अधिकृत एव ब्रह्मा तत् किमिदमुच्यते ब्रह्माणमुपवेश्य जुहोतीति उच्यते अरुवत्यृषभे ब्रह्मैव ऋषभतां कुर्य्यात् अतः पुनर्ग्रहणम् ॥ १३ ॥

ऋषभेऽरुवति ब्रह्मैव ब्रूयाज्जुहुधीति* ॥ १४ ॥

अरुवति च रुवति च ब्रह्मा ब्रूयाज्जुहुधीति ॥ १४ ॥

---

* द्राह्यायणोऽप्येवम्।

तूष्णीं पैतृयज्ञिकायाᳪ सर्वं कुर्य्यादोमित्येवानुमन्त्रयेत्* ॥ १५ ॥

पैतृयज्ञिकायामिष्टौ तूष्णीं सर्वं ब्रह्मा कुर्य्यात् ओमित्येवानुमन्त्रयेत् ओमिति प्रणवमात्रं स्यात् अनुमन्त्रणम् ॥ १५ ॥

इति पञ्चमस्य प्रथमा कण्डिका ।

---

अथ द्वितीया कण्डिका ।

यज्ञोपवीतप्राचीनावीतयोरध्वर्युमनु विदधीत † ॥ १ ॥

पैतृयज्ञिकायामिष्टौ कानिचित्कर्माण्यध्वर्युर्यज्ञोपवीती करोति कानिचित्प्राचीनावीती तद्यत्राध्वर्युर्यज्ञोपवीती स्यात् तत्र ब्रह्मापि यज्ञोपवीती भवेत् यत्र प्राचीनावीती स्याद् ब्रह्मापि तथैव स्यात् यज्ञोपवीतप्राचीनावीतयोरध्वर्युप्रत्ययः ॥ १ ॥

तस्या हवीᳪषि निर्वप्स्यत्सु दक्षिणया द्वारा प्रपद्य पश्चात् प्राङ्मुख उपविशेत् † ॥ २ ॥

तस्या पैतृयज्ञिकायाः हविषान्निर्वपनं करिष्यत्सु, वेदेः पश्चिमे प्रदेशे प्राङ्मुख उपविशेत् निर्वप्स्यत्स्वित्यतन्त्रं बहुवचनम् ॥ २ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

एवमेव वेदिं गत्वा स्तम्बयजुर्हरिष्यत्सु* ॥ ३ ॥

एवमेव यथा निर्वप्स्यत्सु, उपविष्टः तथा वेदिं गत्वा पैतृयज्ञिकार्थं स्तम्बयजुः तत् हरिष्यत्सु तस्याः पश्चिमे प्रदेशे प्राङ्मुख उपविशेदित्येतदुक्तं भवति ॥ ३ ॥

आज्यभागयोर्हुतयोर्दक्षिणेनाग्निं गत्वा पुरस्तात् प्रत्यङ्मुख उपविशेद्यजमानश्च* ॥४ ॥

आज्यभागयोर्हुतयोरग्नेर्दक्षिणेन प्रदेशेन गत्वा वेदेः पूर्वप्रदेशे प्रत्यङ्मुख उपविशेत् यजमानश्च प्रत्यङ्मुख एव उपविशेत् ॥ ४ ॥

हुते स्विष्टकृते यथेतं प्रत्याव्रज्योपविशेताम्* ॥ ५ ॥

हुते स्विष्टकृते यथागतं प्रत्याव्रज्य तस्मिन्नेव वेदेः पश्चिमे प्रदेशे उभौ ब्रह्मयजमानौ उपविशेताम् ॥ ५ ॥

प्राशित्रमाहृतमुपघ्रायापविध्येत्* ॥ ६ ॥

प्राशित्रमाहृतमुपघ्रायापविध्येत् स्थापयेत् ततः प्राश्नीयात् ॥ ६ ॥

आज्यश्चेत् प्राशित्रभागादवद्येयुस्तदुपघ्रायाप उपस्पृशेत्* ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम्।

यद्याज्यं प्राशित्रं प्रतिनिधिमवद्येयुः तदाज्यमुपघ्रायाप उपस्पृशेत् ॥ ७ ॥

इडाञ्च प्रतिगृह्य प्रतिप्रयच्छेत* ॥ ८ ॥

इडान्दीयमानां प्रतिगृह्य प्रति प्रयच्छेत् तस्मा एव ॥ ८ ॥

परिषिक्तेऽध्वर्युणाहवनीयमुपतिष्ठेरन् दक्षिणेनाग्निं गत्वोऽत्तरेण दक्षिणाग्निꣳ स्वे यज्ञे † ॥ ९ ॥

अध्वर्युणा परिषेचने कृते आहवनीयमुपतिष्ठेरन् सर्वे यस्मिन्नग्नौ कर्म प्रवृत्तं तस्य दक्षिणेन गत्वा दक्षिणाग्नेरुत्तरेण गत्वा स्वे यज्ञे कौण्डपायिने ॥ ९ ॥

अक्षन्नमीमदन्त ह्योति प्रथमासु सदृशं त्वा वयं मघवन्मन्दिषीमहि प्रनूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनयोजान्विन्द्र ते हरी इति द्वितीयेपोष्प्र प्रपणुहीगिर इति तृतीया* ॥ १० ॥

एताभिर्यथोद्दिष्टाभिर्ऋग्भिः आहवनीयमुपतिष्ठेरन् उक्तं ऋचस्त्वादिग्रहणेनेति ॥ १० ॥

तत एवेक्षमाणा गार्हपत्यं मनोन्वाह्वामहे नाराशꣳ-

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे विशेषोऽस्ति ।

सेन सोमेन पितृणाञ्च मन्मभिः पुनर्नः पितरो मनो ददातु दैवो जनो जीवं व्रातᳪ सचे मह्या न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्यं दृशे यमिति* ॥ ११ ॥

तस्मिन्नेव देशेऽवस्थिता गार्हपत्यमीक्षमाणा उपतिष्ठेरन् मनो-न्वाह्वामह इत्येतदादिभिर्ऋग्भिर्यथासूचिताभिः ॥ ११ ॥

कयानश्चित्र आभुवदित्येकया दक्षिणाग्निम्* ॥ १२ ॥

कयानश्चित्र आभुवदित्येकयर्चा दक्षिणाग्निमुपतिष्ठेरन् तत एवेक्षमाणा इति प्रकृतं नन्वेकयेति किमर्थम् एकैवादिष्टा उच्यते, तिसृभिस्तिसृभिराहवनीयगार्हपत्ययोरुपस्थानं कृतं तदिहापि वृचे-नावगम्यते प्रवृत्तत्वात् तथा माभूदित्याहैकयेति ॥ १२ ॥

इति पञ्चमस्य द्वितीया कण्डिका।

---

अथ तृतीया कण्डिका।

त्रैयम्बका नामापूपा भवन्त्येककपालाः † ॥ १ ॥

त्र्यम्बको देवता येषान्ते इमे त्रैयम्बका नामापूपा भवन्ति अपूपा इति द्रव्यसंज्ञा एकस्मिन् कपाले संस्कृता एककपालाः ॥ १ ॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

तेषां यमध्वर्युराखूत्कर उपोपेत् तत्राप उपस्पृशेयुः शिवा नः शन्त मा भव सुमृडीका सरस्वति मा ते व्योम सन्दृश इति* ॥ २ ॥

तेषामपूपानां यमध्वर्युराखूत्कर उपोपेत् आखुर्मूषिकः उत्कीर्य्यत इत्युत्करः उद्वापः मूषिकोद्वापे उपवपेत् तस्मिंस्तस्य पांशुभिरवच्छादयेत् तस्मिन्नधिकरणे अप उपस्पृशेयुः शिवा नः शन्त मा भवेत्येतदादिना मन्त्रेण ॥ २ ॥

आसीतेतरेषाꣳ हूयमान इति धानञ्जप्यः † ॥ ३ ॥

इतरेषामपूपानामवयवेषु हूयमानेषु आसीतेत्येवं धानञ्जप्य आचार्य्यो मन्यते ॥ ३ ॥

तिष्ठेदिति शाण्डिल्यः † ॥ ४ ॥

तिष्ठेदिति स्थानं विधीयते नोर्द्धताम् ॥ ४ ॥

हुते तिष्ठन्तो जपेयुरवां वरुद्रमयज्महवदेवं त्र्यम्बक यथा नः श्रेयसस्करद्यथा नो वसीयसस्करद्यथा नः पशुमतस्करद्यथा नो व्यवसाययाद्भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजꣳसुगं मेषाय मेष्यैसु भेषजं यथा सदिति † ॥ ५ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

ऊते तेषामपूपानां सर्वे तिष्ठन्तो जपेयुः अवां वरुद्रमित्येतदादि मन्त्रं यथापठितम् ॥ ५ ॥

**यजमानस्यामात्या एकैकमपूपमादाय त्रिः प्रदक्षिणमग्निं परियुः* ॥ ६ ॥**

यजमानस्य ये अमात्याः पुत्रपौत्रादयो भृत्याः एकैकमपूपं गृहीत्वा त्रिरग्निं परियुः प्रदक्षिणम् ॥ ६ ॥

**तत्र ब्रह्मा परियञ्जपेदिति धानञ्जप्यस्तिष्ठन्निति शाण्डिल्यस्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनमुर्वारुकमिव बन्धनान् मृत्योर्मुक्षीयमामृतादिति † ॥ ७ ॥**

तत्र तस्मिन् कर्म्मणि ब्रह्मा परियञ्जपेदिति धानञ्जप्य आचार्य्यो मन्यते तिष्ठन्निति शाण्डिल्यः अमात्या अधिकृताः अतो ब्रह्मग्रहणं करोति त्र्यम्बकं यजामहे इत्येतदादि मन्त्रं जपेत् ब्रह्मा परियन् तिष्ठन्वा ॥ ७ ॥

**एवं परीत्योदस्येयुः* ॥ ८ ॥**

एवमनेन प्रकारेण परीत्य सर्वे येऽपूपा गृहीतास्तानुदस्येयुः ऊर्द्धं क्षिपेयुः ॥ ८ ॥

---

*द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

**तेषां ब्रह्मैकं लिप्सित्वा यस्य स स्यात्तस्मै प्रयच्छेत्* ॥ ९ ॥**

तेषामपूपानां ब्रह्मा लिप्सित्वा लब्धुमिच्छा लिप्सा यस्य सकाशाल्लब्धः स्यात् तस्मा एव पुनर्दद्यात् ॥ ९ ॥

**तस्य वैव सन्तं पाणावालभेत* ॥ १० ॥**

तस्यैव वा पाणौ अवस्थितं तमपूपमालभेत ॥ १० ॥

**तथैव प्रतिपरीयुः* ॥ ११ ॥**

यथैव प्रदक्षिणं परिगमनं कृतं तथैव प्रसव्यं परीयुः तथैवेति त्रिरित्युक्तं भवति ॥ ११ ॥

**यत्रैनानध्वर्युरासजेत्तत्रोपतिष्ठेरन्नेष ते रुद्र भागस्तेनावसेन परो मूजवतोतीहि कृत्तिवासाः पिनाकहस्तोऽवततधन्वेमित्यातमितोरुपेयुः † ॥ १२ ॥**

यत्र यस्मिन् देशे एनानपूपान् कलापीकृत्वा वृक्षे वा स्थाणौ वाध्वर्य्युरासजेत् आबध्नीयात् तत्रोपस्थानं कुर्युः एष ते रुद्र भाग इत्येतदादिना मन्त्रेण यथासूचितेन मन्त्रान्ते यः ओङ्कारः तम् आतमितोरुपेयुः तावद्ब्रूयुर्यावन्नातमितः ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अन्नो देवीरित्यप उपस्पृश्यानपेक्षं प्रत्याव्रजेयुः* ॥ १३ ॥

अन्नो देवीरित्येतयर्चा अपउपस्पृष्ट्वा येन पथा गताः तं पन्थानमनपेक्षं प्रत्याव्रजेयुः ॥ १३ ॥

वरुणप्रघासैर्व्याख्यातं ब्रह्मत्वं हविर्यज्ञेषु* ॥ १४ ॥

वरुणप्रघासैर्व्याख्यातम् उक्तं ब्रह्मत्वं हविर्यज्ञेषु यद्ब्रह्मत्वं हविर्यज्ञे कस्मिंश्चिन्नोच्यते तत् सर्वं वरुणप्रघासेषु सिद्धं द्रष्टव्यम् ॥१४ ॥

पशूनां यूपाहुतिं होष्यत्सु तूष्णीमुपविशेत्* ॥ १५ ॥

चातुर्मास्यानि समाप्तानि साम्प्रतं पाशुकं ब्रह्मत्वमुच्यते तच्च सर्वं वरुणप्रघासैः सिद्धं विशेष उच्यते, यूपाहुतिं होष्यत्सु होतुमिच्छत्सु तूष्णीमुपविशेत् ॥ १५ ॥

हुतायां यथार्थं स्यात्* ॥ १६ ॥

हुतायां यूपाहुतौ यथार्थं स्यात् स्यादिति कर्मणः समाप्तिं दर्शयति ॥ १६ ॥

वपायां हुतायामिदमाप इति चात्वाले मार्जयित्वा सर्वपशूनां यथार्थं स्यात्* ॥ १७ ॥

पशोर्वपायां हुतायामिदमाप इत्यनेन मन्त्रेण चात्वाले मार्ज-

---

* द्राह्यायणेऽप्येवम् ।

यिला सर्वपशूनां यथार्थं स्यात् सर्वग्रहणं क्रियते न केवलं पशौ सौत्रामण्यामपि तथा चातुर्मास्येषु सर्वेषु ॥ १७ ॥

इति पञ्चमस्य तृतीया कण्डिका ।

---

अथ चतुर्थी कण्डिका ।

पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत्* ॥ १ ॥

अनन्तरं पशुपुरोडाशः, पुरोडाशेनेति करणे तृतीया चरिष्यत्स्विति पुरोडाशेन कर्म चरिष्यत्सु तूष्णीमुपविशेत् ॥ १ ॥

आहृतं पुरोडाशमालभ्य ब्रूयात् प्राश्नन्तु ये प्राशिष्यन्त इति* ॥ २ ॥

यदि पुरोडाशमाहरेयुः प्राशनकाले तमालभ्य ब्रूयात् प्राश्नन्तु ये प्राशिष्यन्त इति येषां प्राशनं विहितं ते प्राश्नन्तु यथा होताध्वर्युर्ब्रह्माग्निः स्वामी चेति प्रकृतौ विहितमेतेषां प्राशनम् ॥ २ ॥

अनुव्रजेत् सर्वपशूनां पत्नीसंयाजानिति धानञ्जप्यः* ॥३॥

अनुव्रजेद् यस्मिन् देशे पत्नीसंयाजा हूयन्ते तं देशं व्रजन् सर्वपशूनां पत्नीसंयाजेषु ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

सवनीयस्यैवेति गौतमः* ॥ ४ ॥

सवनीयस्यैव वशोऽनुव्रजेत् नान्येषां पशूनामित्येवं गौतम आचार्यो मन्यते ॥ ४ ॥

न सवनीयस्य च नेति शाण्डिल्यः* ॥ ५ ॥

सवनीयस्यापि नानुव्रजेदित्येवं शाण्डिल्य आचार्यो मन्यते न चान्यत्र प्रतिषेधः ॥ ५ ॥

हृदयशूलोऽत्रावभृथन्यङ्गस्थाने भवति तस्मिन्नप उपस्पृशेयुर्धाम्नो धाम्नो राजꣳस्ततो वरुण नोमुञ्च यदापो अघ्न्या वरुणेऽतिषयामहे ततो वरुण नोमुञ्च सुमित्रियान आप उषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयन्द्विष्म इति* ॥ ६ ॥

अस्मिन् हविर्यज्ञिके पशौ अवभृथन्यङ्गस्थाने हृदयशूलो भवति यस्मिन् शूले हृदयं प्रोह्य पच्यते स हृदयशूलः सोऽस्मिन्नधिकरणभूतः तस्मिन्नप उपस्पृशेयुः धाम्नो धाम्न इत्येतदादिना यथासूत्रितेन मन्त्रेण ॥ ६ ॥

अभ्युक्षणप्रभृत्यत ऊर्द्धम्* ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम्।

अभ्युक्षणादारभ्य अत ऊर्द्ध्वं सौत्यं कर्म्म स्यात् यावदाहवनीयोपस्थानमिति एवं सर्वस्मिन् प्रसक्त आह ॥ ७ ॥

नादित्यमुपतिष्ठेरन्* ॥ ८ ॥

ऋज्वर्थम् ॥ ८ ॥

पूर्णाहुतौ हूयमानायामासित्वा हुतायां यथार्थं स्यात्* ॥ ९ ॥

समाप्ते पशौ पूर्णाहुतिं जुह्वत्यध्वर्यवः तस्यां हूयमानायामासित्वा हुतायां यथार्थं स्यादित्युक्तार्थम् ॥ ९ ॥

सक्तुहोमाँश्चेज्जुहुयुरासीता तेषां होमात्* ॥ १० ॥

यदि सक्तुहोमान् जुहुयुरध्वर्यवस्ततस्तत्रासीत आ तेषां होमात् ॥ १० ॥

सौत्रामण्यां सुराकर्मस्वाव्राजमासीत* ॥ ११ ॥

पशौ ब्रह्मत्वमुक्तं साम्प्रतं सौत्रामण्यामुच्यते सौत्रामणीति हविर्यज्ञेषु षष्ठी संस्था तस्यां सौत्रामण्यां सुराकर्म्मसु क्रियमाणेषु आव्राजमासीत् आव्रज्याव्रज्य सुराकर्म्माणि अभिषवः ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम्

तत्र द्वावग्नी अतिप्रणयन्ति ॥ १२ ॥

तस्यां सौत्रामण्यां द्वावग्नी अतिप्रणयन्ति* ॥ १२ ॥

तयोर्दक्षिणत आसीत्* ॥ १३ ॥

तयोरग्न्योर्दक्षिणे प्रदेशे आसीत् वरुणप्रघासेषु सिद्धमग्निप्रणयनं तत्किमिदं पुनरारभ्यत इति चेत् उच्यते तत्र युगपद्द्वयोरग्न्योः प्रणयनम् इह पुनरेकः प्रथमः प्रणीयते अपरः अन्यस्मिन् काले अतो वैकृतत्वात् पुनरारभ्यते ॥ १३ ॥

दक्षिणमध्यधिकुम्भ्यामासक्तायाꣳ सुराशेषेष्वासिच्यमानेषूपतिष्ठेरन्यत्ते पवित्रमर्चिष्यग्ने विततमन्तरं ब्रह्म तेन पुनीहि मेति* ॥ १४ ॥

अतिप्रणीतयोरग्न्योर्यो दक्षिणः तस्योपरिष्टात् समीपे शतछिद्रायां कुम्भ्यामासक्तायां सुराशेषेष्वासिच्यमानेषु सुरायां हुतायां ये शेषाः तेष्वासिच्यमानेषु उपतिष्ठेरन् यत्ते पवित्रमर्चिषीत्येतदादिना मन्त्रेण यथासूचितेन उपर्य्यधस्ताच्च समीपे द्वे कुम्भ्यौ भवतः ॥ १४ ॥

अश्विनोर्ग्रहस्य भक्षयेद्यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियेणेमन्तꣳ शुक्रं मधुमन्तमिन्दꣳ सोमꣳ राजानमिह भक्षयामीति भक्षयेत्* ॥ १५ ॥

---

* कात्यायनोऽप्येवम्।

उक्तं वाजिनप्रकरणे ऋत्विजूपह्वमिष्ट्वा प्राणभक्षं भक्षयेदिति तस्याश्विनग्रहणस्य भक्षयेत् यमश्विनेत्येतदादिना यथासूत्रितेन मन्त्रेण ॥ १५ ॥

**यजमानश्चेद्वसातिशेषेणाभिषिञ्चेयुरुपोत्थायान्तरेणाग्नी गत्वाध्वर्युणोक्तः संज्ञानानि गायेत् पदाय पदाय स्तोभेत्*॥ १६ ॥**

यदि यजमानं वसातिशेषेणाभिषिञ्चेयुरुपोत्थाय अतिप्रणीतावग्नी अन्तरेण गत्वा अध्वर्युणा उक्तः सम्प्रेषितः संज्ञानानि सामानि गायेत् पदाय पदाय स्तोभेत् तादर्थ्ये चतुर्थी अथ सिद्धे स्तोभानुसंहारेऽर्थयोगे किमिदं पुनरारभ्यते पदाय पदाय स्तोभेदिति उच्यते, एतानि चत्वारि सामान्याम्नातानि तेषां त्रीणि स्तोभिकान्येकमेकस्यामृचि गीतं सोऽयमाचार्य्य आरभते पदाय पदाय स्तोभेदिति कथमेषां प्रयोगे सर्वेषामृचि गानं स्यादिति ॥ १६ ॥

**निधनान्यपयन्तो यजमानस्य मूर्द्धानमालभेरन् † ॥१७॥**

सर्वे ऋत्विजो निधनान्युपयन्तः संज्ञानानां यजमानस्य मूर्द्धानमालभेरन् निधनोपेतैश्च सर्वेषाञ्चोद्यते यजमानस्य च मूर्द्धालम्भनम् ॥ १७॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

सन्त्वाह्विन्वन्तीत्येतेषां पूर्वः पूर्वः स्तोभ उत्तरन्निधनम्* ॥ १८ ॥

उक्तं पदाय पदाय स्तोभेदिति इह च यानि स्तौभिकानि तेषां स्तोपायः स्तोभः पठितः ततस्तस्योत्तरं निधनं तत्किमनुसंह्रियमाणेषु स्तोभेषु स्तोपायोऽनुह्रियतां अथान्य इति अत्राह सन्त्वाह्विन्वन्तीत्येतेषां पूर्वः पूर्वः स्तोभोलुप्त आम्नाये सोऽनुसंहर्त्तव्यः अथ य उत्तरस्तमुक्त्वा निधनं ब्रूयात् तस्योत्तरं निधनमाम्नातन्न पादः सन्त्वाह्विन्वन्तीत्येवमाद्येकेषामेतदादीनि स्तौभिकानि अपरेषां सन्त्वाह्विन्वन्तीत्येतत् इति गीतम् अन्यान्युत्तराणि स्तौभिकानि यथा राणायनीयानां सन्त्वाह्विन्वन्तीत्येतस्यामृचि पत्रेणाम्नातमेवम् ॥ १८ ॥

अवसः स्थाने सञ्जित्यै विजित्यै सत्यजित्यै जित्या इति क्षत्रियस्य सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य* ॥ १९ ॥

ब्राह्मणस्य तावद्यथापठित एव निधनोपायः कर्त्तव्यो मूर्द्धालम्भने क्षत्रियस्य सञ्जित्यै इत्येतदादीनि यथोद्दिष्टानि वैश्यस्य सम्पुष्ट्या इत्येतदादीनि यथोद्दिष्टानि ॥ १९ ॥

द्वे सौत्रामण्यौ कौकिली चरकसौत्रामणी च* ॥ २० ॥

द्वे इति संख्या कौकिली चरकसौत्रामणी चेति संज्ञा अथ द्विय-

---

* द्राह्यायणोऽप्येवम् ।

हणं किमर्थं निर्द्दिशतः सिद्धिः उच्यते द्वे एवैते कर्मणी द्रष्टव्ये नैतयो-रग्निहोत्रदर्शपूर्णमासवत् क्रिया द्रष्टव्या यथाग्निहोत्रे उभे साय-म्प्रातराहुती एकं कर्म तथा दर्शपूर्णमासयोरुभे दृष्टी एकं कर्म न तथेह ॥ २० ॥

कौकिल्याᳪ सामगानं नेतरस्याम्* ॥ २१ ॥

कौकिल्यां सौत्रामण्यां सामगानं इतरस्याश्चरकसौत्रामण्यान्न अथेतरस्यामिति किं उच्यते, यदेतत् संज्ञानानाङ्गानमेतदेतस्यां प्रति-षिध्यते यदैष्टिके विहितमौद्गात्रन्तदप्रतिषिद्धम् ॥ २१ ॥

सप्त हविर्यज्ञसᳪस्थाः सप्त सोमसᳪस्थाः † ॥ २२ ॥

एतासां कर्मक्रम उच्यते ॥ २२ ॥

तासाᳪ हविर्यज्ञसᳪस्थानामग्न्याधेयमग्निहोत्रं दर्शपूर्ण-मासौ चातुर्मास्यानि पशुबन्धः सौत्रामणी पाकयज्ञ इति ‡ ॥ २३ ॥

तासामिति निर्द्देशः क्रियते तासां हविर्यज्ञसंस्थानामयं क्रमो यथा-सूचितः पाकयज्ञग्रहणं संस्थाग्रहणञ्च अग्निहोत्रं दर्शपूर्णमासौ च एक-मेव कर्माभिप्रेत्य ब्रवीति अनेन क्रमेण चैतेषां क्रिया ॥ २३ ॥

---

* संज्ञानानि गायेदिति द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणीये विशेषोऽस्ति ।

अथ सोमसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोड़श्यतिरात्रो वाजपेयोऽप्तोर्याम इत्यप्तोर्याम इति* ॥ २४ ॥

अथशब्द आनन्तर्ये उक्ता हविर्यज्ञसंस्थाः अथानन्तरं सोमसंस्थाः ता निर्द्दिष्टाः तासामपि निर्द्दिष्टेनैव क्रमेण क्रिया स्यात् ॥ २४ ॥

इति पञ्चमस्य चतुर्थी कण्डिका।

---

अथ पञ्चमी कण्डिका।

सुत्यायां ब्रह्मणः प्राक्सुब्रह्मण्याया उद्गात्रेण समानं कर्म्म* ॥ १ ॥

उक्तं हविर्यज्ञेषु ब्रह्मत्वं साम्प्रतं सोमसंस्थासु उच्यते, सुत्यायामित्यधिकरणलक्षणा सप्तमी यदितः कर्म वक्ष्यते तत् सुत्यायां प्रत्येतव्यं सुत्याशब्देन सोमसुपचरन्ति ब्रह्मण इति सम्बन्धलक्षणा षष्ठी केन सम्बन्धः कर्मणा प्राक् सुब्रह्मण्यायाः यदौद्गात्रन्तेन समानं तुल्यं कर्म्म ब्रह्मणः अथाधिकृतस्य ब्रह्मणः किं पुनर्ग्रहणं ब्रह्मण इति उच्यते, उक्तमौद्गात्रेण समानं कर्म्मेति तच्च चोक्तं प्रदक्षिणयात् प्रस्तोतृसुब्रह्मण्यौ पुरस्तात् कर्मभ्य इति तदिहौद्गात्रकर्मोपदेशादुद्गातृवत्

---

* द्राह्यायणेऽप्येवम्

पुनः सम्प्रेषणं प्राप्तं ब्रह्मणः सोऽयमाचार्य्यो नियमार्थं ब्रह्मणो ग्रहणं करोति कथं ब्रह्मणः कर्मैव केवलं विवक्षितमिति ॥ १ ॥

ईक्षणाक्रमणे वेदेः सञ्चरधिष्ण्योपस्थानदक्षिणाप्रतिग्रह-भक्षाः स्तोमविमोचनाच्चोर्द्धमन्यत् सामगानात्* ॥ २ ॥

उक्तं प्राक् सुब्रह्मण्याया इति साम्प्रतं यदन्यदूर्द्ध्वं सुब्रह्मण्याया औद्गात्रेण समानं कर्म तदुच्यते ईक्षणञ्चाक्रमणञ्च वेदेः उत्तरं वेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः पितरो भूरिति एते ईक्षणाक्रमणे कदाचिदूर्द्ध्वं कदाचित् प्राक् अत इदमारभते उक्तं स्वयं व्रजेत् क्रय उपवसथ्येवेति वेदेः सञ्चरः सञ्चरन्ति तेनेति सञ्चरः धिष्ण्यानामुपस्थानं दक्षिणानां प्रतिग्रहः सोमभक्षाः स्तोमविमोचनाच्च यदूर्द्ध्वं यन्निःसर्पणादि तत् सर्वं अन्यत् सामगानात् उक्तम् अयं सद्दोहा इति त्रिरुद्गाता गायेदित्येतत् सामगानं स्तोमविमोचनादूर्द्धम् ॥ २ ॥

अनु स्यात्तु दीक्षणीयायाम् † ॥ ३ ॥

उक्तं प्राक् सुब्रह्मण्याया औद्गात्रेण समानं कर्म्मेति न च दीक्षणीयायामुद्गातुः कर्म विद्यते तस्मादादिश्यते अनु स्यात्तु दीक्षणीयायामिति ॥ ३ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेऽप्येदम् ।

तस्याᳫं संᳫंस्थितायामासीतादीक्षणाद्यजमानस्य* ॥ ४ ॥

तस्यां दीक्षणीयायामिष्टौ समाप्तायान्तावदासीत यावद्यजमानो दीक्षित इति मेखलाबन्धनादि कर्म कृतं सर्वमिति ॥ ४ ॥

तं यदाध्वर्युर्वाचं यमयेदथ यथार्थᳫं स्यात्* ॥ ५ ॥

तं यजमानं दीक्षितं यस्मिन् कालेऽध्वर्युर्वाचं यमयेदथ यथार्थं स्यात् यदन्यदुत्तरं कर्म तत् कुर्य्यात् ॥ ५ ॥

महावीरान् सम्भरिष्यत्सु तूष्णीमुपविशेत् सम्भृतेषु यथार्थᳫं स्यात् † ॥ ६ ॥

ऋज्वर्थम् ॥ ६ ॥

प्रायणीयायाᳫं संᳫंस्थितायां यथेतन्निष्क्रम्य पूर्वेण पत्नीशालां तिष्ठेदाभिहोमात् पदस्य राजक्रयण्याः* ॥ ७ ॥

प्रायणीयायामिष्टौ प्रयन्त्यनयेति प्रायणीया तस्यां प्रायणीयायां समाप्तायां यथेतं यथागतं निष्क्रम्य उक्तं पूर्वया च द्वाराना-देश इति तेनैव यथागतं निष्क्रम्य पत्नीशालायाः पूर्वे प्रदेशे तिष्ठेत्

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

आकुतः कालात् यावत् सोमक्रयण्याः गोपदादिभिर्होमः कृत इति ॥ ७ ॥

अभिहुत उत्तरेण सोमवहनं गत्वा प्राग्वा पदाभिहोमा-द्दक्षिणेन यत्र राजानं क्रेष्यन्तः स्युस्तत्र गत्वा तूष्णीमुप-विशेत्* ॥ ८ ॥

अभिहुते तस्मिन् पदे राजक्रयण्याः सोमवहनस्यानसः उत्तरेण सोमवहनं गत्वा अथवा प्राक् पदाभिहोमात् दक्षिणेन गत्वा यस्मिन् देशे सोमं राजानं क्रेष्यन्तः स्युस्तत्र गत्वा तूष्णीमुपविशेत् क्रेष्यन्त इति भविष्यत्कालोपदेशः ॥ ८ ॥

क्रीते प्राङुत्क्रामेत् पश्चिमेनैनꣳ हुत्वा राजानमादध्युरा-हितं पूर्वेण परीत्योह्यमानमनुगच्छेद्दक्षिणेन चेद्गतः स्यात्*॥९॥

क्रीते सोमे तस्माद्देशात् प्राङुत्क्रामेत् पश्चिमेन एनं ब्रह्माणं हुत्वा सोमं सोमवहने अनसि आदध्युरध्वर्यवः आहितं पूर्वेण प्रदेशेन सोमवहनस्य प्रक्रम्य ऊह्यमानस्य पश्चाद्गच्छेत् दक्षिणां दिशं प्रति द्वौ गतिकल्पावुक्तौ अभिहुते पदे उत्तरेण प्राक्पदाभिहोमाद्दक्षिणेन गतः स्यात् तत एष क्रमो विधिर्य उक्तः यथोत्तरेण गतः स्याद्यदि दक्षिणेन यो विधिः स उच्यते ॥ ९ ॥

---

* द्राह्यायणेऽप्येवम् ।

उत्तरेण चेत्क्रीते प्रत्यङ्‌तुत्क्रामेत्* ॥ १० ॥

यद्युत्तरेण सोमवहनस्य गतः स्यात् ततः क्रीते सोमे तस्मा-द्देशात् प्रत्यङुत्क्रामेत् ॥ १० ॥

पूर्वेणैनꣳ हृत्वा राजानमादध्युः* ॥ ११ ॥

क्रीतं सोमं ब्रह्मणः पूर्वेण प्रदेशेन हृत्वा सोमवहने आदध्युः ॥११॥

आहितं पश्चिमेन परीत्योह्यमानमनुगच्छेत्* ॥ १२ ॥

आहितम् आरोपितं सोमवहनं पश्चिमेन प्रदेशेन परिगम्य उह्यमानस्य पश्चाद्गच्छेत् ॥ १२ ॥

तामेवात्रैषामन्वावर्त्तेत सा ह्यस्य प्राचि वर्त्तमानस्य दक्षिणैषा भवतीति † ॥ १३ ॥

यामेव एषाम् अनु प्राचि वर्त्तमानस्य गतः आवर्त्तमानस्यापि तामेवान्वावर्त्तेत तत्किङ्कारणं साह्यस्य सोमवहनस्य प्राङ्मुखं गतस्य दक्षिणा भवतीति ॥ १३ ॥

---

* द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

विमुक्ते चान्तरेण सोमवहनं पत्नीशालाञ्च दक्षिणोत्-क्रम्य तिष्ठेद्दीक्षितश्चेत्* ॥ १४ ॥

विमुक्ते तस्मिन् सोमवहने अन्तरेण सोमवहनस्य पत्नीशालायाञ्च उत्क्रम्य दक्षिणार्द्धे तिष्ठेत् यदि दीक्षितः स्यात् अथ दीक्षितः तस्य कर्म तत् कुर्य्यात् आकुतः कालात्तिष्ठेत् ॥ १४ ॥

आ राज्ञोऽवहरणात्* ॥ १५ ॥

यावत्सोमोऽवतारित इति चशब्दः किमर्थमिति चेत् विमुक्ते चेति उच्यते, द्वाविमौ गतिकल्पावुक्तौ तत्रोत्तरोऽधिकृतः तत्राधि-कृतत्वात् तस्मिन्नेव काले माभूदिति अतश्चशब्दं करोति कथम् उभयो-रपि गतिकल्पयोरेष विधिः स्यादिति ॥ १५ ॥

इति पञ्चमस्य पञ्चमी कण्डिका ।

---

अथ षष्ठी कण्डिका ।

प्रवेक्ष्यमाणं राजानमनुप्रविशेदव्यवयन्नग्निना † ॥ १ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

क्रीतं सन्तं सोमं सोमवहनादवतार्य्य पत्नीशालायां प्रवेश्यमानं अनुप्रविशेत् पश्चात्प्रविशेत्तस्य अव्यवयन्नग्निना सोमस्याग्नेश्चान्तरेण न गच्छेत् ॥ १ ॥

सम्बाधश्चेत् स्याद्दक्षिणयापि द्वारा प्रविशेत्* ॥ २ ॥

यदि सम्बाधं भवेत् अपि दक्षिणया द्वारा प्रविशेत् न च व्यवायं कुर्य्यात् ॥ २ ॥

उत्तरेणाहवनीयं पश्चिमेन वेदिं सञ्चरेत् दीक्षितश्चेत्* ॥ ३ ॥

आहवनीयस्योत्तरेण गत्वा पश्चिमेन वेदेः गार्हपत्यस्य पूर्वेण दक्षिणाग्नेराहवनीयस्य चान्तरेण गत्वा तस्मिन्नासनउपविशेत् एष ब्रह्मणो दीक्षितस्य सञ्चरः ॥ ३ ॥

आतिथ्यामिष्टिं निर्वपन्ते* ॥ ४ ॥

अनन्तरमातिथ्यामिष्टिमारभन्ते, आतिथ्यमनया क्रियतइत्यातिथ्या इष्टिग्रहणमकृतस्येयमिष्टिः तस्यामकृतस्यायामपि कथमैष्टिको धर्मः स्यादिति ॥ ४ ॥

ताश्चेदनवहृते राजनि निर्वपेरन् ब्राह्मणं राजनि समादिश्य तत्रासीत* ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम्।

यदि तामातिथ्यामिष्टिमनवतावितेसोमे आरभेरन् ततो ब्राह्मणं तत्र तस्मिन् सोमे समादिश्य तस्यामातिथ्यायां क्रियमाणाया-मासीत ॥ ५ ॥

तस्याꣳ सꣳस्थितायां तानूनप्त्रमाज्यमवमृश्य जपेयु-र्हविरसि वैश्वानरमनाधृष्टमनाधृष्यं देवानामोजोऽनभिशस्त्य-भिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपगेषꣳसुवितेमाधा इति* ॥ ६ ॥

तस्यामिष्टौ समाप्तायां यद्यवहृते राजन्यारब्धा यद्यनवहृते तस्यां संस्थितायां तानूनप्त्रमाज्यमवमृश्य तानूनप्त्रा देवता अस्येति तानूनप्त्रं किं पुनस्तानूनप्त्रमिति उच्यते आज्यन्तदवमृश्य अथ जपेयुः अत्र ब्रह्म-लक्षणेषु बहुवचनमुद्गातॄणामपि प्राप्त्यर्थं हविरसि वैश्वानर इत्ये-तदादि मन्त्रं यथासूचितम् ॥ ६ ॥

अप उपस्पृश्याध्वर्युणोक्तो राजानं विस्रम्भयेत्* ॥ ७ ॥

अपः स्पृष्ट्वा यदाध्वर्युणोच्यते राजानं विस्रम्भयेति ततस्तं सोमं वसनेनोपनद्धं विस्रम्भयेत् मुञ्चेत् ॥ ७ ॥

तꣳ हिरण्येनान्तर्द्धायाभिमृशेयुरꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायता-

---

* द्राह्यायणोऽप्येवम् ।

मास्त्वमिन्द्राय प्यायस्वाप्याययास्मात्सखीऽन् सन्यामेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति* ॥ ८ ॥

तं विस्रम्भितं सोमं यदि ब्रह्मणा यद्यन्येन हिरण्येनान्तर्द्धाय हिरण्यमन्तर्द्धानं कृत्वा अभिमृशेयुः न साक्षात् स्पृशेयुः अंशुरित्येतदादिना यथासूचितेन मन्त्रेण ॥ ८ ॥

काशमये प्रस्तरे निह्नुवीरन्दक्षिणानुत्तानान् पाणीन् कृत्वा सव्यान्नीच एष्टा राय एष्टा वामानिप्रेषे भगायर्त्तमृतवादिभ्यो नमोदिवे नमः पृथिव्या इति* ॥ ९ ॥

काशमये प्रस्तरे काशी नाम तृणजातिः तन्मयः काशमयः प्रस्तरो मुष्टिः तस्मिन् प्रस्तरे निह्नुवीरन् निह्नवनं नाम कर्म तदुच्यते एवं दक्षिणान् पाणीनुत्तानान् कृत्वा तस्मिन् प्रस्तरे सव्यान् पाणीन्नीचान् कृत्वा एष्टा राय इत्येतदादि मन्त्रं जपेयुः एतन्निह्नवनम् ॥ ९ ॥

उपसदिष्टिरत ऊर्द्ध्वं तस्यां तथैवाभिमर्शननिह्नवने सव्या अपराह्ण उत्तानाः स्युर्दक्षिणान् पञ्चः† ॥ १० ॥

अस्मात्कर्मण ऊर्द्धमुपसदिष्टिभवति, उपसदिति संज्ञा इष्टिग्रहणस्य प्रयोजनमुक्तम् आतिथ्यप्रकरण एव तस्यामुपसदिष्टौ यथैवा-

---

* द्राह्यायणेऽप्येवम्

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

तिथ्यान्ते सोमाभिमर्शनन्निह्नवने उक्ते तथैव एतस्यां भवतः या तु आपराह्णिकी तस्यान्ते सव्याः पाणयः उत्तानाः स्युर्दक्षिणान् पञ्चः॥१०॥

**स्रुवेणोपसद्धोमे हुते विद्यात्संस्थितेति* ॥ ११ ॥**

अकृतस्त्वेयमिष्टिः अतस्तस्याः संस्थानं ज्ञाप्यते यदाध्वर्युणा स्रुवेणोपसद्धोमो हुतः स्यात् तदा जानीयात् संस्थितेति ॥ ११ ॥

**तस्या घर्मः प्रवर्ग्यवति पूर्वः † ॥ १२ ॥**

तस्या उपसदिष्टेः प्रवर्ग्यवति यज्ञे घर्मस्तावत् पूर्वो भवति प्रवर्ग्योऽस्मिन्नस्तीति प्रवर्ग्यवान् तस्मिन् प्रवर्ग्यवति प्रवर्ग्यस्यानित्यतां दर्शयति ॥ १२ ॥

इति पञ्चमस्य षष्ठी कण्डिकाः ।

---

अथ सप्तमी कण्डिका ।

**तमभीन्धिष्यत्सु गार्हपत्यं गत्वा यजुषोपविश्य दक्षिणेन दक्षिणाग्निमुत्तरेण बर्हिस्स्तृणीयात् † ॥ १ ॥**

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये छेदविषये विशेषोऽस्ति ।

तद्धर्मरोचनार्थं अभीन्धिष्यत्सु गार्हपत्यमग्निं गत्वा तस्य दक्षिणे प्रदेशे यजुषोपविशेत् यदि बहिः प्रवर्ग्यः स्यात् उत्तरेणाग्नीध्रीयस्य गच्छेत् तत्र दक्षिणाग्निकर्माणि क्रियन्ते प्रस्तुते ॥ १ ॥

रुचितो घर्म इत्युक्तेऽनुवाकेन तिष्ठन्तोऽवेक्षेरन् यमध्वर्यु-र्ब्रूयात्* ॥ २ ॥

रुचितो घर्म इत्युक्ते तस्मिन् काले घर्मं सर्वेऽनुवाकेन गर्भो देवानामित्यादिनावेक्षेरन् यमध्वर्युर्ब्रूयात्, अनूच्यत इत्यनुवाकः ॥ २ ॥

तं ह्रियमाणं यथेतमनुव्रजन् जपेदिश्वा आशा दक्षिण-सदक्षर्वान् देवानयाडिह स्वाहा कृतस्य घर्मस्य मधोः पिबत-मश्विनेति* ॥ ३ ॥

तं घर्मं ह्रियमाणमाहवनीये यथागतमनुगच्छन् जपेदिश्वा आशा इत्येतदादि मन्त्रं यथासूचितम् ॥ ३ ॥

आश्राविते उपविश्य जपेदश्विना घर्मं पातमहर्व्यानमह-र्दिवाभिरूतिभिस्तन्त्रायणेन मोघा वा पृथिवीद्यामिति* ॥ ४ ॥

आश्राविते घर्मे उपविश्य जपेत् अश्विना घर्ममित्येतदादि मन्त्रम् ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम् ।

**हुते यजमानं वाचयेदपातामश्विना घर्ममनु द्यावापृथिवी अमꣳसातामिहैव रातयः सन्त्विति* ॥ ५ ॥**

हुते तस्मिन् घर्मे यजमानं वाचयेत् अपातामश्विना घर्म-मित्येतदादि मन्त्रं यथोद्दिष्टम् ॥ ५ ॥

**घर्मशेषस्य भक्षयेन्मधुहुतमिन्द्रतमेऽग्नावश्यामते देव घर्म नमस्तेऽस्तु मा मा हिꣳसीरिति* ॥ ६ ॥**

उक्तं वाजिनाश्विनघर्माणामृत्विक्षूपह्वमिष्ट्वा प्राणभक्षं भक्षये-दिति सामान्यम् अतः तस्य घर्मस्य हुतस्य यः शेषः स्यात् तस्य भक्ष-येत् मधुहुतमिन्द्रतम इत्येतदादिना मन्त्रेण ॥ ६ ॥

**सत्रञ्चेत्स्याद्यजमाना उपह्वयध्वमित्येवोपह्वानम्* ॥७॥**

यदि सत्रं स्यात्ततः घर्मस्य भक्षणकाले यजमाना उपह्वयध्वम् उपसम्पादयध्वम् इत्येतदुपह्वानं स्यात् अथैवशब्दः किमर्थमिति चेत् उच्यते न केवलमस्मिन् काले सर्वेषूपह्वानेष्वेवं स्यात् ॥ ७ ॥

**एवꣳ सदा प्रवर्ग्योपसदः कुर्य्यात्* ॥ ८ ॥**

एवमेतेन प्रकारेण सर्वस्मिन् काले प्रवर्ग्योपसदः कुर्य्यात् इदं कर्मातिथ्यानन्तरमुक्तं अतो ब्रवीति एवं सदा प्रवर्ग्योपसदः कुर्य्या-दिति अथ सदाग्रहणं किमर्थमिति चेत् उच्यते सदा सायञ्च प्रातश्च ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

**महावेदेः स्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत्* ॥ ९ ॥**

महावेदेरित्यपादानलक्षणा पञ्चमी स्तम्बयजुरुक्तलक्षणं तत् हरिष्यत्सु बहिर्वेदि यजुषोपविशेत् ॥ ९ ॥

**विलिखिते चात्वाले यथार्थं स्यात्* ॥ १० ॥**

हृते स्तम्बयजुषि तावत्तस्मिन्नेव देशे आसीत यावत् चात्वालविलेखनं कृतमिति ततो यथार्थं स्यादित्युक्तार्थम् ॥ १० ॥

**उत्तरवेदिन्निर्वप्स्यत्सु तूष्णीमुपविशेत् न्युप्तायां यथार्थं स्यात्* ॥ ११ ॥**

उत्तरवेदिश्चात्वाले पांशुभिः क्रियते तस्मिन् मृन्निर्वपने करिष्यमाणे तूष्णीमुपविशेद्ब्रह्मा स्थाने कृते मृन्निर्वपने यथार्थं स्यात् ॥११॥

**अग्निचित्यायां प्राग्दीक्षणीयायाः सावित्रान् होमान् होष्यत्सु यजुषोपविशेत्* ॥ १२ ॥**

अग्निचित्यायां विशेष उच्यते, अग्निचित्या अनित्या तस्यामग्निचित्यायां पूर्वं दीक्षणीयायाः सावित्रान् होमान् जुह्वति सवितृदेवताकान् तान् होष्यत्सु यजुषोपविशेत् ॥ १२ ॥

**तेषु हुतेषूख्यां मृत्तिकामाह्रियमाणामनुगच्छेत्* ॥ १३ ॥**

तेषु सावित्रेषु होमेषु हुतेषु उख्यां मृत्तिकामाह्रियमाणाम्

---

* द्राह्यायणोऽप्येवम्।

अनुगच्छेत् उखाप्रयोजना उख्याः उखा नाम मृण्मयं पात्रं क्रियते तस्मिन्नग्निः संह्रियते ॥ १३ ॥

तस्या७ सम्भ्रियमाणायामासिता सम्भृतायां यथार्थ७ स्यात्* ॥ १४ ॥

तस्यां मृत्तिकायां संभ्रियमाणायां तत्रासीत् सम्भृतायां यथार्थं स्यात् ॥ १४ ॥

इति पञ्चमस्य सप्तमी कण्डिका ।

---

अथ अष्टमी कण्डिका ।

आहवनीयञ्चेष्यत्सु यजुषोपविशेत्* ॥ १ ॥

योऽसौ पत्नीशालायामाहवनीयः स इष्टकाभिश्चीयते तं चेष्यत्सु यजुषोपविशेत् ॥ १ ॥

तस्मिन् सञ्चित उख्यामासन्दीं नैर्ऋतीश्चेष्टका अरण्य७-क्रियमाणा अनुगच्छेत्* ॥ २ ॥

तस्मिन्नाहवनीये सञ्चिते समस्तचिते यस्यामासन्द्यामुखा स्थापिता आसीत तामासन्दीं नैर्ऋतीश्चेष्टकाः निर्ऋतिर्देवता यासां ता

---

* द्राह्यायणोऽप्येवम् ।

नैर्ऋत्यः ता अरण्यं ह्रियमाणा अनुगच्छेत् ननु तस्मिन्निति किमर्थं उच्यते, केषाञ्चिदाहवनीयस्यैका चितिर्भवति केषाञ्चित् पञ्च यद्येका यदि वा पञ्च तस्मिन् सञ्चिते ॥ २ ॥

निधीयमानानां दक्षिणतः स्थित्वा निहितास्वपउपस्पृश्यानपेक्षं प्रत्याव्रजेत्* ॥ ३ ॥

निधीयमानानाम् इष्टकानां आसन्द्यास्व दक्षिणे प्रदेशे स्थित्वा निहितासु स्थापितासु अप उपस्पृश्यानपेक्षं प्रत्याव्रजेत् ॥ ३ ॥

अग्निं विकृष्यत्सु सर्वौषधञ्च वप्स्यत्सु तूष्णीमुपविशेत्* ॥ ४ ॥

अग्निं क्षेत्रं लाङ्गलेन कृष्यते तमग्निं क्षेत्रं विकृष्यत्सु तूष्णीमुपविशेत् तस्मिन्नेव च सर्वौषधम् उप्यते, तच्च वप्स्यत्सु तूष्णीमुपविशेत् ॥ ४ ॥

तैः सार्द्धं प्रत्याव्रज्य चितोः प्रणीयमाना अनुगच्छेत्* ॥५॥

तैः कर्त्तृभिः सह प्रत्याव्रज्य चितोः चयनार्थं प्रणीयमाना अनुगच्छेत् याभिरिष्टकाभिरग्निश्चीयते ताश्चित्य इत्येवमुपचरन्ति ॥ ५ ॥

निधीयमानानां दक्षिणतः स्थित्वा निहितासु दक्षिणस्य पक्षस्यासन्नो यजुषोपविशेत्* ॥ ६ ॥

---

* द्राह्यायणेऽप्येवम् ।

पत्तस्येति त्[संस्तुत्या ब्रवीति तेनाग्निचेत्रं लक्षितं भवति ॥६॥

लोकं पृणास्पधीयमानासु ब्राह्मणं तत्र समादिश्य यथार्थं स्यादिति शाण्डिल्यः* ॥ ७ ॥

लोकं पृणा नामेष्टकाः अपरा यजुष्मत्यः तासां यजुष्मतीनां उपधाने कृते ततो लोकं पृणा उपधीयन्ते तासु लोकं पृणास्पधीयमानासु ब्राह्मणं तस्मिन् देशे समादिश्य यथार्थं स्यादिति शाण्डिल्य आचार्यो मन्यते ॥ ७ ॥

आसीतैवेति धानञ्जप्यः* ॥ ८ ॥

धानञ्जप्य आचार्यो मन्यते आसीतैव ॥ ८ ॥

एवं सदा चितिषु कुर्य्यात्* ॥ ९ ॥

योऽयमिष्टकाप्रणयनादिविधिरुक्तः एष सर्वासु चितिषु कुर्य्यात्॥९॥

सञ्चितकर्माणि करिष्यत्स्वाव्राजमासीत्* ॥ १० ॥

सञ्चितेऽग्नौ यानि कर्माणि तानि करिष्यत्सु आव्राजमासीत यावदाव्रज्याव्रज्य क्रियन्ते तावदासीतेत्यर्थः ॥ १० ॥

सम्राड़ासन्दीं ह्रियमाणामनुगच्छेत् * ॥ ११ ॥

यस्यामासन्द्यां घर्मपात्राणि स्थाप्यन्ते सा संम्राड़ासन्दी तां घर्मोत्पादने ह्रियमाणामनुगच्छेत् ॥ ११ ॥

---

* द्राह्यायणोऽप्येवम् ।

परिषिच्यमानेऽप उपस्पृश्य तैः सार्द्धं प्रत्याव्रज्याग्निं प्रणीयमानमनुगच्छेदप्रतिरथं जपंस्तूष्णीमनग्निचित्या चेत्* ॥ १२ ॥

घर्मपात्राणामुदकेन परिषेचने क्रियमाणे अप उपस्पृश्य तैरेव कर्तृभिः सह प्रत्याव्रज्याग्निं प्रणीयमानमनुगच्छेत् अप्रतिरथञ्जपन् आशुः शिशान इत्येतमध्यायञ्जपन् यद्यनग्निचित्या स्यात् तूष्णीमनुगच्छेत् ननूक्तं एतत्कर्माग्निप्रणयनेषु सर्वेषु इति अथानुगच्छेदिति किं पुनरारभ्यते उच्यते विशेषणार्थं पुनरारभ्यते कथम् अप्रतिरथञ्जपन्निति अन्येष्वग्निप्रणयनेषु दक्षिणेन वेदेर्गतः इह पुनर्येन पथाग्निः प्रणीयते तेनैवानुगच्छेत् ॥ १२ ॥

निधीयमानस्य दक्षिणतः स्थित्वा निहिते दक्षिणा बहिर्वेदि यजुषोपविशेषेत् † ॥ १३ ॥

आहवनीयायतने निधीयमानस्याग्नेर्दक्षिणे प्रदेशे स्थित्वा निहितेऽग्नौ बहिर्वेदि दक्षिणार्द्धे यजुषोपविशेत् ॥ १३ ॥

हविर्द्धाने प्रवर्त्त्यमाने अनुगच्छेत् † ॥ १४ ॥

हविर्द्धानसंज्ञके अनसी प्रवर्त्यमाने अनुगच्छेत् ॥ १४ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

परिवार्यमाणयोस्तत्रैव गत्वासीत* ॥ १५ ॥

परिवार्य्यमाणयोर्हविर्द्धानयोस्तस्मिन्नेव देशे गत्वा दक्षिणार्द्धे वेदेर्बहिरासीत ॥ १५ ॥

उच्छ्रितायामौदुम्बर्यां यथार्थं स्यात् यथार्थं स्यात्* ॥ १६ ॥

तस्मिन् देशे तावदासीत यावदौदुम्बर्युच्छ्रयणं कृतमिति तत उच्छ्रितायामौदुम्बर्य्यां यथार्थं स्यात् इत्युक्तार्थम्॥ १६ ॥

इति पञ्चमस्य अष्टमी कण्डिका ।

---

अथ नवमी कण्डिका ।

अग्नीषोमौ प्रणेष्यत्सु वेदिमाक्रामेन्मन्त्रेण † ॥ १ ॥

उक्तमुच्छ्रितायामौदुम्बर्य्यां यथार्थं स्यादिति साम्प्रतमग्नीषोमयोः प्रणयणं तत्र ब्रह्मत्वमुच्यते अग्निश्च सोमश्चाग्नीषोमौ प्रणेष्यत्सु प्रणेष्यत्स्विति भविष्यत्काल आसन्नो निर्द्दिश्यते तस्मिन् भविष्यत्काले वेदिमाक्रामेत् मन्त्रेण ब्रह्मा आग्नानेन तीर्थेन गत्वा प्रविश्य मृदाग्निर्यिरेत्यनेन मन्त्रेण वेदिमाक्रामेत् ॥ १ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

पश्चिमेनोत्तरवेदिमुदङ्ङतिक्रम्याक्रमणयजुर्जपेच्चात्वालसमीपे दीक्षितश्चेत्* ॥ २ ॥

यदि दीक्षितः स्यात् ब्रह्मा ततः अग्नीषोमप्रणयनकाले स्वस्मादासनादुत्थाय हविर्द्धानस्योत्तरवेदेश्चान्तरेणोदङ्मुखः गत्वा चात्वालस्य समीपे एतदाक्रमणयजुर्जपेत् ॥ २ ॥

तूष्णीमत ऊर्द्ध्वं वेदेराक्रमणम्* ॥ ३ ॥

ततः अग्नीषोमप्रणयनकालाक्रमणादूर्द्ध्वं यान्यन्यानि वेद्याक्रमणानि ब्रह्मणः तानि सर्वाणि तूष्णीं भवन्ति अनेनोक्तं सुत्यायां ब्रह्मणः प्राक् सुब्रह्मण्याया उद्गात्रेण समानं कर्मेति दक्षिणाक्रमणे वेदेरित्येतदादि च उद्गातुः सवनमुखेषु यजुषाक्रमणं विहितं यावदाक्रामेयुरित्येक इति तदेतद्ब्रह्मणः प्राप्नोत्युद्गातृसामान्यात् तदेतत् सूत्रकारो निवर्त्तयति तूष्णीमत ऊर्द्ध्वं वेदेराक्रमणमिति ॥ ३ ॥

क्रीत्वा राजा येनातिहृतः स्यात्तेन गत्वा तूष्णीमुपविशेत्* ॥ ४ ॥

क्रीत्वा सोमो राजा सोमवहनादवतार्य्य पत्नीशालायां प्रवेश्य येन पथा संस्थानमानीतः स्यात् तेन गत्वा ब्रह्मा तूष्णीमुपविशेत् तस्मिन्नासने ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम् ।

राजानꣳ हरेत्युक्तः पूर्वेणाग्निमेकस्मा अतिप्रदाय तान् प्रसव्यं परीत्यादायानुगच्छेद्दक्षिणेन चेद्गतः स्यात्* ॥ ५ ॥

राजानं हरेत्युक्तो ब्रह्मा पूर्वेणाग्निमेकस्मै ऋत्विजे अतिप्रदाय अर्पयित्वा तानृत्विजः प्रसव्यं परीत्य आदाय गृहीत्वा सोममनुगच्छेत् यदि दक्षिणेन गतः स्यात् ॥ ५ ॥

उत्तरेण चेद्यथेतमग्निं परीत्यादायानुगच्छेत्* ॥ ६ ॥

यद्युत्तरेण गतः स्याद्ब्रह्मा यथागतमग्निं परीत्य गृहीत्वा सोममनुगच्छेत् ॥ ६ ॥

अन्येन चेद्ब्रह्मा व्रजितः स्यादन्येन राजा तेनैनं प्रगृह्णीयात्* ॥ ७ ॥

यद्यन्येन पथा ब्रह्मा गतः स्यात् अन्येन सोमो नीतः येन सोमो नीतः स्यात् तेन एनं सोमं प्रगृह्णीयात् नयेत् ननूक्तं क्रीत्वा राजा येनातिहृतः स्यात्तेन गत्वा तूष्णीमुपविशेदिति य एव राज्ञः सञ्चरः स एव सञ्चरो ब्रह्मणः तात्कालिक उपदिष्टः तत्किमिदमारभ्यते अन्येन चेद्ब्रह्मा व्रजितः स्यादन्येन राजेति उच्यते ब्रह्मणो दीक्षितस्य सञ्चरन्नियमयति यदा ब्रह्मा दीक्षितः स्यात् तदा स्वेनैव सञ्चरेण यायात् यद्यनेन राजा नीतः स्यात् न तेन यायात् ॥ ७ ॥

एतौ त्वेव ब्रह्मणो गतिकल्पावहरतोऽपि* ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

यद्यपि ब्रह्मा सोमं न हरेत् अध्वर्युर्यजमानो वा अन्यो वा हरेत् एतौ एव ब्रह्मणो गतिकल्पौ स्यातां यो हरत उक्तौ तुशब्दोऽवधारणार्थः ॥ ८ ॥

आसीताग्नीध्रीय आहुत्योर्ह्रूयमानयोरिति धानञ्जप्यः* ॥ ९ ॥

आग्नीध्रीये आहुत्योर्ह्रूयमाययोरासीतेत्येवं धानञ्जप्य आचार्यो मन्यते ॥ ९ ॥

तिष्ठेदिति शाण्डिल्यः* ॥ १० ॥

तिष्ठेदित्येवं शाण्डिल्य आचार्यो मन्यते आसीतेति सिद्धे सति स्थानविकल्पनार्थमारम्भः ॥ १० ॥

उत्तरेणाग्नीध्रीयꣳ राजानमाज्यानि च ह्रियमाणान्यनुगच्छेत्* ॥ ११ ॥

आग्नीध्रीयस्योत्तरेण प्रदेशेन सोमं राजानमाज्यानि च नीयमानान्यनुगच्छेत् ॥ ११ ॥

प्रवेशितेषु हविर्द्धानं पश्चिमेन गत्वासीतेति गौतमः* ॥१२॥

प्रवेशितेषु आज्येषु सोमे च हविर्द्धानं तस्य हविर्द्धानस्य पश्चिमेन गत्वासीतेत्येवं गौतम आचार्यो मन्यते देशउपयोगश्च वच्यते ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम्।

पूर्वेणेति शाण्डिल्यायनो दक्षिणस्य द्वारबाहोः पुरस्ताद्यजुषेति* ॥ १३ ॥

प्रवेशितेषु आज्येषु सोमे च तस्यैव हविर्द्धानस्य पूर्वेण गत्वा दक्षिणस्य द्वारबाहोः पूर्वे प्रदेशे यजुषोपविशेदित्येवं शाण्डिल्यायन आचार्यो मन्यते एतत् स्थानमुपवेशनस्य एतयोर्गतिकल्पयोः ॥१३॥

अग्नीषोमीयवपायाꣳ हुतायां यथेतमुदङ्ङतिक्रम्य चात्वाले मार्जयेत* ॥ १४ ॥

अग्नीषोमीयस्य पशोर्वपायां हुतायां यथेतं यथागतं यदि पूर्वेण गतः स्यात् यदि पश्चिमेन उदङ्गत्वा चात्वाले मार्जनं कुर्य्यात् तन्मार्जनमुक्तम् ॥ १४ ॥

एवमेवापररात्र आज्येषु प्रविष्टेषूपवेशनं मार्जनञ्च सवनीयवपायाꣳ हुतायाम् † ॥ १५ ॥

यथाग्नीषोमीयवपायां हुतायां एवमेव अनेनैव प्रकारेण अपररात्रे सौत्येष्वाज्येषु प्रविष्टेषु उपवेशनं ब्रह्मणः मार्जनञ्च सवनीयस्य पशोर्वपायां हुतायाम् ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

इति पञ्चमस्य नवमी कण्डिका ।

अथ दशमी कण्डिका।

पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत्* ॥ १ ॥

प्रसङ्गेन सामान्यं कर्मोक्तं साम्प्रतमनन्तरकर्मप्रतिपत्तिः अग्नीषोमीयं पशुपुरोडाशं प्रति तदारप्स्यत्सु तूष्णीमुपविशेत् ॥ १ ॥

दीक्षितश्चेत् सर्वा इडा अन्वारभेत* ॥ २ ॥

यदि दीक्षितः स्याद्ब्रह्मा ततः सर्वा इडा अन्वारभेत दीक्षणीयाया आरभ्य ॥ २ ॥

वसतीवरीषु परिह्रियमाणासु दक्षिणोत्क्रम्य तिष्ठेददीक्षितश्चेदा तासां परिहरणात्* ॥ ३ ॥

वसतीवरीषु परिहरणेषु क्रियमाणेषु तस्माद्देशादुत्क्रम्य दक्षिणार्द्धे वेदेर्बहिस्तिष्ठेत् यद्यदीक्षितः स्यात् यदि दीक्षितः तत्रैवासीत बहिर्वेदि कियन्तं कालं तिष्ठेत् आ तासां परिहरणात् यावद्वसतीवरीपरिहरणं कृतमिति ॥ ३ ॥

आग्नीध्रीयꣳ राजानꣳ ह्रियमाणमनुगच्छेत्* ॥ ४ ॥

केषाञ्चिदध्वर्यूणां राजा हविर्द्धान एव वसति केषाञ्चिदाग्नीध्रीये तद्ये राजानमाग्नीध्रीयं हरन्ति ह्रियमाणमनुगच्छेत् ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम्।

**निधीयमानस्य दक्षिणतः स्थित्वा निहिते यथार्थं स्यात्* ॥ ५ ॥**

निधीयमानस्य सोमस्य आग्नीध्रीये दक्षिणे प्रदेशे स्थित्वा निहिते स्थापिते यथार्थं स्यात् गतार्थमेतत् ॥ ५ ॥

**दीक्षितश्चेत्तत्रैव संविशेत्* ॥ ६ ॥**

यदि दीक्षितः स्याद्ब्रह्मा ततस्तस्मिन्नेवाग्नीध्रीये संविशेत् ॥ ६ ॥

**अपरात्र आज्यानि ग्रहीष्यतः पूर्वेण गत्वाग्निञ्च पश्चिमेन वा यजुषोपविशेत्* ॥ ७ ॥**

रात्रेरपरः कालः अपररात्रः तस्मिन्नपररात्रे आज्यानि गृह्णन्ति तानि ग्रहीष्यतः आज्यग्रहणकाले तेषां पूर्वेण प्रदेशेन गत्वाग्नेश्च पश्चिमेन वा गत्वा तान् सर्वानग्निञ्च यजुषोपविशेत् ॥ ७ ॥

**आत्तेषु प्राङुत्क्रम्य प्रसव्यं परीत्यानुगच्छेत् पूर्वेण चेद्गतः स्यात्* ॥ ८ ॥**

आत्तेषु गृहीतेष्वाज्येषु प्राङुत्क्रम्य तस्मिन्नेव देशे तान् सर्वानग्नीनाज्यानि ऋत्विजश्च अप्रदक्षिणं परीत्य जनुगच्छेत् यदि पूर्वेणाग्निं गतः स्यात् ॥ ८ ॥

**पश्चिमेन चेद्यथेतमग्निं परीत्यानुगच्छेत्* ॥ ९ ॥**

---

* द्राह्यायणेऽप्येवम् ।

यदि पश्चिमेन गतः स्यात् यथागतमग्निं परीत्यानुगच्छेत् ॥ ९ ॥

प्रवेशितेषूपविशेत्* ॥ १० ॥

प्रवेशितेष्वाज्येषु हविर्द्धानमुपविशेत् तदुक्तम् एवमेवापरराच-आज्येषु प्रविष्टेषूपवेशनं मार्जनञ्चेति सिद्धमुपवेशनं विकल्पार्थमारभ्यते ॥ १० ॥

आज्येष्वेव ग्रहीष्यमाणेष्वत्रोपविशेदिति शाण्डिल्यः* ॥ ११ ॥

आज्येष्वेव ग्रहीष्यमाणेषु अस्मिन् देशे उपविशेदिति शाण्डिल्य आचार्यो मन्यते नैवाग्नीध्रीयसमीपे उपविशेदिति ॥ ११ ॥

अध्वर्युणोक्तो वाचं यच्छेदाटतीयं प्रातरनुवाकस्य प्रथमायाः* ॥ १२ ॥

अध्वर्युणोक्तः स ब्रह्मा वाचं यच्छेत् वाग्यमनं कुर्यात् आ कस्मात् कालात् यावत् प्रातरनुवाकस्य प्रथमाया ऋचस्त्रिर्वचनं कृतमिति ॥ १२ ॥

आ वा परिधानीयायाः* ॥ १३ ॥

यावद्वा परिधानीयाया ऋचस्त्रिर्वचनं कृतमिति ॥ १३ ॥

आ वोपांश्वन्तर्यामयोर्होमात्* ॥ १४ ॥

---

* द्राह्यायणोऽप्येवम्।

आ वा उपांश्वन्तर्यामयोर्ग्रहयोर्होमात् यावदुपांश्वन्तर्यामौ हुताविति ॥ १४ ॥

आ वा बहिष्पवमानात्* ॥ १५ ॥

यावद्वा बहिष्पवमानं समाप्तमिति एते वाग्यमनस्य कालविकल्पाः ॥ १५ ॥

हविर्द्धानञ्चेत् पूर्वेण गतः स्यादुपांश्वन्तर्यामौ होष्यतस्तदङ्गतिक्रम्य तिष्ठेददीक्षितश्चेत् † ॥ १६ ॥

यदि हविर्द्धानस्य पूर्वेण प्रदेशेन गतः स्यात् ब्रह्मा तत उपांश्वन्तर्यामौ ग्रहौ होष्यतस्तु उत्तरेण गत्वा तिष्ठेत् अव्यवायार्थं यद्यदीक्षितः स्यात् अथ दीक्षितस्तत्रैवासीत नैव तस्य व्यवायोऽस्ति आ कुतः कालं तिष्ठेत् ॥ १६ ॥

आ तयोर्होमात् † ॥ १७ ॥

तिष्ठेदिति शेषः ॥ १७ ॥

निःसर्पत्स्वन्वारभेत* ॥ १८ ॥

अभिषवं कृत्वा निःसर्पत्सु अन्वारभेत प्रतिहर्त्तारम् अविच्छेदार्थं वाससि गृह्णीयात् ॥ १८ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये क्वेदविषये विशेषोऽस्ति ।

तस्य प्रस्तोत्रा समानं कर्म प्रागुपवेशनात्* ॥ १९ ॥

तस्य ब्रह्मणः प्रस्तोत्रा सह तुल्यं कर्म आकुतः प्रागुपवेशनात् उपवेशनन्त्वाह ॥ १९ ॥

आस्तावं प्राप्यानासन्नो यजुषोपविशेत् प्रस्तोतारं प्रति* ॥ २० ॥

आस्तावदेशं प्राप्य असन्निकृष्टस्तस्यास्तावस्य यजुषोपविशेत् प्रस्तोतारं प्रति यथोदङ्मुखोपविष्टस्य प्रस्तोतुरासनमाभिमुख्येन भवति ॥२०॥

इति पञ्चमस्य दशमी कण्डिका ।

---

अथ एकादशी कण्डिका ।

रश्मिरसीत्येतावनुवाकौ स्तोमभागाः* ॥ १ ॥

साम्प्रतं स्तोत्रानुमन्त्रणमुच्यते, रश्मिरसि तन्तुरसीत्येतौ द्वावनुवाकौ एकस्मिन्ननुवाके द्वादशमन्त्राः पठिताः अपरस्मिन्नेकविंशतिः तेषु मन्त्रेषु बहुवचनं स्तोमभागा इति ॥ १ ॥

तैः पृथगनुपूर्वꣳ स्तोत्राण्यनुमन्त्रयेत ब्रह्मन् स्तोष्यामः प्रशास्तरित्युक्ते* ॥ २ ॥

किमेषां स्तोमभागत्वं स्तोमान् भजन्त इति स्तोमभागाः तैस्त्रय-

---

* द्राह्यायणेऽप्येवम् ।

स्त्रिंशता स्तोमभागैः मन्त्रैः पृथगेकैकमनुपूर्वम् एकैकं स्तोत्रमनुमन्त्रयेत ब्रह्मा ब्रह्मन् स्तोष्यामः प्रशास्तरित्युक्ते प्रस्तोत्रा षोड़शिमत्यतिरात्रे एकोनत्रिंशत्स्तोत्राणि अप्तोर्याम्णि चत्वार्य्यतिरिक्तस्तोत्राणि एवमेते मन्त्राः एतेषां स्तोत्राणां प्रतिमन्त्रणे एष समुदितानां त्रयस्त्रिंशतां स्तोत्राणां प्रतिमन्त्रणविधिरुक्तः। इदानीं मन्त्रविवेकार्थमाह ॥ २ ॥

ऊर्द्ध्वं प्रथमाद्रात्रिपर्य्यायाद्यत्र स्यादमुष्मै त्वेति तं जित्वेति तत्र ब्रूयात्* ॥ ३ ॥

विंशतिभ्य ऊर्द्ध्वं स्तोमभागेभ्यः अकृत्स्ना मन्त्राः पठिताः द्वितीयतृतीययोः पर्य्याययोः पठित्वा ततः सन्धौ कृत्स्नः पठितः ततः पुनरतिरिक्तस्तोत्रेषु तथैवाकृत्स्नः तथैव किन्ते प्रयोक्तव्या अथान्यथा प्रयोग इति अत्राह ऊर्द्ध्वं प्रथमाद्रात्रिपर्य्यायादिति अमुष्मा इति सर्वनाम्नि त्रिवृदसि त्रिवृते त्वा त्रिवृतं जिन्व सर्वं चैवं प्रकारो द्वादशस्वपि ॥ ३ ॥

सवितृप्रसूताबृहस्पतये स्तुतेत्येकैकस्यान्तः* ॥ ४ ॥

एकैकस्य मन्त्रस्य सवितृप्रसूता वृहस्पतये स्तुतेत्येषान्तः स्यात् त्रिवृदसि त्रिवृते त्वा त्रिवृतं जिन्व सवितृप्रसूता वृहस्पतये स्तुतेति उत्तरेषामप्येवमेव प्रकार एवं जातीयानाम् ॥ ४ ॥

पूर्वेषाञ्च* ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम्।

पूर्वेषाञ्च रश्मिरसोत्येतदादीनां सवितृप्रसूता बृहस्पतये स्तुतेत्ये-केकस्य मन्त्रान्तः स्यात् ननु आम्नायसिद्धमेकैकस्मिन् किं पुनरार-भ्यते पूर्वेषाञ्चेति उच्यते विशेषविवक्षुरारभते विशेषो वक्ष्यते स पूर्वेषाञ्चैतेषाञ्च स्यादिति ॥ ५ ॥

भूर्भुवःस्वर्बृहतिर्ब्रह्माहं मानुष ओमित्येतद्वाधिकं कुर्या-दोङ्कारं वा* ॥ ६ ॥

एतद्वा यथोद्दिष्टं यजुरधिकं कुर्यादोङ्कारं वेति विकल्पः पूर्वेषा-ञ्चेत्युक्तम् ॥ ६ ॥

यथाम्नायꣳ सन्धेरनुमन्त्रयेत* ॥ ७ ॥

यथाम्नायपरिपठितेन यजुषा सन्धेः स्तोत्रमनुमन्त्रयेत वसुको-ऽसि वस्यष्टिरसि वेषश्रीरसि सवितृप्रसूता बृहस्पतये स्तुतेत्येवम् ॥ ७॥

त्रैधं विभजेदिति धानञ्जप्यो वसुकोऽसि वस्यष्टिरसि वेष-श्रीरसि वसुकाय त्वा वस्यष्टये त्वा वेषश्रिये त्वा वसुकं जिन्व वस्यष्टिं जिन्व वेषश्रियं जिन्व सवितृप्रसूता बृहस्पतये स्तु-तेति* ॥ ८ ॥

एतदेव यजुस्त्रैधं विभजते नानुमन्त्रयेतेत्येवं धानञ्जप्य आचार्यो मन्यते स त्रिविधविभागप्रकारस्तेनैवाचार्य्येणोक्तः ॥ ८ ॥

---

* द्राह्मायणोऽप्येवम् ।

सुतदेवेन सवित्रा प्रसूता इत्यनुमन्त्रयेत मानसं वाजपेये च बृहत्* ॥ ९ ॥

सुतदेवेन सवित्रेत्येतदादिना मन्त्रेण मानसं स्तोत्रमनुमन्त्रयेत दशमेऽहनि वाजपेये च बृहत् तेनैव ॥ ९ ॥

आनन्तर्य्येणेतराणि* ॥ १० ॥

यथोक्तमेवानुमन्त्रयेतानन्तर्य्येण तत् किमिदमारभ्यते आनन्तर्य्येणेतराणीति उच्यते इदं हि मानसमग्निष्टोमसाम्न ऊर्द्ध्वम् आम्नातं यथा षोड़शिसाम्न ऊर्द्ध्वं वाजपेयसाम तत्रायं न्यायः प्राप्तः पूर्वस्य स्तोत्रस्य यदनुमन्त्रणं तेनैवानुमन्त्रणं प्राप्तम् उत्तरस्य वा यत् यत् सूत्रकारेण कल्पितं तद्वाधिकं स्याद्विकल्पो वैतयोर्मानसवाजपेयसाम्नोः एतस्मिन् संशये आचार्य्यो मुक्तसंशयं सूत्रमारभते यदेतदानन्तर्य्यमुक्तं पूर्वेषामेव यथोक्तानां स्तोत्राणां स्यात् ॥ १० ॥

इद्व्रात् स्तोत्राणि पूर्वेण तद्विवृद्धेः* ॥ ११ ॥

ईद्व्रादित्ययं निपातः असंकल्पितस्तोत्राणि नैमित्तिकान्यापद्येरन् यथा सोमातिरेके तानि तत्पूर्वस्य स्तोत्रस्यानुमन्त्रणं तेनानुमन्त्रयेत किं कारणं तद्विवृद्धेः तस्माद्धि स्तोत्रात् सोमोऽतिरिक्तः ॥ ११ ॥

परेण वा तन्निकामनात्* ॥ १२ ॥

---

* द्राह्यायणेऽप्येवम् ।

परस्य वा यत् स्तोत्रस्यानुमन्त्रणं तेनानुमन्त्रयेत तस्मान्निकामयमानोऽभ्यतिरिच्यत इत्युक्तम् ॥ १२

मानसवद्वातिरिक्तसामान्यात्* ॥ १३ ॥

यथा वा मानसे तथा वानुमन्त्रणं कस्मादतिरिक्तसामान्यात् ॥ १३ ॥

सर्वानुमन्त्रणेन वानुक्तत्वात्* ॥ १४ ॥

यद्वा सर्वेषां स्तोत्राणामनुमन्त्रणं तेन वा स्यात् कस्मादनुक्तत्वात् यस्माद्यत्र नोच्यते तत्र यत् सामान्यं तद्भवति सवितृप्रसूतः स्तुते भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष इत्येतत् ॥ १४ ॥

यद्यत् स्तोत्रं लुप्येत सहैव स्तोमभागेन* ॥ १५ ॥

समुदितानामनुमन्त्रणमुक्तं साम्प्रतं यद् यत् स्तोत्रं लुप्येत तस्य यदनुमन्त्रणं तदपि लुप्येत कोऽस्य विषयः षोड़शी वीप्सा किमर्थं यद्यदिति उच्यते षोड़शिप्रकरणे पठति अथाग्निष्टोमे गृह्णीयादिति यदाग्निष्टोमे गृह्यते तदा तस्य पूर्वाणि त्रीणि स्तोत्राणि लुप्यन्ते उक्थान्येवमियं वीप्सार्थवती भवति ॥ १५ ॥

स्तुते बहिष्पवमानेन तत्रैव गत्वासीत † ॥ १६ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

५२

इदं सर्वं प्रसङ्गादुक्तं साम्प्रतमनन्तरप्राप्तिः तदुच्यते स्तुते बहिष्पवमानेन स्तोत्रेण तस्मिन्नेव देशे गत्वासीत यत आगतः ॥ १६ ॥

वपायाᳩ हुतायां मार्जयित्वा धिष्ण्यानुपस्थायोक्तᳩ सदस्युपवेशनम्* ॥ १७ ॥

सवनीयपशोर्वपायां हुतायां मार्जनं कृत्वा धिष्ण्यानुपतिष्ठेरन् ततो धिष्ण्यानुपस्थाय सदः प्रविशेत् तस्मिन्युक्तमुपवेशनं याजमानब्रह्मत्वे चेदुद्गाता कुर्य्यादित्येतस्मिन् प्रकरणे ॥ १७ ॥

इति पञ्चमस्य एकादशी कण्डिका ।

---

अथ द्वादशी कण्डिका ।

स्तुतशस्त्रयोर्वाचं यच्छेत् † ॥ १ ॥

स्तोत्रे स्तूयमाने शस्त्रे च शस्यमाने वाग्यमनं कुर्य्यात् सर्वत्र ब्रह्मा ॥ १ ॥

अनूच्यमाने च सर्वत्र † ॥ २ ॥

अनुवचने च क्रियमाणे असुष्मा अनुब्रूहीत्यत आरभ्य वाग्यमनं कुर्य्यात् सर्वत्र अथ सर्वग्रहणं किमर्थमित्युच्यते न केवलं स्तुतशस्त्रयोः अन्यस्मिन्नप्यनूच्यमाने ॥ २ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

वषट्कृते विसृजेत* ॥ ३ ॥

कियन्तं कालं वाग्यमनम् उच्यते वषट्कृते विसृजेत ॥ ३ ॥

अवभृथादुदेत्यानुष्याद्यज्ञशेषम्* ॥ ४ ॥

उक्तं ब्रह्मण उद्गात्रेण समानं कर्मेति तत्र अवभृथादूर्द्ध्वं उद्गातुः कर्म नास्ति तत्र ब्रह्मणः कर्मशेष उच्यते अवभृथादुदेत्य अनुष्यात् अनुभवेद् यज्ञशेषं यो यज्ञशेषः तत्र सर्वत्र ब्रह्मत्वं कुर्य्यात् ॥ ४ ॥

अहर्गणेष्वेनं सदातिप्रैषेण प्रशास्ता वाचं यमयति राजानं रक्षेति चाह तदुभयं कुर्यादावसतीवरीणां परिहरणात्* ॥ ५ ॥

अहर्गणेषु द्विरात्रप्रभृतिषु एनं ब्रह्माणं सदा अहन्यहनि प्रैषेण प्रशास्ता मैत्रावरुणः वाचं यमयति राजानं रक्षेत्येवञ्चाह अतिक्रम्य तार्तीयसवनिकं स्वरम् अतिप्रैषः तद्वाग्यमनञ्च राज्ञश्च रक्षणमुभयं कुर्य्यात् यावद्वसतीवरीपरिहरणं कृतमिति ॥ ५ ॥

तत्सत्रे पर्यायेण कुर्युः † ॥ ६ ॥

तद्वाग्यमनं राज्ञश्च रक्षणं सत्रे सर्वे सत्रिणः क्रमेण पर्य्यायं कुर्य्युः अवसरेण ॥ ६ ॥

अहीने तु ब्रह्मैव † ॥ ७ ॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

अहीने ब्रह्मैव कुर्य्यादेतत् कर्म कुतः संशय इति चेत् उच्यते अहीनभूते द्वादशाहे यद्यपि सत्रवत् सर्वं क्रियते तस्मात् सर्वहीने सत्रवदिति तथाप्येतत् कर्म ब्रह्मैव कुर्य्यात् ॥ ७ ॥

वाजपेये पृष्ठस्य स्तोत्रमनुमन्त्र्य सदस्यं ब्रह्मासन उपवेश्य निष्क्रामेत्* ॥ ८ ॥

वाजपेये क्रतौ पृष्ठस्तोत्रानुमन्त्रणं कृत्वा ब्रह्मासने सदस्यमुपवेश्य विसंस्थितसञ्चरेण निष्क्रामेत् ॥ ८ ॥

पूर्वेणाग्नीध्रीयꣳ स्थूणा निखाता स्यात्* ॥ ९ ॥

आग्नीध्रीयस्य पूर्वे प्रदेशे श्वभ्रे स्थूणा निखाता स्यात् ॥ ९ ॥

दक्षिणेन मार्जालीयमन्तर्वेदीति शाण्डिल्यः* ॥ १० ॥

मार्जालीयस्य दक्षिणे प्रदेशे अन्तर्वेदीति श्वभ्रे स्थूणा निखाता स्यादिति एवं शाण्डिल्य आचार्य्यो मन्यते ॥ १० ॥

तस्यामौदुम्बरꣳ सप्तदशारꣳ रथचक्रं प्रतिमुक्तꣳ स्यात्* ॥ ११ ॥

यद्याग्नीध्रीयस्य पूर्वे प्रदेशे यदि मार्जालीयस्य दक्षिणे स्थूणा निखाता स्यात् तस्याम् औदुम्बरं सप्तदशारं रथचक्रं प्रतिमुक्तं स्यात् प्रोतं स्यात् उदुम्बरस्य विकारम् औदुम्बरं सप्तदश अरा अस्मिन्निति सप्तदशारं रथस्य चक्रं रथचक्रम् ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम् ।

तदभावे यत् किञ्च रथचक्रम्* ॥ १२ ॥

एतल्लक्षणस्य चक्रस्याभावे यत् किञ्च रथचक्रं स्यात् ॥ १२ ॥

तस्मिन् बाहू आदध्याद्देवस्याहꣳ सवितुः प्रसवे सत्यसवसो बृहस्पतेर्वाजितो वाजजितो वर्षिष्ठमधिनाकꣳ रुहेयमिति* ॥ १३ ॥

तस्मिन् रथचक्रे बाहू स्थापयेत् देवस्याहं सवितुः प्रसवे इत्येतदादिना यथासूचितेन मन्त्रेण ॥ १३ ॥

रथेष्वाजिन्धावत्स्वाविर्मया इति गायेदाकारमुद्गीथादौ लुप्त्वा † ॥ १४ ॥

रथेषु आजिन्धावत्सु जयार्थं वेगेन धावत्सु आविर्मया इत्येतत् साम गायेत् उद्गीथादौ य आकारस्तस्य लोपं कृत्वा ॥ १४ ॥

तस्य स्थाने प्रत्याहृत्य द्व्यक्षरमग्मन्निति गतेषु † ॥ १५ ॥

योऽसावुद्गीथादावाकारो लुप्तस्तस्य स्थाने अग्मन्निति एतत् द्व्यक्षरमाहृत्य तस्मात् स्थानादुद्गतेषु रथेषु गायेत् ॥ १५ ॥

यथाधीतमाधावत्स्वाहृतेषु वा ‡ ॥ १६ ॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

‡ द्राह्यायणीये एतदारभ्य कण्डिकाशेषपर्यन्तानि सूत्राणि न सन्ति।

पुनरागच्छत्सु आगतेषु वा यथाधीतं गायेत् अविकृतमित्यर्थः ॥ १६ ॥

सर्वत्र वा यथाधीतम् ॥ १७ ॥

सर्वेषु वा गानकालेषु धावितेषु गतेषु आगच्छत्सु आगतेषु वा यथाधीतमेव गायेत् ॥ १७ ॥

परिवर्त्तयन् गायेत् परिवर्त्त्य गायेद्गीत्वा वा परिवर्त्तये-द्गायतोवान्यः परिवर्त्तयेत् ॥ १८ ॥

परिवर्त्तयेत् परिवर्त्तयन् गायेदित्येतदादयो विकल्पा भवन्ति ॥ १८ ॥

उदङ् ङवरोहं मन्येत विष्णोः क्रमोऽसि विष्णोः क्रान्त-मसि विष्णोर्विक्रान्तमसीति ॥ १९ ॥

उदङ् उत्तरतो अवरोहामीत्येवं मन्येत विष्णोः क्रमोऽसीत्येतदा-दिना मन्त्रेण ॥ १९ ॥

अभि दक्षिणमावृत्य सदः प्रविशेत् ॥ २० ॥

दक्षिणं बाहुमन्वावृत्य सदसि प्रविशेत् ॥ २० ॥

तत्रासीनो हिरण्यं मधु च नाना प्रतिगृह्णीयात् ॥ २१ ॥

तत्रासीनस्तस्मिन् सदस्यासीनः हिरण्यं मधु च नाना प्रतिगृह्णी-यात् नाना पृथगित्यर्थः वक्ष्यति हिरण्यस्थालं मधुनः पूर्णं ब्रह्मणे दद्यादिति तत् नाना प्रतिगृह्णीयात् ॥ २१ ॥

ऋतपेये च दक्षिणाञ्चमसम्॥ २२॥

ऋतपेये च एतस्मिन्नेव काले एतस्मिन्नेव स्थाने सोमचमसो दक्षिणा तं प्रतिगृह्णीयात् उक्तं सोमचमसो दक्षिणा सगोत्राय ब्रह्मणे देया इति ॥ २२ ॥

ब्राह्मणाय मधु दद्यान्निदधीत हिरण्यम्॥ २३ ॥

अन्यस्मै ब्राह्मणाय मधु दद्यात् निदधीत हिरण्यं स्वयं प्रतिगृह्णी-यात् ॥ २३ ॥

त्रिष्टुप्छन्दसा सर्वभक्षश्चमसं भक्षयेत्॥ २४ ॥

योऽसौ सोमचमसो दक्षिणा ऋतपेये तं त्रिष्टुप्छन्दसा सर्वभक्षं भक्षयेन्निःशेषम् ॥ २४ ॥

तं प्रतिगृह्णीयादिति स्थविरो गौतमः कस्त्वा ददाति सत्वा ददाति कस्मै त्वा ददाति तस्मै त्वा ददाति कस्त्वाकं भक्षयामीति भक्षयेद्वाग्देवो सोमस्य तृप्यत्विति वा तृप्य-त्विति वा ॥ २५ ॥

तं सोमचमसं कस्त्वा ददाति इत्येवमादिना मन्त्रेण प्रतिगृह्णी-यादित्येवं स्थविरो गौतम आचार्यो मन्यते कस्त्वाकं भक्षयामीति च भक्षयेत् वाग्देवी सोमस्य तृप्यत्विति वा न त्रिष्टुप्छन्दसेति ॥२५॥

इति पञ्चमस्य द्वादशी कण्डिका।

इति पञ्चमः प्रपाठकः समाप्तः।

---

# षष्ठः प्रपाठकः ।

## अथ प्रथमा कण्डिका ।

सन्तनि चोद्यमानमेकैकस्याꣳ सर्वं स्तोमसम्भवात् * ॥१॥

उक्तं ब्रह्मत्वं साम्प्रतं सन्तनिनो विधानमुच्यते कः पुनर्ब्रह्मत्वानन्तरं सन्तनिनोऽवसर इति उच्यते उद्गात्रं प्रकृतं तत्र ब्रह्मत्वं प्रासङ्गिकमुक्तं साम्प्रतमयमाचार्य्यः सामविधानं वक्ष्यति तृचैकर्चक्रियास्विष्ठ तत्र तस्मिन् सन्तनिनि तृचैकर्चक्रियां प्रति संशयः तत्परीक्षार्थं सन्तनिन एव तावद्विधानमारभते एतत् सन्तन्याम्नाये तृचे गीतं तत्प्रयोगकाले तृचएव मन्यते तदेतच्चिन्त्यते किमेतदाम्नायगानं प्रत्यृचं सर्वं क्रियतां अथ यथाम्नायमेवेति कुतः संशयः उच्यते प्रगीतेषु दर्शितं सन्तनिनस्त्रयः प्रस्तावाः प्रदर्श्यन्ते यद्येकस्यामृचि सर्वं गीयते ततस्तत्प्रस्तावना सम्भवति अथ पुनर्यथाम्नायं ततोऽस्य वाक्यस्यानर्थक्यं भवति त्रयः प्रस्तावसदृशा इति अत आरभ्यते सन्तनि चोद्यमानमेकैकस्यां सर्वं स्तोमसम्भवादिति सन्तनीति साम्नः संज्ञा चोद्यमानं आदिश्यमानम् एकैकस्यामृचि सर्वं कर्त्तव्यं यदेतत् द्विपदोत्तरे तयोरेव एतद्गानमेकैकस्यामृचि सर्वं कर्त्तव्यं किं कारणं स्तोमसम्भवादेव एवं हि कृते स्तोमः सम्भवति पञ्चभक्तियुक्तेन साम्ना स्तोमः संख्यायते उक्तञ्च

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि इति तदेता भक्तयः क्रियन्ते ततः स्तोमः सम्भवति अथ पुनर्न क्रियन्ते तत उत्सृष्टैकदेशं साम कृतं भवति नचायं न्यायः सामैकदेशैः स्तोमसंख्यानमिति तस्मादेकैकस्यामृचि सर्वं कर्त्तव्यं भवति ॥ १

तथा चान्यानि स्वविच्छन्दःसु* ॥ २ ॥

तथा चान्यानि सामानि स्वच्छन्दःसु विच्छन्दःसु च भवन्ति तथा तेन प्रकारेणेत्यर्थः वारवन्तीययज्ञायज्ञीयवामदेव्यपञ्चनिधनवामदेव्यवत् यथा वारवन्तीयमेकस्मिन् पादे कृत्स्नं पठितं तथा यज्ञायज्ञीयं जगतीषु गायत्रीषु च तथा वामदेव्यं गायत्रीषु त्रिष्टुप्सु च गीतं तथा पञ्चनिधनं वामदेव्यम् अतिच्छन्दःसु च गीतं तथा ककुतीषु गीतं रथन्तरम् एवमेतद्गानमुत्तराभ्यां लुप्तभक्तिकं दृष्टम् ॥ २ ॥

सन्तनीति यद्वाहिष्ठीयवत्* ॥ ३ ॥

ननु यद्येतत्प्रत्यृचं सर्वं गीयते ततः सन्तनित्वन्नोपपद्यते यदि भक्त्यपायः क्रियते ततः सन्तनित्वं भवति अन्यथा सन्तनित्वं न भवति अत्रोच्यते सन्तनीति यद्वाहिष्ठीयवत् यथा यद्वाहिष्ठीयं कृतेऽपि यद्वाहिष्ठशब्दात् यद्वाहिष्ठीयत्वं नैव जहाति एवमेतत्सन्तनि कृतेऽपि भक्तिलोपात् सन्तनित्वं न जहाति ॥ ३ ॥

त्रिषु वा तृचेष्वेकर्चवत्तृचे दर्शनात्* ॥ ४ ॥

---

* द्राह्मायणेऽप्येवम् ।

त्रिषु वा तृचेष्वेतत्सन्तनि क्रियताम् एकर्चवत्तृचे दर्शनात् यथा-म्नाय एकर्चे दृष्टानि प्रयोगे तृचे क्रियन्ते एवमिदमपि सन्तनितृचे दृष्टं प्रयोगे त्रिषु तृचेषु क्रियते एवं पर्वणां नायं कार्त्स्न्यं कृतमिति ॥ ४ ॥

साम्ना च स्तोमसंख्यानात् * ॥ ५ ॥

कृत्स्नेन च साम्ना स्तोमः संख्यायते नाकृत्स्नेन ॥ ५ ॥

तिसृष्वाचार्याः स्मृतेः † ॥ ६ ॥

तिसृषु खल्ु आचार्य्या गानं मन्यन्ते प्रयोगे कस्मात् स्मृतेः एवं हि आचार्य्यैः गीतं स्मृतिः ऊहगीतिः स्मृतितस्तुः परं प्रमाणं यद्येवमाचार्य्या मन्यन्ते अथ पूर्वविधानं कस्य उच्यते स्थविरस्य गौत-मस्येदं मतं सन्तनिचोद्यमानमेकैकस्यां सर्वमित्येवं स्थविरो गौतमो मन्यत इति एवमेव यज्ञादीनाञ्चोद्यमानग्रहणात् ॥ ६ ॥

यथान्यानि सामानि † ॥ ७ ॥

त्रिषु भवन्ति स्मृतेरेव यथान्यानि सामानीति भूयस्त्वं गृहीत्वा ब्रवीति भूयस्त्वमिति नियामकं विधिर्भवति उभयोरपि लोक-वेदयोः भूयस्त्वं प्रमाणीभवति यथा लोके मतद्वैधे तयोर्बहुत्वं ततो गृह्यते तथामशकः भूमास्य बृहद्रथन्तरपृष्ठान्यहानि भवन्ति प्रथ-मस्य त्र्यह उत्तरश्चतुरहोभूम्नोवशन्नेष्यामइत्येतस्माद्धेतोरिति ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

**सन्तानाच्च सन्तनि* ॥ ८ ॥**

यदुक्तं सन्तनीति यद्वाहिष्ठीयवदिति तन्न सन्तानादेव सन्तनि यद्युत्तरे स्तोत्रीये लुप्तविभक्तिके क्रियते ततः सन्तनित्वमुपपद्यते ॥८॥

**सन्ततं गायतीति चाह* ॥ ९ ॥**

एवञ्च ब्राह्मणमाह सन्ततं गायतीति यज्ञस्य सन्तत्या इति ॥९॥

**एकर्च्चेषु चोद्धृतं कल्पे* ॥ १० ॥**

एकर्च्चेषु क्रियमाणेषु पवमाने मध्यकेनोद्धृतं यत एकस्यामृचि न सम्भवति यदि ह्यभविष्यत् मध्यकोऽपि नोद्धरिष्यत् पवमानात् व्यूढेष्वग्निष्टोमेषु पवमानादुद्धृत्य सामकृतम् ॥ १० ॥

**प्रमाणार्थन्तृचे दर्शनꣳ स्तोत्रीयायाꣳ साससमाप्तिः † ॥११॥**

अथ यदुक्तं त्रिषु वा तृचेष्वेकर्च्चवत्तृचे दर्शनादिति तदत्र ब्रूमः प्रमाणार्थन्तृचे दर्शनम् एवं कुर्य्यात् तृचेषु गानं स्यादिति स्तोत्रीयायामेव सन्तनि समाप्तम् ॥ ११ ॥

**तासु सर्वासु प्रस्तावाः स्युर्न्यायप्रगाथधर्माभ्याम्* ॥ १२ ॥**

यदेतदुक्तं तिसृष्वाचार्य्याः स्तुतेरिति एतस्मिन् कल्पे तासु सर्वासु स्तोत्रीयासु प्रस्तावाः स्युः ये उत्तरे स्तोत्रीये लुप्तप्रस्तावे आम्नायेते तयोरपि प्रस्तावः कर्त्तव्यः कस्मात् न्यायात् एष स्तोत्रीयाणां

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

धर्मः पञ्चभक्तित्वं यानि च प्रगाथेषु गीतानि तेषामेषधर्म उत्तमपादाभ्यासेन क्रिया ॥ १२ ॥

नोत्तरयोराचार्य्याः स्मृतेः* ॥ १३ ॥

उत्तरयोः स्तोत्रीययोराचार्य्याः प्रस्तावं नेच्छन्ति कस्मात् स्मृतेः एवं हि स्मर्य्यते सन्तन्यूह्गीतौ ॥ १३ ॥

सन्ततं गायतीति च भक्तिलोपदर्शनात्* ॥ १४ ॥

किञ्च सन्ततं गायतीति च यदेतद्ब्राह्मणं एतद्भक्तिलोपमेवं दृष्टवत् ॥ १४ ॥

तस्य स्तोत्रादावावर्त्तिषु प्रस्तावः पर्य्यायादिषु वा* ॥ १५ ॥

तस्य सन्तनिनः आवर्त्तिगतस्य विधानमुच्यते स्तोत्रस्यादौ प्रस्तावः स्यात् इतराः सर्वा लुप्तप्रस्तावाः एवं सन्तनित्वं सुतरामुपपद्यते अथवा पर्य्यायस्य पर्य्यायस्यादौ प्रस्तावः स्यात् ॥ १५ ॥

सर्वत्र प्रथमायामिति धानञ्जप्यः* ॥ १६ ॥

यावत्कालः प्रथमा प्रयुज्यते तावत्कालः प्रस्तावः स्यादिति एवं धानञ्जप्य आचार्य्यो मन्यते ॥ १६ ॥

निधनभूताः प्रतिहारवत्योऽप्रस्ताव्याः* ॥ १७ ॥

उक्तं स्तोत्रादावावर्त्तिषु प्रस्ताव्याः प्रस्तावः पर्य्यायादिषु चेति

---

* द्राह्यायणोऽप्येवम् ।

तद्यासां प्रस्तावो नास्ति तासां कः प्रयोगधर्म इति उच्यते निधन-भूताः स्युः उत्तरा निधनतुल्या इत्यर्थः यथा पितृभूतो मातृभूत इति अथ किं निधनमिव सहवचनं सर्वासामेव निधनभूता इत्युक्ते प्रतिहारस्याप्राप्तिः अत आह प्रतिहारवत्य इति प्रतिहारं प्रतिहर्त्ता ब्रूयात् अप्रस्ताव्यानामेष धर्मः ॥ १७ ॥

धानञ्जप्येन प्रथमायाꣳ शाण्डिल्य उत्तरे तु स्तोत्रीये विष्टावमुखेष्वेवाप्रस्ताव्ये विष्टावेषु चैकिषु त्रिवृत्स्तोमे च परि-वर्त्तिनो विधानम्* ॥ १८ ॥

धानञ्जप्येन मतेन प्रथमायां सर्वत्र प्रस्तावो भवति इत्येतस्मि-न्नेवं शाण्डिल्य आह एवमस्तु सर्वत्र प्रथमायां प्रस्तावोऽस्तु उत्तरयोः स्तोत्रीययोर्विष्टावमुखेष्वेव प्रस्तावो माभूत् अन्यत्र भवत्विति विष्टा-वेषु च एकिषु अप्रस्ताव्ये स्यातां त्रिवृत्स्तोमे तु यत् परिवर्त्तिन्यावि-धानं तत् स्यात् ॥ १८ ॥

उत्तरयोः स्तोत्रीययोश्छन्दस्तो विप्रतिपत्तिः † ॥ १९ ॥

उत्तरयोः स्तोत्रीययोः सन्तनिनः छन्दसि विप्रतिपत्तिः ऊह-गीतौ अनेकधा प्रतिपत्तिः विप्रतिपत्तिः बृहत्याकारेणापि गीतं ककुबुत्तराकारेणापि गीतम् द्विपदोत्तराकारेणापि गीतम् अत्रायं संशयः किं विकल्पेन क्रियताम् अथ विनिवेशेनेति उच्यते ॥ १९ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

द्विपदे स्यातामप्रस्ताव्ये ककुभौ प्रस्ताव्ये* ॥ २० ॥

यत्रोत्तरयोः प्रस्तावो लुप्यते तस्मिन् द्विपदे स्यातामुत्तरे स्तोत्रीये नोत्तरयोराचार्य्याः स्मृतेरित्येतस्मिन् प्रस्ताव्ये कल्पे ककुभावुत्तरे स्तोत्रीये स्यातां तासु सर्वासु प्रस्तावाः स्युरित्येतस्मिन् कल्पे ॥ २० ॥

बृहत्यौ शाण्डिल्यः ककुभावप्रस्ताव्ये † ॥ २१ ॥

बृहत्यौ शाण्डिल्य उत्तरे स्तोत्रीये मन्यतेऽप्रस्ताव्ये कल्पे ककुभावुत्तरे स्तोत्रीये मन्यते ॥ २१ ॥

तथा सत्युभे ककुभौ स्थविरो गौतमः † ॥ २२ ॥

तथा सति शाण्डिल्यकल्पे क्रियमाणे बृहत्यौ शाण्डिल्यः ककुभावप्रस्ताव्ये इत्येतस्मिन् ये च प्रस्तावयितव्ये स्तोत्रीये ये च न प्रस्तावयितव्ये उभौ ककुभौ स्यातामित्येवं स्थविरो गौतम आचार्य्यो मन्यते ॥ २२ ॥

बृहत्यौ धानञ्जय्यः* ॥ २३ ॥

उत्तरे स्तोत्रीये बृहत्यौ धानञ्जय्य आचार्य्यो मन्यते शाण्डिल्य कल्पे ॥ २३ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीयेऽप्येवं किन्तु छेदविषये विशेषोऽस्ति ।

इति षष्ठस्य प्रथमा कण्डिका ।

अथ द्वितीया कण्डिका।

प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेशे* ॥ १ ॥

इह त्रिवृदादिषु स्तोमेषु एकैकस्मिन् बह्वो विष्टुतयः पठिताः तत्प्रयोगे तासां विष्टुतीनां विकल्पो भवतु अथ नियम इति एतस्मिन् संशये आचार्य्यः सूत्रमारभते प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेश इति प्रथमाभिः आद्याभिर्विष्टुतिभिः विष्टुतय उक्ता ब्राह्मणेन उद्यतीस्त्रिवृतोर्विष्टुतिः इत्यत आरभ्य स्तोमविधानं स्तोमानां क्लृप्तिः प्रयोग इत्यर्थः अनादेशे आदेशादन्यत्र आदेशः यथा उद्यत्यो विष्टुतयः अभिचरणीया विष्टुतयः निर्मथ्या सप्तदशस्य विष्टुतिरूर्द्धं होतुः पृष्ठात् ॥ १ ॥

ताः पथ्याः सर्वाभिप्रायाश्च† ॥ २ ॥

यास्ताः प्रथमा विष्टुतयः ताः पथ्या इति संज्ञा वक्ष्यति पथ्याभिर्होत्रषामाणि विदध्यादपथ्याभिरितराणीति सर्वाभिप्रायाश्च ताः सर्वाभिप्रायसम्पादिका इत्येतदुक्तं भवति ॥ २ ॥

यथाशिषं वा विदध्यात्* ॥ ३ ॥

अथवा यथाशिषं यत्कामः क्रतुः स्यात् तज्जातीयां विष्टुतिं प्रयुञ्जीत ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

द्वितीयां त्रिवृतः पर्य्यामेकेऽविष्टावा ह्याद्याः* ॥ ४ ॥

एके आचार्य्याः त्रिवृत्स्तोमस्य द्वितीयां विष्टुतिं पर्य्यां मन्यन्ते हिशब्दः कारणोपदेशार्थः यस्मादविष्टावा आद्या तृचभागावापस्थानं परिचरा तृचभागावापस्थानं आवापस्थानं परिचरातृचभागेत्येते विष्टावा अस्यां न विद्यन्ते ॥ ४ ॥

सᳫंहारशिरःसन्धिसन्तनिषु चानुपपन्ना † ॥ ५ ॥

किञ्चान्यत् संहारादिषु अनुपपन्ना सा यदा स्तोमकृतौ पर्य्यायाः संह्रियन्ते तदासौ नोपपद्यतेऽविष्टावत्वात् तथा शिरसि नोपपद्यते सकृद्धिंकृतेन शिरसा पराचा स्तुवत इति नहि तस्याः पराक्त्वमस्ति तथा सन्धौ नोपपद्यते पराचा हि सन्धौ स्तोमः क्रियते एतस्यान्तु क्रियमाणायां अयथास्थानं स्तोमानां प्रयोगः स्यात् तथा सन्तनिन्येवमेवानुपपन्ना उक्तञ्च त्रिवृत्स्तोमेच परिवर्त्तिनी विधानमिति ॥ ५ ॥

अवर्षुकस्त्विति चास्याम् † ॥ ६ ॥

तथा अपवादोऽपि श्रूयते अवर्षुकस्तु पर्ज्जन्यो भवतीति ॥ ६ ॥

इषोर्व्यत्यासमिषुभ्याम् † ॥ ७ ॥

इषुसंज्ञे द्वे विष्टुत्यौ पठिते ताभ्यां व्यत्यासेन इषौ यज्ञे प्रयोगः कर्त्तव्यः ॥ ७ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

तयोः पूर्वा श्येनस्याग्निष्टोमसाम्नि* ॥ ८ ॥

तयोर्विष्टुत्योर्या पूर्वा विष्टुतिः सा श्येनस्याग्निष्टोमसाम्नि कर्त्तव्यः ॥ ८ ॥

सत्रेषु दशरात्रे सर्वाः प्रयुञ्जीत † ॥ ९ ॥

इह दशरात्रे त्रिवृदादयः स्तोमाश्चतुर्विंशान्ताः सर्वे पठिताः अनेनोक्तं प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेश इति सोऽयमाचार्य्यो दशरात्रे सर्वासां प्रयोगमादिशति सत्रेषु दशरात्रे सर्वाः प्रयुञ्जीतेति तत्रायं संशयः किं सत्रे दशरात्रे सर्वाः प्रयुञ्जीत अथ सत्रेषु दशरात्रेषु सर्वेषु सर्वाः प्रयुञ्जीतेति यदि तावत्सत्रे दशरात्रे सर्वाः प्रयुञ्जीत इतरेष्वहःसु न प्रयुञ्जीतेत्ययमभिप्रायः तेन दशरात्रप्रयोजकसर्वप्रयोगस्य न सत्रत्वम् अथ पुनः सत्रेषु यो दशरात्रस्तस्मिन् सर्वाः प्रयुञ्जीतेत्ययमभिप्रायः तत आहीनिके दशरात्रे प्राप्नोति सर्वप्रयोगः अत्रोच्यते उभयत्र सर्वप्रयोगः सत्रे चाहीनिके च इह हि सर्वाप्तिः प्रयोजिका सर्वप्रयोगस्य सा च सर्वाप्तिरुभयत्र दृश्यते सत्रे चाहीनिके च उभयत्र सर्वे स्तोमाः सर्वाणि पृष्ठानि सर्वाणि छन्दांसि प्रयुञ्जीतेति तस्माद्विष्टुतीनामपि प्रयोग उभयोरिष्यते ननु तत्रोच्यते यद्येवं सत्रग्रहणं न कर्त्तव्यं सत्रेषु दशरात्र इति उच्यते, यद्ययं सत्रग्रहणं न कुर्य्यात् त्रिककुब्दशरात्रादिष्वहीनिकेषु दशरात्रेषु सर्वः

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

प्रयोगः स्यात् सोऽयमाचार्य्यः सत्रग्रहणं करोति यत्रैव हेतुसमत्वं तत्रैव सर्वत्रप्रयोगः इतरेषु नेति किं तद्धेतुसमत्वं सर्वाप्तिः सा च सर्वाप्तिस्तुल्या सत्रे चाहीने च तस्माद्द्वादशाहादिके दशरात्रे सर्वे चाहीनिके च विष्टुतीनां सर्वप्रयोगः स्यात् ॥ ८ ॥

अभिचरणीया उद्धृत्येति शाण्डिल्यः* ॥ १० ॥

शाण्डिल्य आह अस्तु सर्वत्रप्रयोगः किन्तु आभिचरणीया उद्धृत्य प्रयुञ्जीतेति ॥ १० ॥

शाण्डिल्यायनः कुलायिनीम् † ॥ ११ ॥

शाण्डिल्यायन एतस्मिन्नेव प्रयोगे कुलायिन्या अप्युद्धारं मन्यते ॥ ११ ॥

भस्त्रां चोभौ † ॥ १२ ॥

भस्त्राञ्च विष्टुतीम् उद्धरेदित्येवमुभावाचार्य्यौ मन्येते शाण्डिल्यः शाण्डिल्यायनश्च ॥ १२ ॥

धानञ्जप्यस्तामेव † ॥ ३१ ॥

धानञ्जप्य आचार्य्यस्तामेव उद्धरेदिति स्पष्टार्थः ‡ ॥ १३ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

‡ धानञ्जप्यस्तु पुनर्भस्त्राया एव केवलाया उद्धारं मन्यते। इति पाठान्तरं पुस्तकान्तरे।

पथ्याभिर्होत्रषामाणि विदध्यादपथ्याभिरितराणि* ॥१४॥

एवं सति सर्वप्रयोगे विष्टुतीनां स्तोत्रविन्यासः क्रियते सर्वस्मिन् दशरात्रे सर्वेषां स्तोमानां याः पथ्या विष्टुतयस्ताभिर्होत्रषामाणि विदध्यात् अपथ्याभिरितराणि सर्वाणि स्तोत्राणि कुर्य्यात् होत्रषामभ्यो यान्यन्यानि ॥ १४ ॥

समाप्तास्तु ता एवादितः पुनः प्रयुञ्जीत* ॥ १५ ॥

समाप्तासु सर्वासु विष्टुतिषु प्रत्यहन्ता एवादित आरभ्य पुनः प्रयुञ्जीत । १५ ॥

तथा कुर्वन् प्रागाथिकानि परिवर्त्तिन्या प्रथमस्येति शाण्डिल्यः* ॥ १६ ॥

तथा तेन प्रकारेण कुर्वन् यानि प्रागाथिकानि सामानि प्रथमेऽहनि भवन्ति रथन्तरनौधसकालेययज्ञायज्ञीयानि तानि परिवर्त्तिन्या विष्टुत्या कुर्य्यात् इतराण्यन्याभिः ॥ १६ ॥

सकृत् सर्वाः समाप्य पथ्ययैव तत ऊर्द्धमिति धानञ्जप्यः* ॥ १७ ॥

सकृत्सर्वाः कृत्वा यान्यन्यानि स्तोत्राणि शिष्टानि तानि पथ्ययैव विष्टुत्या कुर्य्यात् इत्येवं धानञ्जप्य आचार्य्यो मन्यते किन्तु ॥ १७ ॥

---

* द्राह्यायणेऽप्येवम् ।

**असमाप्तास्वपि होतृषाम पर्य्ययैव तथा कुर्य्यात्* ॥१८॥**

यद्येतेन प्रकारेण कुर्य्यात् ततो यद्यसमाप्तासु सर्वासु होतृषामागच्छेत् पर्य्ययैव कुर्य्यात् ततः शेषाः समापयेत् ॥ १८ ॥

**कुलायिनीं चेत् प्रयुञ्जीत प्रथमस्याह्नो द्वितीयं पृष्ठन्तया विदध्यात्* ॥ १९ ॥**

यदि कुलायिनीं प्रयुञ्जीत ततस्तया द्वितीयं पृष्ठं विदध्यात् प्रथमग्रहणं नियमार्थं द्वितीयमेव पृष्ठं विदध्यात् क्रमागतां न कुर्य्यात् ॥ १९ ॥

**षष्ठस्याह्न उत्तममुक्थमुत्तमया त्रयस्त्रिंशस्य विष्टुत्या विदध्यात् † ॥ २० ॥**

षष्ठस्याह्न उत्तममेवोक्थम् उत्तमया त्रयस्त्रिंशस्य विष्टुत्या विदध्यात् अत्रापि षष्ठग्रहणं नियमार्थम् ॥ २० ॥

**उक्तः प्रयोगो ब्राह्मणेन चतुश्चत्वारिंशे † ॥ २१ ॥**

चतुश्चत्वारिंशे स्तोमे ब्राह्मणेन प्रयोग उक्तः द्विप्रकारः आज्यानां प्रथमा पृष्ठानां द्वितीयोक्थानां तृतीयेति पूर्वः आज्यानां सा होतुरित्यत आरभ्योत्तरः ॥ २१ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् तथा छेदविषये विशेषश्च कृत

† द्राह्यायणोऽप्येवम् ।

सवनसमीषन्तो पूर्वः प्रयोगः स्तोत्रसमीषन्त्युत्तरः* ॥२२॥

यः पूर्वः प्रयोगः स सवनसमीषन्तो प्रयोग उच्यते एकैकः सन् सवनमुपगच्छति दूषतिर्गत्यर्थः उत्तरः प्रयोगः स्तोत्रसमीषन्तो प्रयोगः ॥ २२ ॥

तथा कुर्य्यादहर्भाजि* ॥ २३ ॥

अन्यत्रापि यद्यहर्भजेत चतुश्चत्वारिंशः अनेन प्रकारेणास्य विधानं कुर्य्यात् सवनसमीषन्तो प्रयोगं पथ्यया कुर्य्यात् स्तोत्रसमीषन्तो प्रयोगं वा ॥ २३ ॥

पथ्यामन्यत्र* ॥ २४ ॥

अन्यत्र अनहर्भाजि पथ्यामेव कुर्य्यात् ॥ २४ ॥

अष्टाचत्वारिंशस्योत्तरया मैत्रावरुणस्यैवाज्यं विदध्यात्* ॥ २५ ॥

अष्टाचत्वारिंशस्योत्तरया विष्टुत्या मैत्रावरुणस्यैवाज्यं कुर्य्यात् एवशब्दोऽवधारणार्थः अन्यानि सर्वाणि स्तोत्राणि पूर्वयैव ॥ २५ ॥

सर्वत्र वा होतृकसामानि* ॥ २६ ॥

सर्वस्मिन्वाहनि होतृकसामानि अष्टाचत्वारिंशस्योत्तरया विष्टुत्या विदध्यात् ॥ २६ ॥

---

* द्राह्यायणेऽप्येवम्।

मध्यमे मध्यमे वा सवनेषु* ॥ २७ ॥

मध्यमे मध्यमे स्तोत्रे उत्तरया विष्टुत्या कुर्य्यात् अथ सवनग्रहणं किमर्थमिति चेत् उच्यते वक्ष्यति द्वितीयचतुर्थे वोत्तरे वेति सवनेष्विति वर्त्तते ॥ २७ ॥

द्वितीयचतुर्थे वा* ॥ २८ ॥

द्वितीयचतुर्थे वा स्तोत्रे उत्तरया विष्टुत्या कर्त्तव्ये ॥ २८ ॥

उत्तरे वा* ॥ २९ ॥

उत्तरे वा स्तोत्रे उत्तरया विष्टुत्या कर्त्तव्ये सवनेष्विति वर्त्तते एव ॥ २९ ॥

अदशरात्रेषु सत्रेषु पथ्या एवेति गौतमः* ॥ ३० ॥

अदशरात्राणि यानि सत्राणि तेषु पथ्या एव विष्टुतयः स्युः इत्येवं गौतम आचार्य्यो मन्यते ॥ ३० ॥

सर्वा इति धानञ्जप्यः* ॥ ३१ ॥

अदशरात्रेष्वपि सत्रेषु ये स्तोमाः तेषु सर्वा विष्टुतयः स्युरित्येवं धानञ्जप्य आचार्य्यो मन्यते ॥ ३१ ॥

---

* द्राह्यायणोऽप्येवम् ।

इति षष्ठस्य द्वितीया कण्डिका ।

अथ तृतीया कण्डिका।

**तृचसूक्तानामादिग्रहणेन विधिरनादेशे* ॥ १ ॥**

इह मशकसूत्रे तृचसूक्तानां ग्रहणं करिष्यति स्तोत्रविधौ तेषां प्रयोगं प्रति संशयः कथं प्रयोक्तव्यानीति सोऽयमाचार्य्यस्तेषां प्रयोगविधिं विवक्षुः शास्त्रमारभते तृचसूक्तानामादिग्रहणेन विधिरनादेशे इति तृचाश्च सूक्तानि च तिस्र ऋचः तृच इत्युपचर्य्यते सूक्तानि चतुर्ऋचप्रभृतीनि तेषामादिग्रहणे क्रियमाणे समस्तस्य तृचस्य सूक्तस्य वा प्रयोगः स्यात् अनादेशे यत्र त्वादेशः तत्र यथादेशं यथा बभ्रवेनुस्तव इति षड्चस्य तृचं पवस्व देववीरतीति दशर्चस्य तृचमुद्धरन्नुत्तमम् उपास्मै गायतानर इत्येकया बहिष्पवमानमिति ॥१॥

**तृचोत्तमायां प्रतिलोमः* ॥ २ ॥**

तृचोत्तमायामादिश्यमानायां प्रतिलोमस्तृचः प्रत्येतव्यः यथा प्रदैवोदासो अग्निरिति यज्ञायज्ञीयमग्निष्टोमसामेति ॥ २ ॥

**मध्यमायाꣳ सैव* ॥ ३ ॥**

तृचस्य मध्यमायामादिश्यमानायां सैव केवला प्रत्येतव्या यथासन इन्द्राय यज्यव इति गायत्रञ्च क्षुल्लकवैष्टम्भकञ्च द्रप्सा इन्द्राय वायव इति गायत्रञ्च मार्गीयवञ्चेति ॥ ३ ॥

**रेतस्यैकत्रिकस्य बहिष्पवमानम्* ॥ ४ ॥**

---

* द्राह्यायणेऽप्येवम्।

एकत्रिके पठति उपास्मै गायतानर इत्येकया बहिष्पवमान-मिति तत्रायं संशयः किं रेतस्या धर्मेण क्रियताम् अथ रथन्तर-वर्णा धर्मेण उत आविकृतामेव क्रियतामिति एतस्मिन् संशय आह रेतस्यैकत्रिकस्य बहिष्पवमानमिति ॥ ४ ॥

**उद्भिद्यनुरूपमेकर्चᳲ शाण्डिल्यः* ॥ ५ ॥**

उद्भिदि सप्तिनि स्तोमे बहिष्पवमाने एवं पठति उपांशु जातमप्तुर-मित्यनुरूप इति परिभाषा भवति तृचसूक्तानामादिग्रहणेन विधि-रनादेश इति सोऽयं आचार्य आरभते उद्भिद्यनुरूपमेकर्चं शाण्डिल्य इति ॥ ५ ॥

**स्तोत्रीयं गौतमधानञ्जप्यौ* ॥ ६ ॥**

गौतमधानञ्जप्यावाचार्यौ स्तोत्रीयमेकर्चमिच्छतः ॥ ६ ॥

**उत्तमौ तृचौ बहिष्पवमाने चातुर्मास्येषु † ॥ ७ ॥**

चातुर्मास्येषु सर्वेष्वहःसु त्रिवृद्बहिष्पवमानानि भवन्ति तेषु च पञ्च प्रतीकान्यादिश्यन्ते प्रत्यहं तत्र कथं प्रयोग इति उच्यते, उत्त-मावुत्तमौ तृचौ बहिष्पवमाने चातुर्मास्येषु अन्य एकर्चाः ॥ ७ ॥

**तथा साहस्तोत्तमे † ॥ ८ ॥**

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

यथा चातुर्मास्येषु तथा साहस्रोत्तमे उत्तमे उत्तमौ तृचौ अन्य एकर्चाः सर्व्वे॥ ८ ॥

सर्वस्वारे च तृचाः* ॥ ९ ॥

सर्वस्वारे बहिष्पवमाने एकः सप्तर्चौ द्वौ न वर्चः पठति मशकः तेषामाद्यास्तृचाः स्युः स्तोमवशेन ॥ ९ ॥

वामदेव्ययज्ञायज्ञीयारण्येगेयपृष्ठपूर्वाणां तृचकरणमुत्तरयोः पवमानयोः † ॥ १० ॥

वामदेव्यादीनामुत्तरयोः पवमानयोर्विधीयमानानां माध्यन्दिनार्भवयोः तृचेषु क्रिया स्यात् ॥ १० ॥

अन्येषाञ्चाविप्रतिषेधः † ॥ ११ ॥

अन्येषाञ्च साम्नां माध्यन्दिनार्भवयोरादिश्यमानानां तृचे क्रिया स्यात् विप्रतिषेधोनास्ति अविप्रतिषेधोऽविरोधः ॥ ११ ॥

एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्य्यात् ‡ ॥ १२ ॥

यद्येक एकर्चः कर्त्तव्यो भवति तं प्रथमायामादितः कुर्य्यात् यदि गायत्रं यदि बार्हतं यथा छन्दोमदशाहे द्वितीयेऽहन्यष्टाविंशे ॥ १२ ॥

द्वौ तस्यामेव ‡ ॥ १३ ॥

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

‡ द्राह्यायणेऽप्येवम् ।

यदि द्वावेकर्चौ कर्त्तव्यौ स्यातां तस्यामेव प्रथमायां कुर्य्यात् यथा छन्दोमदशाहे एवं द्वितीयेऽहनि चतुश्चत्वारिंशे ॥ १३ ॥

त्रीनेकतृचे नाना स्तोत्रीयासु* ॥ १४ ॥

त्रीनेकर्चान् कुर्वन्नेकस्मिन् तृचे कुर्य्यात् नाना स्तोत्रीयासु नाना पृथगित्यर्थः यथा व्यूढ़ेष्वग्निष्टोमेषु ॥ १४ ॥

चतुर्णां प्रथमायां द्वावितरौ नानोत्तरयोः* ॥ १५ ॥

यदि चतुर्णामेकर्चानां क्रिया स्यात् तदा प्रथमायां स्तोत्रीयायां द्वावेकर्चौ कुर्य्यात् इतरौ द्वावेकर्चौ पृथगुत्तरयोः स्तोत्रीययोः कुर्य्यात् ॥ १५ ॥

माध्यन्दिने चेदेको द्वौ वा बृहत्यामेव* ॥ १६ ॥

यदि माध्यन्दिने एक एकर्चः कर्त्तव्यो भवति द्वौ वा बृहत्यामेव कुर्य्यात् उदाहरणमत्रोक्तम् ॥ १६ ॥

त्रीन्यतरस्याᳪ सम्भवेयुः* ॥ १७ ॥

त्रीनेकर्चान् कुर्वन् यतरस्यां सम्भवः स्यात् गायत्र्यां बृहत्यां वा तस्यां कुर्य्युः ॥ १७ ॥

अनध्यासा चेत् द्वयोरन्यतरं गायत्र्यां धानञ्जप्यः* ॥१८॥

यदि अनध्यासा बृहती स्यात् ततोद्वयोरेकर्चयोरेकं गायत्र्यां कुर्य्यात् एकं बृहत्याम् एवं धानञ्जप्य आचार्य्यो मन्यते ॥ १८ ॥

---

* द्राह्यायणेऽप्येवम् ।

उभौ बृहत्याꣳ शाण्डिल्यः* ॥ १९ ॥

शाण्डिल्य आचार्य्य उभावेकर्चौ बृहत्यां कर्त्तव्यौ मन्यते ॥१९॥

साध्यासायाश्चेदेकोऽध्यास्यायामेवान्ततः* ॥ २० ॥

यदि साध्यासायां बृहत्यां एक एकर्चः कर्त्तव्यो भवति अध्यास्यायामेव कुर्य्यात् सर्वेषां बार्हतानामन्ते यथा महाव्रते ॥ २० ॥

द्वौ तस्यां चादितश्च सा शशकर्णक्लृप्ता † ॥ २१ ॥

द्वावेकर्चौ कुर्वन् साध्यासायाञ्च कुर्य्यादध्यासायां आदौ च बृहत्यां सा शशकर्णक्लृप्ता तस्या इयं संज्ञा शशकर्णक्लृप्तेति उक्तं मशकेन तस्य शशकर्णक्लृप्ता बृहतीति ॥ २१ ॥

त्रिष्वध्यास्या लुप्यत* ॥ २२ ॥

त्रिष्वेकर्चेषु क्रियमाणेषु अध्यास्यायालोपः कर्त्तव्यः ॥ २२ ॥

चतुरो नाना स्तोत्रीयासु* ॥ २३ ॥

यदि चत्वार एकर्चाः कर्त्तव्याः स्युः ततो नाना स्तोत्रीयासु कुर्य्यात् त्रीन् पृथक् स्तोत्रीयासु चतुर्थमध्यास्यायाम् ॥ २३ ॥

द्वादशे बृहत्याꣳ सामतृचः* ॥ २४ ॥

द्वादशे स्तोमे बृहत्यां सामतृचः स्यात् यथा पुनस्तोमे ॥ २४ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

आर्भवे चेदेकोऽनुष्टुभि* ॥ २५ ॥

माध्यन्दिने विधिरुक्तः साम्प्रतमार्भव उच्यते यदि आर्भवे एक एकर्चः कर्त्तव्यो भवति तमनुष्टुभि कुर्य्यात् उक्तमेकर्चं कुर्वन् प्रथमायामादितः कुर्य्यादिति उक्तमुदाहरणम् ॥ २५ ॥

द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येण* ॥ २६ ॥

द्विप्रभृतीनेकर्चानार्भवे कुर्वन् ककुभमारभ्य कुर्य्यादानन्तर्य्येण यथेन्द्रस्तोमे ॥ २६ ॥

उष्णिक्ककुभोस्तृचैकर्चत्वमव्याघातेन* ॥ २७ ॥

उष्णिक्ककुभोस्तृचैकर्चक्रिया अव्याघातेन स्यात् यदि ककुभमेकर्चां कुर्य्यात् उष्णिहमप्येकर्चं कुर्य्यात् यदि ककुभं तृचस्थां कुर्य्यात् उष्णिहमपि तृचस्थमेव कुर्य्यात् ननु किमिदमारभ्यते उक्तं द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येणेति उच्यते ज्योतिष्टोमप्रकरणे ब्राह्मणमाह तासु संहितं तासु सफमिति तृचस्थतामाह सोऽयमाचार्य्यो नियमार्थमारभते कथम् उष्णिक्ककुभौ ज्योतिष्टोमे एकर्चौ स्यातामिति तथाकृत्वा मन्त्रकोऽपि एकर्चे उष्णिक्ककुभौ स्यातामिति ज्योतिष्टोमेऽभिप्रेत्य सम्पदं शास्ति ॥ २७ ॥

---

* द्राह्यायणोऽप्येवम् ।

इति षष्ठस्य तृतीया कण्डिका ।

## अथ चतुर्थी कण्डिका।

**वामदेव्यन्तु तृचे विश्वजिच्छिल्पे यज्ञायज्ञीयप्रभृतीनि च त्रीणि* ॥ १ ॥**

उक्तं द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येणेति विश्वजिच्छिल्पे आर्भवे अष्टादशः स्तोमः तत्र दश सामानि पद्यन्ते तस्मिंश्चतुर्भिस्तृचस्थैः कार्य्यं षड्भिस्त्रैकर्चैः तत्रायं न्यायः प्राप्तः द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येणेति अत आह वामदेव्यन्तु तृचे विश्वजिच्छिल्पे यज्ञायज्ञीयप्रभृतीनि च त्रीणीति विश्वजिच्छिल्पे आर्भवे वामदेव्यन्तु तृचे स्यात् यज्ञायज्ञीयवारवन्तीयकावानि च अत्रोच्यते किमर्थमिदमारभ्यते यदा प्राप्तिरेवैषान्तृचस्थत्वे वामदेव्ययज्ञायज्ञीयारण्येगेयपृष्ठ्यपूर्वाणान्तृचकरणमुत्तरयोः पवमानयोरिति वामदेव्ययज्ञायज्ञीययोस्तावद्ग्रहणादेव वारवन्तीयस्य पृष्ठपूर्वत्वात्सम्भवति स्तोमेऽन्त्यं सर्वत्र तृच इति सिद्धे कावस्य तृचत्वे किं पुनरारभ्यते उच्यते, द्वयोः सामान्ययोर्विध्योर्विकल्पः स्यात् यदि नारभ्येत ततो द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येणेत्यनेन विकल्प उच्यते यद्येवं यज्ञायज्ञीयप्रभृतीनि त्रीणीति ग्रहणं किमर्थं यदा त्रीण्येवैतानि उच्यते विश्वजिद्विचारेषु प्रयोजनम् ॥ १ ॥

**सम्भवति स्तोमेऽन्त्यं सर्वत्र तृचे* ॥ २ ॥**

यत्र स्तोमः सम्भवति तत्र अन्त्यन्तावदवश्यन्तृचे स्यात् सर्वग्रहणं

---

* द्राह्यायणेऽप्येवम्।

किमर्थम् उच्यते, आर्भवेऽधिकृते सर्वग्रहणं क्रियते कथं माध्यन्दिने चार्भवे चेति ॥ २ ॥

**द्वितीयश्चेदरण्ये गेयम्* ॥ ३ ॥**

अरण्ये गेयं यदि तस्मिन् स्यात् द्वितीयं तत्तृचे स्यात् इत्यस्य सम्भवति स्तोम इति वर्त्तते ॥ ३ ॥

**तदभावे यदन्त्यात् पूर्वम्* ॥ ४ ॥**

तस्यारण्येगेयस्याभावे यदन्त्यात्पूर्वं द्वितीयन्तृचे स्यात् ॥ ४ ॥

**एकर्चस्थानेष्वनापद्यमानानि तृचेषु कुर्य्यात् गायत्रं त्रिणिधनं मध्यन्दिने मध्ये निधनमैड़मार्भवे* ॥ ५ ॥**

यद्येकर्चस्थानेषु नापद्येरन् ततः सति सम्भवे गायत्रं तावदुभयोः पवमानयोस्तृचेषु कुर्य्यात् त्रिणिधनं मध्यन्दिने तृचे कुर्य्यात् मध्ये निधनमैड़मार्भवे कुर्य्यात् ॥ ५ ॥

**अनादिष्टतृचैकर्च्चान्येतेनोद्देशेन कल्पयेत्* ॥ ६ ॥**

योऽयमादेशः एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्य्यादित्यत आरभ्य तेन समानवचनोद्देशेन अनादिष्टतृचैकर्चानि स्तोत्राणि कल्पयेत् यानि तु मशकेनादिष्टानि तानि तथैव कुर्य्यात् ॥ ६ ॥

**ककुप्यत्र मध्यन्दिन एकर्च्चस्तस्यामन्यत्रोत्तमाद्व्रात्यस्तोमात्* ॥ ७ ॥**

---

* द्राह्यायणेऽप्येवम् ।

ककुब्यच मध्यन्दिने आस्ते ककुभं प्राचीमदूहतीत्येवं तत्र एकर्चं तस्यां भवेत् उत्तमे तु व्रात्यस्तोमे तृचे स्यात् ॥ ७ ॥

पूर्वयोर्व्रात्यस्तोमयोरार्भवे गायत्रमेकर्चं धानञ्जप्यस्तृचे मरुताꣳ सꣳस्तोभम्* ॥ ८ ॥

पूर्वयोर्व्रात्यस्तोमयोः प्रथमद्वितीययोरार्भवे पवमाने गायत्रमेकर्चं धानञ्जप्यो मन्यते मरुतां संस्तोभन्तृचे ॥ ८ ॥

विपरीतꣳ शाण्डिल्यः* ॥ ९ ॥

एतद्विपरीतं शाण्डिल्य आचार्यो मन्यते तृचे गायत्रमेकर्चं मरुतां संस्तोभं विपरीतं प्रातिलोम्यम् ॥ ९ ॥

चतुर्ऋचानामावृत्तिष्वन्त्यामुद्धरेत्* ॥ १० ॥

चतुर्ऋचानामावृत्तिस्तोत्रेष्वादिश्यमानानामन्त्याम् ऋचमुद्धरेत् आवृत्तिस्तोत्रेषु चतुर्थ्याः सम्भवो नास्ति ॥ १० ॥

तृतीयाꣳ सर्वस्वारस्वरसाम्नोः* ॥ ११ ॥

सर्वस्वारस्वरसाम्नोर्यज्ञयोस्तृतीयामृचमुद्धरेत् चतुर्ऋचात् उपप्रयन्तो अध्वरमित्येतस्मात् सर्वस्वारे तृतीयामुद्धरेत् अनाभिरूप्यात् तत्र हिरण्वत्यभिरूपतां कुर्य्यात् स्वरसाम्नि प्रत्यस्मै पिपीषत इत्येतस्य तृतीयामनुष्टुभमुद्धृत्य चतुर्थीं तत्र बृहतीनां कुर्य्यात् आभिरूप्यात् ॥ ११ ॥

---

* द्राह्यायणोऽप्येवम्।

**प्रवामर्चन्तीति द्वितीयाम्*॥ १२॥**

सर्वस्वारे प्रवामर्चन्तीत्येतस्मिंस्तुर्च्चे द्वितीयामृचमुद्धरेत् अनभिरूपा सा सर्वस्वार इति कृत्वा तस्याम् ऋच उद्धार एतस्मिन् ॥१२॥

**सुषमिद्ध इत्यत्रिवसिष्ठशुनककण्वसंकृतिवध्र्यश्वानां तानूनपातीम्* ॥ १३ ॥**

सुषमिद्ध इत्येतस्मिंस्तुर्च्चे अत्रिप्रभृतीनान्तानूनपातीमृचमुद्धरेत् मधुमन्तं तनूनपादित्येषा सा ॥ १३ ॥

**नाराशꣳसीमन्येषाम्* ॥ १४ ॥**

अन्यगोत्राणां नाराशंसीमुद्धरेत् तस्मात्तस्मातुर्च्चात् नराशंसमिह प्रियमित्येताम् ॥ १४ ॥

**समवाये तु भूयसां कल्पः* ॥ १५ ॥**

यत्रैव बहवो दीक्षेरन्नन्यगोत्राः तत्र ये भूयांसो बहुतराः तेषां यः कल्पस्तं कुर्य्यात् ॥ १५ ॥

**गृहपतिं वानुसत्रिणोऽनुभवन्तीति भवन्तीति* ॥ १६ ॥**

यद्वा गृहपतेर्गोत्रं स्यात् तं वा कल्पं कुर्य्यात् यस्मादियं श्रुतिः गृहपतिमनुसत्रिणो भवतीति ॥ १६ ॥

---

* द्राह्यायणेऽप्येवम् ।

इति षष्ठस्य चतुर्थी कण्डिका ।

अथ पञ्चमी कण्डिका।

वर्द्धमानेषु स्तोमेषु प्रथमस्य पर्य्यायस्य प्रथमा तृचभागा तस्यास्त्रिर्वचनम्* ॥ १ ॥

इह त्रिवृदादिष्वष्टाचत्वारिंशान्तेषु विष्टुतयः पठिताः एकि-प्रभृतयश्च स्तोमाः श्रूयन्ते अथैक एकत्रिकः सप्तिसप्तदशौ स्तोमौ भवतः सर्वो दशदशी भवति द्वादशो विषुवान् यच्चतसृभिर्बहि-ष्पवमानं भवति यदष्टाभिराज्यानि यद्द्वादशी माध्यन्दिनः पवमानः यत् षोड़शिभिः पृष्ठानि तद्विंश आर्भवः एवमादयः स्तोमाः श्रुताः न च तेषां विष्टुतयः पठिता आम्नाये सोऽयमाचार्य्यः पर्य्यायक्लृप्तिं विवक्षुः शास्त्रमारभते वर्द्धमानेषु स्तोमेषु प्रथमस्य पर्य्यायस्य प्रथमा तृचभागा तस्यास्त्रिर्वचनमिति वर्द्धमानेष्विति ये प्राकृतेभ्य ऊर्द्धं वर्द्ध-मानाः तेषु प्रथमस्य पर्य्यायस्य या प्रथमा स्तोत्रीया तस्याः संज्ञा तृचभागेति तस्या आदौ त्रिर्वचनम् ॥ १ ॥

मध्यमावापस्थानम् † ॥ २ ॥

मध्यमायाः पर्य्यायस्य स्तोत्रीया तस्याः संज्ञा आवापस्थान-मिति ॥ २ ॥

उत्तमा परिचरा ‡ ॥ ३ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

या उत्तमा प्रथमस्य पर्य्यायस्य स्तोत्रीया तस्याः परिचरा संज्ञा ॥ ३ ॥

परिचरा तृचभागावापस्थानमिति मध्यमे* ॥ ४ ॥

मध्यमस्य पर्य्यायस्य याः प्रथममध्यमोत्तमाः स्तोत्रीयास्तासामप्येताः संज्ञाः ॥ ४ ॥

आवापस्थानं परिचरा तृचभागेत्युत्तमे* ॥ ५ ॥

उत्तमस्य पर्य्यायस्य याः प्रथममध्यमोत्तमाः स्तोत्रीयास्तासामप्येताः संज्ञाः संव्यवहारार्थाः संव्यवहारश्चास्मिञ्छास्त्रे अथ वर्द्धमानेष्विति किमर्थं किं ये अवर्द्धमानास्तेषु पर्य्यायकॢप्तिर्नेष्टा उच्यते न तेषु पर्य्यायकॢप्तिं न वक्ष्यति इयन्तु पर्य्यायकॢप्तिस्तृचभागादिवर्द्धमानेषु सुतरामुपपद्यते एवञ्च कृत्वा निदानकारोऽप्याह सैषा विष्टावकॢप्तिरेकविंशादिषु साधिष्टमुपपद्यत इति ॥ ५ ॥

एते विष्टावाः* ॥ ६ ॥

उक्तं पर्य्यायविष्टावान् सन्दध्यादिति अतोऽत्र विष्टावसंज्ञां करोति ॥ ६ ॥

तदभावे तृचभागास्थानेषु पर्यायाणां पर्यायाः स्युः* ॥७॥

विष्टावानामभावे पर्य्यायाणान्तृचभागास्थानेषु पर्य्यायाः स्युः तृचभागास्थाने ॥ ७ ॥

---

* द्राह्यायणेऽप्येवम् ।

यथा वैकः पर्यायः* ॥ ८ ॥

यथा वा एकः पर्य्यायो भवति तथा सर्वे पर्य्यायाः स्युः तृच-भागायाः स्थाने प्रथमः आवापस्थाने द्वितीयः परिचरास्थाने तृतीयः ॥ ८ ॥

नैकिनीपर्यया विद्यन्ते† ॥ ९ ॥

द्रव्याभावात् ॥ ९ ॥

तथा त्रिके विष्टावाः† ॥ १० ॥

द्रव्याभावादेव ॥ १० ॥

त्रिवृतस्तोद्यत्याम्* ॥ ११ ॥

त्रिवृतस्य स्तोमस्य उदत्यां विष्टुतौ विष्टावा न विद्यन्ते आम्नाय-सामर्थ्यात् ॥ ११ ॥

समेषु समः प्रयोगः स्तोत्रीयाणाम्* ॥ १२ ॥

साम्प्रतं पर्य्यायकृतिरुच्यते ये तावत्समाः स्तोमास्तेषु स्तोत्री-याणां समः प्रयोगः स्यात् यावत्कृत्वः प्रथमा प्रयुज्यते तावत्कृत्वो द्वितीया तावत्कृत्व एव तृतीया विन्यासन्याय उक्तः ॥ १२ ॥

एकैकाधिश्रयेष्वधिका द्वे द्व्यधिश्रयेषु* ॥ १३ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

एकाधिश्रयेषु स्तोमेषु एकाधिकां स्तोत्रीयां कुर्य्यात् द्वे स्तोत्रीये द्व्यधिश्रयेषु द्वे अधिके तस्याधिक्यं कुतः समेभ्यः ॥ १३ ॥

ते विषमाः* ॥ १४ ॥

ते स्तोमा विषमा इत्युच्यन्ते ॥ १४ ॥

युग्मायुक्ताद्व्युत्तरीभावेण वर्त्तन्ते* ॥ १५ ॥

समो युग्मावस्तेषां व्युत्तरीभावेन वर्त्तन्ते ॥ १५ ॥

अयुज एकिप्रभृतयो द्विकप्रभृतयो युजः † ॥ १६ ॥

एकिप्रभृतयः स्तोमा व्युत्तरीभावेन वर्त्तन्ते तेऽयुजः द्विकप्रभृतयो व्युत्तरीभावेण वर्त्तन्ते ते युग्माः ॥ १६ ॥

व्युत्तरीभावेणोभयेसां समवैषम्यम्* ॥ १७ ॥

उभयेषां युग्मायुजान्तु व्युत्तरीभावेन वर्त्तमानानां स्तोमा एकिप्रभृतयः व्युत्तरीभावेन वर्त्तमाना एकाधिश्रया भवन्ति समवैषम्यं कस्य समवैषम्यं युग्मायुक्तयोः ॥ १७ ॥

एकिप्रभृतय एकाधिश्रयाः* ॥ १८ ॥

एकिप्रभृतयः स्तोमाः व्युत्तरीभावेन वर्त्तमाना एकाधिश्रया भवन्ति ॥ १८ ॥

---

* द्राह्यायणोप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

**द्विकप्रभृतयो द्व्यधिश्रयाः* ॥ १९ ॥**

द्विकप्रभृतयः व्युत्तरीभावेण वर्त्तमानाद्व्यधिश्रया भवन्ति ॥१९॥

**समास्त्रिकप्रभृतयः* ॥ २० ॥**

त्रिकप्रभृतयः व्युत्तरीभावेण वर्त्तमानाः समा भवन्ति ॥ २० ॥

**विषमाः समपर्यायैर्वर्त्तन्ते* ॥ २१ ॥**

य एते विषमा एकाधिश्रया द्व्यधिश्रयाः समपर्य्यायैर्वर्त्तन्ते एते समाः समानपर्य्यायास्तस्मात् समानवृत्तिरेतेषां यावभितोऽनन्तरौ समौ तयोः पर्य्यायान् संहरेत् पूर्वस्यैकमेकाधिश्रयेषु द्वौ द्व्यधिश्रयेषूभयान्यथाजाति यस्मिन् विषमे स्तोमे पर्य्यायकृतिः कर्त्तव्या तस्य यावभितोऽनन्तरौ समौ स्तोमौ स्यातां तयोः पर्य्यायसंहारं कुर्य्यात् एकमेकाधिश्रयेषु स्तोमेषु पूर्वस्य स्तोमस्य एकं पर्य्यायमनुसंहरेत् उत्तरस्य समस्य द्वावनुसंहरेत् द्वौ द्व्यधिश्रयेषु संहरेदिति वर्त्तते पूर्वस्य द्वौ सचायमुत्तरस्य पर्य्यायस्यैकमेकाधिश्रये पर्य्यायवचनं† तदेकमिति उभयानेतान् पर्य्यायान् यथाजातिमतामनुसंहरेत् ये तु ये तत्र† अनुसंहरेत् समानजातीयान् तानपसत्र एव समेभ्यो यथा सप्तिनि† यत्रानुरूपपर्य्यायकृतिः उत्तमौ त्रिवृतस्तथा† एकादशस्य त्रिवृतः प्रजानां पूर्वौ त्रिकौ पर्य्यायौ पञ्चदशस्योत्तमः सप्तदशः† द्वितीयतृतीययोर्द्वादशात्† द्वितीयषट्कात् उत्तमौ द्वादशात् विपर्य्ययो

---

* द्राह्यायणेऽप्येवम्।

† पुस्तकत्रयेऽपि एतेषु स्थानेषु पतितमनुमीयते असंलग्नत्वात्।

युग्मायुजामयुक्षु यथास्थानं पर्य्यायान् कुर्य्यात् सोऽविशेषः भाष्यान्तरमेतत् ॥ २१ ॥

यावभितोऽनन्तरौ समौ तयोः पर्यायान् संहरेत्* ॥२२॥

यौ स्तोमौ यस्य स्तोमविषयस्यानन्तरौ समस्तोमौ तयोः सम्बन्धिनः पर्य्यायानाहरेत् विषमः क्लृप्त्यर्थं कथमित्याह ॥ २२ ॥

पूर्वस्यैकमेकाधिश्रयेषु* ॥ २३ ॥

पूर्वस्य समस्य सम्बन्धिनमेकं पर्य्यायम् आहरेत् क्लृप्त्यर्थं सामर्थ्यात् द्वावुत्तरादिति सिद्धम् ॥ २३ ॥

द्वौ द्व्यधिश्रयेषु* ॥ २४ ॥

द्व्यधिश्रया येषान्दे समेभ्योऽधिके तेषु कल्प्यमानेषु पूर्वस्य द्वौ पर्य्यायावाहरेत् अर्थादुत्तरस्य समस्यैकम् अत्र विशेषमाह ॥२४॥

उभयान् यथाजाति* ॥ २५ ॥

उभयानेकाधिश्रयान् द्व्यधिश्रयान् संह्रियमाणान् यथाजाति कल्प्यमाने जात्यनतिक्रमेण संहरेत् तेनायुक्ष्वेकाधिश्रयद्व्यधिश्रयेषु कर्त्तव्येष्वयुग्भ्य एव समेभ्यः पार्श्वस्थेभ्योऽनन्तरेभ्यश्च पर्य्यायसंहारः कर्त्तव्यः तथा युक्ष्वेकाधिश्रयद्व्यधिश्रयेषु कर्तव्येषु समानजातीयेभ्यो

---

* द्राह्यायणोऽप्येवम् ।

युग्भ्य एव समेभ्यः पार्श्वस्थेभ्योऽनन्तरेभ्यः पर्य्यायसंहारः कर्तव्यः उदाहरणं त्रयोदशी अस्यैकाधिशयत्वं विषमत्वञ्चास्ति अयञ्च द्वादशाहवत् समस्तोत्रीयकादेकयाधिकत्वे विषमा इति च विषमः एकप्रभृतित्वाच्चायुक् तेनानन्तरयोर्युजोः समयोः सकाशात् पर्य्यायसंहारे विषमाः समपर्य्यायैरिति युक्तं पूर्वस्यैकमेकाधिशयेष्विति च तेनायुजः समस्तोत्रीयकस्यानन्तरस्य त्रिवृत एकं पर्य्यायमाहरेत् त्रयोदशिनि प्रथमं यथास्थानं पर्य्यायानिति हि वक्ष्यति पञ्चदशस्योत्तरौ च द्वौ तदनन्तरत्वादयुक्तात्समस्तोत्रीयकत्वाच्च सप्तदशो द्व्यधिशयो विषमः पञ्चदशः द्वाभ्यामधिकत्वात् तस्याकृतिः प्रथमैः पठितैः पञ्चदशादनन्तरादयुजः समादेकविंशादुत्तमः अत्र च द्वौ पूर्वस्य द्व्यधिशयत्वात् षोडश एकाधिशयो युक् अतोऽस्यैकः समाद्युजश्च द्वादशात् प्रथमः अष्टादशादुत्तरौ च द्वौ अत्रैकः पूर्वस्यैकाधिशयत्वात् षड्विंशो द्व्यधिशयः समो युक् तस्य युजः समादनन्तराच्चतुर्विंशात् द्वौ प्रथमौ त्रिंशाच्चोत्तमो युक् समत्वात् तेन युग्विषमान् युक्समेभ्य अयुग्विषमानयुक्समेभ्य इति सिद्धं तद्विषमान् विषमैरित्येको जातिसंहारकल्पः सप्रपञ्च उक्तः अधुना युग्मायुक्संहारकल्पं वक्तुमाह ॥ २५ ॥

**युग्मायुग्भ्यो वा* ॥ २६ ॥**

अनन्तरौ समौ तद्यथाजात्येवं कल्पमानस्य यथा युग्विषमान् युक्समेभ्य अयुग्विषमानयुक्समेभ्य इति अपित्वनन्तरेभ्यः

---

* द्राह्यायणोऽप्येवम् ।

समेभ्यो युग्मायुग्भ्य: उभयत्र अयुजि युजि च संहार: कर्तव्य: कथमित्यत आह ॥ २६ ॥

## तत्र युजामेकाधिश्रयानामयुजः पूर्वौ पर्यायौ* ॥ २७ ॥

तत्र युग्मायुक्संहारकल्पे युजामेकाधिश्रयानां कर्तव्यानामयुजोऽनन्तरस्य च द्वौ पूर्वौ पर्य्यायावाहरेत् यथा षोड़शिनि समानयुजोऽनन्तरात् पञ्चदशात् पूर्वौ द्वौ पर्य्यायौ अर्थादष्टादशात् युक्समाच्चोत्तममाहरेत् ॥ २७ ॥

## उत्तरौ द्व्यधिश्रयानाम्* ॥ २८ ॥

युक्द्व्यधिश्रयानामयुजः अनन्तरस्य समस्योत्तरौ यत्र तत्रस्थस्य अतएवोत्तरावित्याह अथवोत्तराविति वचनात् उत्तरादयुज आनेयौ द्व्यधिश्रयानां समानां एकाधिश्रयानां पूर्वस्मात् पूर्वत्र पूर्वावित्युक्तः यथास्थानमिति वचनं वक्ष्यति तेन युजो द्व्यधिश्रयस्य षड्विंशस्यानन्तरादयुज उत्तरात् सप्तविंशात् समादुत्तरौ द्वावधिकात् युजः एकं पूर्वात् चतुर्विंशात् समादिति ॥ २८ ॥

## विपर्ययो युग्मायुजामयुक्षु* ॥ २९ ॥

अयुजामेकाधिश्रयेषु द्व्यधिश्रयेषु कर्तव्येषु युग्मायुजोः पूर्वोक्तात् न्यायात् विपरीतो न्यायो ज्ञेयस्तेनायुजाधिश्रयानां कर्तव्यानां त्रयोदशादीनां युजो द्वादशात् पूर्वौ पर्य्यायौ अर्थात् पञ्चदशादुत्तरं

---

* द्राह्यायणेऽप्येवम् ।

द्व्यधिश्रयानान्तु अयुजां युजः समादनन्तरादुत्तरौ यथा सप्तदशिन्येवो-दाहरणमात्रन्तु सप्तदशं क्लृप्तत्वात् तेनाष्टादशादुत्तरौ पञ्चदशात् पूर्व-इति सप्तदशे युग्मायुक्संहारः ॥ २९ ॥

**यथास्थानं पर्य्यायान् कुर्य्यात् सोऽविदोषः* ॥ ३० ॥**

आह्रियमाणान् पर्य्यायान् यथास्थानं स्वस्थानानतिक्रमेण कुर्य्यात् प्रथमादानीतं प्रथममुत्तरादुत्तरमिति तेन प्रथमः प्रथमे स्थाने द्वितीये द्वितीयस्तृतीये तृतीय इति एवं क्रियमाणे अविदोषो भवतीति संव्यवहारार्थम्। कण्डिका समाप्ता। षष्ठस्य पञ्चमी कण्डि-कायां त्यक्तशिरान् भणित्वा अन्यभाष्यात्त्यक्तमेकमधिकाबलिद्वयमुद्धृत्य त्रिंशदधिकाग्रे क्षेपितं चतुष्के त्रिकान् षष्ठिं युजायुग्भ्यो वा अथवा अयुग्भ्यस्त्वानुश्रया युग्मा † तत्र युजामेकाधिश्रयानां स्तोमानामेका-धिश्रयानां अयुजः पूर्वौ पर्य्यायौ स्यातामुत्तरौ द्व्यधिश्रयानां तत् तस्मिन् युग्मा † स्तोमानामेकाधिश्रयानामयुजावितरौ स्तोमौ पूर्वौ पर्य्यायौ स्यातां अर्थादापन्नं युज उत्तममिति द्व्यधिश्रयानां युजस्तेषां उत्तमौ पर्य्यायौ न एकस्मात् उत्तरपूर्वयोः स्याताम् अर्थादापन्नं युजः पूर्वा प्रथम इति यथा दशिनि त्रिवृतः पूर्वौ द्वादशात् उत्तमः तथा † प्रथमयुज उत्तरः समः प्रथमद्वितीयौ षट्कात् तथोत्तमः प्रथमः त्रिवृतः द्वितीयतृतीयौ प्रथममजुजः† पर्य्यायौ आनन्तर्य्यात् पर्य्याय-संहारः † कुर्य्यात् पर्य्यायाणां यथास्थानं† विदोषं वर्जयेदिति ॥३०॥

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† पुस्तकत्रयेऽपि एतेषु स्थानेषु पतितमनुमीयते असंलग्नत्वात्।

इति षष्ठस्य पञ्चमी कण्डिका।

अथ षष्ठी कण्डिका ।

**यदवसानः पूर्वः पर्यायस्तत्प्रभृतिरुत्तरः* ॥ १ ॥**

योविष्टावः पूर्वस्य पर्य्यायस्यान्ते स्यात् स एवोत्तरस्य पर्य्यायस्यादिर्भवति तस्यापि यदवसानन्तदेवोत्तमस्यारम्भः ॥ १ ॥

**तत्सामात् साम्यम्* ॥ २ ॥**

तत्सामात् पर्य्यायसामात्साम्यं समभावोऽपि भवति वक्ष्यति तथा पर्य्यायरोहमसम्भवत्सु सर्वेषु समात्समामेव कुर्य्यात् इति ॥२॥

**तदुभयं कुर्य्यात् † ॥ ३ ॥**

उक्तं यथास्थानं पर्य्यायान् कुर्य्यात् सोऽविदोष इति तथाऽविदोषं कुर्य्यात् तत्सामात् साम्यञ्च ॥ ३ ॥

**ब्रह्मायतनीयाञ्च † ॥ ४ ॥**

तच्चोभयं कुर्य्यात् यदुक्तादन्यत् ब्रह्मायतनीयाञ्च ब्रह्मायतनीयां वक्ष्यति ॥ ४ ॥

**तथा पर्यायरोहमसम्भवत्सु सर्वेषु समात् समामेव कुर्यात् ‡ ॥ ५ ॥**

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अविशेषादिषु सर्वेष्वसम्भवत्सु सामात्साम्यं अवश्यं कुर्य्यात् एव-शब्दोऽवधारणार्थः ॥ ५ ॥

पर्यायप्रत्यवरोहन्तु वर्जयेत्* ॥ ६ ॥

यदि पुनः सामात्साम्ये क्रियमाणे पर्य्यायप्रत्यवरोहः स्यात् तत् वर्जयेदेव ॥ ६ ॥

त्रिड़ायतनीयाच्च* ॥ ७ ॥

विड़ायतनीयाच्च विष्टुतिं वर्जयेत् का पुनर्विड़ायतनीयेत्युच्यते ॥ ७ ॥

प्रथमायाः प्रयोगे भूयिष्ठे ब्रह्मायतनीया मध्यमायाः क्षत्त्रायतनीयोत्तमाया विड़ायतनीया † ॥ ८ ॥

प्रथमायाः स्तोत्रीयायाः प्रयोगे भूयिष्ठे सा विष्टुतिर्ब्रह्मायतनीया भवति यध्यमायाः प्रयोगे भूयिष्ठे क्षत्रायतनीया भवति उत्तमायाः प्रयोगे भूयिष्ठे विड़ायतनीया भवति या विड़ायतनीया तां पर्य्यायकृतौ वर्जयेत् ॥ ८ ॥

दाशरात्रिकेभ्यः पर्यायकृतौ पथ्यापर्यायानेव संहरेत्* ॥ ९ ॥

उक्तं यावभितोऽनन्तरौ समौ तयोः पर्य्यायानेव संहरेत् इति

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

दाशरात्रिकेभ्यः स्तोमेभ्यो यदि अनुसंहारः कर्त्तव्यः स्यात् तदा यास्तु सत्रपथ्या विष्टुतयस्ताभ्य एव पर्य्यायाननुसंहरेत् ॥ ९ ॥

परिवर्त्तिन्यास्तु त्रिवृतोऽनादेशे* ॥ १० ॥

त्रिवृतस्तु यदा पर्य्यायकृतौ संहारः कर्त्तव्यः स्यात् तदा परिवर्त्तिनी पर्य्यायाननुसंहरेत् अनादेशे आदेशे तु यथादेशं दर्शिनि स्तोमे वक्ष्यति उद्यत्यावेति ॥ १० ॥

एष न्यायोऽनादिष्टानाम्* ॥ ११ ॥

येषां स्तोमानां पर्य्याया नादिष्टाः तेषामेष पर्यायकृतौ न्यायः ॥ ११ ॥

एकिन्यावर्त्तिस्थानगते त्रिष्पुरस्ताद्धिंकारं शाण्डिल्यः त्रिके च प्रथमया स्तोमपूरणम् † ॥ १२ ॥

एकिनि स्तोमे आवर्त्तिस्थानगते सति शाण्डिल्यो हिंकारस्य पुरस्तात् त्रिः क्रियां मन्यते एष पर्य्यायाणां धर्म इति त्रिके च स्तोमे आवर्त्तिस्थानगते प्रथमया स्तोत्रीयया स्तोमपूरणं मन्यते सर्वेषु पर्य्यायेषु प्रथमा एव स्यादिति ॥ १२ ॥

टचेन धानञ्जप्यः सकृच्चैकिनि हिङ्कारम् † ॥ १३ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

त्रिके स्तोमे तृचेन धानञ्जप्य आचार्य्यः स्तोमपूरणं मन्यते एकिनि चावर्त्तिस्थानगते सकृद्धिङ्कारं मन्यते पर्य्यायनिमित्तो हिंकारः न च तस्मिन् सर्वे पर्य्यायाः सन्ति ॥ १३ ॥

जातिसꣳहारः पञ्चिनि* ॥ १४ ॥

पञ्चिनि स्तोमे जातिसंहारः स्यात् नायं पृथगनुपूर्वं संहारः स्यात् ॥ १४ ॥

पञ्चदशपर्य्यायैः पृथगनुपूर्वꣳ रात्रिपर्य्यायान् विदध्यात् संलङ्घितायामिति भाण्डितायनः* ॥ १५ ॥

संलङ्घितायां रात्रौ पठति पञ्चदशभिर्होत्रे स्तुयुः पञ्चभिः पञ्चभिरितरेभ्य इति संलङ्घनं कालातिक्रमः पञ्चभिः पञ्चभिरितरेभ्य इति कृतलक्षणस्य पञ्चिनि संहारः प्राप्नोति एवं कृत्वा आह पञ्चदशपर्य्यायैरिति ये पञ्चदशे स्तोमे पर्य्यायाः कृताः तैः पर्य्यायैः पृथग्मानेत्यर्थः आनुपूर्व्येण रात्रिपर्य्यायेषु विधानं कुर्य्यात् एवमभिव्युष्टायां रात्रौ ॥ १५ ॥

तत्र विष्टावाः पर्य्यायस्थानेषु स्युः पृथक् च स्तोत्रीयास्तु पर्यायाः† ॥ १६ ॥

तत्र तस्मिन्विधौ पञ्चदशपर्य्याया एवं स्युः त्रयाणां पर्य्यायाणां

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

स्थानेषु त्रयोऽपि विष्टावाः स्तुर्चयास्थानं एवं पर्य्याया नानास्तोत्रीयासु भवन्ति ॥ १६ ॥

दाशरात्रिकेभ्य एकयाज्यायःसु तस्मात् पूर्वस्योत्तमे पर्याय आवपेत्* ॥ १७ ॥

ये दाशरात्रिकेभ्य एकयाज्यायांसस्तेषु पर्य्यायकृतौ तस्मात् करिष्यमाणपर्य्यायात् स्तोमाद्यः पूर्वस्तस्योत्तमे पर्य्याये एकां स्तोत्रीयामावपेत् ॥ १७ ॥

ब्रह्मायतनीया तु तेषु क्षत्रायतनीया वा † ॥ १८ ॥

तत्र प्रथमे विष्टावे भूयिष्ठां आवपेत् मध्यमे वा उत्तमस्य पर्य्यायस्य एवं सा ब्रह्मायतनीया वा भवति क्षत्रायतनीया वा ॥ १८ ॥

आस्कन्दन्तु, गौतमश्चत्वारिंशे* ॥ १९ ॥

चत्वारिंशे स्तोमे गौतम आचार्य्य आस्कन्दं मन्यते तुशब्दोऽवधारणार्थः आस्कन्द उक्तलक्षणो महाव्रतप्रकरणे चतुर्विंशेन वा स्तुत्वा मध्यमामहिंकृतान्तृचस्य प्रस्तुयात्स आस्कन्दो नामेति ॥ १९ ॥

धानञ्जय्य इतरेषु* ॥ २० ॥

इतरेषु दाशरात्रिकेषु एकयाज्यायःसु स्तोमेषु आस्कन्दं धानञ्जय्यो मन्यते ॥ २० ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

इति षष्ठस्य षष्ठी कण्डिका ।

अथ सप्तमी कण्डिका।

दशिनि चतुष्को मध्ये परिवर्त्तिनौ पर्यायावभितः* ॥१॥

दशिनि स्तोमे युग्जातिसंहारकृतौ प्राप्तायां अपरोऽनुसंहार-प्रकार आरभ्यते चतुष्कपर्य्यायं मध्ये कृत्वा अभितः परिवर्त्तिनी-पर्य्यायौ स्याताम् ॥ १ ॥

उद्यत्या वा* ॥ २ ॥

तमेव वा चतुष्कं मध्ये कृत्वा उद्यतीपर्य्यायावभितः स्याताम् ॥२॥

उद्यतीपर्यायययोर्ब्रह्मायतनीयां कुर्वन् प्रथमायाञ्चतुष्कं कुर्यात्* ॥ ३ ॥

अथ पुनस्तस्मिन्नुद्यतीपर्य्यायकल्पे ब्रह्मायतनीयाञ्चिकीर्षेत् ततः प्रथमायामेव चतुष्कं कुर्य्यात् ॥ ३ ॥

द्वादशे तृचभागास्थानेषु द्विकाविष्टावाः † ॥ ४ ॥

द्वादशे स्तोमे आवापस्थानेषु स्तोत्रीयाणां क्रिया प्रामाण्या येन तस्यां प्राप्तायामाह तृचभागास्थानेषु द्विकाविष्टावा इति द्वादशे स्तोमे पर्य्यायेषु यानि तृचभागास्थानानि तेषु द्विकाविष्टावाः स्युः ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणीये किञ्चिदधिकमस्ति।

त्रयोदशत्रयोविंशयो: पञ्चविंशे च मध्यम: पर्यायो ज्यायानेकज्यायःसु कनीयानेककनीयःसु* ॥ ५ ॥

त्रयोदशत्रयोविंशयो: स्तोमयो: पञ्चविंशे च स्तोमे विशेष आरभ्यते एकया स्तोत्रीयया ज्यायःसु यो मध्यम: पर्य्याय: स ज्यायान् स्यात् एकया कनीयःसु एकया कनीयान् मध्यम: पर्य्याय: स्यात् तत् किमिदं बहुवचनं यदा एक: कनीयान् ज्यायांसौ द्वौ स्यातां तत्रै-के तावद्वर्णयन्ति पर्य्यायेषु बहुवचनमिति एकोज्यायान् येषु पर्य्या-येषु तद्द्मे एकज्यायांस: एक: कनीयान् येषु तद्द्मे एककनीयांस: अपरे ब्रुवते स्तोमेष्वेव बहुवचनं यथा नराणां वा नराणाञ्च कथ-मासीत् समागम: अत्रिष्टुब्जगतीका अस्य स्तोत्रप्रवर्ह्या: सवनप्रवर्ह्या: स्यु अथवा पर्य्यायकृतिरेवास्य प्राथम्येन विवक्षिता तत्र त्रयोदशे तावत् एकयाज्यायसि प्रथमोत्तमौ पर्य्यायौ द्वादशात् मध्यम: पञ्चदशात् तथा पञ्चविंशे चतुर्विंशात् प्रथमोत्तमौ पर्य्यायौ मध्यमस्त्रिणवात् त्रयोविंश एकया कनीयान् तस्मिंश्चतुर्विंशात् प्रथमोत्तमौ मध्यम एकविंशात् धानञ्जप्यस्तु जातिसंहारं मन्यते उभयोर्जातिसंहारं धानञ्जप्य इति ॥ ५ ॥

तथैकान्नत्रिंशैकत्रिंशयो:* ॥ ६ ॥

तथा तेन प्रकारेण ज्याय:कनीयस्त्वं एकोनत्रिंशे प्रथमोत्तमौ त्रिंशात् मध्यमस्त्रिणवात् तथैकत्रिंशे प्रथमोत्तमौ त्रिंशात् मध्यम-स्त्रयस्त्रिंशात् ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम् ।

रूढपर्यायाया वा* ॥ ७ ॥

रोहेण वा सर्वेष्वेते पर्य्यायाः स्युः उत्तरोत्तरवृद्ध्या ॥ ७ ॥

तेषां प्रथमे युग्मायुक्सꣳहारꣳ शाण्डिल्यायनः* ॥ ८ ॥

तेषां यथोद्दिष्टानां त्रयोदशप्रभृतीनां प्रथमे त्रयोदशे युग्मायुक्संहारं शाण्डिल्यायन आचार्य्यो मन्यते ॥ ८ ॥

द्वितीये शाण्डिल्यः* ॥ ९ ॥

द्वितीये त्रयोविंशे शाण्डिल्य आचार्य्यो युग्मायुक्संहारं मन्यते ॥ ९ ॥

उभयोर्जातिसꣳहारं धानञ्जप्यः* ॥ १० ॥

उभयोस्त्रयोदशत्रयोविंशयोर्जातिसंहारं धानञ्जप्य आचार्य्यो मन्यते ॥ १० ॥

शाण्डिल्यस्य पञ्चविꣳशे* ॥ ११ ॥

शाण्डिल्य आचार्य्यः पञ्चविंशे जातिसंहारं मन्यते चशब्दः समुच्चयार्थः ॥ ११ ॥

अष्टादशꣳसप्तदशएवावपेदिति गौतमः* ॥ १२ ॥

गौतम आचार्य्यो मन्यते अष्टादशेनैव समप्रयोगन्यायः स्यात सिद्धे एव सप्तदशे अष्टादशीं स्तोत्रीयामावपेत् अविरुद्धन्यायेन ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम् ।

न्यायविहितः स्यादिति धानञ्जप्यः* ॥ १३ ॥

धानञ्जप्य आचार्य्यो मन्यते य एव न्यायः समेषु समः प्रयोगः स्तोत्रीयाणामिति तेनैवास्य विधानं स्यादिति ॥ १३ ॥

एकान्नविंशे परिवर्त्तिनौ पर्यायावभितस्त्रयोदशौ मध्ये* ॥ १४ ॥

एकान्नविंशे स्तोमे अपरोन्याय आरभ्यते अभितः परिवर्त्तिनी-पर्य्यायौ स्यातां त्रयोदशौ मध्यमः पर्य्यायो भवति ॥ १४ ॥

तस्मिन् प्रथमायास्त्रिर्वचनं तथोत्तमायाः* ॥ १५ ॥

तस्मिंस्त्रयोदशपर्य्याये प्रथमायाः स्तोत्रीयायास्त्रिर्वचनं स्यात् तथोत्तमायाः स्तोत्रीयायास्त्रिर्वचनं मध्यमा सप्तकृत्व उच्यते ॥ १५ ॥

पञ्चदश पर्यायावभितो नवौ मध्ये त्रिकविष्टावद्गति धान-ञ्जप्यः* ॥ १६ ॥

धानञ्जप्य आचार्य्यो मन्यते तस्मिन्नेकान्नविंशे पञ्चदशपर्य्याया-वभितः स्यातां नवौ पर्य्यायो मध्ये स्यात् त्रिकैर्विष्टावैरिति॥ १६ ॥

शाण्डिल्यायनस्तु जातिसंहारम्* ॥ १७ ॥

शाण्डिल्यायन आचार्य्यो जातिसंहारं मन्यते तुशब्दोऽवधा-रणार्थः जातिसंहारमेव मन्यते नेतरान् कल्पान् ॥ १७ ॥

---

* द्राह्यायणोऽप्येवम् ।

द्वात्रिꣳशे तिस्रो विष्टुतीः कुर्यादिति गौतमः* ॥ १८ ॥

द्वात्रिंशे स्तोमे तिस्रो विष्टुतोः कुर्य्यात् इत्येवं गौतम आचार्य्यो मन्यते ॥ १८ ॥

तासां पर्यायकृतिप्रयोगौ चतुश्चत्वारिꣳशेन व्याख्यातौ* ॥ १९ ॥

तासां द्वात्रिंशप्रयोगे तिसृणां विष्टुतीनां पर्य्यायाणाञ्च कृतिः प्रयोगस्य चतुश्चत्वारिंशेन स्तोमेन व्याख्यातौ पर्य्यायकृतिस्तावत् प्रथमायां विष्टुत्यां एकादशी प्रथमः पर्य्यायः दशी द्वितीयः एकादशी तृतीयः द्वितीयया दशी तृतीयया एकादशी दशी पूर्व्वं एकादशिनावुत्तरौ द्वितीयायाम् एकादशिनौ पूर्व्वौ दशी उत्तमाः तृतीयायां प्रयोगः याज्यानां प्रथमा पृष्ठानां द्वितीयोक्थानां तृतीयेत्येवं प्रथमः याज्यानां सा होतुरित्यत आरभ्य द्वितीयो योऽच्छावाकमिति तृतीयः ॥ १९ ॥

अप्यहर्भाजि प्रथमयैवेति शाण्डिल्यः* ॥ २० ॥

शाण्डिल्य आचार्य्य आह अहर्भाज्यपि द्वात्रिंशे प्रथमयैव विष्टुत्या सर्व्वमहः कुर्य्यात् उत्तरे विष्टुती नैव प्रयुञ्जीत अन्येषां त्वाचार्य्याणां यथा कुर्य्यादहर्भाजीति प्रकृतमेव ॥ २० ॥

---

* द्राह्यायणोऽप्येवम्।

इति षष्ठस्य सप्तमी कण्डिका।

अथ अष्टमी कण्डिका ।

**चतुष्टोमयोश्चतुष्पर्यायाः* ॥ १ ॥**

चतुष्टोमश्चतुष्टोमश्चतुष्टोमौ तयोश्चतुष्पर्य्यायाः स्तोमा भवन्ति किं पुनरयं स्तोमभेदोनिगद्यते इह त्रिपर्य्यायता स्तोमानां न्याय उच्यते ब्राह्मणम् अथैष चतुष्टोमः पशुकामो यजेतेत्येवमधिकृत्य चतुष्कादीन् षट् चतुरुत्तरान् स्तोमान् पठति तस्मिन् षट्स्तोमे सति चतुष्टोमशब्दो न सम्भवति सोऽयं चतुष्टोमशब्दो मुख्यैरर्थैर-सम्भवन् गौणे कल्पते चतुष्पर्य्यायाः स्तोमा इति उत्तरो यद्यपि चतुष्टोमो भवति तथापि तत्र चतुष्पर्य्यायतैव सन्निहितत्वात् स्तोमा-भ्यामित्युक्तं तत् ॥ १ ॥

**तत्र चतुष्के द्वौ प्रथमायां पर्यायौ स्यातां यदि ब्रह्मा-यतनीयां कुर्यात्* ॥ २ ॥**

तत्र तयोश्चतुष्टोमयोश्चतुष्के स्तोमे द्वौ प्रथमायां स्तोत्रीयायां पर्य्यायौ स्यातां यदि ब्रह्मायतनीयां विष्टुतिं कुर्य्यात् ॥ २ ॥

**मध्यमायां क्षत्रायतनीयाश्चेत्* ॥ ३ ॥**

यदि क्षत्रायतनीयां विष्टुतिं कुर्य्यात् ततो मध्यमायां स्तोत्री-यायां द्वौ पर्य्यायौ स्याताम् ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

तथाष्टिनि द्विकास्तु तस्य पर्यायाः* ॥ ४ ॥

यथा चतुष्के तथाष्टिनि यदि ब्रह्मायतनीयां कुर्य्यात् द्वौ प्रथमायां पर्य्यायौ स्याताम् अथ चत्त्रायतनीयां मध्यमायां अयमपि तथाष्टिनो विशेषः द्विकास्तु तस्य पर्य्यायाः एषा ब्रह्मायतनीया एषा चत्त्रायतनीया ॥ ४ ॥

पूर्व्वयोः पूर्व उत्तरयोरुत्तर एवं विहितावपराविति शाण्डिल्यः † ॥ ५ ॥

पूर्व्वयोः स्तोत्रीययोः पूर्वः पर्य्यायः स्यात् उत्तरयोः स्तोत्रीययोरुत्तरः पर्य्यायः स्यात् अपरावपि पर्य्यायौ एवं विहितौ पूर्व्वयोः पूर्व उत्तरयोरुत्तर इति एवं शाण्डिल्य आचार्य्यो मन्यते एष द्वितीयः प्रकारोऽष्टिनः ॥ ५ ॥

पूर्व्वयोर्द्वितीयः पृथक्स्तोत्रीयास्वितर इति धानञ्जप्यः †॥६॥

पूर्व्वयोः स्तोत्रीययोः प्रथमद्वितीययोर्द्वितीयः पर्य्यायः स्यात् इतरे पर्य्यायाः प्रथमतृतीयचतुर्थाः पृथक्स्तोत्रीयासु स्युः एवं धानञ्जप्य आचार्य्यो मन्यते एष तृतीयः प्रकारोऽष्टिनः ॥ ६ ॥

द्वादशे व्याख्यातौ प्रथमोत्तमौ मध्यमौ द्विकौ पूर्व्वयोः पूर्व उत्तरयोरुत्तरः ‡ ॥ ७ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

द्वादशे स्तोमे व्याख्यातौ प्रथमोत्तमौ पर्य्यायौ द्वादशप्रकरण एव द्वादशे तृचभागास्थानेषु द्विका विष्टावा इति मध्यमौ पर्य्यायौ द्विकौ स्यातां प्रथमद्वितीययोः स्तोत्रीययोः मध्यमयोः पर्य्याययोः पूर्वः स्यात् द्वितीयतृतीययोरुत्तरः ॥ ७ ॥

षोड़शे चत्वारो द्वादशपर्यायास्तेषां मध्यमौ सदृशौ* ॥ ८ ॥

षोड़शे स्तोमे द्वादशस्तोमवच्चत्वारः पर्य्यायाः स्युः तेषां मध्यमौ पर्य्यायौ सदृशौ समानरूपौ विंशः स्तोमः आर्भव एव तत्र पर्य्याय-क्लृप्तिर्नोक्ता ॥ ८ ॥

चतुर्विंशे चत्वारः षट्काः पर्याया द्विकविष्टावाः † ॥ ९ ॥

चतुर्विंशे स्तोमे चत्वारः षट्काः पर्य्याया द्विकविष्टावाः स्युः ॥ ९ ॥

पृथक्तृचेषु पर्यायाः स्युः ‡ ॥ १० ॥

चतुर्षु तृचेषु वारवन्तीयमग्निष्टोमसाम पठितं तेषां प्रयोगः पठितो मशकेनैव विकल्पार्थः पुनरारम्भः पृथङ्नानेत्यर्थः तृचे तृचे पर्य्यायः स्यात् ॥ १० ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणीये विशेषोऽस्ति ।

द्वयोर्द्वयोर्वा व्यत्यासम्* ॥ ११ ॥

द्वयोर्द्वयोर्वा तृचयोः पर्य्यायः स्यात् प्रथमद्वितीययोः प्रथमः पर्य्यायः तृतीयचतुर्थयोः द्वितीयः पर्य्यायः पुनः प्रथमद्वितीययोस्तृतीयः तृतीयचतुर्थयोश्चतुर्थः अत्र यथास्थानं स्तोत्रीयाः एष व्यत्यासः ॥११॥

यज्ञायज्ञीयस्तु वा प्रथमः प्रथमासु च यज्ञायज्ञीयप्रथमायाꣳसाकमश्वस्तु परमध्यमयोश्च द्वितीयः पूर्वयोश्च मध्यमयोर्हारिवर्णस्तु तैरश्च्योत्तमायाञ्च तृतीयः पूर्वेषाञ्चोत्तमासु तैरश्च्यस्तु चान्त्यः† ॥ १२ ॥

अयं तृतीयः प्रकारो यज्ञायज्ञीयस्य तिस्रः साकमश्वहारिवर्णतैरश्च्यानामाद्यास्तिस्रः एष तावत् प्रथमः पर्य्यायः यज्ञायज्ञीयस्य प्रथमः साकमश्वस्य च स्तिस्रः हारिवर्णतैरश्च्ययोर्मध्यमे द्वे एष द्वितीयः पर्यायः यज्ञायज्ञीयसाकमश्वयोर्मध्यमे द्वे ऋचौ हारिवर्णस्यर्चस्तिस्रः तैरश्च्यस्योत्तमा ऋक् एष तृतीयः पर्यायः यज्ञायज्ञीयसाकमश्वहारिवर्णानां समुत्तमास्तिस्रस्तैरश्च्यर्चः सर्वा एष उत्तमः पर्यायः एतासु सर्वासु वारवन्तीयमेव स्यात् सर्वेष्वेतेषु द्विका विष्टावाः ॥ १२ ॥

उपोत्तमो वा द्विकविष्टावोऽश्वमेधेऽष्टादशादितरे‡ ॥१३॥

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम् विशेषश्च कृतः ।

‡ द्राह्यायणोऽप्येवम् ।

लाघविक आचार्यः प्रसङ्गेन ब्रवीति अश्वमेधेऽपि प्रथमेऽहनि चतुष्टोमाः स्तोमाः तत्राग्निष्टोमसाम्नि चतुर्विंशे स्तोमे चत्वारः षट्काः पर्याया द्विकविष्टावाः स्युः अथवा उपोत्तम एव द्विकविष्टावः स्यात् प्रथमद्वितीयचतुर्था अष्टादशास्त्सर्वे भवन्ति पर्यायक्रमात् ॥ १३ ॥

पञ्चदशपर्यायौ पूर्वावेकविꣳशस्योत्तराविति वोत्तराविति वा* ॥ १४ ॥

तत्रापि आहीनिके चतुष्टोमे अग्निष्टोमसाम्नि चतुर्विंशे स्तोमे चत्वारः षट्काः पर्याया द्विकविष्टावाः स्युः अथवा पञ्चदशस्य प्रथमद्वितीयौ पर्यायौ स्याताम् एकविंशस्य तृतीयचतुर्थौ इति विकल्पः ॥ १४ ॥

इति षष्ठस्य अष्टमी कण्डिका ।

---

अथ नवमी कण्डिका ।

छन्दो दैवतसामान्तयोगान्व्याख्यान् ब्रुवते यथा षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य* ॥ १ ॥

अश्वमेधे उक्तं स्तोमविधानं साम्प्रतं स्तोत्रकल्पानां न्याय उच्यते येन स्तोत्राणि कल्पयितव्यानि अत्रोच्यते किमिदं यावता मशकेन गवामयनादीनां सहस्रसंवत्सरान्तानां ज्योतिष्टोमषड्ह-

---

* द्राह्यायणेऽप्येवम् ।

द्वादशाहविचाराणाञ्च सर्वेषां निरवशेषेण स्तोत्रविधिः कल्पितः परं नः प्रमाणं मशकः तत् किमिदं पिष्टपेषणं क्रियते स्तोत्रकल्पनविध्यर्थं आरम्भ इति उच्यते, सत्यमेतदेवं किन्तु अनुब्राह्मणिकानां अहर्योगं गृहीत्वा स्तोत्रविधिः कल्पितो मशकेन तत्र ये ताण्डके प्रवचने आम्नातास्तेषां स्तोत्रविधिः कल्पितः चुद्रकृप्तिस्त्व अस्य त्वाचार्यस्य प्रतिज्ञा सर्वक्रत्वधिकार इति तद् ये शाखान्तरे दृष्टाः भूः सर्वमेधचतुर्थसारस्वतादयस्तेषां स्तोत्रविधिः कल्पयितव्यः सोऽयमाचार्यस्तन्न्यायार्थं शास्त्रमारभते छन्दोदैवतसामान्तयोगानि छन्दांसि च दैवतानि च सामान्ताश्च छन्दोदैवतसामान्तास्तेषां छन्दोदैवतसामान्तानां योगाः छन्दोदैवतसामान्तयोगाः अयं योगशब्दः प्रत्येकशः सम्बध्यते छन्दोदैवतसामान्तयोगान्न्याय्यानाचार्यौ ब्रूवते न्यायादनपेतान्न्याय्यान् यथा षोड़शिमतोऽतिरात्रस्य ज्योतिष्टोमस्य छन्दसां तावद्योगो गायत्रं प्रातःसवनं छन्दः माध्यन्दिनः पवमानो गायत्रो बृहतीत्रिष्टुबिति बार्हतानि पृष्ठानि गायत्रीषु वामदेव्यम् आर्भवे पञ्च छन्दांसि गायत्री ककुबुष्णिगनुष्टुब्जगतीति अग्निष्टोमसाम्नि प्रथमा बृहती ककुभावुत्तरे गायत्रं प्रथममुक्थं ककुभं द्वितीयं त्रिच्छन्दःसु तृतीयं स्वरानुष्टुभि षोड़शी आनुष्टुभी रात्रिः बार्हतः सन्धिः ककुबुत्तर्येण अथ दैवतानि सौम्याः पवमानाः आग्नेयं प्रथममाज्यम् मैत्रावरुणं द्वितीयम् ऐन्द्रं तृतीयम् ऐन्द्राग्नं चतुर्थम् ऐन्द्राणि सर्वाणि पृष्ठानि आग्नेयमग्निष्टोमसाम आग्नेयं प्रथममुक्थम् ऐन्द्रे परे उक्थे ऐन्द्रः षोड़शी ऐन्द्री रात्रिः त्रिदेवत्यः सन्धिः अग्निरुषा अश्विनाविति अथ सामान्ताः प्रातःसवने तावत्स्वारं गायत्रं

माध्यन्दिने खारं गायत्रं आमहीयवरौरवयौधाजययाग्नानि निधनवन्ति बहिर्णिधन इड़ा त्रिणिधनपदनिधनस्वराणां यथासंख्येन रथन्तरं निधनवत् वामदेव्यं हाइकारखारं नौधसम्पदनिधनं कालेयमिड़ानिधनं आर्भवं गायत्रं खारं संहितं पदनिधनं सफं हाइकारखारं पौष्कलं पदनिधनं श्यावाश्वं हाइकारखारम् आन्धीगवं मध्ये निधनं ऐड़च्च कावं पदानुखार यज्ञायज्ञीयं वाङ्निधनं प्रथमसुक्तं साकमश्वं हाइकारखारं सौभरं बहिर्णिधनं नार्मेधं हाइकारखारं रात्रिरविकृतैवेति कल्पना आहीनिकं विशेषमुक्त्वा एष न्यायः सर्व एव ज्योतिष्टोमस्य छन्दोदैवतसामान्तयोगः ॥ १ ॥

उक्थोत्तमेऽनुष्टुभो न्याय्याः* ॥ २ ॥

उक्थानामुत्तमे सामि अनुष्टुभ एव ऋचस्ता न्याय्याः एवं मशके नोक्थान्तेषु कल्पना कृता ॥ २ ॥

विच्छन्दसस्तु वचनात्* ॥ ३ ॥

विच्छन्दस एव भवन्त्युक्थान्ते कस्मात् वचनात् प्रकरणेनारभ्य विहिताः अनुष्टुभो विप्रकरणे अपरे ब्रुवते अनुष्टुभः सर्वत्र भवन्त्युक्थान्त एव विच्छन्दसस्तु यत्र वचनं तत्र भवन्तीत्यर्थः ॥ ३ ॥

यद्देवत्यास्तु स्तुवते सा स्तोत्रदेवता* ॥ ४ ॥

यद्देवत्यास्वृचु स्तोत्रेण स्तुवन्ति सा स्तोत्रदेवता तत् किमिद-

---

* द्राह्यायणेऽप्येवम् ।

मुच्यते एवं श्रुतिः अथ खल्वाशीः समृद्धिरुपसरणानीत्यधिकृत्य यां देवतामभिष्टोष्यं स्यात् तां देवतामुपधावेदिति इह च सवनदेवता आनुवादस्तोत्रदेवता अपि श्रूयते यथा वसूनां प्रातःसवनं रुद्राणां माध्यन्दिनं सवनमादित्यानाञ्च विश्वेषाञ्च देवानां तृतीयसवनमिति अन्यो ज्योतिषो दैवतयोगः तत्रायं संशयः किं सवनदेवता तेनोपदिश्यते अथवा स्तोत्रदेवता अथ ज्योतिषं दैवतयोगं गृहीत्वोपास्यामह इति एतस्मिन् संशय आह यद्दैवत्यासु स्तुवते सा स्तोत्रदेवतेति भक्तिमात्रं सवनदेवता ॥ ४ ॥

अन्वध्यायमपवादनिशामनम्* ॥ ५ ॥

इहोक्तं छन्दोदैवतसामान्तयोगान् न्याय्यान् ब्रुवते यथा षोड़शिमतोऽतिरात्रस्य ज्योतिष्टोमस्येति अन्यत्राग्नेयेषु सर्वाणि स्तोत्राणि ब्रुवते यथाग्निष्टुत्सु ऐन्द्रीषु भवन्तीति सर्वाणि स्तोत्राणि ऐन्द्रीषु भवन्ति तथा वैश्वदेवीषु भवन्तीति श्रुत्यन्तरं तत्किमेषां स्तोत्राणामाग्नेय्यादिषु क्रियमाणानां या एव स्तोत्रदेवता न्याय्या निर्दिष्टा ज्योतिष्टोमे ता एव भवन्ति अग्न्यादयो गुणभूताः यथेन्द्रो गार्हपत्यमुपतिष्ठत इति अग्निरेव भवति तत्र प्राधान्येन तत् श्रुतेः इन्द्रो गुणभूतः एवं तत् यथाग्न्यादिदेवताभिः तन्न्यायस्तोत्रदेवतानां प्रत्याम्नाय इति एतस्मिन् संशय आह अन्वध्यायमपवादनिशामनमिति अध्यायमनु अन्वध्यायं अन्वध्यायमपवादो निशामयितव्यः अन्वध्यायं न्याय्यानां छन्दोदैवतसामान्तानामपवादः यथा छन्दसां

---

* द्राह्यायणोऽप्येवम् ।

तावत् जगत्यः प्रतिपदो भवन्ति जगतीनां लोके त्रिष्टुभस्त्रिष्टुभां गायत्र्यः त्रिष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां लोके जगत्यो जगतीनां गायत्र्य इति तथा देवतानामपवादः अन्वध्यायमपवादं निशामयित्वा प्रमाणीकर्त्तव्यः गीतेश्च प्रत्यन्वध्यायमपवादनिशामनम् अथ यत्क्वथितमिव निरुदितमिव सा वाक् शवह्नः क्षिप्रं मरिष्यतीति विद्याद्यस्तथाधीतेऽथ यदा क्रन्दितमिव निष्क्रन्दितमिव सा मित्रह्नः सर्वज्यानिज्ञ्रास्यतीति विद्याद्यस्तथाधीत इत्येतदादिना चापवादेन अन्वध्यायमपवादनिशामनम् ॥ ५ ॥

स्वाराणि हाइकारस्वारपदानुस्वाराणि* ॥ ६ ॥

इह सामान्ता उच्यन्ते वक्ष्यति सर्वेषां तुल्यसन्निपाते जामीति स्वरो येषां निधनं तानि स्वाराणि तानि द्विविधानि हाइकारस्वाराणि पदानुस्वाराणि च यथा वामदेव्यं हा इकारस्वारम् ऊशनं पदानुस्वारम् ॥ ६ ॥

तेभ्योऽन्यान्यैड़वाङ्निधनेभ्यश्च निधनवन्ति* ॥ ७ ॥

तेभ्यः स्वारेभ्य ऐड़वाङ्निधनेभ्यश्च यान्यन्यानि सामानि तानि निधनवन्तीत्युच्यते यथा नैधसादीनि ऐड़ानि रैरवकालेयादीनि ॥ ७ ॥

सर्वेषां तुल्यसन्निपाते जामि वाचोऽन्यत्र † ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

सर्वेषामेव तेषां स्वारादीनां तुल्यसन्निपाते समाननिधनसन्निपाते जामि भवति जाम्यतिरेकनामव्यालिशस्य वासमानजातीयस्य वोपजनः वाङ्निधनयोरन्यत्र जामि भवति वाङ्निधनयोस्तुल्यसन्निपातेन जामि भवति यथानुरूपाग्निष्टोमसाम्नि द्वादशाहे यज्ञायज्ञीयमार्भवान्त्यकमेव बृहदग्निष्टोमसाम ॥ ८ ॥

तन्न कुर्यादनादेशे* ॥ ९ ॥

तज्जामि न कुर्यादनादेशे आदेशे यथादेशं यथासर्वस्वारे पृष्ठे ॥ ९ ॥

दशरात्रात् षाड़हिकान्यष्टमनवमयोस्तैतान्यहीनतन्त्राणि* ॥ १० ॥

कल्पनान्यायः क्लृतः अथाऽहीनेषु कल्पयितव्येषु दशरात्रात् षाड़हिकानि तन्त्राणि अष्टमनवमयोश्चाह्नोः अहीनकल्पना प्रत्येतव्या ॥ १० ॥

ज्योतिषश्च गोश्चैकाहिके* ॥ ११ ॥

एकाहिकतन्त्रे ज्योतिस्तन्त्रञ्च गोस्तन्त्रं रथन्तरपृष्ठेष्वेकाहेषु कल्पयितव्येषु ज्योतिस्तन्त्रं बृहत्पृष्ठेषु गोस्तन्त्रम् ॥ ११ ॥

कल्पसप्रायाण्युक्तसामानि यत्र समवयन्ति तदाग्नेस्तन्त्रं यथाभिचरणीयेषु* ॥ १२ ॥

---

* द्राह्यायणेऽप्येवम् ।

कल्पसमानप्रायाणि द्रव्याणि यत्र यस्मिन् समवयन्ति तदाग्नीस्तन्त्रमित्युच्यते यथाभिचरणीयेषु क्रतुषु यत्र यत्र समानकल्पप्रायं द्रव्यं तदाग्नीस्तन्त्रमित्येवं द्रष्टव्यं यथा वैश्वजितं तन्त्रम् उपहव्यं तन्त्रं महाव्रतं तन्त्रम् ॥ १२ ॥

**भूयिष्ठं तन्त्रलक्षणम्* ॥ १३ ॥**

किं पुनस्तन्त्रमित्युच्यते भूयिष्ठं तन्त्रलक्षणमिति यत्र ज्योतिष्टोमे भूयिष्ठं द्रव्यं प्रयुज्यते तत् ज्योतिस्तन्त्रं एवं गोस्तन्त्रमेवं षाड़ह्निकन्तन्त्रमित्युच्यते ॥ १३ ॥

**उत्तरयोः सवनमुखीये गायत्र्याविति गौचिवृक्षिः* ॥१४॥**

उत्तरयोः पवमानयोर्मध्यन्दिनार्भवयोर्ये सवनमुखीयगायत्र्यौ ते तन्त्रमिति एवं गौचिवृक्षिराचार्य्यो मन्यते ॥ १४ ॥

**मध्यन्दिनीयान्वाचार्य्याणाम्* ॥ १५ ॥**

मध्यन्दिने भवा मध्यन्दिनीया सा मध्यन्दिनीया गायत्री आचार्य्याणां तन्त्रमभिप्रेतम् ॥ १५ ॥

**द्विरात्र प्रभृतिष्वहीनेषु प्राक् षड़हेभ्य उत्तममुत्तमैकाह्निकमिति राणायनीपुत्रः* ॥ १६ ॥**

द्विरात्रप्रभृतयो ये अहीनाः प्राक् षड़हेभ्यस्तेषु सर्वेषु उत्तममुत्तममहः ऐकाह्निकमित्येवं राणायणीपुत्र आचार्य्यो मन्यते ॥ १६ ॥

---

* द्राह्यायणोऽप्येवम् ।

सर्वाण्याहीनिकानीति वैयाघ्रपद्यः* ॥ १७ ॥

द्विरात्रप्रभृतिष्वहीनेषु सर्वाण्याहीनिकानीत्येवं वैयाघ्रपद्य आचार्यो मन्यते ॥ १७ ॥

अहीनैकाहसमासन्तु लामकायनः* ॥ १८ ॥

द्विरात्रप्रभृतिष्वहीनेषु अहीनैकाह समासं लामकायन आचार्यो मन्यते मिश्रत्वाद्द्रव्यस्य ॥ १८ ॥

इति षष्ठस्य नवमी कण्डिका ।

---

अथ दशमी कण्डिका ।

अवसानं प्रस्तावान्तलक्षणमविभाग्यानाम † ॥ १ ॥

उक्तः कल्पनान्यायः साम्प्रतं पञ्चविधत्वमुच्यते स्तोत्रगतस्य साम्नः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयस्तत् पाञ्चविध्यमित्युक्तं तत्र प्रथमा भक्तिः प्रस्तावः स तावदुच्यते अवसानं प्रस्तावान्तलक्षणमविभाग्यानाम् अवस्यन्ति तस्मिन्नित्यवसानं विरामोऽवसानं तदवसानं प्रस्तावान्तलक्षणं प्रस्तूयतेऽनेनेति प्रस्तावः प्रस्तावस्यान्तः प्रस्तावान्तः तस्य प्रस्तावान्तस्यावसानं लक्षणं येन लक्ष्यते तल्लक्षणम्

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये एतस्मात् पूर्व्वत्र कानिचित् सूत्राण्यधिकानि वर्त्तन्ते । तथा अत्रापि विशेषस्यास्ति ।

अविभाग्यानामेष धर्मः विभाग्यानान्तु वक्ष्यति यथा च विभाग्यानि भवन्ति तथा वक्ष्यति अयमर्थः आदितः आरभ्य विरामान्तः प्रस्ताव इति लक्षणग्रहणं न अवसानमेव प्रस्तावः अवसानेन प्रस्तावो लक्ष्यते ॥ १॥

चतुरक्षरः पूर्वे वारवन्तीये* ॥ २ ॥

पूर्वस्मिन् वारवन्तीये चतुरक्षरः प्रस्तावः ॥ २ ॥

तथा वाजभृति* ॥ ३ ॥

यथा वारवन्तीये चतुरक्षरः प्रस्तावः तथा वाजभृति प्रकार-वचनं चतुरक्षरतामभिप्रेत्य तत्रापि प्राप्तमवसानं तस्मिन् प्राप्ते चतुरक्षरमेवादिशति ॥ १३ ॥

कार्णश्रवसाजिगसुरूपाणाञ्च* ॥ ४ ॥

एतेषां कार्णश्रवसाजिगसुरूपाणाञ्च चतुरक्षर एव प्रस्तावः प्रत्येकं एषु अनेकधा प्राप्तत्वात् अवसाने नियमः ॥ ४ ॥

पदं वाजिगप्रभृतीनाम् † ॥ ५॥

पादिको वा प्रस्तावः आजिगप्रभृतीनां त्रयाणां आजिगस्य सुरूपयोश्च ॥ ५ ॥

---

* द्राह्यायणीये छेदविषये विशेषोऽस्ति ।

† द्राह्यायणोऽप्येवम् ।

स्तोमान्त आभीशवयोः* ॥ ६ ॥

आभीशवयोः साम्नोः स्तोभान्तः प्रस्तावः कर्त्तव्यः कस्मिन् प्राप्त इदमारभते उच्यते तयोर्हि प्राक् स्तोभादिरतं तस्मिन्नवसाने प्राप्त आह स्तोमान्त आभीशवयोरिति ॥ ६ ॥

अभ्यस्तेनोत्तरस्य* ॥ ७ ॥

उत्तरस्याभीशवस्य अभ्यस्तेन स्तोभान्तेन प्रस्तावान्तो भवति ॥७॥

वाग्वाम्ने* ॥ ८ ॥

वाम्नेवागन्तः प्रस्तावो भवति ॥ ८ ॥

हाउकारश्च्यावने* ॥ ९ ॥

च्यावने हाउकारान्तः प्रस्तावो भवति ॥ ९ ॥

षोडशाक्षरो नानदस्य* ॥ १० ॥

नानदस्य षोड़शाक्षरः प्रस्तावो भवति ॥ १० ॥

तथा गोश्रृङ्गसञ्जययोर्यच्च राव्यां दैवोदासम्† ॥ ११ ॥

तथेति षोड़शाक्षर इत्यर्थः गोश्रृङ्गसञ्जययोदवोदासे च राश्चिषाम्नि दैवोदासानां राव्यामनेकतामुपलभ्याह यच्च राव्यां दैवोदासमिति ॥ ११ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

षट्त्रिंशदक्षरर्षभस्य रैवतस्य* ॥ १२ ॥

ऋषभस्य रैवतस्य षट्त्रिंशदक्षरः प्रस्तावः पादाभ्यासेन परिसंख्यानं करोति ॥ १२ ॥

सर्वेषामोङ्कारेणोद्गीथादानम्* ॥ १३ ॥

प्रस्तावन्याय उक्तः साम्प्रतमुद्गीथलक्षणमुच्यते सर्वेषां साम्नामोङ्कारेणोद्गीथस्यादानम् आदावोङ्कारं कृत्वा तत उद्गीथमाददीत प्रस्तुतं वै सामावसीदति तदुद्गातोङ्कारेणोत्तभ्नोतीति अथ सर्वग्रहणं किमर्थमिति चेत् उच्यते, अविभाग्यानामिति प्रकृतम् अतः सर्वग्रहणं क्रियते कथं विभाग्यानाञ्चाविभाग्यानाञ्चेति ननूक्तं त्वया प्रस्तुतं वै सामावसीदतीति तदुद्गातोङ्कारेणोत्तभ्नातीति तदेतद्विभाग्येषु चाविभाग्येषु च तुल्यकारणं तस्मात् सर्वसामसु भविष्यत्येवोङ्कारेणोद्गीथादानमिति उच्यते, अत्र प्रस्तावनिमित्तः ओङ्कारः महाग्निषु ते खल्विमे बहवः प्रस्तावाः कथमोङ्कार इति प्रस्तावनिमित्त ओङ्कार इत्येके प्रस्तावं ओङ्कारेणाददीत स्तोत्रीयासु स ओङ्कारः अप्रस्तावासु स्तोत्रीयासु न प्राप्नोति सोऽयमाचार्य्यः सर्वशब्दं करोति कथं सति च प्रस्तावेऽसति च सर्वेषामोङ्कारेणोद्गीथादानमिति नह्योङ्कारस्य प्रस्तावो निमित्तम् उद्गीथएवोङ्कारस्य निमित्तमिति तथा निदानकारः प्रथम एव प्रस्तावे इत्यपरं स्तोत्रीयाया एतान्यङ्गानि भवन्ति सकृदेवतु स्तोत्रीयाया ओङ्कारो भवति उदाहरणमत्र सन्तनिनि ॥१३॥

---

* द्राह्यायणोऽप्येवम् ।

प्रथमाक्षरलोपन्तु धानञ्जप्यः* ॥ १४ ॥

धानञ्जप्य आचार्य्य आह अस्तु सर्वेषां साम्नामोङ्कारेणोद्गीथादानं किन्तु प्रथमस्याक्षरस्य लोपोऽस्तु एवमतिरेको न भविष्यतीति ॥१४॥

अलोपꣳ शाण्डिल्यः* ॥ १५ ॥

शाण्डिल्य आचार्य्य अलोपं मन्यते उद्गीथादावक्षरस्य रसो वा एष साम्नां यदोङ्कारो नैतेनातिरेकोऽस्तीति ॥ १५ ॥

स्वरादिषु तमेव स्वरमोङ्कारो कुर्यादागन्तुमोङ्कारं व्यञ्जनादिषु † ॥ १६ ॥

स्वरादिषूद्गीथेषु तमेवाद्यं स्वरमोङ्कारीकुर्य्यात् अनोङ्कारमोङ्कारं करोति ओङ्कारीकरोति यथा रौरवयौधाजययोर्व्यञ्जनादिषु यदागन्तुमोङ्कारं कुर्य्यात् यथा महीयवीश्यनादिषु ॥ १६ ॥

सर्वत्र त्वेवागन्तुं दध्यात्* ॥ १७ ॥

सर्वोद्गीथेषु स्वरादिषु व्यञ्जनादिषु च आगन्तुमोङ्कारं विदध्यात् ॥ १७ ॥

अग्रस्तमव्यस्तमविलम्बितमनम्बूकृतमुरसि प्रतिष्ठितमदन्त्याघातिनꣳ शब्दमुच्चारयन्नुद्गायेदिति धानञ्जप्यः* ॥ १८ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

न ग्रस्तमग्रस्तम् अव्यस्तमितश्चेतश्चाविवच्चितम् अविलम्बितं न विलम्बितमविलम्बितं तिस्रो वृत्तयः क्षिप्रमध्यविलम्बिताः प्रयोगवृत्त्या मध्यमया अनम्बूकृतं न अम्बूकृतं मुखाद्विप्रुषः अनिर्गमयन् उरसि प्रतिष्ठितम् उरसि कृताधारम् उरसि कृतमूलं स्ववायुकोष्ठादुच्चरन् उरसि विस्तृतः कण्ठेऽधिष्ठितः आस्ये यर्ण्णो भवति अदन्ताघातिनं दन्तैराघातमकुर्वन् उद्गायेदित्येवं धानञ्जप्य आचार्य्यो मन्यते ॥ १८ ॥

प्रत्यक्षपरोक्षक्षिप्रचिरन्यस्तोदात्तकृष्टाकृष्टानां येन सᳲस्वरेत् तत् कुर्यात्* ॥ १९ ॥

प्रत्यक्षं यथर्चं परोक्षमयथर्चं क्षिप्रमवृद्धं चिरं वृद्धं न्यस्तमनुदात्तम् उदात्तमुच्चैःस्वरं कृष्टं कर्षणयुक्तं कृष्टेष्वेवाधिकार इति तद्विलक्षणयुक्तं न कृष्टमकृष्टं एतेषां प्रत्यक्षादीनां भावानां येन संस्वरेत् तद्गानं कुर्य्यात् एतदुक्तं भवति उद्गातारः सर्वे सनियमगीतयः स्युरिति गीतिसङ्करं न कुर्युरिति भक्त्यन्तरसंहितान्तरं न स्यादित्येतदुक्तं भवति ॥ १९ ॥

सर्वन्तु लघीयसा † ॥ २० ॥

सर्व्वं त्वेतद्गानं विधानेन लघीयसा कुर्य्यात् ॥ २० ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

अमात्रालोपेन* ॥ २१ ॥

किन्तु लघीयसा विधानेन कुर्य्यात् मात्रालोपं नैव कुर्य्यात् ॥२१॥

पदादिः प्रतिहारस्थानꣳसर्वत्र † ॥ २२ ॥

उक्तमुद्गीथविधानं साम्प्रतं प्रतिहारलक्षणमुच्यते पदस्यादिः पदादिः सपदादिः प्रतिहारस्य स्थानं सर्वेषु प्रतिहारेषु प्रतिहारा आदिश्यन्ते द्व्यक्षरत्र्यक्षरचतुरक्षरादयः तेषां सर्वेषां पदादिः स्थानम् ॥२२॥

पदाऽनिर्देशे चोत्तमे पदे † ॥ २३ ॥

यत्र तु पदं नादिश्यते द्वितीये वा तृतीये वेत्येतदादिना तत्रोत्तमे पदे प्रतिहारस्य स्थानं प्रत्येतव्यम् ॥ २३ ॥

संख्याविषये चाक्षराधिकारः † ॥ २४ ॥

यत्र तु संख्यामात्रं निर्द्दिश्यते तेषां द्वे तेषां चत्वारि षड़ित्येतदादि तस्मिन्संशये आर्चिकानामक्षराणामधिकारो द्रष्टव्यः विशयः संशयः ॥ २४ ॥

अन्तःप्रतिहारꣳस्तोभान प्रतिहर्त्ता ब्रूयात † ॥ २५ ॥

ये स्तोभाः प्रतिहारस्यान्तर्वर्त्तन्ते प्रतिहारमध्ये तान् प्रतिहर्त्ता ब्रूयात् स्तोभान् कुर्य्यात् ननु अन्तः प्रतिहारं स्तोभान् प्रतिहर्त्तु-

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

रित्येवं सिद्धे किमिदं ब्रूयादिति उच्यते येऽप्यन्तः प्रतिहारं प्रस्तावाः स्तोभास्तान् प्रतिहर्त्ता ब्रूयादिति ॥ २५ ॥

ऊर्ध्वञ्चार्चिकाव्यवेतान्* ॥ २६ ॥

ऊर्द्धञ्च ये प्रतिहारस्य स्तोभाः आर्चिकेन अव्यवेताः अव्यवहिताः तांस्चैवं ब्रूयात् ॥ २६ ॥

अष्टाक्षरपदोत्तमानां चत्वार्यन्यत्र पङ्क्तिभ्यः* ॥ २७ ॥

या अष्टाक्षरपदोत्तमा ऋचः तासाञ्चत्वार्य्यक्षराणि प्रतिहारः पङ्क्तीनामन्यत्र उक्तं पदादिः प्रतिहारस्थाणं सर्वत्र पदानिर्द्दिशे चोत्तमे पद इति ॥ २७ ॥

तस्मिन्न्याय्यसमाज्ञा* ॥ २८ ॥

तस्मिन्नेवं लक्षणे प्रतिहारे न्याय्यसमाज्ञा न संन्याय्य इत्युच्यते वक्ष्यत्ययं तत्र तत्र न्याय्यो न्याय्य इति अथ समाज्ञेति किमर्थमुच्यते अचतुरक्षरेऽपि कदाचित् न्याय्यसमाज्ञा भवति यथा राणायनीये मधुश्च्युन्निधने ॥ २८ ॥

पदान्तमविशेषेणोपोत्तमात् पदात् प्रतीयात्* ॥ २९ ॥

पदान्तमविशिषेणोच्यमानं पदान्त इति उपोत्तमात्पदात्

---

* द्राह्यायणोऽप्येवम् ।

प्रतीयात् यत्र पुनर्विशेषेन तत्र यथादेशं भवति उत्तमे तु पदान्तः मध्यमयोः पदयोः शात्त्यसाममेधातिथयोः पदान्त इति ॥ २९ ॥

इति षष्ठस्य दशमी कण्डिका ।

---

अथ एकादशी कण्डिका ।

एष न्यायोऽनादेशे* ॥ १ ॥

एषन्यायः प्रतिहारस्य योऽयमुक्तः पदादिः प्रतिहारस्थानमित्यत आरभ्य एषः प्रतिहारे विशेषेण अनादिश्यमाने न्यायः यत्र तु विशेषेण आदिश्येत तत्र यथादेशं स्यात् सौमेधस्यौर्णायवयोर्ऋषभस्य पावमानस्येनिधनस्य मार्गीयवस्यैतेषामुपरिष्टात् प्रतिहारस्योद्गाता स्तोभं ब्रूयात् ॥ १ ॥

सौमेधस्यौर्णायवयोर्ऋषभस्य पावमानस्य ईनिधनस्य मार्गीयवस्यैतेषमुपरिष्टात् प्रतिहारस्योद्गाता स्तोभं ब्रूयात्* ॥ २ ॥

एतेषां पञ्चानां साम्नां यः प्रतिहारस्योपरिष्टान्न्याय्यः प्राप्तः स्तोभः प्रतिहर्त्तुः ऊर्द्ध्वं चार्चिकाव्यवेतानिति तं उद्गाता ब्रूयात् ॥ २ ॥

न्याय्यप्रतिहाराणामिड़ासंहाराश्वसूक्तैड़स्वरवार्षाहरसा-

---

* द्राह्यायणेऽप्येवम् ।

रकौत्सानां गौराङ्गिरसस्य साम्नोऽभ्यासवतस्त्र क्रौञ्चस्याग्नि-मौयामस्यैतेषां पुरस्तात् प्रतिहर्त्ता* ॥ ३ ॥

न्याय्यप्रतिहाराणां सतां दृड़ानां संचारस्य आश्वसूक्तस्य ऐड़-स्वरस्य वार्षाहरस्यारण्ये गेयस्य स्वारकौत्सस्य गौराङ्गिरसस्य साम्नः अभ्यासवतस्त्र क्रौञ्चस्य अग्निमौयामस्य तेषां यथोद्दिष्टानां न्याय्य-प्रतिहाराणां विभाग्यन्यायेष्वप्येतेषु कथञ्चित् भवति ततस्तेषां न्याय्य-प्रतिहारतां नियमयति एतेषां पुरस्तात् प्रतिहारस्योद्गातुः स्तोभः प्राप्तः तं प्रतिहर्त्ता ब्रूयात् आदेशात् ॥ ३ ॥

सꣳहितमार्षभꣳशाकलं वाजदाव्र्यं:स्वारꣳसैमित्रं पद-निधने काण्वरोहितकूलीये यौक्ताश्वसौबर्णानामुत्तरे यौधा-जयनौधसमाष्कारनिधनं काण्वं यौक्तस्रुचन्तिरश्चीननिधन-मायास्यमिन्द्रस्य यशो वैश्वमुत्तरꣳसफं प्रमꣳहिष्ठीयं दीर्घं पौष्कलमान्धीगवं बृहदाग्नेयꣳश्यावाश्वत्रैशोके तेषां द्वे* ॥ ४ ॥

एतेषां संहितादीनां यथोद्दिष्टानां चतुर्विंशानां साम्नां द्वे द्वे अक्षरे प्रतिहारः परिभाषितः पदादिः प्रतिहारस्थानं सर्वत्र पदा-निर्द्देशे चोत्तमे पदे संख्याविषये चाक्षराधिकार इति एष सामान्यो-न्याय अनादेशे इति ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम् ।

पुरस्तात् स्तोभो यौक्ताश्वयोः पूर्वस्य* ॥ ५ ॥

यः पूर्वः स्तोभः उद्गातुर्न्यायप्राप्तः स प्रतिहर्तुर्भवति वचनात् ॥५॥

श्यावाश्वत्रैशोकयोः पदान्तः* ॥ ६ ॥

श्यावाश्वस्य त्रैशोकस्य च पदान्तो द्व्यचरः प्रतिहारः उक्तः पदान्तमविशिषेणपोत्तमात्पदात् प्रतीयादिति ॥ ६ ॥

अस्तोभस्तु श्यावाश्वस्य* ॥ ७ ॥

श्यावाश्वस्य त्वस्तोभः प्रतिहारः य उपरिष्टात् स्तोभः प्रतिहारस्य न्यायप्राप्तः प्रतिहर्त्तुः स उद्गातुर्भवेदिति वचनात् ॥ ७ ॥

ओङ्कारादिस्तृतीयचतुर्थाभ्यां प्राग्घिङ्कारादिशोविशीये* ॥ ८ ॥

ओङ्कारादिःप्रतिहारः तृतीयचतुर्थाभ्यामक्षराभ्यां प्राक् हिङ्कारात् उक्तमुत्तमे पद इति ॥ ८ ॥

हिङ्कारादिर्वा पञ्चमषष्ठाभ्याम्* ॥ ९ ॥

हिङ्कारादिर्वा प्रतिहारः तस्मिन्नेव पदे पञ्चमषष्ठाभ्यामक्षराभ्याम् इति ॥ ९ ॥

इति षष्ठस्य एकादशी कण्डिका।

---

* द्राह्यायणोऽप्येवम्।

अथ द्वादशी कण्डिका ।

**शौक्तनार्मेधे द्विप्रतिहारे* ॥ १ ॥**

शौक्तञ्च नार्मेधञ्च शौक्तनार्मेधे द्विप्रतिहारे कर्त्तव्ये ॥ १ ॥

**प्रथमनवमाभ्याᳬ शौक्तस्य* ॥ २ ॥**

उत्तमे पदे प्रथमेन चाक्षरेण नवमेन च प्रतिहारौ शौक्तस्य साम्नः ॥ २ ॥

**पदान्तश्चतुर्भिः पूर्वो नार्मेधस्य चतुर्भिरेव मध्यमैरुत्तरः* ॥ ३ ॥**

नार्मेधस्य चतुर्भिरक्षरैः पदान्तः पूर्वः प्रतिहारः चतुर्भिरेव मध्यमैरक्षरैरुत्तमपदस्य उत्तरः प्रतिहारः ॥ ३ ॥

**एकप्रतिहारं वोत्तरेण* ॥ ४ ॥**

एकप्रतिहारं वा नार्मेधं उत्तरेण यथोक्तेन चतुर्भिरेव मध्यमैरुत्तरइत्यनेन ॥ ४ ॥

**भासवैरूपयोर्गायत्रीसाम्नोः पदान्तो द्वाभ्यां भासे चतुर्भिरुत्तरस्य † ॥ ५ ॥**

भासस्य वैरूपस्य च गायत्रीसाम्नोः पदान्तः प्रतिहारो द्वाभ्यामक्षराभ्यां भासे चतुर्भिरक्षरैर्वैरूपस्य ॥ ५ ॥

**तृतीयेन पदेन यज्ञायज्ञीयनिधने सौहविषे* ॥ ६ ॥**

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

यज्ञायज्ञीयनिधने सैाहविषे तृतीयेन पदेन प्रतिहारः कर्त्तव्यः ।६।

आयन्तीयवरुणसामद्वैगताञ्जसां दश* ॥ ७ ॥

आयन्तीयञ्च वरुणसाम च द्वैगतञ्च अञ्जस्च ते आयन्तीयवरुणसामद्वैगताञ्जसः तेषां आयन्तीयवरुणसामद्वैगताञ्जसां दशाक्षराणि प्रतिहारः ॥ ७ ॥

तेषां पूर्वयोः सर्वं पदं द्वे च पुनरुक्तस्य* ॥ ८ ॥

तेषां चतुर्णां पूर्वयोः आयन्तीयवरुणसाम्नोः सर्वमुत्तमं पदं प्रतिहारः द्वे चाद्ये अक्षरे पुनरुक्तस्य पदस्य ॥ ८ ॥

द्वैगते पदान्तः* ॥ ९ ॥

द्वैगते दशाक्षरः पदान्तः प्रतिहारः ॥ ९ ॥

उपोत्तमस्य पदस्य पदादिरञ्जसः* ॥ १० ॥

अञ्जसः उपोत्तमस्य पदस्य पदादिर्दशाक्षरः प्रतिहारः ॥ १० ॥

विशोविशीयप्रभृतीनां वा नवानामुत्तमस्य पदस्यादौ द्वे* ॥ ११ ॥

विशोविशीयप्रभृतीनां वा नवानां साम्नां उत्तमस्य पदस्यादौ द्वे द्वे अक्षरे प्रतिहारः विशोविशीयस्य श्रौक्तनार्मेधयोर्भासवैरूपयोर्गायत्रीसाम्नोर्यज्ञायज्ञीयस्य निधनस्य सैाहविषस्य आयन्तीयवरुणसामद्वैगताञ्जसामित्येतेषां नवानाम्, अथोत्तमस्येति सिद्धे किमर्थं पुनर्ग्रहणम्, उच्यते उपोत्तमस्य पदस्य पदादिरञ्जस इत्येतत्प्रकृतम् ।११।

---

* द्राह्यायणोऽप्येवम् ।

हाइकारान्तो विशोविशीये* ॥ १२ ॥

विशोविशीये हाइकारान्तः प्रतिहारः योऽन्यो हाइकारस्योपरिष्टात् स्तोभः प्रतिहर्तुर्यथान्यायप्राप्तः स उद्गातुर्भवति ॥ १२ ॥

आयन्तीयवरुणसाम्नोरभ्यासादिः* ॥ १३ ॥

आयन्तीयस्य वरुणसाम्नस्य अभ्यासस्यादौ द्व्यक्षरः प्रतिहारः ॥१३॥

वामदेव्यꣳ स्वारꣳ शाकमश्वं पाष्ठौहन्निधनकामꣳ सत्रासाहीयं काक्षीवतं च्यावनं गायत्रीसामौशनं निधनवद्वैश्वमनसं तेषां पञ्चमषष्ठे विकल्पेते न्याय्येन विकल्पेते न्याय्येन* ॥ १४ ॥

एतेषां वामदेव्यादीनां नवानां साम्नां प्रत्येकमुत्तमे पदि पञ्चमषष्ठे अक्षरे न्याय्येन प्रतिहारेण सह विकल्पेते न्याय्यो वा भवत्येतेषु सर्वेषु द्व्यक्षरो वा पञ्चमषष्ठाभ्यामक्षराभ्यामिति ॥ १४ ॥

इति षष्ठस्य द्वादशी कण्डिका ।

इति षष्ठः प्रपाठकः समाप्तः ।

---

* द्राह्यायणेऽप्येवम् ।

## सप्तमः प्रपाठकः ।



अथ प्रथमा कण्डिका ।

**गूर्द्दः सौमेधं माधुच्छन्दसमौदलꣳ सौश्रवसमुत्तरं वार्त्रतुरमृषभो रैवतः कौत्समौष्णिहमातोषादीयं क्रोशमोकोनिधनꣳ स्वारꣳ सामराजं मारुतमौष्णिहमाक्षारꣳ सुज्ञानꣳ हारिवर्णꣳ सांवर्त्तञ्जागतं वरुणसाममरुतां धेनुसौम्मतं तेषां चत्वारि* ॥ १ ॥**

उक्तावेकद्विकौ अक्षरस्तु नास्ति अथ चतुरक्षर उच्यते एतेषां गूर्द्दप्रभृतीनां यथानिर्द्दिष्टानां प्रत्येकं चत्वार्य्यक्षराणि प्रतिहारः उक्तं पदादिप्रतिहारस्थानं सर्वत्र पदानिर्द्देशे चोत्तमे पदे संख्याविषये चाक्षराधिकार इति एवमर्थं तावत् सामान्यो न्यायप्राप्तः सर्वत्र एवं प्राप्ते विशेषमारभते ॥ १ ॥

**अभ्यासो गूर्दस्य* ॥ २ ॥**

द्वितीयपदे यन्मध्यमं चतुरक्षरमभ्यस्यते स प्रतिहारः ॥ २ ॥

**अभ्यासादिरुत्तरेषां त्रयाणाम्* ॥ ३ ॥**

उत्तरेषां त्रयाणां सौमेधमाधुच्छन्दसौदलानां यद्यत्पदमभ्यस्यते तस्य तस्याभ्यासादिश्चतुरक्षरः प्रतिहारः ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

**उत्तमानि सौश्रवसेऽस्तोभानि* ॥ ४ ॥**

सौश्रवसे उत्तरे उत्तमस्य पदस्योत्तमानि चत्वार्यक्षराणि अस्तोभानि प्रतिहारः ॥ ४ ॥

**अष्टौ वा वार्त्रतुरे* ॥ ५ ॥**

वार्त्रतुरे चत्वारि वा समाम्नान्यायप्राप्तानि अक्षराणि प्रतिहारः अष्टौ वा ॥ ५ ॥

**पूर्वयोश्च न्याय्यः* ॥ ६ ॥**

पूर्वयोश्च वार्त्रतुरस्य साम्न औद्दलसौश्रवसयोर्न्याय्यः प्रतिहारो भवति चशब्दो विभाषानुकर्षणार्थः यो वा पूर्वोक्तोऽभ्यासादिश्चतुरक्षरमिति न्याय्यो वा ॥ ६ ॥

**मध्यमं वचनमृषभे* ॥ ७ ॥**

ऋषभे रैवते तृतीये पदे यदुत्तमं चतुरक्षरमभ्यस्यते तस्य मध्यमं वचनं प्रतिहारः ॥ ७ ॥

**मध्यमान्युत्तरेषां पञ्चानाम्* ॥ ८ ॥**

कौत्समौक्ष्णिहम् इन्द्रं सुतेषु आतीषादीयं क्रोशमोकोनिधनं स्वारं सामराजमित्येतेषां उत्तमेषु पदेषु मध्यमं चतुरक्षरं प्रतिहारः ॥ ८ ॥

**प्राग्वाभ्यासादुत्तमानि कौत्से* ॥ ९ ॥**

---

* द्राह्यायणेऽप्येवम् ।

अथवा कौत्से पदस्योत्तमानि चत्वार्य्यक्षराणि प्रतिहारः स्यात् प्राग्वाभ्यासात् ॥ ९ ॥

**प्रथमानि वा सामराजस्य सपुरस्तात् स्तोभः* ॥ १० ॥**

सामराजस्य उत्तमे पदे प्रथमानि चत्वार्य्यक्षराणि प्रतिहारः स्यात् सपुरस्तात् स्तोभेन यथोद्दिष्टो वा ॥ १० ॥

**षड् वा पञ्चमप्रभृतीनि मारुते* ॥ ११ ॥**

मारुते यथोक्तो वा स्यात् अथवा पञ्चमादिष्वारभ्य षड़क्षरः प्रतिहारः स्यात् ॥ ११ ॥

**आश्वरथन्तरयोः पञ्च* ॥ १२ ॥**

आश्वे च रथन्तरे च पञ्चाक्षरः प्रतिहारः स्यात् पञ्चाक्षरेण रथन्तरस्य प्रतिहरतीति सिद्धे किं पुनरारभ्यते उच्यते, न्याय्येन विकल्पो माभूदिति चक्री यद्वत् ॥ १२ ॥

**वैदन्वते चाभ्यासवत्युत्तमे तु पदान्तः † ॥ १३ ॥**

वैदन्वते चाभ्यासवति स र्वं धा अ साहति पञ्चाक्षरः प्रतिहारः स्यात् अयन्तु विशेषः उत्तमे पदे पदान्तः ॥ १३ ॥

**तस्यादौ वा द्वे उभयतः स्तोभे † ॥ १४ ॥**

अथवा तस्योत्तमस्य पदस्य आदौ द्वेऽक्षरे उभयतः स्तोभे प्रतिहारः स्यात् ॥ १४ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्रा ह्यायणेऽप्येवं किन्तु छेदविषये विशेषोऽस्ति ।

तृतीयं वा* ॥ १५ ॥

अथवा तस्योत्तमस्य पदस्य तृतीयमक्षरं प्रतिहारः स्यात् ॥ १५ ॥

उभौ वैकः* ॥ १६ ॥

उभौ वा द्व्यक्षरैकाक्षरौ एकः प्रतिहारः स्यात् एकग्रहणं द्विप्रतिहारता माभूदिति ॥ १६ ॥

इति सप्तमस्य प्रथमा कण्डिका ।

---

अथ द्वितीया कण्डिका ।

आकूपारक्रौञ्चे गायत्रीसामनी देवातिथं गौषूक्तꣳ रौरवं द्विहिङ्कारं वामदेव्यमेकारान्तप्रस्तावं वैयश्वमरण्ये गेयꣳ शाक्करवर्णꣳ सौभरं बार्हद्गिरराये वाजीये स्वारमैध्मवाहं गौष्टङ्गꣳ हारायणं कौल्मलबर्हिषे जनित्रमुत्तरं वैतहव्यमिहवद्वामदेव्यं प्रतीचीनेडङ्काशीतं वैष्णवं पूर्वꣳ श्यैतꣳ सञ्जयं तेषाꣳ षट्* ॥ १ ॥

चतुरक्षरपञ्चाक्षरौ प्रतिहारावुक्तौ साम्प्रतं षड़क्षर उच्यते, आकूपारक्रौञ्चे गायत्रीसामनी सत्यनेकार्षेयाण्यनेकानि सामानि अत आकूपारक्रौञ्चादीनां विशेषमारभते गायत्रीसामनीत्येतदादि एतेषां सर्वेषां यथोद्दिष्टानां गृह्यमाणविशेषाणां षड़क्षरः प्रतिहारः स्यात् ॥ १ ॥

---

* द्राह्यायणेऽप्येवम् ।

अस्तोभावुत्तमयोः* ॥ २ ॥

उत्तमयोः साम्नोः श्यैतसञ्जययोः अस्तोभौ प्रतिहारौ स्याताम् अस्तोभाविति प्राप्तप्रतिषेधः ॥ २ ॥

प्रथमतृतीययोरुभयतः स्तोभौ* ॥ ३ ॥

प्रथमतृतीययोराकूपारदैवातिथयोः साम्नोरुभयतः स्तोभौ प्रतिहारौ स्यातां पुरस्तात् स्तोभार्थमारम्भः ॥ ३ ॥

प्रागौकारात् प्रथमे* ॥ ४ ॥

प्रथमे आकूपारे उपरिष्टात् स्तोभः प्रागौकारात्प्रतिहर्तुः स्यात् ॥ ४ ॥

हिङ्कारात्तृतीये* ॥ ५ ॥

तृतीये दैवातिथे हिंकारात् प्रागुपरिष्टात् स्तोभः प्रतिहर्तुः स्यात् ॥ ५ ॥

अप्रतिहारे पूर्वे स्तोत्रीये शाक्वरवर्णस्य* ॥ ६ ॥

अरण्ये गेयस्य शाक्वरवर्णस्य उत्तमायां स्तोत्रीयायां षड्‌ढरः प्रतिहारः स्यात् पूर्वे तु स्तोत्रीये अप्रतिहारे स्याताम् ॥ ६ ॥

दूहकारान्तऐध्मवाहे स्तोभः* ॥ ७ ॥

दूहकारान्तऐध्मवाहे प्रतिहारस्योपरिष्टात् स्तोभः स्यात् ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम्।

**सर्वो वा*** ॥ ८ ॥

सर्वो वा स्तोभः स्यात् ॥ ८ ॥

**प्रागोवायास्त्रिषूत्तरेषु*** ॥ ९ ॥

गौश्टङ्गहारायणकौल्मलबर्हिषेषु प्रतिहारस्योपरिष्टात् स्तोभः प्रागोवायाः स्यात् तदेव प्रतिहर्तुः स्यात् ॥ ९ ॥

**पौरुमद्गे च*** ॥ १० ॥

पौरमद्गे च प्रतिहारस्योपरिष्टात् स्तोभः प्रागोवायाः प्रतिहर्तुः स्यात् ॥ १० ॥

**ओकाराज्जनित्रे*** ॥ ११ ॥

उत्तरे जनित्रे प्रतिहारस्योपरिष्टात् प्रागोकारात् प्रतिहर्तुः ॥११

**सह वौवया पौरुमद्गे*** ॥ १२ ॥

सह वात्तुवया पौरुमद्गे स्यात् स्तोभः प्रतिहर्तुः ॥ १२ ॥

**गौश्टङ्गहारायणकौल्मलबर्हिषवैतहव्यानां वा पदान्तः*** ॥ १३ ॥

एतेषां गौश्टङ्गादीनां चतुर्णां षड़क्षरो वा यथाप्राप्तः प्रतिहारः अथवा पदान्तः उक्तं पदान्तमविशेषेणोत्तमात्पदात् प्रतीयादिति ॥१३॥

**द्वाभ्यां पूर्वयोश्चतुर्भिरुत्तरयोः*** ॥ १४ ॥

स पुनः पदान्तो द्वाभ्यां द्वाभ्यामक्षराभ्यां पूर्वयोर्गौश्टङ्गहारायणयोः स्यात् चतुर्भिरक्षरैरुत्तरयोः कौल्मलबर्हिषवैतहव्ययोः ॥ १४ ॥

---

* द्राह्यायणोऽप्येवम् ।

पुरस्तात् स्तोभः कौल्मलबर्हिषस्य* ॥ १५ ॥

कौल्मलबर्हिषस्य पदान्तः सह पुरस्तात् स्तोभेन स्यात् ॥ १५ ॥

इति सप्तमस्य द्वितीया कण्डिका।

---

अथ तृतीया कण्डिका।

सप्त वारवन्तीये पूर्वस्मिन् † ॥ १ ॥

उक्तः षड़क्षरः प्रतिहारः साम्प्रतं सप्ताक्षर उच्यते पूर्वस्मिन्वारवन्तीये सप्ताक्षरो हि प्रतिहारः ॥ १ ॥

तेषां त्रीणि पदान्ते † ॥ २ ॥

तेषां सप्ताक्षराणां त्रीणि पदान्ते स्युः अर्थादापन्नञ्चत्वार्य्युत्तमपदादाविति ॥ २ ॥

कार्णश्रवसन्नैतं पञ्चन्तौरश्रवसमुत्तरꣳ श्रुध्यमुद्दꣳशपुत्रः शाकरन्तेषामष्टौ* ॥ ३ ॥

अष्टाक्षरः प्रतिहार उच्यते एतेषां कार्णश्रवसादीनां यथोद्दिष्टानां अष्टावक्षराणि प्रतिहारः उक्तं प्रतिहारस्थानम् दूरञ्च विशिष्टम् ॥३॥

पञ्चतौरश्रवसयोरर्धानि पदान्ते* ॥ ४ ॥

पञ्चञ्च तौरश्रवसञ्च पञ्चतौरश्रवसे तयोः पञ्चतौरश्रवसयोरर्द्धान्यक्षराणि पदान्ते स्युः अर्थादापन्नं अर्द्धानि पदादाविति ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

श्रुध्यस्य च ककुप्सु* ॥ ५ ॥

श्रुध्यस्य च ककुप्सु गीयमानस्य अर्द्धान्यक्षराणि पदान्ते स्युः अर्द्धानि पदादावित्यर्थादापन्नं यथा विष्टरपंक्तौ ॥ ५ ॥

तस्य गायत्रीषु चत्वारि* ॥ ६ ॥

तस्य श्रुध्यस्य गायत्रीषु गीयमानस्य चत्वार्यक्षराणि प्रतिहारो यथा नवमेऽहनि तस्येति निर्द्देशः पञ्चतौरश्रवसयोरप्यधिकारः तेन तस्येति क्रियते कथं श्रुध्यस्यैवेति ॥ ६ ॥

षोड़शबृहतीषु* ॥ ७ ॥

बृहतीषु गीयमानस्य श्रुध्यस्य षोड़शाक्षराणि प्रतिहारविषयः सन्धिरेव तृतीयः पादः उत्तमे च चतुरक्षरं प्रतिहारिकमेव गीतं प्रतिहार इति वक्ष्यति ॥ ७ ॥

नदम्बश्चोदतीनामिति दश* ॥ ८ ॥

नदम्बश्चोदतीनामित्येतस्यामृचि गीयमानस्य श्रुध्यस्य दशाक्षराणि प्रतिहारः प्रयोजनमुक्तं पूर्वस्मिन्नेव सूत्रे ॥ ८ ॥

मध्यमस्य पदस्याभ्यासः शाक्करे* ॥ ९ ॥

शाक्करे मध्यमस्य पदस्य योऽष्टाक्षरोऽभ्यासः स प्रतिहारः ॥ ९ ॥

न्याय्यो वा* ॥ १० ॥

न्याय्यो वा स्यात् शाक्करे प्रतिहारः ॥ १० ॥

वायोरभिक्रन्दस्वारङ्कावमौरुक्षयमौशनश्यावाश्वे त्रैष्टु-

---

* द्राह्यायणेऽप्येवम् ।

भ॒ꣳश्रैष्टं जागतꣳ सोमसाम कार्त्तयशꣳ स्वरं पयोनिधन-मृषभः शाकरो यण्वापत्ये तेषामुपोत्तमं पदम्* ॥ ११ ॥

एतेषां वायोरभिक्रन्दादीनां यथोद्दिष्टानां उपोत्तममुपोत्तमं पदं प्रतिहारः स्यात् ॥ ११ ॥

पुरस्तात् स्तोभा उत्तमानां त्रयाणाम्* ॥ १२ ॥

ऋषभस्य शाकरस्य यण्वापत्ययोश्च सह पुरस्तात् स्तोभैरु-पोत्तमानि पदानि प्रतिहाराः स्युः ॥ १२ ॥

अप्रतिहारा प्रथमा स्तोत्रीया यण्वापत्ययोः* ॥ १३ ॥

यण्वापत्ययोर्वा साम्नोः प्रथमा स्तोत्रीया अप्रतिहारा स्यात् ॥२३॥

पञ्चानां वादित उत्तमे पदे चत्वारि* ॥ १४ ॥

पञ्चानां साम्नां यान्यादावादिष्टानि वायोरभिक्रन्दः स्वारं कावं मौरुत्तयमौशनश्यावाश्वे त्रैष्टुभे इति एतेषां उपोत्तमं पदं वा प्रति-हारः स्यात् उत्तमे पदे चत्वार्यक्षराणि प्रतिहारः उत्तमग्रहणं किमर्थ-मिति चेत् उच्यते तेषामुपोत्तमं पदमित्यधिकृतम् ॥ १४ ॥

वैखानसं पौरुहन्मनमुद्वꣳशीयमाकारणिधनन्त्वाष्ट्रीसाम तेषामुत्तमं पदं प्रागभ्यासात्* ॥ १५ ॥

एतेषां वैखानसादीनां चतुर्णामुत्तमं पदं प्रतिहारः स्यात् प्रागभ्यासात् ॥ १५ ॥

अभ्यासे वा चत्वार्युत्तरयोः* ॥ १६ ॥

---

* द्राह्यायणेऽप्येवम् ।

अभ्यासे वा उत्तरयोः साम्नोः उद्वंशीयाकारणिधनयोश्चत्वारि चत्वार्य्यक्षराणि प्रतिहारः स्यात् ॥ १६ ॥

इति सप्तमस्य तृतीया कण्डिका ।

---

अथ चतुर्थी कण्डिका

श्यात्त्यसाम मैधातिथं वारवन्तीयमुत्तरमाभीशवे सिमानां निषेधस्त्रिणिधने त्वाष्टीसामायास्येदार्ढच्युतमाथर्वणं रैवत्य ऐटतमग्नेस्त्रिणिधनमुत्सेधनिषेधावैड़ंसाकमश्वन्दैर्घश्रवसन्दासस्यत्वं ग्रामे गेयश्येनस्तानि द्विप्रतिहाराणि* ॥ १ ॥

श्यात्त्यसामादीनि यथोद्दिष्टानि एतानि सर्वाणि द्विप्रतिहाराणि तेषां प्रतिहाराणां स्थानमक्षरपरिमाणञ्चोच्यते ॥ १ ॥

मध्यमयोः पदयोः श्यात्त्यसाममैधातिथयोः पदान्तौ द्वाभ्याञ्चतुर्भिर्वा † ॥ २ ॥

श्यात्त्यसाममैधातिथयोर्द्वितीयतृतीययोः पदयोः प्रत्येकं द्व्यक्षरौ पदान्तौ प्रतिहारौ चतुरक्षरौ वा ॥ २ ॥

इकाराद्यन्तौ स्तोभौ वारवन्तीये ‡ ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रचयं कृतम् ।

‡ द्राह्यायणीये विशेषोऽस्ति ।

हूकाराद्यन्तौ स्तोभौ प्रतिहारौ वारवन्तीय हूकारो यस्तोभस्तस्य आदावन्ते च सोऽयमिकाराद्यन्तः स्तोभः ॥ ३ ॥

सप्तभिर्वैकप्रतिहारं प्रागिहाहायाः* ॥ ४ ॥

वारवन्तीये सप्तभिरक्षरैरुत्तमपदादिस्थैरेकप्रतिहारं वा स्यात् उपरिष्टात् इहाहायाः स्तोभस्य प्रतिहर्त्तुः स्यात् ॥ ४ ॥

उकारादिर्वैकेन पदान्तः* ॥ ५ ॥

उकारादिर्वा एकेनाक्षरेण पदान्तः प्रतिहारः स्यात् ॥ ५ ॥

न्याय्यो वा* ॥ ६ ॥

न्याय्यो वा स्यात् प्रतिहारो वारवन्तीयस्य न्याय्यस्य उक्तलक्षणः ॥ ६ ॥

पूर्वयोश्च * ॥ ७ ॥

पूर्वयोश्च श्यावाश्वसाममैधातिथयोर्न्याय्यो वा स्यात् प्रतिहारः द्विप्रतिहारो वा पूर्वोक्तः ॥ ७ ॥

वारवन्तीयस्य द्विपदासु सप्तानाꣳ स्थाने चत्वारि द्वे चतुर्णाम् † ॥ ८ ॥

वारवन्तीयस्य द्विपदासु गीयमानस्य द्विप्रतिहारताभावात् सिद्धौ हूकाराद्यन्तौ स्तोभाविति अथ पुनर्विकल्पयेत् ततः सप्तानामक्षराणां स्थाने चतुरक्षरः प्रतिहारः स्यात् चतुरक्षरस्य न्याय्यस्य स्थाने द्व्यक्षरः स्यात् उकारादिर्वैकेन पदान्त इति सिद्धम् ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

द्वे एकमित्येकपदायाम्* ॥ ९ ॥

एकपदायां गीयमानस्य सप्ताक्षरस्य स्थाने द्वे अक्षरे स्यातां चतुरक्षरस्यैकम् अन्यत्सिद्धम् ॥ ९ ॥

उत्तरयोः पदयोरुत्तरेषाम्* ॥ १० ॥

वारवन्तीयादुत्तरेषां साम्नाम् उत्तरयोः पदयोः प्रत्येकं प्रतिहारौ स्याताम् ॥ १० ॥

द्वे द्वे तु षण्णामाभीषवप्रभृतीनाम्* ॥ ११ ॥

द्वे द्वे तु अक्षरे उत्तरयोः पदयोः स्याताम् आभीशवप्रभृतीनां षण्णां साम्नां आभीशवयोः सिमानां निषेधस्य त्रिणिधनयोस्त्वाष्ट्रीसामायास्त्वयोर्दीर्घच्युतस्येति ॥ ११ ॥

चत्वारि वा सिमानां निषेधस्य † ॥ १२ ॥

चत्वार्यक्षराणि वा सिमानां निषेधस्य उत्तरयोः पदयोः स्युः द्वे वा द्वे इति प्रकृतम् ॥ १२ ॥

त्वाष्ट्रीसाम्नश्च † ॥ १३ ॥

त्वाष्ट्रीसाम्नश्च उत्तरयोः पदयोश्चत्वारि चत्वार्यक्षराणि स्युः यद्वा प्रकृतम् ॥ १३ ॥

सपुरस्तात् स्तोभावाथर्वणस्य* ॥ १४ ॥

आथर्वणस्य सह पुरस्तात् स्तोभाभ्यां प्रतिहारौ स्याताम् ॥ १४ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

तत्प्रभृतीनां चत्वारि* ॥ १५ ॥

आथर्वणप्रभृतीनाम् उत्तरयोः पदयोः प्रत्येकं चत्वारि चत्वार्यक्षराणि स्युः ॥ १५ ॥

अष्टौ वा दाशस्पत्ये* ॥ १६ ॥

दाशस्पत्ये चत्वारि वा अक्षराणि उत्तरयोः पदयोः स्युः अथवा अष्टावष्टौ ॥ १६ ॥

पूर्वैवोत्तरेणैकप्रतिहारे* ॥ १७ ॥

पूर्वे वा सामनी दाशस्पत्यात् ऐड़साकमश्वदैर्घश्रवसे उत्तरेण प्रतिहारेण एकप्रतिहारे स्यातां वाशब्दो विकल्पार्थः ॥ १७ ॥

तृतीयपञ्चमाभ्यां पदाभ्याꣳ श्येने* ॥ १८ ॥

ग्रामे गेयश्येने तृतीयपञ्चमाभ्यां पदाभ्यां प्रतिहारौ स्याताम् ॥१८॥

चतुर्थषष्ठयोर्वा पदयोर्द्वे पदयोर्द्वे* ॥ १९ ॥

चतुर्थषष्ठयोर्वा पदयोर्द्वे द्वे अक्षरे प्रतिहारौ स्याताम् ॥ १९ ॥

इति सप्तमस्य चतुर्थी कण्डिका।

---

अथ पञ्चमी कण्डिका।

पृथक्स्तोत्रीयास्तु प्रतिहाराः सन्तनिनः* ॥ १ ॥

उक्तमप्रतिहारा प्रथमा स्तोत्रीया यणापत्ययर्योरिति तथा अप्रतिहारे पूर्वे स्तोत्रीये शाक्वरवर्णस्येति सोऽयं प्रतिहारन्यायः सन्त-

---

* द्राह्यायणेऽप्येवम्।

निनि यस्थापत्यशाक्करवर्णेषु अतो नियमार्थमारभ्यते पृथक्स्तोत्रीयासु प्रतिहाराः सन्तनिन इति उक्तं निधनभूताः प्रतिहारवत्योऽप्रस्ताव्या इति तत्प्रतिहारा उच्यन्ते सन्तनिनः पृथक्सर्वासु स्तोत्रीयास्वित्यर्थः अक्षरपरिमाणं वक्ष्यति तन्नानास्तोत्रीयासु प्रतिहाराः सन्तनिनः ॥ १ ॥

त्रयस्त्रयऊधःसु महानाम्नीनाम्* ॥ २ ॥

महानाम्नीनां ऊधस्सु पदेषु सर्वेषु प्रतिस्तोत्रीयं त्रयः त्रयः प्रतिहाराः स्युः ऊधांसि वक्ष्यन्ते ॥ २ ॥

तथा स्वराश्च नित्यवत्सातीषङ्ग्योः* ॥ ३ ॥

तथा स्वराश्च प्रतिहारा यत्स्वरमूधः तथा स्वरानित्यवत्सातीषङ्ग्योः प्रतिहाराः स्युः ॥ ३ ॥

द्वे द्वे सर्वेषाम्* ॥ ४ ॥

सर्वेषामेवैतेषां साम्नां द्व्यक्षराः प्रतिहाराः स्युः सर्वेषामिति सन्तनिप्रभृतीनाम् ॥ ४ ॥

षड् वा शाक्करोत्तमेषु महानाम्नीनाम् † ॥ ५ ॥

षडक्षरो वा प्रतिहारो भवत्येतेषां सर्वे सन्तनिवर्जनं वा भवति नासौ पूर्वेण विकल्प्यते स एव भवति न वा शाक्करोत्तमेषु महानाम्नीनां सोऽयमुत्तमे पदे न्यायप्राप्तो महानाम्नीषु भवेत् शाक्कराणामुत्तमेषु पदेषु भवति शाक्कराणि वक्ष्यन्ते ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतं तथा तत्र विशेषस्य कृतः ।

षष्ठमध्यासेषु* ॥ ६ ॥

महानाम्नीषु अध्यासेषु पदेषु षष्ठं षष्ठमक्षरं प्रतिहारो भवति अध्यासान्यपि वक्ष्यन्ते ॥ ६ ॥

मध्यमं वचनꣳ स्तौभिकं पुरीषेषु† ॥ ७ ॥

पुरीषपदेषु स्तौभिकानां वचनानां यन्मध्यमं वचनं स प्रतिहारः स्यात् ॥ ७ ॥

अप्रतिहाराण्येकेऽध्यासपुरीषाणि† ॥ ८ ॥

एके आचार्य्या अध्यासपदानि पुरीषपदानि च अप्रतिहाराणि मन्यन्ते एतेषु प्रतिहारा न कर्त्तव्या इति ॥ ८ ॥

तासां प्रथमद्वितीये पदे द्विपदास्त्रीणि शाक्कराणि धातुर्वत्सऊधस्तच्छाक्करं पुरुषस्त्रीणि शाक्कराण्यध्यास्येति पदानि‡ ॥ ९ ॥

तासां महानाम्नीनां प्रतिस्तोत्रीयं पदानां सूत्रे संव्यवहारार्थं संज्ञा प्रतिपद्यते ये तावत् प्रथमद्वितीये पदे प्रतिस्तोत्रीयान्ता द्विपदाः ततोऽनन्तरं त्रीणि शाक्कराणि द्विपदानन्तराणि यानि त्रीणि तानि शाक्कराण्युच्यन्ते तेषामपि शाक्कराणामेवानन्तराणि पदानि यानि त्रीणि पदानि तेषां संज्ञा धातुर्वत्स ऊधः प्रथमं धातुः द्वितीयं वत्सः तृतीयम् ऊधः तच्छाक्करं पुरुषः तस्योत्तरं यत्पदन्तत् पुरुषः तस्यापि

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणीये विशेषोऽस्ति।

‡ द्राह्यायणेनैतेन षट्संख्यकानि सूत्राणि कृतानि।

यान्यन्तराणि त्रीणि तेषां संज्ञा शाक्कराणीति तेषाम् उत्तरं यत्पदं तस्य संज्ञा अध्यास्येति एवमुत्तरयोरपि स्तोत्रीययोरेताः संज्ञा वेदितव्याः ॥ ९ ॥

उत्तमा तु द्व्यध्यासा* ॥ १० ॥

उत्तमा तु स्तोत्रीया द्व्यध्यासा द्वे अध्यासपदे द्व्यध्यासा इति सेयं द्व्यध्यासा तुशब्दो विशेषणार्थः एवं सा चतुर्दशपदा ॥ १० ॥

द्विपदासु प्रस्तावः शाक्करप्रथमेष्वध्यासपुरीषेषु च* ॥ ११ ॥

स्तोत्रीयायां द्विपदायां प्रस्तावः शाक्कराणाञ्च प्रथमे पदे अध्यास्यपदेषु च प्रतिस्तोत्रीयं पुरीषपदेषु च पत्नेणोक्तं प्रस्तावलक्षणम् ॥ ११ ॥

भासेनोक्तः पदान्तो यज्ञायज्ञीयेदेवस्थाने वैरूपेण* ॥ १२ ॥

यज्ञायज्ञीये देवस्थाने वैरूपेण यज्ञायज्ञीये भासेन पदान्तो व्याख्यातः प्रतिहारो द्व्यक्षरः देवस्थाने वैरूपेण प्रतिहारो व्याख्यातश्चतुरक्षरः द्वाभ्यां भासे चतुर्भिरुत्तरस्येति ॥ १२ ॥

अरण्ये गेयः श्येनः पार्थुरश्ममच्छिद्ररयिष्ठे तेषामुत्तरेषु पदेषु द्वे द्वे पूर्वयोश्चत्वारि चत्वार्युत्तरयोः † ॥ १३ ॥

अरण्ये गेयस्य श्येनस्य पार्थुरश्मस्याच्छिद्ररयिष्ठयोः एतेषां चतु-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

र्णाम् उत्तरेषु सर्वेषु प्रतिहारा द्वे द्वे अक्षरे पादे पादे अक्षरे अरण्ये गेयश्येनपार्थुरश्मयोः चत्वारि चत्वार्यक्षराणि उत्तरयो-रच्छिद्ररयिष्ठयोः ॥ १३ ॥

उभयतः स्तोभाः पार्थुरश्मस्य* ॥ १४ ॥

ये उत्तराः प्रतिहाराः पार्थुरश्मस्योक्तास्ते सर्वे उभयतः स्तोभाः स्युः ॥ १४ ॥

देवतापदं देवतापदमिति वैरूपे निधनानि* ॥ १५ ॥

वैरूपे साम्नि देवतापदं देवतापदमित्येवं निधनानि कर्त्तव्यानि विधिक्रमार्थमारम्भः पददेवतानामन्यः पाठक्रमः अन्यो विधिक्रमः अतो विकल्पयत्याचार्य्यः तस्य प्रयोजनं निदानकारेणोक्तं पददैवते व्यत्यस्येदेवमादिभिर्वाक्यैः ॥ १५ ॥

प्राक् त्रिष्टुमत्याः स्तोभैः प्रतिहारः* ॥ १६ ॥

त्रिष्टुमती या देवता तस्याः प्राग्ये स्तोभाः तैः प्रतिहारः स्याद्वैरूपे ॥ १६ ॥

ऐकादशमैडदैवोदासे* ॥ १७ ॥

ऐड़दैवोदासे पदस्य एकादशमक्षरं सप्रतिहारः स्यात् उक्तम् उत्तमे पदे प्रतिहारस्थानमिति ॥ १७ ॥

सप्तमाष्टमाभ्यामभ्यसेत् त्रैककुभस्य* ॥ १८ ॥

---

* द्राह्यायणेऽप्येवम्।

त्रैककुभस्य यत्पदमभ्यस्यते तस्याभ्यासस्य सप्तमाष्टमाभ्यामक्षराभ्यां प्रतिहारः स्यात् ॥ १८ ॥

**नवमदशमाभ्यां वैश्वमनसस्य* ॥ १९ ॥**

ये नवमदशमे अक्षरे ताभ्यां प्रतिहारः स्यात् ॥ १९ ॥

**तथा वृष्णस्त्रिरुक्ताभ्यान्तु तस्य † ॥ २० ॥**

यथा नवमदशमाभ्यां वैश्वमनसस्य प्रतिहार उक्तः तथा वृष्णो नवमदशमाभ्यां अक्षराभ्यां प्रतिहारः स्यात् अयन्तु विशेषः अस्य त्रिरुक्ताभ्याम् ॥ २० ॥

**सदृशगीतिषु सर्वेषु पदेषु पृथक्पदानि भजेरन् प्रत्यन्तादनादेशे शेषमुज्ञाता तानि विभाग्यानि ‡ ॥ २१ ॥**

उक्तम् अवसानं प्रस्तावान्तलक्षणमविभाग्यानामिति तत्किंलक्षणानि पुनर्विभाग्यानीति उच्यते चतुष्टयानि सामानि भवन्ति विषमविभक्तीनि पदविभाग्यानि स्तोभविभाग्यानि पदस्तोभविभाग्यानि चेति तत्र विषमभक्तीनि तावदुक्तानि चतुरक्षरः पूर्वे वारवन्तीये इत्येवमादीनि पदविभाग्यानि प्रवद्भार्गवो जागतवासिष्ठवैश्वज्योतिषाणीति स्तोभविभाग्यानि वात्सप्रादीनि पदस्तोभविभा-

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतं तथा तत्र विशेषस्य कृतः ।

‡ द्राह्यायणेऽप्येवं तथा तत्र एतस्मादूर्द्धं कानिचित् सूत्राण्यधिकानि वर्त्तन्ते ।

ग्यानि प्रतोदगोष्ठादीनि एतानि विभाग्यानि साम्प्रतमेतेषां विभाग उच्यते येषां पदानां सदृशा गीतयः तेषां सर्वेषु पदेषु पृथक् पृथक् पदानि भजेरन् प्रस्तोत्रादयो ब्रूयुरिति वा वदन्तः आदेशादन्यत्र शेषमुद्गाता ब्रूयात् एतान्येतंलक्षणानि विभाग्यान्युच्यन्ते सदृशा लक्षणं द्वितीयार्थं द्वितीयेऽपि साम्नि पृथक्पदानि भजेरन् यथा स्वारक्रौञ्चे प्रो अयासीति द्वितीये ॥ २१ ॥

आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेद्योयः पदं ब्रूयात्* ॥ २२ ॥

आद्यन्तस्तुब्धानि यानि सामानि तेषु पदाय पदाय स्तोभेत् तादर्थ्ये चतुर्थी यो यः कर्त्ता पदं ब्रूयात् सपदाय पदाय स्तोभेदित्यारभ्यते आम्नायसिद्धे तु संहारे किमर्थमारभ्यते उच्यते नैवं पदानुसंहार आरभ्यते किं तर्हि यो यः सामाङ्गं पदं ब्रूयादित्येतत्परमेतत् ॥ २२ ॥

तथानुपदꣳस्तुब्धेषु* ॥ २३ ॥

आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेदित्युक्तं तथानुपदं स्तुब्धेषु को विधिरुच्यते तथानुपदं स्तुब्धेषु तया तेन प्रकारेणेत्यर्थः पदाय पदाय स्तोभेद्यो यः पदं ब्रूयादिति ॥ २३ ॥

इति सप्तमस्य पञ्चमी कण्डिका ।

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

अथ षष्ठी कण्डिका ।

**ऊर्द्धन्तु प्रथमात्पदात् संकृतिनः* ॥ १ ॥**

वक्ष्यति निधनानि पदान्युपायसदृशाः स्तोभान्ता येषां तानि स्तोभविभाग्यानि इदञ्च संकृति ऊर्द्धं प्रथमात्पदात् स्तोभविभाग्यं कथञ्चैतद्गम्यते यथासङ्कृतिनि स्तोभा न संहर्त्तव्य इति उच्यते दर्शनात् ऊर्द्धं प्रथमात्पदात् स्तोभानुसंहारस्य कायमानद्वितीये पुरूत्वा-पञ्चमे दर्शनात् सङ्कृतिनः प्रथमात्पदादूर्द्धं पदाय पदाय स्तोभेत् ॥१॥

**प्राक्चतुर्थात्पदात् स्तोभैः प्रतिहारः* ॥ २ ॥**

द्वितीयपादेऽस्योर्द्धं ये स्तोभास्तृतीयार्थाः ते प्रतिहर्त्तुः प्राप्ताः एवं तेषु प्राप्तेष्वाह प्राक्चतुर्थात्पदात् स्तोभैः प्रतिहार इति ये चतुर्थस्य पदस्य प्राक् स्तोभास्तैः प्रतिहरेत् ॥ २ ॥

**निधनानि पदान्युपायसदृशाः स्तोभान्ता येषां तानि स्तोभविभाग्यानि* ॥ ३ ॥**

येषां साम्नां निधनभूतानि पदानि उपायसदृशाः स्तोभान्ताः तानि सामानि स्तोभविभाग्यानि तेषां स्तोभा विभक्तव्याः यथा प्रतोदभद्रगोष्ठसैामित्रादीनि ॥ ३ ॥

**तत्र तृतीयायैव पदाय प्रतिहर्त्ता स्तोभेत्* ॥ ४ ॥**

तत्र तेषु स्तोभविभाग्येषु तृतीयायैव पदाय प्रतिहर्त्ता स्तोभेत् एवशब्दोऽवधारणार्थः उक्तं ग्रन्थान्तरे तत्र पदं विभजन् उपोत्तमम्

* द्राह्यायणेऽप्येवम् ।

पदं प्रतिहर्त्तुः संन्याय आसन्नपदाभ्य इति तन्निवृत्त्यर्थमाचार्य्योऽव-धारयति तृतीयायैवेति ॥ ४ ॥

उपायवन्तः स्तोभा एकवृषस्य* ॥ ५ ॥

एकवृषस्य साम्न उपायवन्तः स्तोभा भवन्ति उपाया येषु विद्यन्ते तइमे उपायवन्तः अथ किमर्थमारभ्यते उच्यते ये त्वनुपायाः स्तोभाः पठितास्तेषां विधीयन्ते ॥ ५ ॥

देवतासु चर्षभस्य शाक्करस्य* ॥ ६ ॥

ऋषभस्य शाक्करस्य देवतासु उपायवन्तः स्तोभा भवन्ति उभ-योर्हि एकवृषे ऋषभे शाक्करे च न देवतासु स्तोभा आम्नाताः ते वचनेन विधीयन्ते ॥ ६ ॥

तासां नानास्तोभेत्पदेभ्यः * ॥ ७ ॥

तासां देवतानां नाना पृथक् स्तोभेत् पदेभ्यः स्तोभान् कुर्य्यात् पृथग्देवताभ्यः तासामिति किम् उच्यते उभयोरेकवृषभयोरेष विधिः एकवृषभस्य पादेषु च देवतासु चोपायवन्तो भवन्ति ऋषभस्य पादेष्वनुपायाः देवतासूपायवन्तः ॥ ७ ॥

गायत्रीसामसु विभाग्येषूत्तमं व्यावर्गं शिष्ट्वा प्रतिहरेदिति धानञ्जय्यः† ॥ ८ ॥

यानि गायत्रीसामानि विभाग्यानि तेषूत्तमं व्यावर्गं शिष्ट्वा उपा-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति

यार्थन्ततः प्रतिहरेदित्येवं धानञ्जप्य आचार्यो मन्यते व्यावर्गः पर्व यथागोराङ्गीरसस्य साम्नः ॥ ८ ॥

सर्वेणैव पदेनेति शाण्डिल्यायनः* ॥ ९ ॥

शाण्डिल्यायन आचार्य्य आह सर्वेणैव पदेन प्रतिहरेदिति किं विकल्पः नेत्युच्यते विनिवेशो येषु पदस्योपरिष्टादौपायिकं पर्व नास्ति तेषूत्तमं व्यावर्गं शिष्ट्वा गौराङ्गीरसस्यंसाम्न इत्युक्तं येषु तु उत्पादिकस्य प्रतिहारस्योपरिष्टात् औपायिकं पर्व शिष्यते तेषु सर्वेण पदेन प्रतिहरेदिति यथा शन्नोदेव्यां द्वितीयसाम्नः ॥ ९ ॥

त्रिरुक्तांश्स्तोभान् शुक्रियेषु चतुर्ब्रूयुरन्यत्र निधनेभ्यः* ॥ १० ॥

शुक्रियेषु सामसु भ्राजादिषु ये त्रिरुक्ताः स्तोभा आम्नातास्तांश्चतुर्ब्रूयुः यत्र निधनभूताः स्तोभास्तांस्त्रिर्ब्रूयुः ॥ १० ॥

महादिवाकीर्त्यस्य प्रास्ताविके देवते विपरिहरेत्* ॥ ११

महादिवाकीर्त्यं दशानुगानं महादिवाकीर्त्यस्येति सम्बन्धलक्षणा षष्ठी तस्य महादिवाकीर्त्यस्य प्रास्ताविकेऽनुगाने ये देवते ते विपरिहरेत् वक्ष्यति प्रथमायेवानुगानाय प्रस्तोता प्रस्तुयादात्मने चेति तस्मिन् प्रास्ताविकेऽनुगाने देवता विपरिहारं कुर्य्यात् विपरिहारः अन्योन्यस्थानापत्तिः ॥ ११ ॥

तस्यात्मा स्तोभविभाग्यः* ॥ १२ ॥

---

* द्राह्यायणेऽप्येवम् ।

तस्य महादिवाकीर्त्त्यस्यात्मा स्तोभविभाग्यः स्यात् आत्मेत्यनुगानस्य संज्ञा तस्य यदात्मसंज्ञकं अनुगानं तत् स्तोभविभाग्यं स्यात् ॥ १२ ॥

प्रथमायैवानुगानाय प्रस्तोता प्रस्तुयादात्मने च* ॥ १३ ॥

यत्प्रथममनुगानं तदर्थं प्रथममेव प्रस्तोता प्रस्तुयादात्मार्थञ्च ॥ १३ ॥

इतराण्यनुगानान्युद्गातैव ब्रूयात्* ॥ १४ ॥

प्रथमानुगानादात्मनश्च यान्यनुगानानि तानि सर्वाण्युद्गातैव ब्रूयात् एवशब्दोऽवधारणार्थः उद्गातैव ब्रूयान्नेतरौ ॥ १४ ॥

तेषां निधनेष्वेनमनूपेयाताम्* ॥ १५ ॥

तेषामेवानुगानानां निधनेष्वेनमुद्गातारं अनु निधनान्युपेयातां तेषामिति निर्देशः क्रियते सर्वेषां दशानाम् ॥ १५ ॥

उत्तमानि वा त्रीण्यनुगानानि प्रत्याहृत्येतरैः सहात्मपदेभ्यः स्तोभधर्मेणानुसंहरेयुः* ॥ १६ ॥

उत्तमानि वा अष्टमनवमदशमानि त्रीण्यनुगानानि प्रत्याहृत्य इतरैरनुगानैः सह आत्मपदेभ्यः स्तोभधर्मेणानुसंहरेयुः प्रतिपादं यानि प्रागात्मनस्तानि प्राक्पदात् कुर्युः यान्युपरिष्टादात्मनस्त्रीणि तान्युपरिष्टात् पादस्य एषोऽनुसंहारप्रकारः ॥ १६ ॥

---

* द्राह्यायणेऽप्येवम् ।

यानि पुरस्तादात्मनस्तानि सकृत् स्तोत्रादौ यान्यूर्द्धन्तानि सकृत् स्तोत्रान्ते* ॥ १७॥

अथवा यान्यात्मनः पुरस्तात् अनुगानानि तानि स्तोत्रादौ सकृत्कृत्वा स्तोत्रं समाप्य यान्युपरिष्टादात्मनस्त्रीणि तानि सकृत् स्तोत्रान्ते कुर्य्यात् ॥ १७ ॥

पर्यायादिपर्यायान्तयोर्वा* ॥ १८ ॥

अथवा अयं विशेषः पर्य्यायस्य पर्य्यायस्यादौ अन्ते च स्यात् यानि पुरस्तादात्मनस्तानि सकृत्पर्य्यायादौ यान्यूर्द्धं तानि सकृत्पर्य्यायान्ते ॥ १८ ॥

भासनिधने दशमस्य पदस्योपायमुद्गातैव ब्रूयात् † ॥१९॥

भासनिधने यद्दशमं पदन्तस्योपायमुद्गातैव ब्रूयात् नेतरौ ॥ १९॥

सर्वाणि राजने त्रिरुक्तानि पञ्चकृत्वो ब्रूयुः † ॥ २० ॥

राजने साम्नि यावन्ति त्रिरुक्तान्याम्नातानि सर्वाणि तानि पञ्चकृत्वो ब्रूयुः अथ सर्वग्रहणं किमर्थम् उच्यते उक्तं त्रिरुक्तान् स्तोभाञ्चक्रियेषु चतुर्ब्रूयुरिति प्रकृतं तावत् अतः सर्वग्रहणं करोति कथं राजने स्तोभांश्च पदानि चेति ॥ २० ॥

तस्यानुपद७स्तोभाः पदेन प्रस्तावः ‡ ॥ २१ ॥

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

तस्य राजनस्यानुपदं स्तोभाः कर्त्तव्याः तस्य हि आदावेव केवलं स्तोभाः पठिताः नोपरिष्टात् सोऽयमाचार्य्यः अनुपदं स्तोभान् कल्पयति अनुपदञ्चास्य स्तोभा भवन्ति पदेन च प्रस्ताव-देवताभ्यः आरभ्योद्गेयः॥ २१॥

**तृतीयेन पदेन पुरस्तात् स्तोभेन प्रतिहारः* ॥ २२॥**

स्यादिति वाक्यशेषः॥ २२॥

**विभाग्यं वा* ॥ २३॥**

विभाग्यं वा स्यात् यः सर्व्वेषां विभाग्यानां धर्मः तेन वा स्यात् ॥ २३॥

**तत्र देवताभ्यो यद्यदनन्तरं पूर्वं पदन्तेन सहना ब्रूयुः ॥ २४* ॥**

तत्र तस्मिन् राजने विभाग्ये देवताभ्यो यद्यदनन्तरं पूर्वं पद-न्तेन पदेन सह एना देवता ब्रूयुः यो यः पदं ब्रूयात् स स देवता अपि ब्रूयात्॥ २४॥

**व्यवस्तोभेत्पदद्दैवतमित्येके* ॥ २५॥**

एके आचार्य्याः मन्यन्ते व्यवस्तोभेत्पदानि च देवताश्चेति पृथक् पदेभ्यः स्तोभान् कुर्य्यात् पृथग्देवताभ्यश्चेति॥ २५॥

**यथाधीतं वा † ॥ २६॥**

---

* द्राह्यायणीऽप्येवम्।

† द्राह्यायणीये एतन्नास्ति।

अथवा यथाधीतमेव राजनं प्रयुञ्जीत आदावेव केवलं स्तोभः स्यात् अन्ये विकाराः सर्वे न स्युः ॥ २६ ॥

इति सप्तमस्य षष्ठी कण्डिका ।

---

अथ सप्तमी कण्डिका ।

निधनानि पदानि पदस्तोभेषु तथेडाः* ॥ १ ॥

पदस्तोभेषु निधनानि पदानि भवन्ति तथा इडाः ननु उक्तं निधनानि पदान्युपायसदृशाः स्तोभान्ता येषां तानि स्तोभविभाग्यानीति एतानि च सामानि पदस्तोभसंज्ञितान्येवंलक्षणयुक्तानि तत्किमिदं सिद्धे विधौ सति पुनरारभ्यत इति इदं सिद्धोपादानं क्रियते शेषविध्यर्थं वक्ष्यति तेभ्यो नानास्तोभेयुरित्येतदादिकं शेषम् ॥ १ ॥

तेभ्यो नानास्तोभेयुः* ॥ २ ॥

तेभ्यः पदेभ्यो निधनेभ्योदिताभ्यस्र नानास्तोभेयुरिति पृथक्स्तोभान् कुर्युरित्येषोऽर्थः एते हि पदस्तोभाः सर्वे द्वादशनिधनाः द्वादशनिधनानि भवन्तीति ब्राह्मणम् ॥ २ ॥

त्रिभ्यः प्रथमेभ्यः प्रस्तोता † ॥ ३ ॥

उक्तं तेभ्यो नानास्तोभेयुरिति त्रिभ्यः प्रथमेभ्यो निधनेभ्यः प्रस्तोता स्तोभेत् तादर्थ्ये चतुर्थी ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

त्रिभ्य एव सप्तमप्रभृतिभ्यः प्रतिहर्त्ता* ॥ ४ ॥

त्रिभ्य एव निधनेभ्यः सप्तमप्रभृतिभ्यः प्रतिहर्त्ता स्तोभेष्वेष-मुद्गातुः ॥ ४ ॥

अर्द्धपदं निधनमिड़ाव्यवेतेषु † ॥ ५ ॥

येषां पदानां इड़ा मध्ये तेषामर्द्धपदं निधनम् ॥ ५ ॥

सर्वमव्यवेतेषु † ॥ ६ ॥

अव्यवेतेषु सर्वं पदं निधनम् ॥ ६ ॥

चतुर्थस्य प्रथमः पादस्त्र्यक्षराणि चत्वारि निधनानि † ॥७॥

चतुर्थस्य पदस्तोभस्य प्रथमः पादस्त्र्यक्षराणि चत्वारि निधनानि भवन्ति ॥ ७ ॥

तथा तृतीयः † ॥ ८ ॥

तथा तृतीयः पादस्त्र्यक्षराणि चत्वारि निधनानि भवन्ति सिद्धे सत्यारम्भो विकल्पार्थः ॥ ८ ॥

द्वितीयोत्तमौ वा द्वैधश्चतुरक्षरश इतरौ † ॥ ९ ॥

उत्तमे पदस्तोभे द्वितीयोत्तमौ पादौ द्वैधं विभक्तव्यौ चतुरक्षरश इतरौ विभक्तव्यौ प्रथमतृतीयौ चतुरक्षरशो विभागे वाशब्दो विकल्पार्थः ॥ ९ ॥

अविभाग्या वा ‡ ॥ १० ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणेऽप्येवम्।

‡ द्राह्यायणीये विशेषोऽस्ति।

अविभाग्या वा सर्वं एते पदस्तोभा भवन्ति न विभाग्याः ॥ १०॥

**अष्टमैः स्तोभैः प्रथमस्य नवमैर्मध्यमयोर्दशमैरुत्तमस्य नवमैर्वा* ॥ ११ ॥**

अष्टमैः स्तोभैः प्रथमस्य पदस्तोभस्य प्रतिहारः स्यात् मध्यमयोः पदस्तोभयोः द्वितीयतृतीययोः नवमैः स्तोभैः प्रतिहारः स्यात् उत्तमस्य पदस्तोभस्य दशमैः स्तोभैः प्रतिहारो नवमैर्वा उत्तमस्येति वर्त्तते प्रस्तावोद्गीथौ सिद्धौ ॥ ११ ॥

**इलान्दस्योत्तमेऽनुगाने षट् † ॥ १२ ॥**

इलान्दं पञ्चानुगानं तस्योत्तमेऽनुगाने षड़क्षराणि प्रतिहाराः उक्तं प्रतिहारस्थानम् ॥ १२ ॥

**विभाग्यानीतराणि † ॥ १३ ॥**

इतराण्यनुगानानि विभाग्यानि प्रथमादीनि चत्वारि विभाग्यन्याय उक्तः ॥ १३ ॥

**प्रथमं वा विभाग्यम् † ॥ १४ ॥**

प्रथमं वानुगानम् विभाग्यं स्यात् ॥ १४ ॥

**तत्रोत्तमस्य स्तोभस्य मध्यमेन वचनेन † ॥ १५ ॥**

तत्र तस्मिन्निलान्दप्रथमेऽनुगाने अविभाग्यपक्षे उत्तमस्य स्तोभस्य मध्यमेन वचनेन प्रतिहारः ॥ १५ ॥

**एकादश दैर्घतमसस्य † ॥ १६ ॥**

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणीयेऽप्येवम् ।

दैर्घतमसस्य एकादशाक्षराणि प्रतिहारः अभ्यासान्तः ॥ १६ ॥

अष्टमैः स्तोभैर्भद्रश्रेयसोः* ॥ १७ ॥

भद्रञ्च श्रेयश्च भद्रश्रेयसी तयोः भद्रश्रेयसोः अष्टमैः स्तोभैः प्रतिहारः स्यात् ॥ १७ ॥

पञ्चमैश्च यदि द्विप्रतिहारे † ॥ १८ ॥

यदि द्विप्रतिहारे भद्रश्रेयसी स्यातां ततः अष्टमैः स्तोभैः प्रतिहारः स्यात् एकैकस्मिन् पञ्चमैश्च ॥ १८ ॥

पञ्चाक्षरशः स्तोभविभाग्ये धर्मविधर्मणी † ॥ १९ ॥

यदि स्तोभविभाग्ये धर्मविधर्मणी कुर्य्यात् पञ्चाक्षरं पञ्चाक्षरं स्तोभेत् ॥ १९ ॥

द्विपदाकारं वा † ॥ २० ॥

द्विपदाकारं वा धर्मविधर्मणी प्रयुञ्जीत द्विपदाः कृत्वा द्विपदाकारम् ॥ २० ॥

तयोर्दशमेन स्तोभेन प्रतिहारः † ॥ २१ ॥

तयोः धर्मविधर्मणोर्द्विपदाकारेण प्रयुज्यमानयोर्दशमेन स्तोभेन प्रतिहारः स्यात् ॥ २१ ॥

षष्ठेन च यदि द्विप्रतिहारे † ॥ २२ ॥

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणेऽप्येवम्।

यदि द्विप्रतिहारे धर्मविधर्मणी स्यातां षष्ठेन स्तोभेन प्रतिहारः स्यात् तयोर्दशमेन चेति प्रकृतम् ॥ २२ ॥

**पदान्ते त्रीणि सौहविषे* ॥ २३ ॥**

सौहविषे प्रथमे पदान्ते त्रीणि अक्षराणि प्रतिहारः स्यात् ॥२३॥

**पदादौ वा* ॥ २४ ॥**

पदान्तपदादी सिद्धौ ॥ २४ ॥

**मध्यमं वचनꣳ स्वर्वन्निधने सौहविषे* ॥ २५ ॥**

स्वर्वन्निधने सौहविषे यत्पदमभ्यस्यते तस्य मध्यमं वचनं प्रतिहारः स्यात् ॥ २५ ॥

**विभाग्यं वा* ॥ २६ ॥**

विभाग्यं वा स्यात् स्वर्वन्निधने सौहविषम् ॥ २६ ॥

**मध्यममेव वचनं पुरस्तात् स्तोभं वैराजस्य* ॥ २७ ॥**

मध्यममेव वचनं पुरस्तात् स्तोभं स्यात् प्रतिहारो वैराजस्य तस्मिन् पदादौ प्रतिहारः प्राप्तः अतो मध्यमं वचनं नियमयति ॥ २७ ॥

**तस्य पदान्ताꣳश्चतुरभ्यस्येयुस्त्रिर्वा † ॥ २८ ॥**

तस्य वैराजस्य पदान्तांश्चतुरभ्यस्येयुस्त्रिर्वा अथ तस्येति किमर्थमुच्यते विभाग्यं वेति प्रकृतम् अतस्तस्येति ब्रवीति एतत् ज्ञापयति

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

विभाग्यपक्षेऽपि वैराजं भवतीति यदि विभाग्यं यद्यविभाग्यं तस्य पदान्तांश्चतुरभ्यस्येयुस्त्रिर्वेति ॥ २८ ॥

तथा चातुर्थिकस्य वात्सप्रस्य* ॥ २९ ॥

तथा तेन प्रकारेणेत्यर्थः चातुर्थिकस्य वात्सप्रस्य पदान्तांश्चतुरभ्यस्येयुस्त्रिर्वा ॥ २९ ॥

समाधिस्तु † ॥ ३० ॥

समाधिस्तु कर्त्तव्यः यथा वैराजं प्रयुञ्जीत वात्सप्रमपि तथा प्रयुञ्जीत अथ वैराजं चतुरनुतोदं कुर्य्यात् वात्सप्रमपि चतुरनुतोदमेव कुर्य्यात् एवं ब्राह्मणं भवत्येतस्मिन्वै वैराजं प्रतिष्ठितमिति ॥३० ॥

अविभाग्यानामुत्तमे पदे प्रागुपायात् षट्सु व्यावर्गवत्स्वष्टसु वा यथा वामदेव्यक्रोशे पूर्वेण व्यावर्गेण प्रतिहरेदिति धानञ्जप्यः* ॥ ३१ ॥

अविभाग्यानां साम्नां उत्तमे पदे यानि षट् व्यावर्गवन्त्यक्षराणि अष्टौ वा यथा वामदेव्ये षट् अष्टौ क्रोशे तेषु पूर्वेण व्यावर्गे प्रतिहरेदिति धानञ्जप्यः मन्यते गीतं व्यावर्ग इत्यनर्थान्तरम् ॥ ३१ ॥

उत्तरेणेति शाण्डिल्यायनः* ॥ ३२ ॥

उत्तरेण व्यावर्गेण प्रतिहरेदित्येवं शाण्डिल्यायन आचार्य्यो मन्यते ॥ ३२ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणोऽप्येवं तत्र तु एतस्मादूर्द्ध्वं कतिपयान्यधिकानि सूत्रानि वर्त्तन्ते।

प्रातिहारिकमेव गीतं प्रतिहारो वैरूपेष्वप्यपदादौ*
॥ ३३ ॥

उक्तं पदादिः प्रतिहारस्थानं सर्वत्रेति अक्षरपरिमाणञ्चोक्तं तद्यानि योनितो वैरूपाणि सामानि तेषु प्रातिहारिकमेव पर्व प्रतिहारः स्यात् अक्षरपरिमाणं नाद्रियेत यथोदंशपुत्रे उत्तरयोः स्तोत्रीययोः पदादिरपि नाद्रियते यथेन्द्रमच्छायामैड़मायास्ये ॥३३॥

नोर्द्ध्वं प्रतिहारादोङ्कारेणाददीतेति धानञ्जय्यः* ॥ ३४ ॥

प्रतिहाराः समाप्ताः साम्प्रतं उपाया उच्यन्ते प्रतिहारादूर्द्ध्व-मुपायस्यादानम् इह तु उद्गीथादानमोङ्कारेणोक्तं तत्किमिद-मुपायस्याप्यादानमोङ्कारेण भवति अथ नेति अतो धानञ्जय्य आह नोर्द्ध्वं प्रतिहारादोङ्कारेणाददीतेति एतावद्दर्शितं भवति य एवौ-ङ्कारेणाददाति तस्यैवोपाय इति विशेषस्तु वक्ष्यते ॥ ३४ ॥

इति सप्तमस्य सप्तमी कण्डिका ।

---

अथ अष्टमी कण्डिका ।

प्रत्यवेतस्वराणान्तु प्रत्युद्गृह्णीयात् † ॥ १ ॥

उक्तं नोर्द्ध्वं प्रतिहारादोङ्कारेणाददीतेति किन्तु प्रतिहारा-दूर्द्ध्वं ये प्रत्यवेतस्वराः तेषां प्रत्युद्गृह्णीयात् प्रत्युद्ग्रहणं कुर्य्यात् ऊर्द्ध्व-ग्रहणं प्रत्युद्ग्रहः उदाहरणम् ॥ १ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

यथाकालेयस्य नका३३३३रिणाम् यथा वात्सस्य मयो ३३३३वा३* ॥ २ ॥

स्वरान्तरम् एतदुदाहरणमात्रम् एवं सर्वेषां प्रत्यवेतस्वराणां प्रत्युद्ग्रहणं कुर्य्यात् ॥ २ ॥

ओङ्कारेण प्रत्यवेतस्वराणामाददीतेति गौतमः* ॥ ३ ॥

गौतम आचार्य्यो मन्यते प्रत्यवेतस्वराणां नैव सामिकं रूपं कुर्य्यात् ओङ्कारेण त्वादानं कुर्य्यात् एषत्वेव प्रत्युद्ग्रहः ॥ ३ ॥

यथाम्नायं शाण्डिल्यः † ॥ ४ ॥

शाण्डिल्य आचार्य्य आह प्रत्यवेतस्वराणां प्रति न प्रत्युद्ग्रहणं कुर्य्यात् एषत्वेव प्रत्युद्ग्रहः नाप्योङ्कारेणादानं यथाम्नायमेव प्रयुञ्जीत ॥४॥

इहकारइडाथकारौ गीतञ्च निधनस्वरं होषोस्वरञ्च द्व्यक्षरं देवतास्वारण्ये गेयेषु तान्यन्तःसामनिधनानि वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्तात् वृद्धः क्रुष्टो वा कारः स्वरितं वार्चिकं वा वृद्धं पूर्वेषां त्रयाणां यथा रैवत्यस्त्वाष्ट्रीसाम यौधाजयं दार्ढच्युतमाथर्वणमान्धीगवमिह वद्वामदेव्यम् ‡ ॥५॥

उक्तमुपायलक्षणं साम्प्रतं मध्ये निधनान्युच्यन्ते इहकारइडाथ-कारौ गीतञ्च निधनस्वरं होषीस्वरञ्च द्व्यक्षरं देवतास्वारण्ये गेयेषु

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

एतानि सर्वाणि अन्तःसामनिधनानि भवन्ति अन्तरित्येतदव्ययं मध्याभिधायि एतानि सर्वाणि इहकारादीनि साममध्ये निधनानि भवन्ति किन्तु यदि वाशब्दः स्तोभस्यान्तः अनन्तरं एतेषां निधनानां पुरस्ताद्भवति वृद्धः क्रुष्टो वा कारः स्वरितं वा पर्व आर्चिकं वा वृद्धं पूर्वेषां त्रयाणां इहकारइड़ायकाराणां उदाहरणानि रेवत्यादीनि रेवतीषु इहकारस्य पुरस्तादार्चिकं वृद्धं तथेड़ायाः वाशब्दः तथा लाङ्गीसाम्नि क्रुष्टस्वरोह्योषोस्वरस्य पूर्वः तथा यौधाजये दार्ढच्युते आर्चिकं वृद्धम् इहकारात् पूर्वः आथर्वणे देवतायाः पूर्वो वाशब्द आन्धीगवे आकारः क्रुष्टोमध्ये निधनात् पूर्वं तथेहवद्वामदेव्ये ॥ ५ ॥

तेभ्यो यन्निगदवृत्यनन्तरमार्चिकन्तेन सहोपेयुरनादेशे*

॥ ६ ॥

तेभ्यो मध्ये निधनेभ्य उपायेभ्यस्व यन्निगदवृत्या वर्त्तते प्रथमोच्च-वृत्तिः प्रथमद्वितीयस्वरसंयुक्तं तत्तेन सहोपेयुर्निधनेन अनादेशे आदेशादन्यत्र अनादेशे यत्र लादेशस्तत्र यथादेशम् ॥ ६ ॥

पुरीषेष्वार्चिकं प्रस्तावात् † ॥ ७ ॥

पुरीषपदेषु सर्वेषु प्रस्तावात्परं यदार्चिकं तन्मध्ये निधनम् ॥ ७ ॥

क्रौञ्चे परिस्वारः † ॥ ८ ॥

स्वारे क्रौञ्चे यः परिस्वारः स मध्ये निधनं भवति अनुपायपूर्वत्वे सति ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

इहवद्वामदेव्ये पराविहकारौ* ॥ ९ ॥

मध्ये निधनं भवतः ॥ ९ ॥

निषेधे चोभौ* ॥ १० ॥

उभौ इहकारौ मध्ये निधनं भवतः अनेकशाखाप्रत्ययत्वादादिश्यते केषाञ्चित्प्राप्तिरस्ति केषाञ्चिन्नास्ति ॥ १० ॥

त्रिणिधने त्वाष्ट्री साम्न्युपग्रहादीनि* ॥ ११ ॥

त्रिणिधने त्वाष्ट्रीसाम्नि उपग्रहप्रभृतीनि सर्वाणि निधनानि भवन्ति एकार उपग्रह उच्यते ॥ ११ ॥

इलान्दानुगानतृतीय इहकारे विकल्पः* ॥ १२ ॥

इलान्दस्य यान्यनुगानानि तेषां तृतीयेऽनुगाने य इहकारस्तस्मिन् विकल्पः मध्ये निधनं भवति वा न वा ॥ १२ ॥

आतीषादीये च मध्ये निधने* ॥ १३ ॥

आतीषादीये च साम्नि यन्मध्ये निधनं तत्र विकल्पः स्यात् ॥ १३ ॥

पौरुमीढ़े मध्ये निधनं न* ॥ १४ ॥

पुरुमीढे साम्नि मध्ये निधनलक्षणं प्राप्तन्तेभ्यो यन्निगदवृत्यनन्तरमार्चिकमिति तन्न भवतीत्युद्गीथादित्वात् ॥ १४ ॥

आष्टादंष्ट्रसदोविशीयार्कपुष्पेषु च* ॥ १५ ॥

एतेषु च द्वितीयाष्टादंष्ट्रसदोविशीयार्कपुष्पद्वितीयेषु मध्ये निधनानि भवन्त्यस्मादेव कारणात् अथ विसमासः किमर्थमिति चेत्

---

* द्राह्यायणीये विशेषोऽस्ति ।

पौरुमीढ़ाष्टादंष्ट्रसदो विशोयार्कपुष्पेषु मध्ये निधनानि नेत्येवं कर्त्तव्य-मासीत् उच्यते असमासः क्रियते एवकारेषु सर्वेषु मध्ये निधनं नस्यात् अन्तरिक्षदेवस्थानादिषु ॥ १५ ॥

इकारादिमिड़ां सर्व उपेयुस्तानि प्रतीचीनेड़ानि* ॥ १६ ॥

उक्तानि मध्ये निधनानि साम्प्रतं सामान्तिकनिधनमुच्यते सामान्तिकत्वादिड़ायाः प्राप्तिरेव सर्वे मनसा निधनमुपयन्तीत्यन्यार्थ-दर्शनात् सर्वेषां सामान्तिकस्य निधनप्राप्तेरन्यार्थत्वादारभ्यते या इकारादिमिड़ान्तां सर्वे उपेयुः इह्रकारेण तानि प्रतीचीनेड़ानि येष्वेका ॥ १६ ॥

उकारन्त्वन्यास्तु गौतमः † ॥ १७ ॥

यानि न प्रतीचीनेड़ानि सामानि तेषु उकारमात्रमुपेयुरित्येवं गौतम आचार्य्यो मन्यते ॥ १७ ॥

इड़ेति धानञ्जप्यः † ॥ १८ ॥

धानञ्जप्य आचार्य्य आह इड़ेत्येवमुपेयुरिति ॥ १८ ॥

इकारान्तञ्चैवोपायं संप्रगायन्ति कुत्सा एवं नः कृत्स्ने-डोपेता भविष्यतीति प्रत्युद्गीतस्तु खल्वेषां तथोद्गाता भवति‡ ॥ १९ ॥

इकारो अन्ते यस्योपायस्य स इकारान्तः इकारादिषु निध-नेषु एवञ्चैवोपायं सम्प्रगायन्ति कुत्सा आचार्य्या एवं क्रियमाणेन

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् । ‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतं ।

कृत्स्नेड़ापेता भविष्यतीति किन्तु तथा क्रियमाणे एषाम् उद्गाता प्रत्युद्गाता भवति यथा प्रत्युक्तोऽनेन गुरुरिति ॥ १९ ॥

इति सप्तमस्य अष्टमी कण्डिका।

---

अथ नवमी कण्डिका।

प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चानादेशे ककुभावुत्तरे* ॥ १ ॥

प्रगाथेषु बृहद्रथन्तरयोः गीयमानयोर्यज्ञायज्ञीयस्य च उत्तरे स्तोत्रीये ककुभे कर्त्तव्ये अनादेशे आदेशादन्यत्र यथा वक्ष्यति रथन्तरं सर्वासु बृहतीष्विति तथा यज्ञायज्ञीयं सर्वास्वनुष्टुप्स्विति ॥ १ ॥

तयोर्द्व्यक्षरः प्रस्तावः सर्वत्र † ॥ २ ॥

तयोरुत्तरयोः स्तोत्रीययोर्द्व्यक्षरः प्रस्तावः सर्वत्र स्यात् अत्र सर्वग्रहणं किमर्थमिति उच्यते प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चेत्येतत्प्रकृतं सोऽयमाचार्य्यः सर्वग्रहणं करोति कथं यज्ञायज्ञीयबृहद्रथन्तराणां प्रगाथेषु गीयमानानां तृचेषु उत्तरयोः स्तोत्रीययोः द्व्यक्षरः प्रस्तावः स्यात् ॥ २ ॥

तृचेषु त्वक्षरसङ्ख्येन † ॥ ३ ॥

तृचेषु गीयमानानां यज्ञायज्ञीयादीनां उक्तयोः स्तोत्रीययोर्द्व्यक्षरप्रस्तावता अक्षरसंख्येन स्यात् ॥ ३ ॥

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणेऽप्येवम्।

**प्रथमाया उत्तममक्षरं मध्यमायाश्च प्रथमम्*॥ ४ ॥**

कः पुनरक्षरसंश्लेष इति उच्यते, प्रथमायाः स्तोत्रीयाया उत्तममक्षरं मध्यमायाश्च प्रथमं तयोः संश्लेषं कृत्वा ततः प्रस्तुयात् एषोऽक्षरसंश्लेषः ॥ ४ ॥

**एवमेवापरे द्वितीयोत्तमयोः* ॥ ५ ॥**

एवमेवापरे अक्षरे कर्त्तव्ये द्वितीयोत्तमयोर्ऋचोः द्वितीयाया उत्तममक्षरं उत्तमायाश्च प्रथमम् एवं प्रगाथधर्मः कृतो भवति ॥ ५ ॥

**प्रस्तावप्रतिहारणिधनानामक्षरपरिमाणं सर्वत्र यथायोनि चिकीर्षेद्वैरूपच्छन्दसेष्वनादेशे* ॥ ६ ॥**

अयं कर्त्तव्यानां विधिरुच्यते प्रस्तावश्च प्रतिहारश्च निधनञ्च प्रस्तावप्रतिहारणिधनानि तेषां प्रस्तावप्रतिहारणिधनानामक्षरपरिमाणं सर्वत्र सर्वेषु सामसु वैरूपच्छन्दसेषु यथायोनि चिकीर्षेत् यथायोनि कुर्य्यात् इत्येतदुक्तं भवति वैरूपच्छन्दसेषु आदेशादन्यत्र अक्षरपरिमाणं यथायोनि कुर्य्यात् आदेशो यथा द्विपदासु वारवन्तीयस्य सप्तानां स्थाने चत्वारि द्वे चतुर्णां द्वे एकमित्येकपदायाम् ॥ ६ ॥

**यस्यार्चिकमुदात्तानुदात्तं तद्गूढमथ यस्य सामिकं तत् सामोढं यथा पौष्कलस्योत्तरयोर्यथा२३२विदे३२समा२३२सृजो२३दिति धानञ्जप्यस्तद्गूढं यथाविदे२३१११समासृ२जो२३११दिति शाण्डिल्यस्तत्सामोढम् †॥ ७॥**

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

यस्य साम्न आर्चिकमुदात्तानुदात्तम् ऋचि भवं आर्चिकं यदृ-च्युदात्तं तत्सामकालेऽप्युदात्तं यदृच्यनुदात्तं तत्सामकालेऽप्यनुदात्तं तदृगूढमित्युच्यते यस्य सामिकमुदात्तानुदात्तं सामोढं यथा पौष्कल-स्योत्तरयोरित्युदाहरणमुक्तं ऋगूढं धानञ्जय्यस्य सामोढं शाण्डि-ल्यस्य ॥ ७ ॥

ऊनाक्षरेषु पादेष्वक्षरोपधिं शाण्डिल्यो यथाग्नेस्त्रिणि-धनस्याइनूइपेर२२२गोऽमाइन् गोभिराइ२२उवा२२२आ३३३ क्षाइसोइमोऽदूर२३३घाभिराइ३३उवा३३३आ२२क्षाइस्त-दक्षरसधातु* ॥ ८ ॥

ये ऊनाक्षराः पादास्तेषु सामकाले अक्षरोपधानं मन्यते शाण्डिल्यः उदाहरणमुक्तं तदेतदक्षरसधात्वित्युच्यते ॥ ८ ॥

अनुपधिन्धानञ्जप्यः † ॥ ९ ॥

अनुपधानमक्षरस्य धानञ्जप्यो मन्यते उदाहरणम् ॥ ९ ॥

आइनूप३३३गोइमाइन् गोभिराइउवाइक्षा३३३सो-मोइदूर२२२घाभिराउवा२२२क्षा२३१११स्तत्पदसधातु † ॥ १० ॥

एतत्पदसधात्वित्युच्यते ॥ १० ॥

पाङ्क्तस्यानुष्टुप्सु द्वितीयं पदं द्वैधं व्यूहेद्यथर्षभस्य शाक्क-रस्य चतुरक्षरशः ‡ ॥ ११ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

‡ द्राह्यायणेऽप्येवम्।

पङ्क्त्यक्षरं पाङ्क्तः तस्य पाङ्क्तस्य साम्नः अनुष्टुप्सु गीयमानस्य द्वितीयं पदं द्वैधं व्यूहेत् द्विधा भजेत् पञ्चपदासम्पदर्थे चतुरक्षर- श्चतुरक्षरं चतुरक्षरश्चः यथा ऋषभस्य शाक्करस्यानुष्टुप्सु गीयमानस्य पवस्व वाजसातय इत्येतासु ॥ ११ ॥

तृतीयं यथा सङ्कृतिनो बृहतीष्वष्टाक्षरं चतुरक्षरञ्च* ॥ १२ ॥

पाङ्क्तस्य साम्नो बृहतीषु गीयमानस्य तृतीयं पदं द्वैधं व्यूहेत् अष्टाक्षरं चतुरक्षरञ्च पञ्चपदा सम्पदर्थमेव यथा संकृतिनः परीतोषिञ्च तासु तमित्येतासु गीयमानस्य ॥ १२ ॥

योनौ यान्यभ्यासेनान्यच्छन्दः सम्पद्यते यथा गौरीवितौ- दले कौत्सं त्रैककुभवैखानसे तदापन्नेषु गौतमसार्दागवा- वनभ्यासम् † ॥ १३ ॥

योनौ उत्पन्नावित्यर्थः योनिसामानि अभ्यासेन गीयमानानि छन्दोऽन्तरं सम्पद्यते यथा गौरीवितैादले गायत्र्यां गीयमाने अभ्या- सेनानुष्टुभं सम्पद्यते तथा श्रौष्णिहि गीयमानमभ्यासेन अनुष्टुभं सम्प- द्यते त्रैककुभम् उष्णिहि गीयमानमभ्यासेन बृहतीयं सम्पद्यते एतानि गौरीवितादीनि यथा तेष्वेव छन्दःस्वापन्ने यथा गौरीवितैादले पुरोजित्यान्त्रैककुभन्त्वमङ्गप्रशंश्निषायां वैखानसमभिप्रियायान्तदा

---

* द्राह्यायणीये विप्रोषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

गौतमशाण्डिल्यावाचार्य्यौ अनभ्यासं मन्येते अनभ्यासेन तच्छन्दश्चा-पत्तिः ॥ १३ ॥

**मशको गार्ग्योऽभ्यासं मशको गार्ग्योऽभ्यासम्*॥ १४ ॥**

मशको गार्ग्योऽभ्यासं मन्यते कस्मात् उत्पत्तिकोऽयमपूर्वो धर्म-स्तेषां स कथमृते वचनान्निवर्त्ततेति ॥ १४ ॥

इति सप्तमस्य नवमी कण्डिका।

---

अथ दशमी कण्डिका।

**उपास्थानेष्वन्यानि निधनानि* ॥ १ ॥**

इह आम्नायश्रुतिभ्यामुकथशाखाच आम्नाये उपा निधनानि पठ्यन्ते श्रुतिस्तु अध्यर्द्धेडं तथाह्येतस्याङ्गोरूपमिति तथाच इडा-वचनात् भवतीत्येवमुक्ता अर्द्धोपामुदाहरणत्वेनापाद्यते तत्किमेष विकल्पः अथ प्रत्याम्नायः समुच्चय इति एतस्मिन् संशये अथ-माचार्य्य आह उपास्थानेष्वन्यानि निधनानीति आम्नायिकीनामु-पानां स्थाने प्रयोगे अन्यानि निधनानि स्युः ॥ १ ॥

**स्वरानादेशे तथा स्वराणि स्युः* ॥ २॥**

येषां निधनानां स्वरो नादिश्यते तानि यत्स्वराणामूपानां स्थाने आदिश्येरंस्तथा स्वराणि स्युः॥ २ ॥

**इडा चानादेशे* ॥ ३ ॥**

---

* द्राह्यायणोऽप्येवम्।

इड़ा च स्यादनादेशे आदेशः स्वःकाशीते चशब्दः स्वरानुकर्षणार्थः कथं यत्स्वरा उपा तत्स्वरा इड़ा भवति ॥ ३ ॥

अध्यर्द्धा त्वध्यर्द्धोपानाम्* ॥ ४ ॥

अध्यर्द्धोपानां स्थाने तु अध्यर्द्धेड़ा स्यात् अथ तुशब्दः किमर्थम् उच्यते, अर्द्धोपानामर्द्धेड़ा ॥ ४ ॥

औत्पत्तिकः स्वरः † ॥ ५ ॥

उक्तं स्वराणादेशे तथा स्वराणि स्युरिति एवं प्राप्त आह अध्यर्द्धेड़ानामौत्पत्तिकः स्वरः स्यादिति औत्पत्तिकः पाठस्वर इत्यर्थः ॥५॥

स्वःकाशीते† ॥ ६ ॥

उपायाः स्थाने स्वः शब्दः स्यात् काशीते ॥ ६ ॥

दैवोदाससुज्ञानयोश्च* ॥ ७ ॥

दैवोदाससुज्ञानयोश्च साम्नोः उपायाः स्थाने स्वः शब्दः स्यात् ॥७॥

स्वःपृष्ठे च पूर्वः* ॥ ८ ॥

स्वः पृष्ठे चाङ्गिरसे द्वे उपे मध्ये पठिते तयोः पूर्वस्य स्थाने स्वः शब्दः स्यात् ॥ ८ ॥

उत्तर इति गौतमधानञ्जप्यौ* ॥ ९ ॥

गौतमधानञ्जप्यावाचार्य्यावाहतुः उत्तरः स्वः शब्दः स्यात् स्वः पृष्ठ इति ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

**औपगवयोरथामथा वा* ॥ १० ॥**

औपगवयोः साम्नोः उपाययोः स्थाने अथा स्यात् मथा वा ॥१०॥

**काममन्तु नानाभिचरणीयेषु वा मथाथान्यत्र † ॥ ११ ॥**

कामन्तु क्रतुषु नाना पृथक् स्याताम् अभिचरणीयेषु क्रतुषु मथा वा स्यात् अथवा परिभाषितम् अन्यत्र अथा स्यात् अभिचरणीयेषु वा मथेत्युक्ते सिद्धं भवत्यन्यत्राथेति तत्किमिदमारभ्यते अन्यत्राथेति उच्यते यदि नारभ्यते ततोऽन्यत्र विकल्पः स्यात् ॥ ११ ॥

**जागतस्य सोमसाम्न इन्द्र इव दस्यूं३ रमृणा २३१११: सूर्य इव दस्यूं३ रमृणा २३१११ वज्रिन् सुवज्रो२३१११ निन्द्र-इव दस्यूं३ रमृणा २३१११: सूर्य इव दस्यूं३ रमृणा वज्रि-न् सुवज्रो२३१११निति वेन्द्र इव दस्यूं३रमृणः सूर्यइव दस्यूं३-रमृणा २३१११वज्रिन् सुवज्रो २३१११ निति वेन्द्र इव दस्यूं३-रमृणः सूर्य्य इव दस्यूं३ वमृणा वज्रिन् सुवज्रो २३१११ निति वा ‡ ॥ १२ ॥**

जागतस्य सोमसाम्न उपास्थाने एतानि यथोद्दिष्टानि निधनानि विकल्पेन स्युः स्वरविशिष्टानि ॥ १२ ॥

**कार्त्तयशे त्रयो विकल्पादयिन्नवे २२ हउ३ २२ दयिन्नवे २२२ हउ३ २२ दयिन्नवे हउ३ २३१११ † ॥ १३ ॥**

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

कार्त्तयशे साम्नि उपायाः स्थाने साम्नो मध्ये तावत्त्रयो विकल्पाः स्युः एते यथाम्नाताः स्वरविकल्पाः ॥ १३ ॥

**एवमेवोत्तरस्मिन्निधने* ॥ १४ ॥**

एवमेवोत्तरस्मिन् साम्नोऽन्तिके निधने त्रयो विकल्पाः स्युः ॥१४॥

**गायत्रस्य पदेन प्रस्तावः सर्वत्र* ॥ १५ ॥**

उक्तं सर्वसाम्नां पञ्चत्वं साम्प्रतङ्गीतिविधानमुच्यते तद्विधित्सुराह गायत्रस्य पदेनेति तत्किमिदं गायत्रस्य शास्त्रेण गीतिविधानमुत्पद्यते उच्यते तद्धि गायत्रं सर्वच्छन्दस्सु उत्पन्नमविशेषेण नचेदं पर्कादौ समाम्नाये पठितं तद्यथान्धकारस्थो घटः विद्यमानोऽपि ऋते प्रदीपान्नोपलभ्यते एवमिदं साम विद्यमानमपि ऋते शास्त्रान्नोपलभ्यते सोऽयमाचार्यो द्योतनार्थं शास्त्रमारभते गायत्रस्य पदेन प्रस्तावः सर्वत्रेति गायत्रं साम तस्य पदेन प्रस्तावः सर्वत्र सर्वछन्दस्सु गीयमानस्य ॥ १५ ॥

**अष्टाक्षरेणेति धानञ्जप्यः* ॥ १६ ॥**

धानञ्जप्य आचार्य्य आह सर्वछन्दस्सु गीयमानस्य गायत्रस्य अष्टाक्षरेण प्रस्तावः स्यादिति सर्वत्र प्रकृतम् ॥ १६ ॥

**तथा पुराणं ताण्डम्* ॥ १७ ॥**

यथा अष्टाक्षरेण प्रस्ताव इति एवं पुराणन्ताण्डं ताण्डकमेव ताण्डं ये ब्राह्मणावच्छेदास्तान् पुराणास्ताण्डमित्युपचरन्ति ॥ १७ ॥

**तस्य निदर्शनार्थं गानं गायत्रीषु* ॥ १८ ॥**

---

* द्राह्यायणेऽप्येवम् ।

तस्याष्टाक्षरप्रस्तावस्य निदर्शनार्थं गायत्रीषु दृष्टं यावता देवताध्याये पठति अथातो गायत्रमाग्नेयं भक्त्या भवति देवतानामृषीणां वा परमेष्ठिनो वा प्राजापत्यस्य साम सावित्री गेयं यत्राधीतं तत्सवितुर्वरेण्यिोम् इति सिद्धे सति पादिके प्रस्तावेऽपि विकर्षेणामनन्तीत्यष्टाक्षरप्रस्तावानां ज्ञापयति ततः सूत्रमुत्सारयति ॥ १८ ॥

उपास्मै गायता नरो २ मिति धानञ्जप्य उपास्मै गायता नरो ३ इति शाण्डिल्य उपास्मै गायता नरा ३ इत्येके* ॥ १९ ॥

सूत्रकारोऽपि गायत्रीष्वेव निदर्शनार्थं गानं दर्शयति तत्र प्रस्तावस्तावदुक्तः ॥ १९ ॥

शेषमुद्गाता मनसा तु स्वभक्तिमोङ्कारं तथा स्वरं वाचा गायेत् † ॥ २० ॥

प्रस्तावादूर्द्ध्वं यः शेषस्तमुद्गाता ब्रूयात् मनसा तु स्वभक्तिं ध्यायेत् ओङ्कारं तथा स्वरं यः स्वरः शेष आम्नातस्तथा स्वरमोङ्कारं वाचा गायेत् ॥ २० ॥

पा२वमानायेन्दा२वा२२इत्येकावृदभिदेवा२ इया२इत्यपरा२ता २त इत्यरा* ॥ २१ ॥

उक्तन्यावृद्गेयमिति ता आवृतय उच्यन्ते पा२वमानायेन्दा-

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

३बा२३इत्येकावृत् अभिदेवाम् इया२इत्यपरा द्वितीया आवृत् चा२त इत्यपरा तृतीया एता आवृत इति ॥ २१ ॥

पूर्वावावर्गाववनर्द्दाविति धानञ्जप्यः* ॥ २२ ॥

द्विरवनर्द्दद्धिं कुर्य्यात् तृतीयमिति तत्कस्मिन् अवनर्द्दसंज्ञेति उच्यते यौ पूर्वावावर्गौ ताववनर्द्दाविति धानञ्जप्य आचार्य्यो मन्यते आवृती एव आवर्गः ॥ २२ ॥

मध्यमायामावृति द्वौ स्तोभौ कुर्यात्ताववनर्द्दाविति गौतमः*॥ २३ ॥

गौतम आचार्य्य आह या मध्यमा आवृत् तस्यामन्यौ स्तोभौ कुर्य्यात्ताववनर्द्दाविति ॥ २३ ॥

अभिदेवा७ इया २३२३ इति* ॥ २४ ॥

इत्युदाहरणम् ॥ २४ ॥

इति सप्तमस्य दशमी कण्डिका ।

---

अथ एकादशी कण्डिका ।

ज्यायसि छन्दसि प्रथमायामावृत्त्यावपेदुत्तमं पदं शिष्ट्वा* ॥ १ ॥

उक्तं तस्य निदर्शनार्थं गानं गायत्रीष्विति तद्यदा ज्यायसि

---

* द्राह्यायणोऽप्येवम् ।

छन्दसि गायेद्गायत्रं तदा योऽसावावापः तं प्रथमायामावृत्यावपेत् तावदावपेद्यावदुत्तमं पदं शिष्टमिति ॥ १ ॥

अष्टाक्षरमिति धानञ्जप्यः* ॥ २ ॥

धानञ्जप्य आचार्य्य आह अष्टाक्षरं शिष्ट्वा अन्यत्सर्वं प्रथमायामावृत्यावपेदिति धानञ्जप्यस्याष्टाक्षरः प्रस्तावः यत्र पुनः पदेन प्रस्तावस्तत्रोत्तमं पदं शिष्ट्वा ॥ २ ॥

ऊर्द्ध्वं रेतस्याया द्व्यक्षरꣳ शिष्ट्वा हिङ्कारं ब्रूयाद्धुं२आ२२ इति* ॥ ३ ॥

उक्तमहिंकृता प्रथमा रेतस्येति तस्या रेतस्याया ऊर्द्ध्वं या अन्याः स्तोत्रीयास्तासु द्वितीयाया आवृतः ऊर्द्ध्वं द्व्यक्षरं शिष्ट्वा हिङ्कारं ब्रूयाद्धुं२ आ२२इति सकृत्कृष्टमाकारं कुर्य्यात् ॥ ३ ॥

तꣳ रेतस्यायां प्रतिहर्त्ता मनसा ध्यायेन्न परास्विति गौतमः* ॥ ४ ॥

तं हिङ्कारं रेतस्यायां प्रतिहर्त्ता मनसा ध्यायेत् उक्तं हिङ्कारो वै गायत्रस्य प्रतिहारः स मनसा ध्येय इति परासु स्तोत्रीयासु ऊर्द्ध्वं रेतस्याया न मनसा ध्यायेत् एवं गौतम आचार्य्यो मन्यते ॥ ४ ॥

परास्वेवेति धानञ्जप्यशाण्डिल्यौ* ॥ ५ ॥

धानञ्जप्यशाण्डिल्यावाचार्य्यावाहतुः परास्वेव स्तोत्रीयासु हिङ्कारं प्रतिहर्त्ता मनसा ध्यायेत् न रेतस्यायामेवेति एवशब्दो नियमार्थः ॥५॥

---

* द्राह्यायणेऽप्येवम्।

**रथन्तरवर्णायां चत्वार्य्यक्षराण्यभिष्टोभेद्भाभा इति शाण्डिल्य भभ इति धानञ्जप्यस्त्र्यक्षरञ्चाभिष्टोभेत् प्रथमं त्र्यक्षरं लुप्तमिति* ॥ ६ ॥**

उक्तं रथन्तरवर्णोत्तमा विसृष्टहिङ्कारेति तस्यां रथन्तरवर्णायाञ्चत्वार्य्यक्षराण्यभिष्टोभेद्भाभा इति एवं शाण्डिल्य आचार्य्यो मन्यते भ भ इति त्र्यक्षरञ्चाभिष्टोभेदित्येवं धानञ्जप्य आचार्य्यो मन्यते प्रथमं त्र्यक्षरं लुप्तमिति उक्तं प्रथमाक्षरलोपन्तु धानञ्जप्य इति तल्लोपपक्षे त्र्यक्षरमभिष्टोभेत् अलोपे चतुरक्षरमिति ॥ ६ ॥

**ऊं २२ इति हिङ्कारः † ॥ ७ ॥**

तस्यां रथन्तरवर्णायामेवमेकाक्षरो हिङ्कारः स्यात् उक्तमविसृष्टहिङ्कारेति ॥ ७ ॥

**द्वादशाक्षराण्यभिष्टोभेदनुष्टुभि † ॥ ८ ॥**

यदि रथन्तरवर्णा अनुष्टुप् भवति ततो द्वादशाक्षराण्यभिष्टोभेत् ॥ ८ ॥

**सर्वत्र चत्वारीति शाण्डिल्योयर्थर्चं चान्तं ब्रूयात् ‡ ॥९॥**

शाण्डिल्य आचार्य्य आह सर्वत्रानुष्टुभि चत्वार्य्यक्षराण्यभिष्टोभेत् यथर्चञ्चान्तं ब्रूयात् ॥ ९ ॥

**क्षा २ ता २ इवा २ यू २ इति ‡ ॥ १० ॥**

---

* द्राह्यायणेनेतेन सूत्रचतुष्टयं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणीये छेदविषये विशेषोऽस्ति ।

उदाहरणम् ॥ १० ॥

**आकारं त्वाचार्य्यास्तं दीर्घम्*** ॥ ११ ॥

आकारमाचार्य्या अन्तं मन्यन्ते तमाकारं दीर्घं त्रिमात्रं मन्यन्ते ॥ ११ ॥

**अवस्वरेदिति धानञ्जप्यः हा २ तो २ आ २१११ †** ॥१२॥

अवस्वरेदिति अवस्वरान्तं कुर्य्यादित्येवं धानञ्जप्य आचार्य्यो मन्यते अव अधोभावे हा२तो२आ२१११इत्येतत्स्वरं कुर्य्यात् ॥ १२ ॥

**हातो वा इति गौतमः †** ॥ १३ ॥

गौतम आचार्य्य आह हातो वा इत्येतं कुर्य्यात् ॥ १३ ॥

**हातो आ इत्येके †** ॥ १४ ॥

एके आचार्य्या इत्येवं मन्यन्ते हातो आ इत्येवं कुर्य्यात् ॥१४॥

**काम्यानां निधनानां किञ्चिच्चिकीर्षन्नुत्तमस्य द्व्यक्षरस्य स्थाने कुर्य्यादिति गौतमः ‡** ॥ १५ ॥

इह काम्यानि निधनानि पठितानि गायत्रस्य इड़ा पशुकामाय निधनं कुर्य्यादित्येवमादीनि तेषां काम्यानां निधनानां किञ्चिच्चिकीर्षन् यदुत्तमं द्व्यक्षरं वाचा यस्मिन् वृद्धिः क्रियते तस्य स्थाने तत्काम्यं निधनं कुर्य्यादित्येवं गौतम आचार्य्यो मन्यते ॥ १५ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् तत्र विशेषश्च कृतः ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

‡ द्राह्यायणोऽप्येवम् ।

अभिदेवा३ँ हयच्चता २२३२३ इति वा सर्वामृचं समाप्य* ॥ १६ ॥

अनेन वा प्रकारेण सर्वामृचं समाप्य तत उकारस्थाने स्युः ॥१६॥

अविकारेण सर्वं गीत्वेति धानञ्जप्यस्तान्याकारस्थानेषु स्युर्निधनत्वेन हि चोद्यन्ते † ॥ १७ ॥

धानञ्जप्य आचार्य्य आह अविकारेण सर्वं गायत्रं गीत्वा यो-ऽसावाकारोनिधनत्वेन चोदितोऽनेकप्रकारः तस्यैव स्थानेषु स्युः तानीड़ादीनि काम्यादीनि निधनत्वेन हि चोद्यन्ते हिशब्दः कारणो-पदेशार्थः यस्मान्निधनत्वेन चोद्यन्ते तस्मात्तानि निधनस्यैव प्रत्या-म्नायिकानि ॥ १७ ॥

अकृतलक्षणचोदनाश्चौत्पत्तिकस्वराणि* ॥ १८ ॥

अकृतलक्षणानि चोद्यन्ते शब्दमात्रेण इड़ां पशुकामायेति तस्माद्यो यस्य औत्पत्तिकः स्वरः तेन स्युः अथवा ऋचस्य लक्षणचोद-नानि ॥ १८ ॥

कृतस्वरन्तु निधनं तस्य चोद्यते वर्णविकारो यथा रथ-न्तरस्य गायत्र्यः † ॥ १९ ॥

तुशब्दः पूर्वपक्षनिवृत्त्यर्थः यदुक्तमौत्पत्तिकस्वराणि स्युरिति तत्र कृतस्वरं गायत्रस्य निधनं तस्यायं वर्णविकारश्चोद्यते अक्षरविकारः

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

यथा रथन्तरस्य गायत्रीषामसु गीयमानस्य वर्णा विक्रीयन्ते न स्वरः॥ १९॥

**तानि सर्वत्र स्युरनारभ्योत्पत्तित्वाद्गायत्रस्य* ॥ २० ॥**

तानि सर्वाणि काम्यानि निधनानि सर्वत्र यत्र यत्र प्रयुज्यन्ते गायत्रं तत्र तत्र स्युः यस्मादनारभ्यवादेनोत्पन्नानि ॥ २० ॥

**बहिष्पवमान इत्येके तद्धि विकारा नातिक्रामन्ति यथा रेतस्या रथन्तरवर्णे धुराश्च सामान्ताः† ॥ २१ ॥**

एके आचार्य्या मन्यन्ते एतानि काम्यानि निधनानि गायत्रस्य विकाराः ते बहिष्पवमानं नातिक्रामन्ति यथा रेतस्या रथन्तरवर्णे धुराश्च सामान्ता इति ॥ २१ ॥

**बहिष्पवमानसंयोगस्तु तेषां न कामसंयोगः* ॥ २२ ॥**

तुशब्दः पक्षव्यावृत्त्यर्थः सर्वत्रत्वेव स्युः काम्यानि निधनानि यावत्प्रयोगं गायत्रस्य यस्मात्तानि काम्यानि तस्माद्येते विकारास्तेषां बहिष्पवमानेनैव संयोगः काम्यानान्तु निधनानां कृत्स्नेन क्रतुना संयोगः तस्मात्तानि यावत्प्रयोगं गायत्रस्य स्युरिति ॥ २२ ॥

इति सप्तमस्य एकादशी कण्डिका।

---

अथ द्वादशी कण्डिका।

**गीतिविकारो गायत्रस्य धुरः* ॥ १ ॥**

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

इह ब्राह्मणन्धुरां प्रजापतिरकामयत बहु स्यां प्रजायेयेति स एतां रेतस्यामृचं साम्ना प्रयच्छन्नाम गाऽदिति श्रूयते त्रिरुद्गृह्णातीत्ये-तदादिभिर्निधनविशेषश्च सदिति प्रथमाया धुरो निधनमिति तत्रायं संशयः किमेतद्धुर्गानं सार्वत्रिकमथ कस्मिंश्चिद्विनिविष्टमिति सोऽयमाचार्यः शास्त्रमारभते गीतिविकारो गायत्रस्य धुर इति या एता धुरः श्रूयन्ते ता एताः प्रकृत्या गीतेर्विकारः ॥ १ ॥

**स्तोत्रीयानुरूपयोर्ज्योतिष्टोमस्याज्येषु च नान्यत्र* ॥ २ ॥**

स च विकारः स्तोत्रीयानुरूपयोर्भवति आज्येषु च ज्योतिष्टोमस्य अन्येषु क्रतुषु न भवति ॥ २ ॥

**रेतस्यायास्त्रिरुद्गृह्णातीति ब्राह्मणं भवति पा२३२ वा२३२ मानायेन्दा ३ वा २३२ इ* ॥ ३ ॥**

रेतस्यायाः स्तोत्रीयायास्त्रिरुद्गृह्णातीति एतत् ब्राह्मणं भवति यासौ प्रकृत्यां गीतौ प्रथमा आवृत् पा२३२वा२३२मानायेन्दा३वा-२३२ इति एतस्यां त्रिरुद्ग्रहणं कृतं तदनेन गीतेनोच्चारितमेव ॥ ३ ॥

**गायत्र्युत्तरा तस्या द्वे त्र्यक्षरे समायनी व्यतिषजतीति ब्राह्मणं भवति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथम-माथर्वाणो अग्निरादे ३३२ युर्वन्देवा यदा ३३३३ † ॥ ४ ॥**

तस्या रेतस्यायाः या उत्तरा तस्या गायत्रीति संज्ञा व्यावहारिकी

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतं ।

नायं छन्दस आदेशः तस्या ब्राह्मणं भवति सशयनी द्वेऽचरे व्यतिषजतीति समानशयनी सशयनी कः पुनस्तयोर्व्यतिषङ्ग इति समुच्चारयत्येवं मध्यमस्य पदस्य उत्तममचरं उत्तमस्य पदस्य प्रथममचरं एतयोर्व्यतिषङ्गः सोऽनेनैवोच्चारित एव ॥ ४ ॥

त्रिष्टुबुत्तरा तां बलवदिवोरसेव गायन्तीति ब्राह्मणं भवति शां २२२ जा २२२ ना २२२ य शमर्वा २ ता २ इशा७ रा २२ जा २२ नो २२२२२ षा २ धा २२२२२* ॥ ५ ॥

तस्या गायत्र्या या उत्तरा स्तोत्रीयास्तस्यास्त्रिष्टुबिति संज्ञा संव्यवहारिकी तस्या ब्राह्मणं बलवदिव उरसेव गायतीति विकार उच्चारित एवानेन ॥ ५ ॥

उत्तमार्द्धं द्वे अचरे द्योतयतीति ब्राह्मणं भवति † ॥ ६ ॥

तस्या एवं ब्राह्मणं उत्तमस्य पदस्यार्द्धं द्वे अचरे द्योतयतीति ॥ ६ ॥

ये ऊर्द्धं हिङ्कारात्ते निर्ब्रूयादिति गौतमः † ॥ ७ ॥

ये हिङ्कारादूर्द्धं द्वेऽचरे ते निर्ब्रूयादित्येवं गौतम आचार्य्यो मन्यते ॥ ७ ॥

षाधा इति धानञ्जप्यः † ॥ ८ ॥

षाधा इति धानञ्जप्य आचार्य्यो मन्यते षाधा इत्येते अचरे निर्ब्रूयादिति एतत् द्योतनं निर्वचनम् ॥ ८ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

जगत्युत्तरा तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशभ्योऽक्षरेभ्य इति ब्राह्मणं भवति पा२रिष्टो भा २३३ न्ता२३ या कृपा२३२सो३ मा: शुक्रा२३२ गा ३ वा ३३-३३३* ॥ ९ ॥

तस्या: त्रिष्टुभ: या उत्तरा स्तोत्रीया तस्या जगत्येषा संज्ञा संव्यवहारिकी तस्या ब्राह्मणं चत्वारि चत्वारि अक्षराणि निक्रीड़यन्निव गायत्या द्वादशभ्योऽक्षरेभ्य इति स गीतिविकारस्तेनैव पठित एव ॥९॥

उत्तमार्द्धे चत्वार्यक्षराणि द्योतयतीति ब्राह्मणं भवति † ॥ १० ॥

तस्या एवं ब्राह्मणम् उत्तमपादार्द्धे चत्वार्य्यक्षराणि द्योतयतीति ॥ १० ॥

द्वे पुरस्ताद्धिङ्कारात्तथोपरिष्टादिति गौतम:* ॥ ११ ॥

तत्र गौतम आचार्य्यो मन्यते हिङ्कारस्य पुरस्ताद्द्वेऽक्षरे निर्ब्रूयात् उपरिष्टादपि द्वे एवेति ॥ ११ ॥

सोमा: शुक्रा इति धानञ्जप्य:* ॥ १२ ॥

धानञ्जप्य आचार्य्यो मन्यते सोमा: शुक्रा इत्येतानि चत्वार्य्यक्षराणि निर्ब्रूयादिति ॥ १२ ॥

अनुष्टुबुत्तरा तान्निनर्दन्निव गायतीति ब्राह्मणं भवत्या३

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

वाजं वाज्यक्रमी२२२२२ त् सीदन्तो वा२२२२२नुषा २२२२२* ॥ १३ ॥

तस्या जगत्याः या उत्तरा स्तोत्रीया तस्या अनुष्टुबिति संज्ञा तस्या ब्राह्मणं निरर्द्धन्निव गायतीति गीतिविकार उच्चारितः अनेनैव ॥ १३ ॥

निरुक्ताञ्चानिरुक्ताञ्च गायतीति ब्राह्मणं भवति † ॥१४॥

तस्या एवानन्तरं पठति निरुक्ताञ्चानिरुक्ताञ्च गायतीति तत् किमिदं तस्या एवैतद्ब्राह्मणम् उत अन्यस्या इति उच्यते ॥ १४ ॥

इति सप्तमस्य द्वादशी कण्डिका।

---

अथ त्रयोदशी कण्डिका।

समस्तब्राह्मणं धुरां मन्य इति गौतमस्त्रिष्टुब्जगत्योर्ह्यक्षराणि निराहेति † ॥ १ ॥

गौतम आचार्य्यो मन्यते सर्वासान्धुरां समस्तानामेतद्ब्राह्मणं स्यादिति कस्मात् यस्मात् त्रिष्टुब्जगतीसंज्ञयोः स्तोत्रीययोरक्षराणां निर्वचनं कृतम् एवं समस्तानान्धुरां निरुक्तानिरुक्तता दृष्टा ॥ १ ॥

एतस्या एवेति धानञ्जप्यशाण्डिल्यौ † ॥ २ ॥

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणेऽप्येवम्।

धानञ्जय्यशाण्डिल्यावाचार्य्यावाहतुः येयमनुष्टुप्संज्ञा स्तोत्रीया तस्या एवैतद्ब्राह्मणं निरुक्तास्वानिरुक्तास्व गायतीति कथं पुनः स्यादुभयया गानमिति उच्यते ॥ २ ॥

**तस्या द्वितीयं पदं निर्ब्रूयात् तृतीये चाक्षरे पञ्चमषष्ठे* ॥ ३ ॥**

तस्या अनुष्टुप्संज्ञायाः स्तोत्रीयाया द्वितीयस्य पदस्य निर्वचनं कुर्य्यात् तृतीये च पदे पञ्चमषष्ठेऽक्षरे निर्ब्रूयात् एवं तस्या निरुक्तानिरुक्तता भवति ॥ ३ ॥

**पङ्क्तिरुत्तरा † ॥ ४ ॥**

तस्या अनुष्टुभः या उत्तरा स्तोत्रीया तस्याः पङ्क्तिरिति संज्ञा ॥ ४ ॥

**तस्या द्वे द्वे अक्षरे उदासङ्गायत्त्याषड्भ्योऽक्षरेभ्य इति ब्राह्मणं भवति संजा२१ ग्मानो२ दा२ इवा२ † ॥ ५ ॥**

उदस्योदस्योदासं तदुदस्तगानं पठितमेव ॥ ५ ॥

**का२ वा२ इति धानञ्जय्यः क वा२ इति शाण्डिल्यः ‡ ॥ ६ ॥**

उत्तमयोरक्षरयोर्गीतिविकारं धानञ्जय्यशाण्डिल्यावाचार्य्यौ विकल्पयतः ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

सदिति रेतस्याया निधनꣳ समिति गायत्र्याः स्वरिति त्रिष्टुभ इडेति जगत्या वागित्यनुष्टुभः* ॥ ७ ॥

सदिति प्रथमाया धुरो निधनमित्येतदादि ब्राह्मणं तानि निधनानि सदित्येतदादीनि रेतस्यादिषु धूर्षु कृतसंज्ञासु नियुज्यन्ते एतानि रेतस्यादिषु यथासंख्येन निधनानि भवन्ति ॥ ७ ॥

तेषामुक्तोऽन्यायः काम्यैः सामान्तैः* ॥ ८ ॥

तेषां निधनानां सदित्येतदादीनां व्याख्यातोऽन्यायः काम्यैः सामान्तैः इड़ां पशुकामायेत्येतदादिभिः ॥ ८ ॥

न ऊर्द्ध्वं बहिष्पवमानात् स्युः* ॥ ९ ॥

इड़ादीनि काम्यानि निधनानि यावत्प्रयोगं गायत्रस्य भवन्ति तानि सदादीनि बहिष्पवमान एव भवन्ति नोर्द्ध्वम् ॥ ९ ॥

जगतीं गायत्रीं त्रिष्टुबनुष्टुभाविति पृथगाज्यप्रथमासु गायेत् तत्पुराणं यथाज्यगानम् † ॥ १० ॥

उक्तम् एताः संज्ञाः संव्यवहारार्था इति जगतीं गायत्रीं त्रिष्टुभमनुष्टुभमिति पृथगेकैकामेकैकस्मिन्नाज्ये प्रथमायां प्रथमायामृचि गायेत् यथासंख्येन एतत्पुराणं यथाज्यगानमुक्तं यथाज्यं गायेदिति एतासां सर्वासाङ्गीतिरुक्ता ॥ १० ॥

गायत्रीत्रिष्टुभोर्व्यतिक्रमं धानञ्जय्यः* ॥ ११ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

गायत्र्याः त्रिष्टुभश्च व्यतिक्रमं धानञ्जप्यो मन्यते त्रिष्टुभं कृत्वा गायत्रीं कुर्य्यात् ॥ ११ ॥

**गायत्रीं मैत्रावरुणस्याज्यप्रथमायां होतुरितरा आदितस्तत् पुराणꣳ होतुराज्यगानम्* ॥ १२ ॥**

गायत्रीं मैत्रावरुणस्याज्यप्रथमायां गायेत् इतरा त्रिष्टुब्जगत्यनुष्टुभः होतुराज्ये प्रथमायामादितः कुर्य्यात् तत्पुराणं होतुराज्यगानम् उक्तं होतुराज्ये गायेदिति ॥ १२ ॥

**त्रिष्टुभ उत्तरां गायत्रीं गीत्वा तस्याएव द्वितीयायामृच्यनुष्टुभं गायेदिति धानञ्जप्यो गायेदिति धानञ्जप्यः† ॥ १३ ॥**

एतस्मिन्नेव होतुराज्यगाने त्रिष्टुभं गीत्वा तस्योत्तरां गायत्रीं गायेत् ततस्तस्यां त्रिष्टुभ उत्तरां गायत्रीं गीत्वा तस्या एव या द्वितीया ऋक् तस्यामनुष्टुभं गायेदित्येवन्ताः सर्वा होतुराज्ये गीता भवन्ति एवं धानञ्जप्य आचार्य्य आह ॥ १३ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

इति सप्तमस्य त्रयोदशी कण्डिका ।

इति सप्तमः प्रपाठकः समाप्तः ।

## अष्टमः प्रपाठकः ।

अथ प्रथमा कण्डिका ।

उदगयनपूर्वपक्षपुण्याहसन्निपाते यज्ञकालोऽनादेशे* ॥१॥

इह त्रिकाण्डो यज्ञः एकाहाहीनसत्राणीति तेषां सर्वेषां सर्वक्रत्वधिकार इत्यत आरभ्य सामान्यो विधिरुक्तः साम्प्रतं प्रतिकाण्डं विधिर्विवक्षितः तं विवक्षुः सामान्यां तावत्परिभाषामारभते उदगयनपूर्वपक्षपुण्याहसन्निपाते यज्ञकालोऽनादेश इति उदगयनं पूर्वपक्ष इति सिद्धं कालज्ञाने तत्र न पूर्वं प्रकृतं पूर्वपक्षउदगयनमिति कालनिर्देशः आदित्यस्य संवत्सरे द्वे गती उदीची दक्षिणा च तद्यदा उदीचीन्दिशमाश्रित्य गतिर्भवति तदुदगयनमुच्यते तत्र न पूर्वं प्रकृतं पूर्वपक्षो मासस्य द्वौ पक्षौ पूर्वश्चोत्तरश्च पूर्वपक्षो ज्यौत्स्न इत्यर्थः तेन मास आरभ्यते पुण्यमहः पुण्याहं तद्यस्यानुकूलेन नक्षत्रेण युक्तं तत्तस्य पुण्यम् उदगयनञ्च पूर्वपक्षश्च पुण्याहञ्च उदगयनपूर्वपक्षपुण्याहानि तेषां सन्निपातः उदगयनपूर्वपक्षपुण्याहसन्निपातः एकत्र निपातः सन्निपातः तस्मिन् उदगयनपूर्वपक्षपुण्याहसन्निपाते यज्ञकालः तस्मिन् काले यज्ञः प्रवर्त्तते अनादेशे आदेशादन्यत्र आदेशग्रहणस्य प्रयोजनमुक्तमादिष्टत्र एव आदेशः षष्ठ्यां शरदि कार्त्तिके मासि यजेत त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्न्याय

---

* द्राह्यायणोऽप्येवम् ।

प्रथमायां पूर्वपक्षस्य दीक्षेतैकाहेभ्यः एवमादय आदेशाः अथ काल-ग्रहणं किमर्थमिति चेत् उच्यते एष यस्यारम्भकालः सन्निपातग्रहणं यथासम्भवम् ॥ १ ॥

संख्यामात्रे च दक्षिणा गावः* ॥ २ ॥

यत्र संख्यामात्रं दक्षिणामादिश्यते द्वादशं शतं दक्षिणाः सहस्रं वा-ऽयुतमिति न द्रव्यं विशिष्यते तत्र दक्षिणा गावः प्रत्येतव्याः अथ मात्र-ग्रहणं किमर्थमिति चेत् उच्यते, ग्रहणमात्रं यस्मात् तत्रापि गाव एव प्रत्येतव्याः यथा इतरेभ्यः किञ्चिद्दद्यात् कुलदक्षिणइन्द्राग्न्योः कुला यत्र इति चशब्दो नादेशानुकर्षणार्थः ॥ २ ॥

हिरण्यमिति जातरूपं प्रतीयात्* ॥ ३ ॥

हिरण्यमिति यत्र ब्रूयात् तत्र जातरूपं प्रतीयात् अयं हिरण्य-शब्दस्ताम्रादिषु वर्त्तते सोऽयमाचार्य्यो विशिनष्टि यत्र यत्र हिरण्य-मिति ब्रूयात् तत्र तत्र जातरूपं सुवर्णं प्रतीयात् यथा तस्य दीक्ष-णीयायामिष्टौ द्वादशमानं हिरण्यं ददातीति यथोत्साहं दद्यात् तथा हिरण्यस्येति अथ प्रतीयादिति किमर्थम् उच्यते दक्षिणा इति प्रकृतम् अतः प्रतीयादिति ब्रवीति यत्र यत्र हिरण्यमिति ब्रवीति तत्र तत्र जातरूपं प्रतीयात् न केवलं दक्षिणासु यथा हिरण्यस्रजः ऋत्विजो भवन्तीति तं हिरण्येनान्तर्द्धायाभिमृशेयुः हिरण्यमल्पीयो-भागादागच्छेदित्यादि ॥ ३ ॥

प्रथमायां पूर्वपक्षस्य दीक्षेतैकाहेभ्यः* ॥ ४ ॥

---

* द्राह्यायणेऽप्येवम् ।

उक्तमुदगयनादिषन्निपातदृत्येव विकल्पयत्येकाहेषु या प्रथमा तिथिः पूर्वपक्षस्य तस्यान्दीक्षेतैकाहेभ्यः तादर्थ्ये चतुर्थी शुक्लप्रतिपदित्यर्थः अथ सिद्धे सति पूर्वपक्षस्येति किमर्थमारभ्यते उच्यते वक्ष्यति दृष्ट्वा वा नक्षत्रयोगमिति तत्रापि पूर्वपक्ष एव ॥ ४ ॥

**दृष्ट्वा वा नक्षत्रयोगम्* ॥ ५ ॥**

तेषामेका दीक्षेति शेषः यत्रानुकूलं नक्षत्रयोगं स्यात् तत्र प्रथमायां पूर्वपक्षस्येति ॥ ५ ॥

**तेषामेका दीक्षानादेशे तिस्रश्चतस्रोऽपरिमिता वा* ॥ ६ ॥**

तेषामेकाहानामेकादीक्षा भवेत् अनादेशे आदेशे तु यथादेशं यथा तस्य द्वादशदीक्षोपसद इति तथा एकाभ्यारोहणीयस्य तिस्रोऽभिषेचनीयस्येति अथवा तिस्रो दीक्षाः स्युश्चतस्रो वा अपरिमिता वा अथ किमर्थं तिस्रश्चतस्रोऽपरिमिता वेति सिद्धे उच्यते तिसृचतसृभ्योऽतिरिक्तमपरिमाणं स्यात् अथवा अनादेशे द्वे स्यातामिति अथ तेषामिति किमर्थम् अधिकृता एकाहाः उच्यन्ते दृष्ट्वा वा नक्षत्रयोगमित्येतदधिकृतमिति यदि दृष्ट्वा नक्षत्रयोगं यदि प्रथमायां तेषामेव अपरिमाणस्य को विषयः सोमापहारः ॥ ६ ॥

**तिस्र उपसदः* ॥ ७ ॥**

तेषां तिस्र उपसदो भवन्ति सर्वेषामेकाहानामनादेश इति पूर्ववत् ॥ ७ ॥

---

* द्राह्यायणेऽप्येवम् ।

ज्योतिष्टोमस्योक्थानामुत्तरे सौभरनार्मेधे अतिरात्र उक्थान्त इतराणीति गौतमो वृत्तिग्रहणात्* ॥ ८ ॥

इह ज्योतिष्टोमप्रकरणे देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन्नभिजेतुमित्येतदधिकृत्य साकमश्वसौभरनार्मेधहारिवर्णादं-शीयाष्टादंष्ट्राणि षडुक्थानि पठन्ति तत्किन्तानि विकल्पेन भवन्ति अथातिरात्र एव अथ विशिष्टविषयाणीति तस्मिन् संशये सूत्रमार-भते ज्योतिष्टोमस्योक्थानामुत्तरे सौभरनार्मेधे अतिरात्रे स्याताम् इतराणि हारिवर्णादीनि त्रीणि उक्थान्ते स्युः साकमश्वं व्यवस्थितमेव उभयोरप्याष्टादंष्ट्रादंशीययोर्विकल्पः स्यात् वृत्तिर्मशकेन एवं दृष्टा अनाम्नानात् एवं गौतम आचार्य्यो मन्यते कस्मात् वृत्तिग्रहणात् मशकेनैव दृष्टा सूत्रद्वयस्यार्थो व्याख्यानवशात् निदानेन सह विरु-ध्यते ॥ ८ ॥

अनियोगमितरेषां धानञ्जप्योऽविशेषाम्नानात्* ॥ ९ ॥

हारिवर्णादंशीयाष्टादंष्ट्रानामुक्थान्ते नियोगः इतरेषान्तु साक-मश्वसौभरनार्मेधानामविशेषाम्नानादनियोगं धानञ्जप्यो मन्यते उक्-थान्ते चातिरात्रे वेति तस्मात् तान्युभयत्र भवन्ति ॥ ९ ॥

इतराण्यप्यतिरात्रइति शाण्डिल्यस्तुल्यचोदनात् † ॥१०॥

शाण्डिल्य आचार्य्य आह इतराण्यपि हारिवर्णादीन्यतिरात्रे स्युः कस्मात् सर्वेषां तुल्यचोदनात् ॥ १० ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

आष्टादंष्ट्रयोर्विकल्पः स्यात्* ॥ ११ ॥

तस्मिन्नेव प्रकरणे पठति आष्टादंष्ट्रे ऋद्धिकामाय कुर्य्यादिति तत्किमुभे ते कर्त्तव्ये एकस्मिन् स्थाने अथ विकल्प इति सोऽयमाचार्य्य आह आष्टादंष्ट्रयोर्विकल्पः स्यादिति द्वयोराष्टादंष्ट्रयोरुदितयोरेकस्यैव क्रिया स्यात् समानार्थत्वात् ॥ ११ ॥

काम्यानुक्थछन्दोयोगानतिरात्रस्य मन्यन्ते सौभरनार्मेधप्रमाणाः* ॥ १२ ॥

गायत्रीषु ब्रह्मवर्चसकाम्यानुक्थानि प्रणयेयुरित्यत आरभ्य य एते काम्या उक्थानां छन्दोयोगाः श्रूयन्ते तानतिरात्रस्य मन्यन्ते सौभरनार्मेधप्रमाणाः येषां सौभरनार्मेधे अतिरात्रविषये नोक्थविषये ॥ १२ ॥

वृत्तिस्त्वनुष्टुभां रात्र्यपायेन विद्यते* ॥ १३ ॥

यदुक्तं पूर्वसूत्रे तत्राह नत्वेवं स्यात् यस्मादनुष्टुभां रात्र्युपाये वृत्तिर्न विद्यते रात्र्युपाये हि विच्छन्दसो दृष्टाः यस्मादनुष्टुभां रात्र्युपाये वृत्तिर्न विद्यते तस्मात्काम्या उक्थछन्दोयोगा उक्थान्तस्य स्युर्नातिरात्रस्य उच्यते नार्मेधं रात्र्युपाये दृष्टं तत्कथमुक्थान्ते करिष्याम इति चेत् ॥ १३ ॥

दृश्यते चान्यत्र रात्र्यपायान्नार्मेधं यथाभिप्लवस्य पञ्चाहे* ॥ १४ ॥

---

* द्राह्यायणेऽप्येवम् ।

अन्यत्र च रात्र्युपाया दृश्यन्ते नार्मेधं यथाभिप्लवस्य पञ्चाहे उक्थानि ॥ १४ ॥

**तस्यानुष्टुभः स्तोत्रीयः स्यादुक्थान्तेषु वैच्छन्दसोऽतिरात्रेषु वृत्तिविभागात्* ॥ १५ ॥**

तस्य नार्मेधस्य उक्थान्तेषु क्रियमाणस्य अनुष्टुभः स्तोत्रीयः स्यात् अतिरात्रेषु क्रियमाणस्य वैच्छन्दसः स्यात् एवं वृत्तौ विभागः कृतः इन्द्रं विश्वा अवीवृधन्निति नार्मेधमुक्थान्तेषु स आदेशः अवचूर्णेन विच्छन्दःसु प्रथमं यासु ऊहेत् दृष्टान्तास्ताः एतेसु ऊहेत् अगीतत्वादरात्रेषु ॥ १५ ॥

**स्वतन्त्रस्य ज्योतिष्टोमस्य संस्था विकल्पा अग्निष्टोम्यमुक्थ्यतातिरात्र्यमिति* ॥ १६ ॥**

यदा स्वतन्त्रस्य ज्योतिष्टोमः स्यात् तदा तस्य संस्थाविकल्पाः स्युः अग्निष्टोमता वा स्यात् उक्थता वा अतिरात्रता वा तत् किमिदं सिद्धे सत्यारभ्यते उच्यते मशको ज्योतिष्टोमातिरात्रे विकल्पेन षोड़शिनमामनति तस्य तावदयं प्रतिषेधं दर्शयति स्वतन्त्रे प्रथमाहारे संस्थाविकल्पे सति ज्योतिष्टोमस्यातिरात्रे षोड़शी न स्यात् अकामे ज्योतिष्टोमे ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेतेत्येतस्मिन् पक्षे भवति एतच्च दर्शयति तत्राविशिष्टसंस्थो ज्योतिष्टोमस्त्यत्र संस्थाविकल्पः स्यादिति ॥ १६ ॥

**तस्यानतिरात्रस्य द्वादशं शतं दक्षिणाः* ॥ १७ ॥**

---

* द्राह्यायणोऽप्येवम् ।

तस्य ज्योतिष्टोमस्यानतिरात्रस्य सतः द्वादशं शतं दक्षिणाः स्युः तत्किमिदमनतिरात्रस्येति यस्मादतिरात्रस्यादिष्यन्त एव दक्षिणाः उच्यते सविकल्पः स्यात् ॥ १७ ॥

**गोत्रायुषोश्च* ॥ १८ ॥**

गोआयुषोश्चानतिरात्रयोर्द्वादशं शतं दक्षिणाः स्युः ॥ १८ ॥

**विश्वजिदभिजिद्भ्यां यमाभ्यां यजमानः पूर्वापराभ्यां यजेतेति धानञ्जय्यः* ॥ १९ ॥**

उक्तं विश्वजिदधिकारे यो यमाभ्यां यजेतैताभ्यां यजेतेति तद्यदि विश्वजिदभिजिद्भ्यामेव प्रयोगेण यजेत अभिजितेष्ट्वा ततो विश्वजिता यजेत एवं धानञ्जय्य आचार्यो मन्यते पूज्यतरत्वाद्विश्वजितः पूर्वनिपातः ॥ १९ ॥

**युगपदिति शाण्डिल्यः* ॥ २० ॥**

शाण्डिल्य आचार्य्य आह यमाभ्यां यजमान एताभ्यां युगपद्यजेतेति कथं पुनर्युगपत्क्रिया ॥ २० ॥

**अभिजितो दक्षिणं देवयजनꣲ स्याद्विश्वजित उत्तरम्* ॥ २१ ॥**

अभिजितो देवयजनं दक्षिणं स्यात् तस्योत्तरतो विश्वजितो देवयजनं स्यात् ॥ २१ ॥

**तत् प्रति पत्नीशाला स्यात्* ॥ २२ ॥**

---

* द्राह्यायणोऽप्येवम् ।

तद्विश्वजितो देवयजनं प्रति पत्नीशाला भवेत् प्राग्विश्वजितः ॥ २२ ॥

**नानर्त्विजो यच्चान्तर्वेदि कर्म* ॥ २३ ॥**

पृथगृत्विजः स्युः अभिजिद्विश्वजितोः यच्चान्तर्वेदि कर्म तच्च पृथक् स्यात् ॥ २३ ॥

**अथ यद्बहिर्वेद्येकन्तत् † ॥ २४ ॥**

अथ यद्बहिर्वेदि कर्म एकं तद्द्वयोरपि ॥ २४ ॥

**अभिजितः पूर्वं पूर्वं कर्म सन्तिष्ठेत विश्वजित उत्तरम् † ॥ २५ ॥**

अभिजितः पूर्वं पूर्वं कर्म सन्तिष्ठेत तत उत्तरं विश्वजितः कर्म-सन्तिष्ठेत अवयवकर्मणो विधिः ॥ २५ ॥

**तयोः पृथक् सहस्रे दक्षिणाः † ॥ २६ ॥**

तयोरभिजिद्विश्वजितोः पृथङ्नानेत्यर्थः सहस्रं दक्षिणाः एकस्मिन्नपि सहस्रमन्यस्मिन्नपि सहस्रमिति कथं पुनरेतद्गम्यते यथा न पृथग् द्वे द्वे इति उच्यते आचार्य्यप्रवृत्तिं ज्ञापयति वक्ष्यत्यत्र तयोः पृथक्सहस्रे दक्षिणा इति गौतमधानञ्जय्यौ द्वे च सहस्रे केशवपनीये तथा व्युष्टाविति ॥ २६ ॥

**कामं त्वयमाभ्यां यजेत † ॥ २७ ॥**

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

कामन्तु पृथग्भूताभ्यामेव यजेत न यमाभ्याम् ॥ २७ ॥

सहस्रमभिजिति दक्षिणाः शताश्वꣳ सहस्रꣳ सर्ववेदसं वा विश्वजिति* ॥ २८ ॥

अभिजिति पृथगभूते सहस्रं दक्षिणाः स्युः विश्वजिति पृथगभूते शताश्वं सहस्रं सर्ववेदसं वा यस्मिन् सहस्रे शतमश्वानान्तच्छताश्वं सहस्रं तद्वा शताश्वं सहस्रं दक्षिणाः स्युः विश्वजिति सर्ववेदसं वा सर्वं वेदसः सर्ववेदसंवेद इति धननाम सर्वस्वमित्यर्थः ॥ २८ ॥

इति अष्टमस्य प्रथमा कण्डिका।

---

अथ द्वितीया कण्डिका।

तस्यावभृथादुदेत्य रोहिणीं वत्सच्छवीं परिधाय धर्मान् कुर्य्यात्त उक्ता ब्राह्मणेन* ॥ १ ॥

उक्तं शताश्वं सहस्रं सर्ववेदसं वा विश्वजिति दक्षिणा एवं विश्वजितेष्ट्वा ततस्तस्य विश्वजितोऽवभृथादुदेत्य रोहिणीं वत्सच्छवीं परिधाय धर्मान् कुर्य्यात् रोहिणीमिति वर्णनिर्देशः वत्सछवीमिति जातस्य वत्सस्य छवी चर्म तां वत्सछवीं परिधाय यजमानो धर्मान् कुर्य्यात् ते धर्मा उक्ता ब्राह्मणेन पशुभिर्वा एष व्यृध्यत इत्याहुर्यः सर्वं ददातीति छवीं परिधत्ते पशुभिरेव समृध्यत इत्येतदादयः अथ तस्येति निर्देशः किमर्थमिति चेत् उच्यते अभिजित् विश्वजिता-

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

वधिकृतौ पूर्वं विश्वजिदभिजिद्भ्यां यमाभ्यां यजमान इति तयोश्च सामान्यो विधिरुक्तः तत्र एते धर्मा निर्दिश्यन्ते ते सामान्यधर्मा एव गम्येरन् एवं माभूदित्यत आह तस्येति अपरे ब्रुवते तस्य सर्ववेदसदक्षिणस्येति न शताश्वसहस्रदक्षिणस्येति पूर्व एवमित्यर्थः एवमप्यर्थम् उपरिष्टात् ज्ञापयिष्याम इति यथा स्यादिति ॥ १ ॥

अरण्ये तिस्रो वसतीत्युदुम्बरे वसेत्* ॥ २ ॥

ब्राह्मणम् अरण्ये तिस्रो वसति आरण्यं ताभिरन्नाद्यमवरुन्ध उदुम्बरे वसतीति च तत्रायं संशयः किं या एवैता अरण्ये तिस्रो रात्रयस्तोद्यन्ते तासामेवायं नियमः क्रियते उदुम्बरे वसतीति अथान्यास्तिस्र उदुम्बरे वसेदिति अत आचार्यो नियमयति या एता अरण्ये तिस्रः रात्रय आदिश्यन्ते एतास्तिस्रोरात्रयोऽरण्ये उदुम्बरस्तस्मिन् वसेत् समुच्चयः स्यात् अरण्ये चोदुम्बरे चेति कथं पुनरेतद्गम्यते यथा नारण्येऽपि तिस्र उदुम्बरेऽपि तिस्र इति उच्यते द्वादशानां रात्रीणां नियमात् वक्ष्यति द्वादशैता रात्रयो भवन्तीति ॥ २ ॥

उदुम्बराभावेऽप्युदुम्बरशाखां निखनेयुः* ॥ ३ ॥

यदि तस्मिन्नरण्ये उदुम्बरो न स्यात् तत्र अन्यस्मादप्यरण्यादुदुम्बरशाखामवहृत्य तस्मिन्नरण्ये निखनेयुस्तस्याश्च वसेत् ॥ ३ ॥

खनित्रेण जीवतीति यत्तत्र खान्यꣳ स्यात्तेन जीवेत्* ॥४॥

खनित्रेण जीवतीति ब्राह्मणं खनति तेनेति खनित्रं खनित्रेणेति

* द्राह्यायणोऽप्येवम् ।

करणनिर्द्देशः तेन खनित्रेण खन्यमाने तस्मिन्नरण्ये यत्किञ्चित् स्यात् कन्दोमूलं वा तेन जीवेदश्नीयात् ॥ ४ ॥

**खान्याभावे धान्यपात्रान्निखाय तैरुत्खानं जीवेत्* ॥५॥**

यदि तस्मिन्नरण्ये कन्दमूलादि खान्यं न स्यात् ततो धान्यपात्रान्निखाय तैरुत्खानं जीवेत् ॥ ५ ॥

**उभयतः क्ष्णुदभ्रिर्भवतीति वैणवी कल्माषीति शाण्डिल्यः † ॥ ६ ॥**

उभयतः क्ष्णुदभ्रिर्भवतीति ब्राह्मणम् उभयतस्तीक्ष्णः उभयतः क्ष्णुत् अभ्रिः खनित्रम् उभयतः खनतीत्यर्थः सा कल्माषी वैणवी वा स्यात् वेणुना निर्वृत्ता वैणवी कल्माषी दारवी दारुनिर्वृत्ता दारवी इति निर्द्देशः यथा कल्माषो गौरिति एवं शाण्डिल्य आचार्यो मन्यते ॥६॥

**या का चेति धानञ्जप्यः † ॥ ७ ॥**

धानञ्जप्य आचार्य्य आह या काचिदभ्रिः स्यात् वैणवी आयसी वा औदुम्बरी वेति केवलं न उभयतः क्ष्णुः स्यात् ॥ ७ ॥

**निषादेषु तिस्रो वसतीति पार्श्वतो निषादग्रामस्य वसेत्* ॥ ८ ॥**

निषादेषु तिस्रो वसतीति ब्राह्मणं निषादग्रामस्य पार्श्वे वसेत् निषादेष्विति जनोपलक्षणं बहुवचनम् ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

तेषां काममारण्यं भुञ्जीत नैवारं श्यामाकं मार्गमिति* ॥ ९ ॥

तेषां निषादानां यदारण्यं तत्कामं भुञ्जीत नैवारं श्यामाकं मार्गं भुञ्जीत मार्गं मांसमिति कामशब्दः कामं न भुञ्जीतेति अपरे वर्णयन्ति विस्रब्धं भुञ्जीतेति अथारण्यमिति किमर्थं निर्दिष्टे नैवारं श्यामाकं मार्गमिति उच्यते नैष दोषः यद्यारण्यं लभते नैवारं श्यामाकं मार्गं वा मांसं भुञ्जीत न तेभ्यो गृह्णीयादिति ॥ ९ ॥

जने तिस्रो वसतीति राजन्यबन्धुर्जनो ब्राह्मणः समानजन इति शाण्डिल्यः* ॥ १० ॥

उक्तं जने तिस्रो वसतीति जन्यन्ताभिरन्नाद्यमवरुन्धे समानजने तिस्रः समानजन्यन्ताभिः इति च तत्को जनः कः समानजन इति शाण्डिल्य आह राजन्यबन्धुर्जन इति कर्मान्यत्वाद्वर्णान्तरत्वात् अत्र ब्राह्मणः समानजन इति स्वजातीयत्वात् ब्राह्मणपक्षेण ब्रवीति ॥१०॥

विवाह्यो जनः सगोत्रः समानजन इति धानञ्जय्यः* ॥११॥

धानञ्जय्य आचार्य्य आह स्वस्मिन्निव वर्णे यो विवाह्यः न गोत्रेण सम्बध्यते स जनः यः पुनः सगोत्रः सोऽविवाह्यः स समानजन इति ॥ ११ ॥

प्रतीवेशो जनपदो जनो यत्र वसेत् ससमानजन इति शाण्डिल्यायनः* ॥ १२ ॥

---

* द्राह्यायणेऽप्येवम् ।

शाण्डिल्यायन आचार्य्य आह प्रतीवेशः समीपो जनपदः यथा यौधेया अर्जुनायना इति यत्र वसेत्स समानजनः ॥ १२ ॥

एते धर्माः सर्ववेदसदक्षिणानां सर्वेषाम्* ॥ १३ ॥

य एते धर्मा उक्ताश्छव्यादयो विश्वजितं सर्ववेदसदक्षिणं प्रति एते धर्माः सर्वेषां सर्ववेदसदक्षिणानां भवन्ति न केवलं विश्वजितः एतच्च ज्ञापितं भवति विश्वजिति सर्ववेदसदक्षिणे एते च धर्मा भवन्तीति अथ सर्ववेदसदक्षिणानामिति बहुवचनात्सिद्धे सर्वग्रहणं किमर्थमिति चेत् उच्यते शाखान्तरदृष्टानाञ्च सर्ववेदसदक्षिणानामेष एव धर्मः स्यादिति ॥ १३ ॥

व्रतवत्सु सर्वेष्वमावास्यायां दीक्षित्वोखामाबध्नीत सांवत्सरिकेभ्योऽन्यत्रेति गौतमः* ॥ १४ ॥

व्रतमेषु विद्यत इति व्रतवन्तः तेषु व्रतवत्सु सर्वेषु सर्वशब्दो निरवशेषवाची अमावास्यायान्दीक्षित्वा यजमान उखामाबध्नीत उखा उक्तलक्षणा सांवत्सरिकेभ्यः सर्वेभ्योऽन्यत्र एतद्गौतमीयम् अथ सर्वग्रहणं किमर्थमिति चेत् उच्यते व्रतवत्स्विति परतन्त्रता व्रतस्य निर्दिष्टा तद्ये व्रतवन्तस्तेष्वेव उखाबन्धनविधिः स्वतन्त्रे व्रते न प्राप्नोति सोऽयमाचार्य्यः सर्वग्रहणं करोति व्रतवत्सु व्रते चेति ॥१४॥

सह सुत्याभिः षडहानि संवत्सरादधिकानि कृत्वोत्तिष्ठेयुः* ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम्।

सहसुत्याभिर्यया षड़हानि संवत्सरादधिकानि भवन्ति एवं कृत्वा उत्तिष्ठेयुः ॥ १५ ॥

समाप्ते वा संवत्सरे रात्रिसत्रेषु राजानं क्रीणीयुः* ॥१६॥

अथवा व्रतवत्सु क्रतुषु रात्रिसत्रेषु दीक्षाभिरेव संवत्सरे समाप्ते राजानं क्रीणीयुः ‡ ॥ १६ ॥

यथाजाति तु प्रथमे पञ्चदशरात्रे दीक्षेरन्* ॥ १७ ॥

प्रथमे पञ्चदशरात्रे व्रतवत्यपि सति यथाजात्येव दीक्षेरन् या सत्रेषु जातिः सा यथाजातिः तेषां द्वादशदीक्षास्तथोपसदोऽनादेश इति ॥ १७ ॥

सर्वत्र वा यथाजात्यन्यत्र चेदुपेतमिति धानञ्जप्यः* ॥१८॥

धानञ्जप्य आचार्य्य आह सर्वेषु व्रतवत्सु यथाजाति दीक्षेरन् यद्यन्यत्र कर्मणि व्रतमुपेतं स्यात् प्रथमं वाशब्दो विकल्पार्थः ॥ १८ ॥

अनुपेतञ्चेदपीति शाण्डिल्यः* ॥ १९ ॥

शाण्डिल्य आचार्य्य आह यद्यन्यत्रोपेतं यद्यनुपेतं सर्वत्रैव यथा जाति दीक्षेरन् इति ॥ १९ ॥

तिस्र उपसदो व्रतस्यैकाहिकस्य गौतमीयेन † ॥ २० ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

‡ लाट्यायनीयपुस्तकत्रयेऽपि अस्य सूत्रस्य टीका न विद्यते अतो द्राह्यायणीयात् पुस्तकादेषा उद्धृता ।

ऐकाहिकस्य व्रतस्य गौतमीयेन विधानेन क्रियमाणस्य तिस्र उपसदः स्युः तत्किमिदमारभ्यते नन्वेवञ्चैकाहिकानां परिभाषितं तिस्र उपसद इति उच्यते विकल्पार्थमारम्भः ॥ २० ॥

षड़्वा द्वादश वा* ॥ २१ ॥

व्रतस्यैकाहिकस्य गौतमीयेन क्रियमाणस्य तिस्र एवोपसदो भवन्ति अथवा षट् द्वादश वा ॥ २१ ॥

तत्र ब्रह्मणेऽश्वरथं शतञ्च दद्यात् † ॥ २२ ॥

तत्र तस्मिन्नैकाहिके व्रते ब्रह्मणेऽश्वरथं शतञ्च दद्यात् उक्तं संख्यामात्रे च दक्षिणा गाव इति ॥ २२ ॥

तथाग्निं चिन्वतेऽध्वर्यवे † ॥ २३ ॥

तथाग्निञ्चिन्वतेऽध्वर्यवेऽश्वरथं शतञ्च दद्यात् अग्निं चिन्वते इति कालनिर्द्देशम् ॥ २३ ॥

पृष्ठेन च स्तुवानायोद्गात्रे † ॥ २४ ॥

पृष्ठेन च स्तुवानायोद्गात्रे अश्वरथं शतञ्च दद्यात् ॥ २४ ॥

तच्चानुशंसते होत्रे † ॥ २५ ॥

तच्च पृष्ठमनुशंसते होत्रे अश्वरथं शतञ्च दद्यात् अपरे ब्रुवते तथाग्निं चिन्वतेऽध्वर्यव इत्येतदादीनि कर्माणि यदा कुर्वन्ति ततो दद्यादिति पूर्व एवत्वर्थश्चारुः ॥ २५ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

**सर्वेभ्यः सहस्रम्* ॥ २६ ॥**

सर्वेभ्यः षोड़शेभ्यः सहस्रं दद्यात् एतत् क्रतुदक्षिणा कथं पुनरेतद्गम्यते यथा सहस्रं क्रतुदक्षिणा न सर्वशब्द आधिक्य इति उच्यते वक्ष्यति सर्ववेदसदक्षिणं वेति ॥ २६ ॥

**सर्ववेदसदक्षिणं वा* ॥ २७ ॥**

सहस्रदक्षिणं वा सर्ववेदसदक्षिणं व्रतं वा स्यात् तद्यदेवं सर्वशब्दः किमर्थं सर्वेभ्यः सहस्रमिति उच्यते सर्वग्रहणं क्रियते यथा अश्वरथशतदक्षिणा ब्रह्मादिभ्यो दत्ता न तेषां सा दक्षिणा सा अधिका इति ॥ २७ ॥

**इतरच्छाण्डिलम्* ॥ २८ ॥**

इतरद्विधानं सर्वेभ्यः सवस्रमित्येतच्छाण्डिलम् ॥ २८ ॥

**सर्वे साहस्राः पृथक् सहस्रदक्षिणाः* ॥ २९ ॥**

सर्वे साहस्राः पृथक् नाना सहस्रदक्षिणाः एकैकः सहस्रदक्षिणः अथ सर्वशब्दः किमर्थमिति चेत् साहस्रप्रतिज्ञापनार्थः अथैष ज्योतिरित्यादयश्चत्वारः साहस्राः ॥ २९ ॥

---

* द्राह्यायणोऽप्येवम् ।

इति अष्टमस्य द्वितीया कण्डिका ।

---

अथ तृतीया कण्डिका।

साद्यःक्रेण यक्ष्यमाणो महारात्रे: प्रातराहुतिꣳ हुत्वा-चक्षीतर्त्विग्भ्यः साद्यःक्रोम इति* ॥ १ ॥

उक्ताः सर्वे साहस्राः साम्प्रतं साद्यःक्रा उच्यन्ते सद्यः क्रिया वर्त्तते इति साद्यःक्रः तेन साद्यःक्रेण यक्ष्यमाण इति भविष्यत्कालः प्रत्युपस्थितः महारात्रे: रात्रेर्महति कालेऽवशिष्टे प्रातराहुतिं हुत्वा प्रातराहुतिर्हि आदित्यस्योदयसन्निकर्षे भवत्युदिते वा सोऽयमाचार्य्यस्तं कालं प्रत्यामनति साद्यःक्रे क्रतौ कर्मार्थमाचक्षीत ऋत्विग्भ्यः साद्यःक्रोम इति तत्किमिदमाचक्षीत साद्यःक्रोम इत्युक्ते साद्यःक्रेण यक्ष्यमाण इति आचक्षीतर्त्विग्भ्य इत्येतावदेव वक्तव्यम् अयमाचार्य्यः एतद्दर्शयति येन येन यज्ञेन यक्ष्यमाणः स्यात् तन्तमाचक्षीतासौ मे यज्ञ इति ॥ १ ॥

प्रग एव प्रहिणुयादिति धानञ्जप्यो दीक्षाप्रभृति सद्यः सर्वं कुर्य्युः प्रथमद्वितीययोः श्येनस्य च† ॥ २ ॥

धानञ्जप्य आचार्य्य आह प्रग एवर्त्विग्भ्यः प्रेषयेत् कुतः येन साद्यःक्रोम इति दीक्षाप्रभृति यत्कर्म तत्सद्यः सर्वं कुर्युः प्रथमद्वितीययोः साद्यःक्रयोः श्येनस्य च एतेषां सद्यः प्रथमा सद्यः द्वितीया स्यात् ॥ २ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

एकत्रिकान्ताः षट्साद्यःक्रा इति शौचिवृक्षिः* ॥ ३ ॥

शौचिवृक्षिराचार्य्य आह षट् साद्यःक्रा इति प्रथमात्साद्यःक्रादारभ्य यावदेकत्रिक इति सर्वेषां सद्यःक्रिया स्यादिति एकत्रिकान्ता इति प्रागेकत्रिकात् श्येनः स्यादिति सर्वेषामत एकत्रिकः स्यादिति षट्ग्रहणेनासाद्यःक्रियायामपि साद्यःक्रसंज्ञा भवति ॥ ३ ॥

उर्वरा वेदिरिति प्रथमे यवोर्वरा पक्का स्याद्व्रीह्युर्वरा वा † ॥ ४ ॥

इह द्वितीयसाद्यःक्रस्यानुवाके पठति उर्वरा वेदिरित्येतदादि विधिविशेषं सोऽयमाचार्य्यस्तं विधिविशेषं प्रथमं कल्पयति तत् कथं पुनरयं द्वितीयप्रकरणे पठितः प्रथमे भवतीति उच्यते सामान्यात् किं सामान्यं उच्यते सर्वविधिशेषं साम्ना यः पठति स त्रीयदृतयोरथा भवन्तीत्यारभ्य सद्यस्त्वायेति सद्यस्त्वसामान्यात् उर्वरा वेदिरिति यदुक्तं ब्राह्मणेन तत्प्रथमे साद्यःक्रे यवोर्वरा पक्का स्यात् व्रीह्युर्वरावेति उर्वरेति निष्पन्नशस्यक्षेत्रस्य संज्ञा ॥ ४ ॥

तत एव समुत्कर्त्तं खल उत्तरवेदिं कुर्य्युः ‡ ॥ ५ ॥

ब्राह्मणं खल उत्तरवेदिरिति तत्किमसौ खलोऽन्यस्मात् क्षेत्राद्धान्यमाहृत्य कर्त्तव्यः अथ तस्या एवोर्वराया वेदिरिति सोऽयमाचार्य्य आह तस्या एव वेदेरुर्वरायाः समुत्कर्त्तुं खलः कर्त्तव्यः तत्र खल

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणेऽप्येवम् ।

उत्तरवेदिः कार्य्यः तत्र केचित्तावद्वर्णयन्ति यदि तावत्प्रथमा खल उत्तरवेदिरित्युक्तोऽयं संशयः किं प्रथमा अथ सप्तमीति ततस्तस्मिन् खले उत्तरवेदिरिति स खल उत्तरवेदिः स्यात् अथ पुनः सप्तमी तत एव समुत्कृत्य खलः तस्मिन् खले उत्तरवेदिं कुर्युरिति तस्मान्मृन्निर्वपनाद्य उत्तरवेद्यर्थाः सर्वे कर्त्तव्या इति एवं प्रकृतिश्च न विरुध्यते अप्रदाहश्च भवति अपरे वर्णयन्ति तत एव समुत्कर्त्तुं खलस्तं खलमुत्तरवेदिं कुर्युः वचनाद्विकारो भवति ॥ ५ ॥

**खले वालीयूपो भवतीति लाङ्गलेषा यूपः स्यात् कलापी चषालभागा* ॥ ६ ॥**

ब्राह्मणं खले वालीयूपो भवतीति खले वालीयूप इत्युक्ते लाङ्गलेषा यूपः स्यात् लाङ्गलं हलम् एतया हितं रसमुत्कृषन्तीति लाङ्गलेषा यूपः स्यादिति प्रोक्षणादियूपधर्मान् करोति कलापी धान्यमुष्टिः कलापोकृतः चषालस्थाने कर्त्तव्यः अथ किं भागग्रहणं कलापी चषालभागेति उच्यते चषालः भागो यस्याः सा चषालभागा यावन्तं देशं यूपस्य चषालो भजते तावदेव कलापो भजतीति ॥ ६ ॥

**अतीतायाश्चेद्यववेलायां व्रीहिवेलायां वा यजेत धान्यपात्रानुप्त्वाभिकृषेयुः † ॥ ७ ॥**

यद्यतीतायां व्रीहिवेलायां यजेत यवेषु लूनेषु व्रीहिषु वातीतो धान्यपात्रानुप्त्वाभिकृषेयुः अलौ चीजोसा वेदिः स्यात् ॥ ७ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

धान्यपात्रा उत्तरवेदिः स्यान्मूतस्थषालभागा* ॥ ८ ॥

धान्यपात्राणि विन्यस्योत्तरवेदिः कार्य्या पात्रशब्द उभयलिङ्गः पात्रः पात्रमिति मूतस्थषालप्रतिनिधिः प्रतिनिधौ सति दाचमना स्यादिति ॥ ८ ॥

त्रिवत्सः साण्ड इति बङ्कः त्रिवर्षस्य जानपदो त्रिवत्स इति* ॥ ९ ॥

ब्राह्मणं त्रिवत्सः साण्ड इति सोमक्रयणं कः पुनः त्रिवत्स इति उच्यते बङ्कत्रिवर्षस्य जानपदो त्रिवत्स इति ईषदसमाप्तत्रिवर्षो बङ्कत्रिवर्षः तस्य बङ्कत्रिवर्षस्य जनपदे भवो जानपदो स त्रिवत्स इति ॥ ९ ॥

यो वा तिस्रो धयेत्† ॥ १० ॥

यो वा तिस्रो गाः पिबेत् स वा त्रिवत्स इति तिसृणां वत्सः त्रिवत्सः ॥ १० ॥

त्रिवर्षो वैव स्यात्† ॥ ११ ॥

संपूर्णं त्रिवर्ष एव वा त्रिवत्सः त्रिवत्स इति मध्यपदलोपी समासः ॥ ११ ॥

प्राञ्चꣳ होतारं बद्धेयुरुदञ्चमुद्गातारं प्रत्यञ्चमध्वर्य्युं द-

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

त्विणा ब्रह्माणं पुरस्ताद्दात्र वसेयुस्तत्रैभ्यः सोमं प्रब्रूयुरश्वरथ्यै-र्यात्वा त उक्ता ब्राह्मणेनाध्वानश्च* ॥ १२ ॥

महारात्रे: प्रातरानुतिं ज्ञत्वेत्येतस्मिन् काल्य इदमारभ्यते प्राचीन्दिशं होतारं वहेयुः उदीचीं दिशमुद्गातारं वहेयुः प्रतीचीन्दिश-मध्वर्युं वहेयुः दक्षिणान्दिशं ब्रह्माणं वहेयुः पुरस्ताद्दात्र वसेयुः पूर्वगता एव वा एषु देशेषु स्युः तत्र तेषु देशेष्वेभ्यो होतृप्रभृतिभ्यः सोमप्रवाकाः सोमं प्रब्रूयुः अश्वरथैर्यात्वा उक्तं सर्वादिशोऽश्वरथाः सोमप्रवाकाविधावन्तीति ते उक्ता ब्राह्मणेन ते अश्वरथा अध्वानश्च वा ब्राह्मणेनैवोक्ताः योजने चतुर्वाह्णिणा प्राच्यान्दिशि प्राहेत्या-दिना ॥ १२ ॥

कुर्य्युरेवर्त्विज इति शाण्डिल्योऽन्यांस्तु ब्राह्मणांस्तान-ध्वन ऊह्वा तत्रैभ्यः सोमं प्रब्रूयुरसौ सद्यः क्रिया यजते तदहं प्रब्रवीमीन्द्राय विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोम-पेभ्य इति* ॥ १३ ॥

शाण्डिल्य आह प्रातरानुत्यनन्तरं कुर्युरेव कर्माण्यृत्विजः अन्यां-स्तु ब्राह्मणांस्तानध्वन ऊह्वा यैतैरध्वानो वाह्याः ब्राह्मणे योजने चतु-र्वाह्णिणेत्यादयः तेष्वध्वस्वेभ्यो ब्राह्मणेभ्यः सोमप्रवाकाः सोमं प्रब्रूयुः असौ सद्यःक्रिया यजत इत्यादिना मन्त्रेण यथोद्दिष्टेन ॥ १३ ॥

स क्षीरहृतयोरथा भवन्तीति सद्यो दुग्धेन क्षीरेण हृतयः

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

पूर्णाः स्युस्ततोऽयन्नवनीतमुदीयात् फेनो वा तदाज्येऽपि सृजेयुः* ॥ १४ ॥

ब्राह्मणं स चीरदृतयो रथा भवन्तीत्यादि ये ते रथे दृतयः ते सद्यो दुग्धेन क्षीरेण पूर्णाः स्युः तेभ्यो धावद्भ्यो यन्नवनीतमुदियात् फेनो वा तदाज्येऽपि सृजेयुर्मिश्रयेयुः अन्यस्मिन् घृते मिश्रयेयुः सद्योभावाय ॥ १४ ॥

अश्वः श्वेत एतस्य दक्षिणा तमुद्गात्रे दद्यात् किञ्चिच्चेतरेभ्यः* ॥ १५ ॥

उक्तं तस्मा अमुमादित्यमश्वं श्वेतं कृत्वा दक्षिणामानयन्निति तदुच्यते अश्वश्वेत एतस्य दक्षिणा तमुद्गात्रे दद्यादितरेभ्यश्च किञ्चिद्दद्यात् उक्तं किञ्चिच्छब्दस्येति अथ किमर्थमेतस्य दक्षिणेति उच्यते अश्व एव दक्षिणा एतस्य क्रतोः नायमुद्गातुर्भागविकारः स्यात् प्रकृतं निवर्त्तत एव ॥ १५ ॥

इति अष्टमस्य तृतीया कण्डिका ।

---

अथ चतुर्थी कण्डिका ।

एतेनैवोत्तरो व्याख्यातः † ॥ १ ॥

एतेनैव प्रथमेन साद्यःक्रेण उत्तरो व्याख्यातोऽयं विध्यन्त उक्तः

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेन क्रेदविषये विशेषः कृतः ।

स्याद्यः क्रेण यच्यमाण इत्यत आरभ्य एष एव सर्वं उत्तरस्मिन्नपि भवति ॥ १ ॥

तस्याश्च एकविंशो दक्षिणानामतो वैव* ॥ २ ॥

तस्योत्तरस्याश्च एकविंशः स्यात् दक्षिणानां एकविंशतेः पूरण-एकविंशः उक्तश्च संख्यामात्रे च दक्षिणा गाय इति अश्व एव वा स्यात् ॥ २ ॥

एकरात्रीणो ह्यहीनोऽनुक्रीस्तेऽङ्गिरस आदित्येभ्यः श्वः सुत्यामिति ह्याह † ॥ ३ ॥

एकया रात्र्या निर्वर्त्त्यते एकरात्रीणः द्वाभ्यामहोभ्यां निर्वर्त्त्यते ह्यहीनः तेऽङ्गिरस आदित्येभ्यः श्वसुत्यामिति ह्याह ब्राह्मणं ह्यहीन इति उपदेशार्थः यस्मात् श्वः सुत्यामिति ह्याह ब्राह्मणं तस्मात् ह्यहीनः उच्यते एकरात्रीण इति किमिदं ननु ह्यहीन इत्युक्ते रात्रि-रन्तर्भवत्येव उच्यते नियमार्थमारभ्यते यदि द्वितीयां रात्रीमापद्येत तत् कालात्ययः स्यात् ॥ ३ ॥

तस्य क्रयप्रभृत्युत्तरमहः स्यादिति गैतमस्तं सद्यः परि-क्रीयेति ह्यादित्यानाह नेतरान् ‡ ॥ ४ ॥

तस्यानुक्रयः क्रयादारभ्योत्तरमहः स्यादिति गैतमः तं सद्यः परिक्रीयेति हि आदित्यानधिकृत्याहैतद्ब्राह्मणं नाङ्गिरसः ॥ ४ ॥

---

* द्राह्यायणेन च्छेदविषये विशेषः कृतः।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

अपरेद्युः क्रयणाच्चानुक्रीरित्याख्या* ॥ ५ ॥

याचेयमाख्यानुक्रीरिति सा अपरेद्युः क्रयणमालोच्य ॥ ५ ॥

उपवसथान्तं पूर्वमहः स्यादिति धानञ्जप्यः श्वःसुत्यामिति ह्याहेति श्वः क्रयं प्राब्रुवन्नित्यभविष्यत् † ॥ ६ ॥

धानञ्जप्य आचार्य्य आह उपवसथान्तं पूर्वमहः स्यादिति यस्मात् श्वःसुत्यामिति ब्राह्मणं यदि हि क्रयप्रभृत्युत्तरमहः अभविष्यत् श्वः क्रयं प्राब्रुवन्नित्यभविष्यद्ब्राह्मणं येन पुनः श्वःसुत्यामित्याह ज्ञापयति उपवसथान्तं पूर्वमहरिति ॥ ६ ॥

तꣳ सद्यः परिक्रीयेति च प्रथमस्य सद्यस्तां दर्शयति* ॥७॥

यदुक्तन्तं सद्यः परिक्रीयेति ह्यादित्यानाह नेतरानिति एतद्ब्राह्मणं प्रथमस्य साद्यःक्रस्य सद्योभावं दर्शयति ॥ ७ ॥

द्व्यहीनत्वात्तु जघन्यतरेऽङ्गिरसोऽक्रीणꣳस्तस्मादनुक्रीरित्याख्या* ॥ ८ ॥

अथ यदुक्तमपरेद्युः क्रयणाच्चानुक्रीरित्याख्येत्यत्र ब्रूमः द्व्यहीनत्वात्तु अनुक्रीः जघन्यतरे अङ्गिरसोऽक्रीणन् सोमं नातित्वरन्ति तस्मात् ते पूर्वेद्युरक्रीणन् सोमं न परेद्युः क्रयवशादनुक्रीरित्याख्या जघन्यकालक्रयणादनुक्रीरित्याख्या ॥ ८ ॥

तस्याश्वएकशततमो दक्षिणानामश्वो वैव* ॥ ९ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

तस्यानुक्रियः एकोऽस्य एकशततमो दक्षिणानाम् एकशतस्य पूरणः एकशततमः तस्येति निर्देशः यदि सद्यः यदि ह्यहीन इति अस्य एव वा स्यात् ॥ ९ ॥

एतेनोक्तो विश्वजिच्छिल्प्यः* ॥ १० ॥

एतेनानुक्रिया उक्तो व्याख्यातो विश्वजिच्छिल्प्यः एकरात्रीणो ह्यहीन इति ॥ १० ॥

द्विरात्रीणस्त्र्यहीन इति शाण्डिल्यः* ॥ ११ ॥

शाण्डिल्य आचार्य्य आह द्विरात्रीणः त्र्यहीन इति त्रिभिरह्नोभिर्निर्वर्त्त्यते द्वाभ्यां रात्रीभ्याम् इति रात्रिग्रहणं व्याख्यातानुक्रियैव ॥ ११ ॥

दैक्षं प्रथममहः क्रयप्रभृत्युपवसथान्तं द्वितीयꣳ सौत्तमुत्तमम् † ॥ १२ ॥

तस्य त्र्यहीनस्य सतो दैक्षं प्रथममहर्भवति क्रयादारभ्योऽपवसथान्तं द्वितीयम् उत्तमं सौत्यमहः स्यात् त्रयः कल्पाः सद्यःक्रिया वा ह्यहीनक्रिया वा शाण्डिल्यप्रयोगात् अहःक्रिया वा स्यात् ॥ १२ ॥

तस्य दक्षिणा यानानि यथोत्साहं दद्यात्तस्मिन् जनपदे यान्यभिध्याततमानि स्युः † ॥ १३ ॥

तस्य विश्वजिच्छिल्प्यस्य दक्षिणा यानानि यान्ति तैरिति यानानि

---

* द्राह्यायणेन छेदविषये विशेषः कृतः ।

† द्राह्यायणोऽप्येवम् ।

आरोहणानि शकटगन्त्र्युद्धर्षकादीनि यथोत्साहं दद्यात् यावानुत्साहोऽस्य यथोत्साहं तस्मिन् जनपदे यान्यभिध्याततमानि स्युः काङ्क्षिततमानि स्युरीप्सिततमानि किमर्थं पुनरयं यानशब्दः अश्वादिष्वपि न वर्त्तते उच्यते एतेषामेव शकटादीनां परार्था प्रवृत्तिर्न स्वार्था नोयते च तानि न स्वयं गच्छन्ति अश्वादयस्तु स्वयञ्च गच्छन्ति तस्येति निर्द्देशः सर्वेषु कल्पेषु तस्यैव दक्षिणा ॥ १३ ॥

सर्ववेदसनिर्मान्दद्यादिति धानञ्जप्यो विमितꣳ शयनमारोहणमहानसे दासमिथुनौ धान्यपल्यꣳ सीरं धेनुरिति धेनुरिति* ॥ १४ ॥

धानञ्जप्य आचार्य्य आह सर्ववेदसनिर्मान्दद्यादिति सर्वञ्च तद्वेदश्च सर्ववेदसन्निर्माणं सर्ववेदसान्त इत्यर्थः अयं विश्वजिच्छिल्प इत्युक्ते विश्वजिद्धर्माणमेतन्नाम यच्छिल्पमिति विश्वजिच्च सर्ववेदसदक्षिणः तस्मादिहापि तद्धर्मत्वात्सर्ववेदसनिर्माणं तस्याभिप्रेतमिति विमितमिति गृहसंज्ञा शयनं तस्मिंश्छते तच्छयनम् आरोहणञ्च महानसञ्च आरोहणं प्रज्ञातं जानपदं महानसम् अनसन्तान्नपुंसकादिति समासान्तो भवति बृहत्प्रमाणं शकटं दासमिथुनौ दासी च दासश्च धान्यपल्यं धान्यपूर्णं पल्यं पल्यमिति शिक्यसंज्ञा सीरं युक्तं हलं धेनुः उक्तमानदेशगा इति सर्वे त्रिवर्गा इति तेनोक्तत्वात् एतत् सर्ववेदसनिर्माणं एतस्मिन् सर्वं हिरण्यादि अन्तर्भवति एतच्च द्रव्य-

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतं ।

प्रकारनिर्देशेनोक्तं भवति तस्यैवंप्रकारं धनस्यास्य स्वामी सर्ववेदसदक्षिणेन यष्टुमर्हति नान्य इति ॥ २४ ॥

इति अष्टमस्य चतुर्थी कण्डिका।

---

अथ पञ्चमी कण्डिका।

व्रातीनानां यौधानां पुत्रानननूचानानृत्विजो वृणीत श्येनस्य* ॥ १ ॥

उक्तो विश्वजिच्छिल्पः साम्प्रतं श्येनस्य विधिर्वक्तव्यः तं विवक्षुराह व्रातीनानामिति नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाताः व्राताः व्रातानां कर्म व्रातकर्मणा जीवन्ति व्रातीनाः योधनात् योधः योधभवा यौधः तेषां व्रातीनानां यौधानां पुत्राननूचान्तान् पुत्रशब्दः प्रतीतपदार्थकः उक्तवाननूचानःताननूचानान् व्रातीनानां पुत्रानृत्विजो वृणीत श्येनस्य अथानूचानानिति किमिदमित्यारभ्यते यदा ऋत्विक्प्रकरण एवोक्तमृत्विगार्षेयोनूचान इति उच्यते ऋत्विक्शब्देन योऽयमृत्विजो गुणसमुदायः स कृत्स्नः प्राप्तः तस्मिन् प्राप्ते एकेनैव परिसंख्यानं करोति केवलम् अनूचानाः स्युः अन्येषामनियमः स्यादिति अथवा निवर्त्तयत्येवान्यानेकदेशपरिसंख्यानं सिद्धे सत्यारम्भो नियमार्थौ नियमश्चात्र निवर्त्तको भवति न परिसंख्यानादन्यनिवृत्तिरिति ॥ १ ॥

---

* द्राह्यायणोऽप्येवम्।

**अर्हतामेवेति शाण्डिल्यः*** ॥ २ ॥

शाण्डिल्य आचार्य्य आह अर्हतामेव वरणं कर्त्तव्यम् ॥ २ ॥

**अभिवातासु या अनभिवाता स्युस्तासामाज्यं मन्थयेत्*** ॥ ३ ॥

अभिवातासु गोषु व्याधितासु या अनभिवाता अव्याधिताः स्युस्ता दोहयित्वा तत्क्षीरं मन्थयेत् ततो यदुद्गच्छेत् घृतं तेनाज्यं कुर्य्यात् ॥ ३ ॥

**यत्र स्तम्बा वृक्षा वा बहुला जाताः स्युस्तांश्छेदन् देवयजनं कुर्युः*** ॥ ४ ॥

अभिचरणीयेषु देवयजनमुक्तलक्षणं विपर्य्यस्याभिचरणीयेष्विति वृक्षवदेव यजनमुक्तं तदेव विशेषविध्यर्थमारभ्यते यत्र यस्मिन् देशे स्तम्बा वृक्षा वा बहुला जाताः स्युः तान् वृक्षस्तम्बान् छित्वा देवयजनं कुर्युः ॥ ४ ॥

**यद्वा विदाहि स्थण्डिलम्*** ॥ ५ ॥

यस्मिन्नोषधयो विदह्यन्ते तद्विदाहि एतस्मिन्वा विदाहिनि स्थण्डिले देवयजनं कुर्युः ॥ ५ ॥

**शवनभ्ये अधिषवणे इति येन यानेन मृतं निर्वहेयुस्तस्य नभ्ये अधिषवणफलके कुर्युः** † ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

ब्राह्मणं शवनभ्ये अधिषवण इति शवनभ्ये इति किमुक्तं भवति उच्यते येन यानेन मृतं निर्वहेयुः शवन्तस्य यानस्य नभ्ये नाभ्या निर्वृत्ते अधिषवणफलके कुर्युः ॥ ६ ॥

अचषालो यूपस्फ्याग्रः* ॥ ७ ॥

ब्राह्मणं तैल्वको वा बाधको वा यूपस्फ्याग्र इति तत्र संशयः कथं स्फ्याग्र इति किं स्फ्याग्रः उपमार्थोऽयमथ स्फ्याग्र एवाग्रे सोऽयं स्फ्याग्र इति सोऽयमाचार्य्य आह अचषालो यूपः स्फ्याग्र इति नास्त्यस्य चषालमित्यचषाल इति ॥ ७ ॥

लोहितोष्णीषा लोहितवाससो निवीता ऋत्विजः प्रचरेयुरुपेतपरुषा उज्यधन्वानः* ॥ ८ ॥

ब्राह्मणं लोहितोष्णीषा इत्यादि लोहितान्युष्णीषाणि येषान्ते लोहितोष्णीषाः उष्णीषाणि शिरसो वेष्टनानि वासांसि तेषाञ्च वाससां लोहितो वर्णः स्यात् निवीताः कण्ठालम्बितसूत्रा एवं लक्षणास्ते प्रचरेयुः कर्माणि कुर्युः उपेतपरुषाः आसन्नपरुषाः परुषा इव व्यवस्थिताः अपरे ब्रुवते उपेताश्च परुषाश्चेति उपेताः कञ्चुकिनः पूर्व एवेत्यर्थः उज्यधन्वानः उद्गतज्यामुज्यम् उद्गतज्यान्येषां धनूंषि भवन्ति ॥ ८ ॥

पवमाने रथन्तरं करोतीति बृहत्यामेकर्चानाꣳ स्थाने स्यादेकं तद्धि बार्हतानाꣳ स्थानमेवञ्च तृचे भवति † ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

ब्राह्मणं पवमाने रथन्तरं कुर्य्यादिति तत् रथन्तरं बृहत्या-मेकर्चानां स्थाने स्यात् वषट्कारणिधनरौरवयौधाजयानामेकमेतेषां स्थाने स्यात् तद्धि बार्हतानां साम्नां स्थानं बृहतीषु तत्क्रियमाणं तृचे भवति तस्य ह्यरण्ये गेयत्वात् तृचकरणं दृष्टम् एकग्रहणं शिष्ट-कल्पावधारणार्थम् ॥ ९ ॥

अविप्रतिषेधेनेतरेषामनुकल्पयेदित्यपरमेवमल्पीयान् वि-कारः* ॥ १० ॥

अपरं मतम् अबाधेनेतरेषामेकर्चानां रथन्तरमनुकल्पयेदिति एवं क्रियमाणे पूर्वस्मादल्पीयान्विकारः कृतो भवतीति ॥ १० ॥

तत्र पञ्चमं बार्हतमाहरेत् स्तोमवशेन तत् पौरुमद्गꣳ स्यात् भ्रातृव्यवधꣳ ह्यस्मिन् ब्राह्मणं दर्शयति † ॥ ११ ॥

तत्र तस्मिन् कल्पे पञ्चमं साम बार्हतमाहरेत् स्तोमवशेन पञ्चमं साम पौरुमद्गं स्यात् तस्मिन् पौरुमद्गे ब्राह्मणं भ्रातृव्यवधं दर्शयति पाप्मानमेवैतेन भ्रातृव्यं मञ्जयतीति ॥ ११ ॥

पृष्ठेषु रथन्तरस्योत्तरयोर्द्विपदे स्यातामित्याचार्या एवं सुपराञ्चो भवन्तीति ‡ ॥ १२ ॥

ब्राह्मणं पराचीषु रथन्तरं भवतीति तत्रायं संशयः किमयन्नि-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणीये किञ्चिन्न्यूनमस्ति ।

त्यानुवादस्त्रिकं स्तोमं दृष्ट्वा अथापूर्वो विधिरिति किं पुनरिति यदि तावन्नित्यानुवादः रथन्तरं काकुवुत्तर्य्येणैव भवितुमर्हति अथ पुनः अपूर्वो विधिः तत्र परत्वं कल्पयितव्यं सोऽयमाचार्य्य आह पृष्ठेषु रथन्तरस्य क्रियमाणस्य उत्तरयोः स्तोत्रीययोः ककुभोः स्थाने द्विपदे स्यातामित्याचार्य्याः एवं क्रियमाणे ताः सर्वाः सुष्टुतराः पराच्यो भवन्तीति ॥ १२ ॥

ककुभाविति गौतमो नावृत्तिमेतत् स्तोमस्य दर्शयतीति* ॥ १३ ॥

गौतम आचार्य्य आह ककुभावुत्तरे स्याताम् एवं क्रियमाणे साम्नस्य विकारो न कृतो भवत्यौत्पत्तिक्या गीतेः पराक्त्वञ्च कृतं भवति अनावृत्त्यैव स्तोमस्य पराचीषु रथन्तरमित्येतद्ब्राह्मणमनभ्यासम् ॥ १३ ॥

स्रवं ब्रह्मसाम कुर्वन् श्यैतस्यर्चं कुर्य्यात् † ॥ १४ ॥

स्रवं ब्रह्मसाम कुर्वन् वृहत्पृष्ठे श्यैतस्यर्चं कुर्य्यात् ॥ १४ ॥

वृत्तिर्ह्येतस्मिꣳ स्थाने पावमानीनां न विद्यते † ॥ १५ ॥

एतस्मिन् स्थाने पावमानीनां वृत्तिर्न विद्यते ॥ १५ ॥

नव नव दक्षिणा इति नववर्गान्यथोत्साहं दद्यात् काणखोरकूटबण्डानाम् † ॥ १६ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

ब्राह्मणं नव नव दक्षिणा भवन्तीति अयं किंदक्षिण इति उच्यते नव वर्गान् कृत्वा यथोत्साहं दद्यादिति यावच्छक्ति काणा अन्या विकृताः खोराः खञ्जाः कुब्जाः कूटा भग्नशृङ्गाः बण्डा बालधि-विकृताः ॥ १६ ॥

**तासामपि दक्षिणावेलायां लोहितं जनयेयुः* ॥ १७ ॥**

तासामपि दीयमानानां सतीनां दक्षिणाकाले अपीड़या लोहि-तमुत्पादयेयुः ॥ १७ ॥

**एकत्रिके सद्यः सर्वं कुर्युः* ॥ १८ ॥**

उक्तः श्येनः अनन्तरमेकत्रिक उच्यते तस्मिन्नेकत्रिके षष्ठेऽहनि सद्यः सर्वं कुर्युः तत्किमिदमारभ्यते यदा उक्तमेकत्रिकान्ताः षट्-साद्यःक्रा इति उच्यते विकल्पार्थमारम्भः ॥ १८ ॥

**एकदीक्षस्त्वुपसत्क इति गौतमः* ॥ १९ ॥**

गौतम आचार्य्य आह एकदीक्षस्त्युपसत्कः स्यात् ॥ १९ ॥

**तस्य गायत्रपार्श्वमार्भवोऽयारुचेति* ॥ २० ॥**

तस्य एकत्रिकस्य गायत्रपार्श्वमार्भवः अयारुचेत्येतस्यामृचि अ-त्रापि विकल्पार्थ एवारम्भः ॥ २० ॥

**पुरोजित्यामिति शाण्डिल्यस्तस्याः सस्तुत्वेयो वह्नामि-त्येतां मध्ये कुर्यात् † ॥ २१ ॥**

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतं ।

शाण्डिल्य आचार्य्य आह पुरोजित्यां गायत्रपार्श्वं स्यात् किन्तु तस्यास्तु मध्ये ससुलेयोवसूनामित्येतामेव कुर्य्यात् एवं सम्पदा भवति उक्तं सर्वेषां वा एषां छन्दसां रूपमिति ॥ २१ ॥

प्राचीमनुप्रदिशं याति चेकितदित्येतस्यामुद्वंशीयं कुर्या-दुद्धृत्य गायत्रपार्श्वमिति लामकायनः* ॥ २२ ॥

लामकायन आचार्य्य आह प्राचीमनुप्रदिशं याति चेकितदित्ये-तस्यामृचि उद्वंशीयं कुर्य्यात् उद्धृत्य गात्रपार्श्वमिति ॥ २२ ॥

त्रिकं बहिष्पवमानं स्यादिति धानञ्जय्यः पञ्चो मध्य-न्दिनः सप्तार्भव एकोनोतराणीति* ॥ २३ ॥

धानञ्जय्य आचार्य्य आह त्रिकं बहिष्पवमानं स्यात् पञ्चीति मध्यन्दिनः पवमानः आर्भवः सप्ती इतराणि स्तोत्राणि सर्वाण्येकी-नीति ॥ २३ ॥

पवमानाश्च होतृषामाणि च त्रिकाण्येकोनीतराणीति † ॥ २४ ॥

पवमानाश्च होतृषामाणि च त्रिकाणि स्युः इतराणि स्तोत्राण्ये-कीनि भवन्ति ॥ २४ ॥

चतुरुत्तरसम्पन्नो द्वे द्वे त्रिकपञ्चिनी प्रत्यवरोहेण ‡ ॥२५॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

अस्मिन्नेव ब्राह्मणं ता उ चतस्रः सम्पद्यन्त इति चातुरुत्तर्य्येण स्तोत्रीयान्ते सप्तछन्दांसि सम्पद्यन्ते तासां सम्पदुच्यते तस्मिंश्चतुरुत्तर-सम्पन्ने द्वे द्वे त्रिकपञ्चिनो स्तोत्रे कर्त्तव्ये प्रत्यवरोहेण प्रत्यवरोहः प्रातिलोम्यम् उपरिष्टादारभ्य गायत्रीसम्पन्नस्तावदुक्तः साम्प्रतं तस्मि-न्नेव विशेष उच्यते उष्णिक्सम्पन्ने आर्भवस्तिकः पञ्चो अग्निष्टोमसाम अनेन प्रकारेण प्रत्यवरोहेत् यावज्जगतीसम्पन्नमिति ॥ २५ ॥

**तस्य षट्षष्ठं शतं दक्षिणाः* ॥ २६ ॥**

प्रत्यवरोहेणेत्यनुवर्त्तत एव ता एता दक्षिणाः प्रत्यवरोहेण भवन्ति गायत्रीसम्पन्ने तत् षट्षष्ठं शतम् उष्णिकसम्पन्ने द्विषष्ठं शतम् अनुष्टुप्सम्पन्ने अष्टापञ्चाशं शतं बृहतीसम्पन्ने चतुःपञ्चाशं शतं पङ्क्तिसम्पन्ने पञ्चाशं शतं त्रिष्टुप्सम्पन्ने षट्चत्वारिंशं शतं जगती-सम्पन्ने द्वाचत्वारिंशं शतम् एवमेषा ज्योतिषि स्तोत्रीयासम्पन्नस्य न भवति शतं स्तोत्रीया इति दक्षिणाभिश्च सम्पद्यते ॥ २६ ॥

इति अष्टमस्य पञ्चमी कण्डिका ।

---

अथ षष्ठी कण्डिका ।

**व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनाधाय यज्ञोपकरणानि चेष्ट्वा य एषामध्ययनेऽभिक्रान्तितमः स्यादभिजनेन वा तद-भावेऽपि भोगलाभेन तस्य गार्हपते दीक्षेरन् भक्षांश्चानु भक्षयेयुः* ॥ १ ॥**

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

उक्ताः साद्यःक्राः साम्प्रतं व्रात्यस्तोमा उच्यन्ते तान् विवक्षुरिदं सूत्रमारभते व्रात्यस्तोमैरिति व्रात्यानां स्तोमाः किंलक्षणाः पुनर्व्रात्या इति उच्यते पठिता ब्राह्मणेन हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्य्यं रचन्ति न कृषिं न वणिज्यमिति तथा गरगिरा वा एते ये ब्रह्माद्यं जन्म मन्त्रमदन्त्यदुरुक्तवाक्यं दुरुक्तमाहुरदण्ड्यं दण्डेन घ्नन्तश्चरन्त्यः दीक्षिता दीक्षितवाचं वदन्तीति एवंप्रकाराः व्रात्याः पठिताः ये चान्ये शाखान्तरेषु पद्यन्ते ते सर्वे व्रात्याः व्रात्यस्तोमैरिति करणे तृतीया यक्ष्यमाणा इति भविष्यत्कालोपदेशः ते व्रात्या व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनाधाय पृथङ्नानेत्यर्थः पृथगग्न्याधानानि कृत्वा यज्ञोपकरणानि चेध्वा यज्ञोपकरणानि यज्ञसाधनानि द्रव्याणि अर्जयित्वा य एषां व्रात्यानामध्ययनेऽभिक्रान्तितमः स्यात् अभिक्रान्ता अध्ययनेन सर्व इमे अभिक्रान्तिनः अयमेषामभिक्रान्तितमः अतिशयेन तमतिष्ठिनौ अभिजनेन वा योऽतिरिच्यते अभिजनः कुलं यः कुलेन वाधिकः स्यात् तदभावेऽपि भोगलाभेन तयोरभावस्तदभावः तयोः स्वाध्यायाभिजनातिरेकयोरसम्भवे भोगलाभेन येऽतिरिच्यते द्रव्यवत्तमः स्यात् तस्य गार्हपते दीक्षेरन् स तेषां मुख्यः स्यात् भक्षांश्च तस्यानु सर्वे भक्षयेयुः ॥ १ ॥

**ये के च व्रात्याः सम्पादयेयुस्ते प्रथमेन यजेरन्* ॥ २ ॥**

एते व्रात्यस्तोमाश्चत्वारः पठिताः तत्र प्रथमोऽविशेषेण सर्वान् व्रात्यानधिकृत्य पठितः अन्ये तु द्वितीयादयो विशिष्टविषया उक्ताः

---

* द्राह्यायणेऽप्येवं एतस्मात् पूर्वन्तत्र सप्तसूत्राण्यधिकानि दृश्यन्ते।

ते यथाम्नातं भवति साम्प्रतं प्रथमस्य तावद्विधिरुच्यते ये केचिद्व्रात्याः सम्पादयेयुरिति नात्र नियमः ये केचित् सम्पादयेयुः संख्यां ते प्रथमेन व्रात्यस्तोमेन यजेरन् कियन्तं स्तोमसंख्यया उक्तं त्रयस्त्रिंशद्धि देवा आर्ध्नुवन्निति ॥ २ ॥

**ब्राह्मणेनेतर उक्ताः* ॥ ३ ॥**

इतरे व्रात्यस्तोमाः ये च येषाञ्चेति ते ब्राह्मणेनैवोक्ताः अथैष षट्षोड़शीत्यधिकृत्याह ये नृशंसाः क्रूरकर्मकारिणः निन्दिताः सन्तो व्रात्यां प्रवसेयुस्तएतेन यजेरन्निति तथा द्विषोडशिनमधिकृत्याह ये कनिष्ठाः सन्तो व्रात्यां प्रवसेयुस्तएतेन यजेरन्निति ज्येष्ठकनिष्ठता कृता ग्रन्थान्तरे एवमेते ब्राह्मणेनैवोक्ताः ॥ ३ ॥

**स्थाविरादपेतप्रजनना ये ते शमनीचामेढ्राः* ॥ ४ ॥**

उक्तं अथैषशमनीचामेढ्राणां स्तोम इति साम्प्रतं परीच्यते के ते शमनीचामेढ्रा इति तदुच्यते स्थविरपदेन प्रजनन उक्तः स्थविरभावः स्थाविरं स्थविरभावादपेतप्रजननाः ते शमनीचामेढ्राः शमन्नीचीभूतं मेढ्रं येषां ते निवृत्तप्रजननाः ॥ ४ ॥

**यन्निरुक्तं निधनमुपेयुरितीन्द्रेति द्यौताने निधनं निराङ्कस्तस्य प्रतिषेधः † ॥ ५ ॥**

ब्राह्मणं यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादिति तत्रायं संशयः

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणोऽप्येवं तत्र केदविषये विशेषोऽस्ति सूत्रमप्येकमधिकं दृश्यते ।

कतमस्य साम्नोऽनिरुक्तं निधनं यस्यायं प्रतिषेध इति ब्रवीति इन्द्रेति द्यैताने निधनं निराङ्गस्तस्य प्रतिषेध इति द्यैताने स्वाध्यायाच्छन्नं निधनं पठितं तस्य प्रयोगकाले निधनान्तरमुक्तम् इन्द्रेति तस्य व्रात्यस्तोमेषु प्रतिषेधः क्रियते कथं तर्हि कर्त्तव्यम् उच्यते ॥ ५ ॥

यथाम्नायमेवोपेयुः* ॥ ६ ॥

यथापठितमेवोपेयुः आ ऊ३ हो३ इति ॥ ६ ॥

उष्णीषश्च प्रतोदश्चेत्युष्णीषं यत्तिर्य्यङ्नद्धं भवति व्रात्यानाम् † ॥ ७ ॥

उष्णीषश्च प्रतोदश्च ज्याह्रोडश्च विपथश्च फलकास्तीर्ण इत्येतदादि ब्राह्मणं तान्येतानि येषु संशयस्तान्युच्यन्ते उष्णीषं नाम तिर्य्यक् शिरोवेष्टनं व्रात्यानां तदुष्णीषमित्युच्यते व्रात्या हि उष्णीषिणश्चरन्ति वेष्टितशिरसः प्रतोदः प्रतुद्यतेऽनेनेति प्रतोदः ॥ ७ ॥

धनुष्केणानिषुणा व्रात्याः प्रसेधमाना यन्ति स ज्याह्रोडः† ॥ ८ ॥

उक्तं ज्याह्रोडश्चेति कः पुनर्ज्याह्रोड इति उच्यते धनुष्केण अनिषुणा व्रात्याः प्रसेधमाना यन्ति अल्पकं धनुः धनुष्कं तेन धनुष्केण अनिषुणा अकाण्डेन व्रात्या लोकं प्रसेधमानाः आसेधन्तः त्रासयन्तो यन्ति स ज्याह्रोडः ॥ ८ ॥

---

* द्राह्यायणेऽप्येवं तत्र छेदविषये विशेषोऽस्ति।

† द्राह्यायणेऽप्येवम्।

विपथश्च फलकास्तीर्ण इति प्राच्यरथो नास्तीर्णो विपथः* ॥ ९ ॥

विपथश्च फलकास्तीर्ण इति ब्राह्मणं तत् को विपथः कथञ्च फलकास्तीर्ण इति उच्यते विपथस्तावत् प्राच्यरथः उत्क्रम्य पन्थानं याति विपथः अन्यदेव तस्य मानं फलकास्तीर्णः यथा पतित एव वंशफलाभिरेव नास्तीर्णः न चान्येनास्तरणेन स विपथः ॥ ९ ॥

कम्प्रमिश्राभ्यामश्वाश्वतराभ्यां युक्तः स्यादिति शाण्डिल्यः† ॥ १० ॥

शाण्डिल्य आचार्य्य आह प्राच्यरथो न विपथः कम्प्रमिश्राभ्यामश्वाश्वतराभ्यां युक्तः स्यात् स विपथः कम्पनशीलः कम्प्रः अश्वस्य अश्वतरस्य अश्वाश्वतरौ तयोरेकः कम्पनशीलः कश्चन ताभ्यामवश्यमेवोत्पथः क्रियते गतिवैषम्यात् एवमसौ विपथो भवति ॥ १० ॥

याभ्यां काभ्याञ्चाश्वाभ्यामश्वतराभ्यां वेति धानञ्जय्यः‡ ॥११॥

धानञ्जय्य आचार्य्य आह याभ्यां काभ्यामश्वतराभ्यां युक्तः स्यात् अश्वाश्वतराभ्यां वेति कम्प्राभ्यामकम्प्राभ्यां वा अवश्यमेव ताभ्यामुत्पथः क्रियते स्वभावादेव ॥ ११ ॥

कृष्णशंवास इति कृष्णङ्कृष्णमिश्रमिति शाण्डिल्यः‡ ॥१२॥

---

* द्राह्यायणेऽप्येवं तत्र तु किञ्चिन्न्यूनमस्ति ।

† द्राह्यायणेऽप्येवं तत्र तु युक्तशब्दात् परतो रथ इत्यधिकशब्दोऽदृश्यते ।

‡ द्राह्यायणेऽप्येवम् ।

ब्राह्मणं कृष्णशंवासः कृष्णबलक्षे अजिने रजतो निष्कस्तद्गृहपते-रिति तत्कृष्णशंवास इत्येतस्मिन्नर्थे आचार्य्याणामनेकधा प्रवृत्तिः शाण्डिल्यस्तावदाह तत्कृष्णशंवास इति कृष्णकृष्णमिश्रं कृष्णशमित्युच्यते ॥ १२ ॥

शुक्लं कृष्णदशमिति गौतमः* ॥ १३ ॥

गौतम आचार्य्य आह शुक्लं वासः कृष्णदशं वा एतत्कृष्णदश-मिति सोऽयं मध्यवर्णलोपी समासः ॥ १३ ॥

कृष्णमित्येव मन्य इति धानञ्जप्यः* ॥ १४ ॥

धानञ्जप्य आचार्य्य आह एवमहम्मन्ये कृष्णमेव कृष्णशमिति स्वार्थे तद्धित इति ॥ १४ ॥

यावविकौ द्वाभ्यामविभ्यामेकैकः क्रीतः स्यात्तयोः पार्श्व-सण्हिते कृष्णबलक्षे अजिने स्याताम्* ॥ १५ ॥

उक्तं कृष्णबलक्षे अजिने इति यावविकौ मेषौ द्वाभ्यां द्वाभ्यां मविभ्यां मेषाभ्यां एकैकः क्रीतः स्यात् तयोः अजिने पार्श्वसंहिते स्यातां कृष्णबलक्षे कृष्णं प्रज्ञातं बलक्षं किमिति उच्यते ॥ १५ ॥

बलक्षमिति श्वेताख्या* ॥ १६ ॥

श्वेतोवर्णो बलक्षाख्यः कृष्णञ्च बलक्षञ्च कृष्णबलक्षे ॥ १६ ॥

रजतो निष्कः † ॥ १७ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणोऽप्येवं किन्तु तत्र छेदविषये विशेषोऽस्ति ।

निष्कः प्रज्ञातः निष्को नामालङ्कार इति सराजतो भवति॥१७॥

**तद्गृहपतेरित्येतत् सर्वं गृहपतिराहरेत्त्रयस्त्रिꣳशतञ्च* ॥ १८ ॥**

यदेतदुक्तं उष्णीषञ्च प्रतोदश्चेत्येतदादि एतत्सर्वं गृहपतिराहरेत् त्रयस्त्रिंशतञ्च कस्य त्रयस्त्रिंशतमिति उच्यते उक्तं संख्यामात्रे च दक्षिणा गाव इति एतत् त्रयस्त्रिंशद्दक्षिणा आहरेत् ॥ १८ ॥

**द्वित्रयस्त्रिꣳशतमिति शाण्डिल्यः † ॥ १९ ॥**

शाण्डिल्य आचार्य्य आह गवां द्वित्रयस्त्रिंशतं गृहपतिराहरेदिति ॥ १९ ॥

**वलूकान्तानि दामतूषाणीतरेषामित्याविकानि लोहितप्रवाणानि वसनानि स्युः † ॥ २० ॥**

तद्गृहपतेरित्युक्त्वाह वलूकान्तानि दामतूषाणीतरेषामिति इतरेषां व्रात्यानां वसनान्याह तान्युच्यन्ते वलूकान्तानीतिशब्दः प्रतीतपदार्थकः अतो ब्रवीति आविकानि ऊर्णानि लोहितप्रवणानि आविकेन शुक्लेन सूत्रेणोतानि स्युः लोहितेन प्रोतानि लोहितप्रवणानि ॥ २० ॥

**दामतूषाणीति दामदशानि स्युर्दशाख्या तूषमिति‡ ॥२१॥**

---

* द्राह्यायणेऽप्येवम् किन्तु छेदविषये विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतं ।

दामनीव दशाः स्युः यथा गोबन्धनानि दामानि तत्प्रकाराणि स्युः तेषां वाससाम् एकैकस्मिन् पार्श्वे ग्रन्थिः अन्यपार्श्वे तूषमिति दशाख्यात्तूषम् ॥ २१ ॥

द्वे द्वे दामनी इति द्वे द्वे एकैकस्य वसनस्य दशे स्याताम्* ॥ २२ ॥

द्वे द्वे दामनी इति ब्राह्मणम् एकैकस्य वसनस्य द्वे द्वे दशे स्याताम् उक्तं ग्रन्थिः पार्श्वे चेति ॥ २२ ॥

द्वे द्वे उपानद्वाविति कृष्णाः कर्णिन्य इति शाण्डिल्यः† ॥ २३ ॥

द्वे द्वे उपानद्वाविति ब्राह्मणं ताः कृष्णाः वर्णतः स्युः उपानहः कर्णिन्यः कर्णा आसां विद्यन्त इति कर्णिन्यः ॥ २३ ॥

याः कास्चेति धानञ्जप्यः† ॥ २४ ॥

धानञ्जप्य आचार्य्य आह याः कास्चोपानहः स्युः अनियमो वर्णकर्णयोः ॥ २४ ॥

द्विषंहितान्यजिनानीति पूर्वाभ्यामजिनाभ्यां व्याख्यातानि* ॥ २५ ॥

द्विषंहितान्यजिनानीति ब्राह्मणं तान्यजिनानि पूर्वाभ्यामजिनाभ्यां

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

व्याख्यातानि यावविकौ द्वाभ्यामविभ्यामेकैकः क्रीतः स्यात्तयोः पार्श्व-संहिते कृष्णबलक्षे अजिने स्यातामिति ॥ २५ ॥

**तच्चेतरेषामेकैक आहरेत्त्रयस्त्रिꣳशतञ्च त्रयस्त्रिꣳशता गृहपतिमभिसमायन्तीति ह्याह* ॥ २६ ॥**

यच्चैतदुक्तं बलूकान्तानि दामतूषाणीतरेषामित्येतदादि यच्च इतरेषां व्रात्यानाम् एकैक आहरेत् त्रयस्त्रिंशतञ्च उक्तं संख्यामात्रे च दक्षिणा गाव इति त्रयस्त्रिंशता गृहपतिमभिसमायन्तीति यद्ब्राह्मण-मेवाह ॥ २६ ॥

**ते त्रयस्त्रिꣳशत ऋत्विग्भ्यो दद्युः† ॥ २७ ॥**

ते गृहपतिमुख्या व्रात्या यास्ताः त्रयस्त्रिंशत आहृतास्ता ऋत्विग्भ्यो दद्युः ॥ २७ ॥

**व्रात्येभ्यो व्रात्यधनानि ये व्रात्यचर्याया अविरताः स्युर्ब्रह्मबन्धवे वा मागधदेशीयाय यस्मा एतद्ददति तस्मिन्नेव मृजानायन्तीति ह्याह‡ ॥ २८ ॥**

व्रात्येभ्यो व्रात्यधनानि दद्युः उष्णीषञ्च प्रतोदश्चेत्येतदादीनि यानि गृहपतिना हृतानि बलूकान्तादीनि च यानि व्रात्यैराहृतानि एतानि सर्वाणि व्रात्येभ्यो दद्युः उक्तम् एतद्वै व्रात्यधनमिति ये व्रात्या व्रात्यचर्य्याया अविरता अनवसिताः स्युः तेभ्यो दद्युः ब्रह्म-

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

† द्राह्यायणोऽप्येवम्।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

बन्धवे वा मागधदेशीयाय दद्युः बन्धुर्यस्य ब्रह्म अवस्थितं न तस्मिन् सोऽयं ब्रह्मबन्धुः मागधदेशीयाय मागधो नाम गायनः वन्दी सूतमागधवन्दिन इति उच्यते गाथाभिर्लोकं स्तुवन्ति ते गायका इत्युच्यन्ते ईषत् मागधो मागधदेशीयः असम्यग्गायनः नोद्घाटितशिरास्तु मागधश्च करोति स उच्यते मागधदेशीयः अपरे ब्रुवते मगधो देश इति तस्मिन् य उत्पन्नः स मागधदेशीयः इति पूर्व एव त्वर्थः यस्मै एतत् व्रात्यधनं ददति व्रात्याः तस्मिन्नेव यत्किञ्चित्कल्मषं तत् मृजानायन्तीति ह्याह ब्राह्मणम् ॥ २८ ॥

व्रात्यस्तोमैरिष्ट्वा त्रैविद्यवृत्तिꣳ समातिष्ठेयुः* ॥ २९ ॥

व्रात्यस्तोमैरिष्ट्वा ते व्रात्या या त्रैविद्यवतां वृत्तिस्तां समातिष्ठेयुः द्विजानामध्ययनमिज्यादानमित्येतदादि ॥ २९ ॥

तेषान्तत ऊर्द्ध्वं भुञ्जीतापि चैनान् कामं याजयेदिति † ॥ ३० ॥

तेषां व्रात्यानामिष्टव्रात्यस्तोमानां तत ऊर्द्ध्वं भुञ्जीत अपि चैनान् कामं याजयेदिति एतदादर्शयति अतो अर्वाक् यैश्च तेषां पूर्वं याजनं कृतं भुक्तं वेति अव्यवहार्य्याः अकृतप्रायश्चित्ता इति ॥३०॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणीये विशेषोऽस्ति।

इति अष्टमस्य षष्ठी कण्डिका।

अथ सप्तमी कण्डिका।

**अग्निष्टुत्स्वनडुहामश्वानामजानामिति यथोत्साहं दद्यात् तथा हिरण्यस्य* ॥ १ ॥**

उक्ता व्रात्यस्तोमाः अनन्तरमग्निष्टुत आम्नाताः तेषु न किञ्चिद्वक्ष्यते यद्वक्तव्यं सर्वमेवोक्तं दक्षिणास्तूच्यन्ते अग्निष्टुत्स्विति सर्वानग्निष्टुतोऽधिकृत्य सप्तमी तेषु अग्निष्टुत्सु अनडुहामश्वानामजानामिति यथोत्साहं दद्यात् अनो वहतीत्यनड्वान् यथोत्साहमिति शक्त्यपेक्षा कुतः वाक्यात् यथा असमासः किमर्थमिति चेत् अनडुहाश्वाजहिरण्यानां यथोत्साहं दद्यादिति वक्तव्ये उच्यते यदि समासः क्रियते प्रतिद्रव्यं बहुत्वं न गम्यते यथोत्साहमित्युच्यते प्रतिद्रव्यं बहुत्वानियमः स्यात् अनडुहामश्वानामजानामिति यो यः प्रतिद्रव्यं बहुवचनं करोति बहुत्ववचनाद्दृश्यते कथं प्रतिद्रव्यं बहूनां दानं स्यादिति यथा हिरण्यस्येति यथोत्साहमिति प्रकृतम् ॥ १ ॥

**कश्चिदर्थमर्हन्यो न प्राप्नुयात्स त्रिवृता प्रथमेन यजेत † ॥ २ ॥**

इह ब्राह्मणं त्रिवृदग्निष्टोमः तस्यानिरुक्तं प्रातःसवनमिति तत्र पठति ग्रामकामो यजेतेति सोऽयमाचार्यः तस्याहरणे अपरमप्यर्थं दर्शयति कश्चिदर्थमर्हन्यो न प्राप्नुयादिति अर्हन्योऽप्यसौ तमर्थं नच प्राप्नोति तस्य प्राप्तये अनेन त्रिवृता प्रथमेन यजेत् ॥ २ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् तथा विशेषस्य कृतः।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

**तस्य चतुर्युगश्वरथो दक्षिणा तेषामेकः श्यावः स्यात्* ॥ ३ ॥**

तस्य त्रिवृतां प्रथमस्य चतुर्भिरश्वैर्युक्तो रथो दक्षिणा तेषामेकः श्यावः स्यात् तस्येति निर्देशः यदि ग्रामकामो यद्यन्यार्थप्राप्तये इति वैषामश्वानामेकः श्यावो वर्णतः स्यात् आनिरुक्तयसम्बन्धात् ॥ ३ ॥

**यं ब्राह्मणाः स्वराजानः पुरस्कुर्वीरन् स वृहस्पतिसवेन यजेत † ॥ ४ ॥**

यमिति निर्द्देशः क्रियते यं ब्राह्मणाः स्वराजानः पुरतः कुर्वीरन् स पुनः पुरस्कार आधिपत्ये स्थापनम् अथ के ब्राह्मणाः स्वराजानः येषां राजनिष्ठे केषां निष्ठे ये स्वकर्मनिष्ठाः उक्तं राजा सर्वस्येष्टे ब्राह्मणवर्जमिति तत्र राजा सर्वस्येष्टे यतस्ते कर्मनिष्ठाः ब्राह्मणवृत्तेऽवस्थिताः अविचलितव्रतविद्वांसः ते स्वराजानः ते यं पुरस्कुर्वीरन् स वृहस्पतिसवेन यजेत ॥ ४ ॥

**तस्य प्रातःसवने सन्नेषु नाराशंसेष्वेकादशदक्षिणा व्यादिशेदृत्विग्भ्यो नापाकुर्यात् ‡ ॥ ५ ॥**

तस्य वृहस्पतिसवनस्य प्रातःसवने आसादितेषु नाराशंसेषु

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

चमसेषु एकादशदक्षिणा व्यादिशेदृत्विग्भ्यः व्यादेशमात्रं कुर्य्यात् अपाकरणं न-कुर्य्यात् ऋत्विग्भ्यो व्यादिशेत् अपाकरणमर्पणम् ॥ ५ ॥

**अश्व द्वादशा मध्यन्दिने* ॥ ६ ॥**

अपरमपाकरोति मध्यन्दिने एकादशदक्षिणा अश्वद्वादशाः अश्वो-द्वादशो यासां ता इमा अश्वद्वादशाः ॥ ६ ॥

**ता उभयोरपाकरोति † ॥ ७ ॥**

याश्च प्रातःसवनीयायाः ता अश्वद्वादशाः उभयोर्मध्यन्दिने ददाति सन्निहितेषु नाराशंसेष्विति प्रकृतम् एवं ब्राह्मणम् ॥ ७ ॥

**एकादश तृतीयसवने ता अनुबन्ध्य वपायाᳫं हुताया-मपाकुर्यात् ‡ ॥ ८ ॥**

एवं ब्राह्मणम् एकादशतृतीयसवने ता वशायामपाकरोतीति तृतीयसवने एकादशदक्षिणाः ता अनुबन्ध्यस्य पशोर्वपायां हुताया-मपाकुर्य्यात् वशापक्षे ब्राह्मणात् तत्राप्येकादश एव ॥ ८ ॥

**तान्यप्येकादशैकादशशतानि स्युः सहस्राणि वा नित्य-स्त्वश्वो मध्यन्दिने ‡ ॥ ९ ॥**

याश्च प्रतिसवनं एकादशदक्षिणा आदिष्टाः तान्यपि सर्वाण्येका-

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

‡ द्राह्यायणेऽप्येवम् किन्तु छेदविषये विशेषोऽस्ति ।

दशैकादशशतानि स्युः सहस्राणि वा प्रतिसवनं स्युः वाशब्दो विकल्पार्थः नित्यस्त्वस्यः सर्वेषु कल्पेषु मध्यन्दिने ॥ ९ ॥

य एनं पुरस्कुर्वीरन्नन्वग्भूतवृत्तिं तत ऊर्द्धं तेषु वर्त्तयेत्* ॥ १० ॥

य एनं यजमानं पुरस्कुर्वीरन् अन्वग्भूतेषु या वृत्तिः तत ऊर्द्धं तां वृत्तिं तेषु वर्त्तेरन् अन्वग्भूता नाम ये आश्रिताः तान् बिभृयात् योगक्षेमन्तेषु कल्पयेत् ॥ १० ॥

स्थपतिरिति चैनन्त आचक्षीरन्* ॥ ११ ॥

ते अन्वग्भूता एनं यजमानं स्थपतिरिति आचक्षीरन् ॥ ११ ॥

श्येनेनेषुर्व्याख्यातोदीक्षोपसदस्त्वस्यैकाहिक्यः† ॥ १२ ॥

इषुः श्येनेनैव व्याख्यातः यावान् श्येनस्य सूत्रकारेण विधिरुक्तः स सर्व एव इषोर्भवति अयन्तु विशेषः ऐकाहिक्यो दीक्षोपसद इति इषोर्भवन्ति श्येन्यस्तु सद्योपक्रमः ॥ १२ ॥

इति अष्टमस्य सप्तमी कण्डिका।

---

अथ अष्टमी कण्डिका।

सर्वस्वारेण यक्ष्यमाणो दीक्षाप्रभृति प्रयतेत यथा सौत्येऽहनि प्रेयामिति† ॥ १ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

अग्निष्टुतः प्रकृताः तत्र सर्वस्वारस्य ब्राह्मणं त्रिवृदग्निष्टोमः स सर्वस्वारो यः कामयेतानामयतामुं लोकमियामिति स एतेन यजेतेति तस्य सर्वस्वारस्य विधिरुच्यते सर्वान् यस्मिन् स्वाराणीति स सर्वस्वारः तेन सर्वस्वारेण यक्ष्यमाणो दीक्षाभ्य आरभ्य प्रयतेत प्रयत्नं कुर्य्यात् यथा सौत्येऽहनि प्रेयां म्रियेयमिति दीक्षास्तस्या परिमिताः कुर्य्यात् ॥ १ ॥

प्राणभक्षꣳ सर्वत्र भक्षान् भक्षयेत्* ॥ २ ॥

दीक्षाभ्य आरभ्य यावन्तो भक्षाः सर्वान् प्राणभक्षान् भक्षयेत् न प्रत्यक्षभक्षान् सर्वग्रहणात् व्रतमपि प्राणभक्ष एव ॥ २ ॥

तानपोऽभ्यवहारयेत्कर्त्तौ वानुषेचयेत्* ॥ ३ ॥

तान् भक्षानपोऽभ्यवहारयेत् अप्सु प्रक्षिपेत् कर्त्ते वा प्रक्षिपेत् खाते वा अनुषेचयेत् ॥ ३ ॥

सोममद्भिः सꣳसृज्य मार्जालीयसदेशे निनयेयुः* ॥ ४ ॥

सोमं प्राणभक्षं भक्षितम् अद्भिः संसृज्य मार्जालीय उत्कृष्टदेशे निनयेयुः संसर्गो मिश्रणम् ॥ ४ ॥

आर्भवे पवमाने स्तूयमान उदुम्बर्य्या दक्षिणा प्रावृतो निपद्येत कृष्णाजिनमुपस्तीर्य्य दक्षिणाशिरास्तदेव संगच्छते तदेव म्रियत इति* ॥ ५ ॥

इह ब्राह्मणम् आर्भवे पवमाने स्तूयमान औदुम्बर्य्या दक्षिणे

---

* द्राह्यायणेऽप्येवम् ।

प्रदेशे कृष्णाजिनमुपस्तीर्य्य दक्षिणाशिरा निपद्येत संविशेत् तदेव सङ्गच्छते तदेव म्रियत इति सङ्गमनं मरणम् ॥ ५ ॥

एतं मृतं यजमानꣳ हविर्भिः सहजोषे यज्ञपात्रैश्चाहवनीये प्रहृत्य प्रव्रजेयुरिति शाण्डिल्यः* ॥ ६ ॥

एतं मृतं यजमानं हविर्भिः सहजोषेण यज्ञपात्रैश्चाहवनीये प्रहृत्य प्रव्रजेयुरित्येवं शाण्डिल्यो मन्यते प्रहरणं प्रक्षेपः प्रव्रजेयुरिति एतावन्तमेतत्कर्मेति विज्ञापयति अथ एतं मृतं यजमानमिति किमर्थम् उच्यते एतमेव सर्वस्वारे यजमानं मृतम् एवं कुर्युः अन्यत्र तु मृते यजमाने समापयेयुः शेषमिति ॥ ६ ॥

समापयेयुः शेषमिति धानञ्जप्यः* ॥ ७ ॥

धानञ्जप्य आह समापयेयुरेव शेषमिति ॥ ७ ॥

समापयेयुश्चेदिति शाण्डिल्यायनो नेदिष्ठो तत् कृष्णाजिनं प्रतिमुच्य याजमानं कुर्यात् भक्षाꣳश्च भक्षयेत्* ॥ ८ ॥

शाण्डिल्यायन आह यदि समापयेयुः शेषं कर्म ततो यद्यजमानस्य कृष्णाजिनं तत्पुत्रो भ्राता वा यो वा नेदिष्ठो स्यात् स तत् प्रतिमुच्य आवृत्य याजमानं कर्म कुर्य्यात् भक्षांश्च भक्षयेत् तत्र हि यजमानस्य प्राणभक्षं सर्वत्र भक्षान् भक्षयेदित्युक्तम् अयन्तु पुनर्भक्षं भक्षयेत् ॥ ८ ॥

ऋत्विजो याजयमानं कुर्युः सर्वहुतो भक्षान् जुहुयुरिति धानञ्जप्यः* ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम्।

धानञ्जय्य आह ऋत्विजो याजमानं कुर्युः ये याजमानस्य भक्षा-स्तान् सर्वङ्कृतो जुहुयुरिति ॥ ९ ॥

सꣳस्थितेऽहनि सन्त्वा हिन्वन्तीत्यासन्द्यङ्गानि समाहरे-युः* ॥ १० ॥

संस्थिते समाप्तेऽहनि कृते समिष्टयजूंषि सन्त्वाहिन्वन्तीत्यनेन साम्ना आसन्द्योरङ्गानि समाहरेयुः आसन्दी मञ्चौ ॥ १० ॥

सन्त्वा रिणन्तीति प्रक्षालयेयुः* ॥ ११ ॥

सन्त्वा रिणन्तीत्यनेन साम्ना प्रक्षालयेयुः तान्यासन्द्यङ्गानि ॥११॥

सन्त्वा ततक्षुरिति तक्ष्णुयुः* ॥ १२ ॥

सन्त्वा ततक्षुरित्यनेन साम्ना तक्ष्णुयुः तान्यङ्गानि ॥ १२ ॥

सन्त्वा शिशन्तीति विवयेयुः* ॥ १३ ॥

सन्त्वा शिशन्तीत्यनेन साम्ना तान्यासन्द्यङ्गानि विवयेयुः ॥ १३ ॥

तयैनमवभृथꣳ हृत्वा सोमोपनहनेन प्रच्छाद्यानूबन्ध्यवपा-याꣳकृतायां दक्षिणे वेद्यन्ते केशश्मश्रूण्यस्य वापयेयुः* ॥१४॥

तया आसन्द्या एनं यजमानम् अवभृथं हृत्वा सोमोपनहनेन वाससा प्रच्छाद्य अनूबन्ध्यपशोर्वपायां कृतायां महावेदेर्दक्षिणे प्रदेशे केशश्मश्रूण्यस्य यजमानस्य वापयेयुः वपनङ्कारयेयुः ॥ १४ ॥

अनूबन्ध्यशेषं समाप्य मध्ये देवयजनस्य चितां चिनु-युः* ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम् ।

अनूबन्ध्यस्य पशोः शेषं समाप्य देवयजनस्य मध्ये काष्ठैश्चिताञ्चिनुयुः ॥ १५ ॥

**पश्चाद्गार्हपत्यमुपदध्युः पुरस्तादाहवनीयं पश्चिमेन गार्हपत्यं दक्षिणत आग्नीध्रीयं परिहरेयुः* ॥ १६ ॥**

तस्याश्चितायाः पश्चिमे प्रदेशे गार्हपत्यमग्निं स्थापयेयुः पुरस्तात् आहवनीयं पूर्वे प्रदेशे आहवनीयमग्निं स्थापयेयुः गार्हपत्यं पश्चिमेन प्रदेशेन परिहृत्य चितायाः दक्षिणे प्रदेशे आग्नीध्रीयमग्निं निदध्युः ॥ १६ ॥

**तं दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पयेत् † ॥१७॥**

तं यजमानं दक्षिणाशिरसञ्चितावाहितम् आरोपितं निरहर्त्विभिः यज्ञपात्रैः कल्पयेत् संयोजयेत् यध्वर्युः तस्य हि व्यापारो यज्ञपात्रैः ॥ १७ ॥

**शिरसि कपालानि युञ्ज्यात् † ॥ १८ ॥**

शिरसि यजमानस्य कपालानि कुर्य्यात् कपालानि येषु पुरोडाशाः संस्क्रियन्ते ॥ १८ ॥

**समोप्तधानञ्च चमसम् † ॥ १९ ॥**

समोप्तधानं यस्मिन् हवींषि सर्वाणि समोप्यन्ते द्रूडापात्रमित्यर्थः तच्च शिरसि स्थापयेत् ॥ १९ ॥

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणोऽप्येवम्।

ललाटे प्राशित्रहरणम्* ॥ २० ॥

येन प्राशित्रं ह्रियते चमसे तल्ललाटे स्थापयेत् ॥ २० ॥

नासिकयोः स्रुवौ* ॥ २१ ॥

नासिकयोः स्रोतसि स्रुवौ स्थापयेत् ॥ २१ ॥

आस्ये हिरण्यमवधायानुस्तरणिक्या गौर्मुखं वपया प्रच्छाद्य तत्राग्निहोत्रहवनीं तिरश्चीम्* ॥ २२ ॥

यजमानस्यास्ये मुखे हिरण्यं प्रक्षिप्य यानुस्तरणिकी गौस्तस्या वपया मुखं प्रच्छाद्य यजमानस्य तत्र तस्मिन्मुखे अग्निहोत्रहवनीं स्रुचन्तिरश्चीं स्थापयेत् प्राङ्मुखीम् ॥ २२ ॥

दक्षिणे पाणौ जुहूम्* ॥ २३ ॥

दक्षिणे पाणौ जुहूं स्रुचं स्थापयेत् तिरश्चीमिति वर्त्तते ॥ २३ ॥

सव्यउपभृतम्* ॥ २४ ॥

सव्ये पाणौ उपभृतं स्रुचं स्थापयेत् तिरश्चीमेव ॥ २४ ॥

तथा वृक्कौ* ॥ २५ ॥

यथा स्रुचौ तथा वृक्कौ दक्षिणे दक्षिणं सव्ये सव्यम् ॥ २५ ॥

उरसि ध्रुवाम्* ॥ २६ ॥

स्रुचं स्थापयेत् तिरश्चीमेव ॥ २६ ॥

उदरे पात्रीम्* ॥ २७ ॥

---

* द्राह्यायणोऽप्येवम् ।

उदरे पात्रीं स्थापयेत् ॥ २७ ॥

**उपस्थे कृष्णाजिनम्* ॥ २८ ॥**

उपस्थे कृष्णाजिनं स्थापयेत् ॥ २८ ॥

**अन्तरेण सक्थ्नी शम्याद्दृषदुपले यच्च नादेक्ष्यामः* ॥२९॥**

सक्थ्नो अन्तरेण शम्यां स्थापयेत् शम्या च दृषदुपलञ्च शम्या-दृषदुपले यच्च नादिश्यते यज्ञपात्रं तच्चास्मिन्नेव देशे स्थापयेत् अर-ण्यादि ॥ २९ ॥

**दक्षिणस्योखस्य दक्षिणत उलूखलम्* ॥ ३० ॥**

दक्षिणस्योखस्य कटिसन्निकृष्टजघनप्रदेशे उखस्तस्य दक्षिणे प्रदेशे उलूखलं स्थापयेत् ऊर्ध्वन्तु ॥ ३० ॥

**अनुसक्थं मुषलम्* ॥ ३१ ॥**

सक्थिमनु अनुसक्थं तत्रैव मुसलं स्थापयेत् पुनः सक्थ्नः ऊर्द्धम् ॥ ३१ ॥

**पादयोः शूर्पम्* ॥ ३२ ॥**

पादयोः शूर्पं स्थापयेत् शूर्पं प्रज्ञातम् अनुकरणद्रव्यम् ॥३२॥

**सर्वाण्युत्तानानि पृषदाज्यवन्ति कृत्वा सर्वेभ्योऽग्निभ्य उलपराजीस्तृणुयुर्यथास्मिन्नग्नयः समवेष्यन्तीति* ॥ ३३ ॥**

यावन्त्युत्तानानि यज्ञपात्राणि तानि सर्वाणि पृषदाज्येन पूर-

---

* द्राह्यायणोऽप्येवम् ।

यित्वा सर्वेभ्योऽग्निभ्य उलपराजीस्तृणुयुः यथास्मिन् यजमानस्य शरीरेऽग्नय एकत्र समाधानं करिष्यन्तीति अथ सर्वग्रहणं किमर्थमिति अग्निभ्य इत्युक्ते बहुवचनसामर्थ्यात्सिद्धमिदं यथा सर्वेभ्य इति उच्यते सर्वग्रहणं क्रियते गृह्यस्याप्यग्नेरेवोपयोग इति अथ किं स्थानं तस्येति उच्यते उक्तं यच्च नादेच्याम इति ॥ ३३ ॥

**आहवनीयाच्चेत्प्रथममेयात् ब्रह्मलोकमेष्यतीति विद्यात् गार्हपत्याद्देवलोकं दक्षिणाग्नेः पितृलोकम्* ॥ ३४ ॥**

उक्तम् अनन्तो वै स्वरोऽनन्तोऽसौ लोकोऽनन्तमेवैनं स्वर्गलोकं गमयन्तीति अप्रत्यक्षश्चासौ स्वर्गः तस्य स्वर्गस्य प्राप्तिरुच्यते यद्याहवनीयं प्रथममागच्छेत् अग्निर्यजमानं तत एवं जानीयात् ब्रह्मलोकं गमिष्यति यजमान इति यदि गार्हपत्यं प्रथममागच्छेत् देवलोकं यास्यतीति विद्यात् अथ दक्षिणाग्निं प्रथममागच्छेत् पितृलोकं यास्यतीति विद्यात् यदुक्तं अनन्तरमेवैनं स्वर्गं लोकं गमयतीति तदेषु स्थानेषु स्वर्गसंज्ञा यत् स्थानमागच्छति तदस्यानन्तं भवति ॥ ३४ ॥

**क्लृप्तेषु यज्ञपात्रेषु त्रिश्छन्दोगः परिगायेत् नाके सुपर्णमिति† ॥ ३५ ॥**

यदा यज्ञपात्राणि क्लृप्तानि भवन्ति तस्मिन् यजमाने ततश्छन्दोगस्त्रिः परिगायेत् नाके सुपर्णमित्येतत्साम अथ छन्दोगग्रहणं

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

किमर्थमिति यस्य परिसामगानं प्राप्तं स गास्यत्येव उच्यते वक्ष्यत्ययं एषैवावृत्सर्वाहिताग्नीनामिति तदस्मिन्नपि त्रिश्छन्दोगः परिगायेदिति ॥ ३५ ॥

धूम उदिते त्वेषस्ते धूम ऋण्वतीति* ॥ ३६ ॥

यदा धूम उद्गच्छेत् तदा तस्मिन्नुदिते त्वेषस्ते धूम ऋण्वतीति एतत्साम गायेत् त्रिरिति प्रकृतम् । ३६ ॥

प्रज्वलितेऽग्ने मृड़महाम् असीत्येतयोरन्यतरेण* ॥३७॥

प्रज्वलितेऽग्नौ अग्ने मृड़महाम् असीत्येतयोः साम्नोः अन्यतरेण परिगायेत् अन्यतरेणेति विकल्पः ॥ ३७ ॥

एषैवावृत् सर्वाहिताग्नीनाम् † ॥ ३८ ॥

येयमावृदुक्ता सर्वस्वारमित्यधिकृत्य एषैव सर्वाहिताग्नीनां भवत्यसर्वस्वारेऽपि ॥ ३८ ॥

जीवेच्चेत् यजेतोदवसानोयया † ॥ ३९ ॥

एतत् तावत्कृत्स्नं सार्वस्वारिकमुक्तं कर्म यावत्परिमाणमिति अथ पुनर्जीविन्नेव म्रियेत यजमानः तत उदवसानीयया यजेत उदवसानीयान्तं कृत्स्नं कर्म समापयेयुरिति एतदुक्तं भवति मृते तु परिगानान्तमेव कर्म नोदवसानीयान्तम् ॥ ३९ ॥

अभोजनेन तत ऊर्द्धं मुमूर्षेत्* ॥ ४० ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

ततस्तस्मात्कर्मण ऊर्द्धम् अभोजनेन मुमूर्षेत् मर्त्तुमिच्छेत् यजमानः तावन्न भुञ्जीत यावन्मृत इति ॥ ४० ॥

**भुञ्जीत जिजीविषेदेवेति धानञ्जप्यः* ॥ ४१ ॥**

धानञ्जप्य आचार्य्य आह भुञ्जीत जिजीविषेदेवेति जीवितुमिच्छेत् ॥ ४१ ॥

**तस्य कृतान्नन्दक्षिणा* ॥ ४२ ॥**

तस्य सर्वस्वारस्य कृतान्नं सक्तूतण्डुलादि दक्षिणा तस्य ग्रहणं किमर्थमिति उच्यते जीवितस्य मृतस्य चेति ॥ ४२ ॥

**फाल्गुन्यां पौर्णमास्याञ्चातुर्मास्यान्यारभेत † ॥ ४३ ॥**

फल्गुनीभ्यां युक्ता फाल्गुनी तस्यां फाल्गुन्यां पौर्णमास्यां चातुर्मास्यान्यारभेत उक्तं त्रिवृदग्निष्टोमो वैश्वदेवस्य लोक इति विधानम् ॥ ४३ ॥

**उक्तं कालान्तरं ब्राह्मणेन ‡ ॥ ४४ ॥**

कालान्तरमुक्तं ब्राह्मणेन ततश्चतुर्षु मासेषु ॥ ४४ ॥

**यजनीयेऽहनि वैश्वदेवशुनासीर्ये स्यातामुत्तरञ्च वारुणप्रघासिकम्* ॥ ४५ ॥**

फाल्गुन्यां पौर्णमास्यां दीक्षितस्य यदन्तरस्मिन् पूर्वपक्षे यज-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये एतन्नास्ति ।

‡ द्राह्यायणीये विशेषोऽस्ति ।

नीयमहः तत्र वैश्वदेवं स्यात् यजनीयमहः प्रतिपत् एवमेव शुनासीर्य्यं यथाकालम् उत्तरञ्च वारुणप्रघासिकमहः यजनीय एवाहनि स्यात् ॥ ४५ ॥

पर्वण्युत्तमꣳ साकमेधानाम्* ॥ ४६ ॥

उत्तममहः पर्वणि स्यात्साकमेधानां सप्तदशस्य एवं पूर्वपक्षे यज्ञपुच्छं सम्पद्यते ॥ ४६ ॥

द्वादशꣳशतꣳशुनासीर्यस्य दक्षिणाः* ॥ ४७ ॥

तत्किमिदमारभ्यते यदा सिद्धमेव ब्राह्मणे द्वादशं शतं दक्षिणा इति उच्यते इतरार्थ आरम्भः ॥ ४७ ॥

पञ्चाशदितरेषामह्नामेकैकस्यैकैकस्य* ॥ ४८ ॥

इतरेषां वैश्वदेवादीनां एकैकस्याह्नः पञ्चाशत् पञ्चादशद्दक्षिणाः वरुणप्रघासे शतं दक्षिणा इति पठितं साकमेधे पञ्चाशच्छतमिति ताः प्रत्यहं समत्वविभागेन कल्पयति ॥ ४८ ॥

इति अष्टमस्य अष्टमी कण्डिका ।

---

अथ नवमी कण्डिका ।

उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुः स्वस्थानासु* ॥१॥

उपहव्यस्य ब्राह्मणं सप्तदशोऽग्निष्टोमो देवाश्च वा असुराश्च प्रजा-

---

* द्राह्यायणोऽप्येवम् ।

पतेर्द्वयाः पुत्रा आसंस्तेऽसुरा भूयांसो बलीयांस आसन् कनीयांसो देवाः ते देवाः प्रजापतिमुपाधावन् स एतमुपहव्यमपश्यन् स ऐक्षत यन्निरुक्तमाहरिष्याम्यसुरा मे यज्ञं हनिष्यन्तीति सोऽनिरुक्तमाहरे-दिति तत्रायं संशयः किमानिरुक्त्यमिति तद्विवक्षुराचार्य्यः इदं सूत्र-मारभते उपहव्य इति उपहव्ये क्रतौ देवतानामधेयानि परोक्षं ब्रूयुः स्वस्थानासु देवतासु परोक्षता परोक्षं देवताशब्दमुद्धृत्यान्येन शब्दा-न्तरेणोच्चारणं देवतायाः अनिर्वचनम् एतदानिरुक्त्यम् एवं स्वस्था-नासु कुर्य्यात् ॥ १ ॥

प्रत्यक्षमस्वस्थानासु* ॥ २ ॥

अस्वस्थानासु प्रत्यक्षमेव शब्दं प्रयुञ्जीत देवतास्थानानि न्याय्या-न्युक्तानि किमुदाहरणं सोमातिरेकादिति ॥ २ ॥

देवशब्दं सर्वत्र वर्जयेयुः* ॥ ३ ॥

उक्तं स्वस्थानास्विति देवशब्दं सर्वत्र वर्जयेयुः ॥ ३ ॥

होता देवो महीमित्रस्येत्येते होता यज्ञे महीयज्ञस्येति ब्रूयुरिन्दुरिति सोमम् † ॥ ४ ॥

होता देवो महीमित्रस्येत्येतौ शब्दौ एवं ब्रूयात् होता यज्ञे महीयज्ञस्येति सोमशब्दं इन्दुरिति ब्रूयात् ननु मशकेन ऋक्साम-द्वयं पठितमेवोपहव्यस्यानिरुक्तं मशकस्यास्य प्रमाणं तत्किमिदं पुनरा-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनेतेन सूत्रद्वयं कृतम् ।

रभ्यते देवतानामधेयानि परोक्षं ब्रूयुरिति उच्यते नैतदानिरुक्त्यं केवलं स्तोत्राणि भजते प्रतिस्तोत्रेषु चानिरुक्त्यं भवति महदादिषु च यजुःषु तद्यदीदं नारभ्येत ततोमहदादीनां यजुषां कथमानिरुक्त्यं गम्यते एवमेव स्तोत्रेष्वपि होता देवो मह्योमित्रस्येत्येतौ शब्दौ प्रत्यक्षौ पठितौ तयोस्तावच्छब्दान्तरं विधेयं तथा यज्ञशब्दस्य विभक्त्यन्तरं विधेयं तथा बृहत्यां सोमदेवशब्दयोः परोक्षं कल्पयितव्यं तत्र कृप्तिषु च एतत्परोक्षं कल्पयितव्यं स्तोमवशादपि अधिकद्रव्ये स्तोमकृते च द्रव्यान्तरं सोऽयमाचार्य्य एतदर्थं सूत्रमारभते ॥ ४ ॥

आदिष्टा दक्षिणा ब्राह्मणेन* ॥ ५ ॥

ब्राह्मणेनादिष्टा दक्षिणा यावत् यस्य चेति अश्वः श्यावो दक्षिणा स ह्यनिरुक्तः स ब्रह्मणे देय इति ॥ ५ ॥

इतरेभ्यश्च किञ्चिद्दद्यात्* ॥ ६ ॥

इतरेभ्यश्च ऋत्विग्भ्यः किञ्चिद्दद्यात् चशब्दः समुच्चयार्थः ब्रह्मणे चाश्वं दद्यादितरेभ्यश्च किञ्चिद्दद्यादिति किञ्चिच्छब्दोक्तम् ॥ ६ ॥

ऋतपेये तस्य द्वादशदीक्षोपसद इति तिस्र उपसदः* ॥७॥

ऋतपेये पठति तस्य द्वादशदीक्षोपसद इति तत्र असमस्तुतेः दीक्षोपसदां विभागसंशये विशिनष्टि तिस्र उपसद इति नव दीक्षा इति सामर्थ्यात्सिद्धम् ॥ ७ ॥

घृतव्रतो भवतीति यथोत्साहं दीक्षासु प्राश्नीयात्* ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम्।

घृतव्रतो भवतीति ब्राह्मणम् एतद्वीचास्य यावदुत्साहन्तावत् घृतस्य प्राश्नीयात् यावतास्य शरीरं नोपरुध्यते ॥ ८ ॥

**उत्तरेणोत्तरेण काण्डेनोपैतीति पृथगुपसत्स्वङ्गुलिपर्वभिः प्रतिलोमैः प्राश्नीयादिति धानञ्जप्यः* ॥ ९ ॥**

उत्तरेणोत्तरेण काण्डेनोपैतीति ब्राह्मणं यत्रायं संशयः किं काण्डमिति सोऽयमाचार्य्यस्तद्ब्रवीति पृथगुपसत्स्वङ्गुलिपर्वभिः प्रतिलोमैः प्राश्नीयादिति पृथङ्नानेत्यर्थः उपसत्स्वङ्गुलिपर्वभिः प्रतिलोमैः उपरिष्टादारभ्य घृतं प्राश्नीयादिति एवं धानञ्जप्य आचार्य्य आह अङ्गुलिपर्वसु काण्डसंज्ञा ॥ ९ ॥

**एकाङ्गुल्या पृथक् पर्वभिः सर्वान्देशाꣳश्चमसा मिताः स्युस्तैरनुलोमैरिति शौचिवृक्षिः* ॥ १० ॥**

शौचिवृक्षिराचार्य्य आह एकाङ्गुल्या पृथक् पर्वभिः पृथङ्नानेत्यर्थः सर्वान्देशान् प्रति चमसा मिताः स्युः एकैकेनाङ्गुलिपर्वणा एकैकश्चमसो मितः स्यात् तैश्चमसैरनुलोमैः प्राश्नीयादिति ॥ १० ॥

**प्रतिलोमैरिति शाण्डिल्यः* ॥ ११ ॥**

शाण्डिल्य आचार्य्य आह तैः प्रतिलोमैः प्राश्नीयादिति ॥ ११ ॥

**ऋतमुक्त्वा प्रसर्पन्तीति प्रसर्प्स्यतः सदो भक्षयिष्यन्तश्च देव सत्यानि ब्रूयुरियं भूमिरसावादित्य इति* ॥ १२ ॥**

---

* द्राह्यायणोऽप्येवम् ।

ब्राह्मणम् चृतमुक्ता प्रसर्पन्तीति तदुच्यते सदः प्रतिगमनं विवक्षन्तश्चमसांश्च भक्षयिष्यन्तः प्रसर्पणकाले भक्षणकाले चेत्येतदुक्तं भवति तद्देव सत्यानि तदेवानधिकृत्य साधारणानि ब्रूयुः इयं भूमिः असावादित्यः अमूनि नक्षत्राणि असौ चन्द्रमाः उदेति प्रातरादित्यः एतान्यव्यभिचरणानि ॥ १२ ॥

या देवताश्चमसैरिज्येरंस्तत् पीतवद्भक्षमन्त्रानूहेयुरिति शाण्डिल्यः* ॥ १३ ॥

या देवताश्चमसैरिज्येरन् ताभिर्देवताभिस्ते चमसाः पीता भवन्ति तस्मात्पीतवदेव भक्षमन्त्रानूहेयुरिति चृतपेयत्वात् एवं शाण्डिल्य आचार्यो मन्यते ॥ १३ ॥

अविकारेण तु नाराशंसानाम्* ॥ १४ ॥

नाराशंसानां चमसानाम् अविकारेण भक्षमन्त्रः स्यात् ॥ १४ ॥

सोमचमसो दक्षिणेत्यभिषुतस्य स्यात्तस्मिन्हि चमसं प्रमाणम् † ॥ १५ ॥

ब्राह्मणं सोमचमसो दक्षिणेति चमसः अभिषुतस्य सोमस्य पूर्णः स्यात् तस्मिन् हि अभिषुते सोमे चमसं प्रमाणं यद्यनभिषुतस्य पूर्णः स्यात् तत्र चमससंज्ञा स्यात् ॥ १५ ॥

तं मध्यन्दिने सवनमुखीयैः सहोन्नयेयुर्जुहुयुश्चास्य हुतो देय इति हि ब्राह्मणम् † ॥ १६ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

तं चमसं मध्यन्दिने सवननुखोयैश्चमसैः सह उन्नयेयुः जुहुयु-श्चास्य उन्नीतस्य चमसस्य ब्राह्मणञ्च हुतो देय इति ॥ १६ ॥

तं दक्षिणावेलायां पूर्वेणाहवनीयमनिर्हरन्तो वेदेर्दक्षि-णेन सदोहविर्द्धानानि हारयित्वा पूर्वया द्वारा सदः प्रवेश-येयुः* ॥ १७ ॥

तं चमसं दक्षिणाकाले आहवनीयस्य पूर्वेण प्रदेशेन अनिर्गम-यन्तो वेदेः यूपाहवनीयान्तरेण हृत्वा सदो हविर्द्धानयोश्च दक्षिणेन हारयित्वा पूर्वया द्वारा सदः प्रवेशयेयुः ॥ १७ ॥

सꣳस्थितेऽहन्यृत्विग्भ्यः किञ्चिद्दद्यात्* ॥ १८ ॥

संस्थिते समाप्तेऽहनि ऋत्विग्भ्यः किञ्चिद्दद्यादिति ॥ १८ ॥

इति अष्टमस्य नवमी कण्डिका ।

---

अथ दशमी कण्डिका ।

आदिष्टा दक्षिणा ब्राह्मणेन दूणाशस्य* ॥ १ ॥

ऋतपेय उक्तः तदनन्तरं पठितं सप्तदशोऽग्निष्टोमस्तस्य दीक्ष-णीयायामिष्टौ द्वादशमानं हिरण्यं ददातीति सोमसंस्था दक्षिणा फलानि श्रूयन्ते कर्मनामधेयञ्च श्रूयते सोऽयमाचार्यः सर्वज्ञः श्रुत्यन्तरं दृष्ट्वा नामधेयं कल्पयतीति आदिष्टा दक्षिणा ब्राह्मणेन दूणाशस्येति

---

* द्राह्यायणोऽप्येवम् ।

कथमादिष्टा तस्य दीक्षणीयायामिष्टौ द्वादशमानं हिरण्यं ददातीत्यत आरभ्य यावदष्टाविंशतिशतमानानि वशायां वपायामिति ॥ १ ॥

एतावन्त्यष्टाविꣳशतिशतमानानीति यत्र स्याच्चतुर्विꣳशतिमानानान्तावन्त्यष्टाविꣳशतिशतानि दद्यात्* ॥ २ ॥

यत्र स्यादेतावन्त्यष्टाविंशतिशतमानानीति यथा द्वे अष्टाविंशतिशतमाने अग्नीषोमीयस्य पशोर्वपायाञ्चत्वार्यष्टाविंशतिशतमानानि प्रातः पशोर्वपायामष्टाविंशतिशतमानानि प्रातःसवनेषु नाराशंसेष्वित्येतदादि तत्र चतुर्विंशतिशतमानानान्तावन्ति तावत्परिमाणानि अष्टाविंशतिशतानि दद्यात् ॥ २ ॥

रुक्मो होतुरिति निष्कोनामालङ्कारस्तं दद्यात्† ॥ ३ ॥

उक्तं रुक्मो होतुः स्रगुद्गातुरिति रुक्मो होतुरित्युक्ते निष्कोनामालङ्कारः सौवर्णस्तं दद्यात् ॥ ३ ॥

स्रगुद्गातुरिति हिरण्मयी स्यात्† ॥ ४ ॥

स्रगुद्गातुरिति ब्राह्मणं सा स्रक् हिरण्मयी स्यात् सौवर्णी इत्यर्थः ॥ ४ ॥

वैश्यस्तोमे सद्यो दुग्धेन पयसा सोमं मिश्रङ्कुर्युः प्रातःसवने शृतेन मध्यन्दिने दध्ना तृतीयसवने‡ ॥ ५ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

‡ द्राह्यायणोऽप्येवम्।

अस्यानन्तरतो विश्वस्तोमः तत्र पठति सप्तदशोऽग्निष्टोमस्तस्य प्रातःसवनीयान् स्तोमान् प्रति दुहा श्रीणाति शृतेन मध्यन्दिने दध्ना तृतीयसवने इति तत्र प्रति दुहां प्रति संशयः तदुच्यते विश्वस्तोमे सद्यो दुग्धेन पयसा क्षीरेण सोमं मिश्रं कुर्युः प्रातःसवने सद्यो दुग्धे पयसि प्रतिधुक्संज्ञा शृतेन पयसा सोमं मिश्रं कुर्युर्मध्यन्दिने तृतीयसवने दध्ना सोमं मिश्रं कुर्युः ॥ ५ ॥

**तस्य द्वादशꣳशतं दक्षिणाः सहस्रं वा यथारूपाः पञ्च-शारदीये पशव आलभ्यन्ते* ॥ ६ ॥**

तस्य विश्वस्तोमस्य द्वादशं शतं दक्षिणाः सहस्रं वा वाशब्दो विकल्पार्थः अयन्तु विशेषो यथारूपाः पञ्चशारदीये पशव आलभ्यन्ते तद्रूपा दक्षिणाः स्युः ॥ ६ ॥

**तीव्रसुति सोमातिपवितं याजयेदिति* ॥ ७ ॥**

तीव्रसुति यज्ञे अनेके अधिकृताः श्रूयन्ते सोमातिपवितं याजयेदित्यत आरभ्य तत्र अन्ये शब्दाः प्रतीतपदार्थकाः सोमातिपवित इति उच्यते ॥ ७ ॥

**य इष्ट्वा पापीयान् स्यात् स सोमातिपवित इति शाण्डिल्यः* ॥ ८ ॥**

शाण्डिल्य आचार्य्य आह इष्ट्वा यः पापीयान् भवेत् स सोमातिपवित इति सर्वथा इष्ट्वा श्रेयसा भवितव्यं यस्तु पापीयान् भवति

---

* द्राह्यायणोऽप्येवम् ।

स सोमातिपवितः अतिपवनं नाम असम्यक् परिणामः तस्य सम्यक् सोमः परिणतः ॥ ८ ॥

यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानञ्जप्यः* ॥९॥

धानञ्जप्य आचार्य्य आह यः सोमं पीत्वा छर्दयेत विरिच्येत वा स सोमातिपवित इति वाजसनेय्यपरा श्रुतिः ॥ ९ ॥

तत्र भक्षावृतास्चमसानवजिघ्रेयुरच्छावाकस्तोत्रेण स्तुत्वा भक्षयेयुरभक्षयन्त ऋत्विजश्चमसानवजिघ्रन्ति तानच्छावाकस्य स्तोत्रे भक्षयन्तीति ह्याह† ॥ १० ॥

तत्र तस्मिन्तीव्रसुति ये भक्षा आम्नाताः तया वृताः तेनैव विधिनेत्यर्थः चमसानवजिघ्रेयुः अवजिघ्रणमात्रं कुर्युः भक्षयेयुः यस्मादाह अभक्षयन्त ऋत्विजश्चमसानवजिघ्रन्तीति तांश्चाच्छावाकस्य स्तोत्रे स्तुत्वा भक्षयेयुः यस्मादेवं ब्राह्मणमाह तानच्छावाकस्य स्तोत्रे भक्षयन्तीति ॥ १० ॥

एवꣳसर्वेषु सवनेषु† ॥ ११ ॥

अनेन प्रकारेण सर्वेषु सवनेषु चमसानां भक्षणविधिः ॥ ११ ॥

अभ्यभिसोमानुन्नयन्तीति यानवजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुः* ॥ १२ ॥

ब्राह्मणम् अभ्यभिसोमानुन्नयन्तीति तत् यान् चमसान् अवजिघ्रेयुः तेष्वेव पुनः पुनरुन्नयनं कुर्युः अभ्यभिशब्दः पौनःपुन्ये ॥१२॥

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणोऽप्येवम् किन्तु तत्र छेदविषये विशेषोऽस्ति ।

शतमाशिरं दुहन्तीति धेनुशतं दोहयित्वा त्रेधं विभज्य सोमं मिश्रं कुर्युर्यथा वैश्यस्तोमे* ॥ १३ ॥

ब्राह्मणं शतमाशिरं दुहन्तीति धेनूनां शतन्दोहयित्वा त्रेधन्तत्क्षीरं विभज्य तेन सोमं मिश्रं कुर्युः येन प्रकारेण वैश्यस्तोमे सद्यो दुग्धेन प्रातःसवने शृतेन मध्यन्दिने दध्ना तृतीयसवने ॥ १३ ॥

तस्य तदेव धेनुशतं दक्षिणास्ताउ एव दक्षिणा इति ह्याह* ॥ १४ ॥

तस्य तीव्रसुतः यदेतच्छतमाशिरं दुहन्तीति तदेव धेनुशतं दक्षिणाः एवं हि ब्राह्मणमाह ता उ एव दक्षिणा इति ॥ १४ ॥

इति अष्टमस्य दशमी कण्डिका ।

---

अथ एकादशी कण्डिका ।

यं ब्राह्मणा राजानश्च पुरस्कुर्वीरन् स वाजपेयेन यजेत* ॥ १ ॥

तीव्रसुदुक्तः साम्प्रतं वाजपेयेन वाजपेय आम्नातः स उच्यते यं ब्राह्मणाः यमित्युद्देशः राजानश्च पुरस्कुर्वीरन् स पुरस्कारो नाम पूजा महःस्थापनं पुरस्कृतः सन् वाजपेयेन यजेत् यथोद्देशेन निर्द्देशः किमर्थं यं स इति ब्राह्मणं राजभिः पुरस्कृतो वाजपेयेन यजेते-

---

* द्राह्यायणोऽप्येवम् ।

त्येवं वक्तव्यमासीत् उच्यते तैत्तिरीयके श्रुतिः ब्राह्मणक्षत्रियोरेव वाजपेयो न वैश्यस्येति यथा एतस्मिन् कल्पकार आह वाजपेयः शरद्योऽवैश्यस्येति सोऽयमाचार्य्य एतं विधिं उद्देशनिर्देशाभ्यामाह ॥१॥

तस्य पौर्णमास्यां दीक्षित्वा त्रयोदश दीक्षाः स्युः* ॥ २ ॥

तस्य वाजपेयस्य पौर्णमास्यां दीक्षिला त्रयोदश दीक्षा भवेयुः ॥२॥

सप्तदश वा* ॥ ३ ॥

सप्तदश वा दीक्षा भवेयुः ॥ ३ ॥

अमावास्यायां दीक्षित्वा मासमिति गौतमः* ॥ ४ ॥

गौतम आचार्य्य आह अमावास्यायां दीक्षिला मासन्दीक्षाः स्युरिति ॥ ४ ॥

संवत्सरमिति धानञ्जप्यः षडुपसत्कश्च साग्निचित्यः स्यादिति † ॥ ५ ॥

धानञ्जप्य आचार्य्य आह अमावास्यायामेतद्दीक्षिला संवत्सरं दीक्षाः स्युः षडुपसत्कश्च स्यात् साग्निचित्यश्चेति षडुपसत्क इति नियमः ॥ ५ ॥

पार्ष्टिकान् स्तोमान् ज्योतिष्टोमतन्त्रे कल्पयित्वा तैर्ज्योतिष्टोमादिभिस्तद्धवेतैः संवत्सरं पूर्वपक्षेषु यजेत त्रयोदशे पूर्व-

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

पक्षे वाजपेयेनेष्ट्वैतैरेवावृत्तैरपरꣳसंवत्सरं ते यथोत्साहदक्षिणाः स्युः* ॥ ६ ॥

इदं पुरस्तात् तथोपरिष्टाच्चास्य वाजपेयस्य विधानमुच्यते पार्ष्टिकान् स्तोमान् ज्योतिष्टोमतन्त्रे कल्पयित्वा त्रिवृदादींस्त्रयस्त्रिंशान्तान् तन्त्रलक्षणमुक्तं तैर्ज्योतिष्टोमादिभिर्ज्योतिष्टोमेनैव व्यवेतैः संवत्सरं पूर्वपक्षेषु यजेत प्रथमे पूर्वपक्षे ज्योतिष्टोमं कृत्वा द्वितीये पूर्वपक्षे ज्योतिष्टोमतन्त्रे त्रिवृतं कल्पयित्वा तेन यजेत एवमेतेषां पार्ष्टिकानां स्तोमानां ज्योतिष्टोमेन व्यवहितानां तन्त्रपूर्वेण क्रिया ततस्त्रयोदशे पूर्वपक्षे वाजपेयेन यजेत तत इष्ट्वा वाजपेयेन एतैरेवावृत्तैर्ये पूर्वस्मिन् संवत्सरे कृतास्तैरपरं संवत्सरं यजेत तैस्त्रयस्त्रिंशादिभिर्ज्योतिष्टोमव्यवहितैः प्रातिलोम्येन यथोत्साहदक्षिणाः स्युः ते सर्वे चतुर्विंशति यथोत्साहशब्दः शक्त्यपेक्षः ॥ ६ ॥

राजसूयविधेन यजेतेति लामकायनः † ॥ ७ ॥

लामकायन आचार्य्य आह राजसूयविधेन यजेतेति यद्विधो राजसूयस्तद्विधेनेति राजसूयसदृशेनेति ॥ ७ ॥

त्रिवृत्पञ्चदशोऽभ्यारोहणीयस्य स्थाने स्यात् † ॥ ८ ॥

अभ्यारोहणीयस्य स्थाने त्रिवृत्पञ्चदशस्तोमो ज्योतिः स्यात् ॥ ८ ॥

वाजपेयोऽभिषेचनीयस्य † ॥ ९ ॥

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

अभिषेचनीयस्य स्थाने वाजपेयः स्यात् ॥ ९ ॥

पञ्चदशत्रिवृत् केशवपनीयस्य* ॥ १० ॥

केशवपनीयस्य स्थाने पञ्चदशत्रिवृत् स्तोमः ज्योतिः स्यात् ॥१०॥

व्युष्टिक्षत्रधृत्योर्ज्योतिष्टोमौ* ॥ ११ ॥

व्युष्टिद्विरात्रस्य स्थाने क्षत्रस्य धृतेश्च ज्योतिष्टोमौ स्यातां पृथक् ॥ ११ ॥

बृहस्पतिसवेनैव पुरस्तादुपरिष्टाच्च परियजेतेति धानञ्जप्य* ॥ १२ ॥

धानञ्जप्य आचार्य्य आह वाजपेयस्य पुरस्तादुपरिष्टाच्च बृहस्पतिसवेनैव यजेत एवशब्दोऽवधारणार्थः बृहस्पतिसवेनैव नान्येनेति ॥१२॥

मासमात्रे पुरस्तात् ज्योतिष्टोमेन तथोपरिष्टादिति शाण्डिल्यायनः* ॥ १३ ॥

शाण्डिल्यायन चाचार्य्य आह मासमात्रे पुरस्तात् ज्योतिष्टोमेन यजेत तथोपरिष्टाज्ज्योतिष्टोमेनैवेति ॥ १३ ॥

प्रत्यवरोहणीयेनैवान्ततो यजेत नेतरेषां केनचिदिति गौतमः* ॥ १४ ॥

गौतम आचार्य्य आह प्रत्यवरोहणीयेनैवान्ततो यजेत इतरेषां न केनचिदिति इतरे कल्पास्त्वेकेषामेव गौतमस्यानिष्टाः ॥१४॥

सदस्य सप्तदशान् पृथगृत्विजो वृणीत* ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम् ।

एकैकस्य पृथक्त्वेन वरणं कुर्य्यात् अथलिङ्गग्रहणं किमर्थमिति सदस्यसप्तदशान् वृणीतेति वक्तव्ये न चान्येषां वरणप्रवृत्तिः उच्यते अस्योपरिष्टात् प्रयोजनं वक्ष्यामः ॥ १५ ॥

**तस्य दक्षिणा दासीनिष्करथहस्तियानगवां पृष्ठ्यानाञ्चा-श्वानाᳪसप्तदशैकैकस्य जातस्य* ॥ १६ ॥**

तस्य वाजपेयस्य दक्षिणाः दास्यादीनां दक्षिणानां सप्तदश सप्तदश एकैकस्यैकैकस्य जातस्य स्युः दास्यः कर्मकार्य्यः निष्क उक्तलक्षणः सौवर्णा अलङ्काराः रथाः प्रज्ञाताः तथा हस्तिनः यानानि शकटा-दीनि गावः प्रसिद्धाः पृष्ठेन वहन्तीति पृष्ठ्याः अश्वाः एतेषां यथो-द्दिष्टानां जातानाम् एकैकस्य सप्तदश सप्तदश स्युः तस्य ग्रहणं क्रियते तस्य सर्वेषु कल्पेष्विति ॥ १६ ॥

**सहस्राणि गवाᳪशतानि वा* ॥ १७ ॥**

उक्तं सप्तदशैकैकस्य जातस्येति तद्गवामपि प्राप्तं तथैव ततो विशिनष्टि सहस्राणि गवां सप्तदश स्युः शतानि वेति ॥ १७ ॥

**सप्तदश वैव गावस्तं कुरुवाजपेय इत्याचक्षते* ॥ १८ ॥**

सप्तदश वैव गावः स्युः अन्याः सर्वाणि वर्त्तन्ते तदेवं कुरुवाजपेय इत्याचक्षते एके तावत् ब्रुवते कर्त्ता वाजपेयः तं कुरुवाजपेय इति अथवा तं कुरुवाजपेय इत्याचक्षते अल्पको वाजपेयः यथा अल्पिका नदिका कुरुनदिका इत्युच्यते सुपूरा वै कुनदिकेति ॥ १८ ॥

---

* द्राह्यायणेऽप्येवम् ।

ताः समम्त्विग्भ्यो विभजेत्* ॥ १९ ॥

ता दक्षिणाः समम्त्विग्भ्यो विभजेत् एतत् ज्ञापयति अन्यासान्वनादेशात् तत् सार्वत्रिको विभाग इति ता इति निर्देशः क्रियते सप्तदशगावोऽधिकृताः शतं सहस्रं तस्मादाहृता इति तास्ताः अथर्त्विक् ग्रहणं किमर्थम् उच्यते योऽस्यार्त्विजां मध्ये वृतः पूर्वसदस्यः तस्याप्यत्र विभागः स्यादिति ॥ १९ ॥

श्रेष्ठतो वा मध्यतः कारिभ्यः* ॥ २० ॥

अथवा तेषु दक्षिणाजातेषु यद्यच्छ्रेष्ठं तन्मध्यतः कारिभ्यो दद्यात् इतरेभ्यः समं विभजेत् ॥ २० ॥

येन रथेनाजिन्धावेत्तमुद्गात्रे दद्यादासन्दीञ्च सास्तरणां यामभिषिक्त आरोहेत्* ॥ २१ ॥

येन रथेनाजिन्धावेत्तं रथमुद्गात्रे दद्यात् आसन्दीञ्च सास्तरणां यामासन्दीमभिषिक्तः सन्नारोहेत् आसन्दी उक्तलक्षणा ॥ २१ ॥

बस्तचर्म सरुक्मं होत्रे यस्मिन्नासीनोऽभिषिच्येत* ॥२२॥

बस्तस्य चर्म बस्तचर्म बस्तः छागः तच्चर्म सरुक्मं ससुवर्णं होत्रे दद्यात् यस्मिन् चर्मण्यासीनोऽभिषिच्येत् ॥ २२ ॥

वसनमयी रसना अध्वर्यवे* ॥ २३ ॥

वासोभिर्निर्वृत्ता रसनाः ता अध्वर्यवे दद्यात् ॥ २३ ॥

हिरण्यस्थालं मधुनः पूर्णं ब्रह्मणे ॥* २४ ॥

---

* द्राह्यायणेऽप्येवम् ।

सौवर्णं स्थालं पात्रं मधुनः पूर्णं मधु इति द्रव्यनिर्देशः तद्ब्रह्मणे दद्यात् ॥ २४ ॥

कꣳसस्थाले वा हिरण्यतुषान्मधुमिश्रान्* ॥ २५ ॥

अथवा कंसस्थाले हिरण्यतुषाः हिरण्यशकलाः तान्मधुमिश्रान् दद्यात् ॥ २५ ॥

इति अष्टमस्य एकादशी कण्डिका ।

---

अथ द्वादशी कण्डिका ।

तस्य व्रतानि क्षत्रवृत्तिं वर्त्तयेत् † ॥ १ ॥

तस्य वाजपेययाजिनः व्रतान्यादिश्यन्ते व्रतमिति कर्मनाम क्षत्रवृत्तिं वर्त्तयेत् क्षत्रस्य या वृत्तिस्तां वृत्तिं वर्त्तयेत् अधीयीत नाध्यापयेत् दद्यात् न प्रतिगृह्णीयात् एतां क्षत्रवृत्तिं वर्त्तयेत् ॥ १ ॥

प्रत्यवरोहणाभिवादने जघन्यव्रज्याꣳसमानशय्यतामिति वर्जयेदवाजपेययाजिभिः* ॥ २ ॥

प्रत्यवरोहणञ्चाभिवादनञ्च प्रत्यवरोहणाभिवादने प्रत्यवरोहणं प्रत्युत्थानं यद्यन्यव्रज्यां किम् आदेशकारित्वेन गमनं समानशय्यतामेकस्मिन्नेव शयने शयनम् एतान्यवाजपेययाजिना सह न कुर्य्यात् ॥ २ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

यथावयसं वाजपेययाजिभिः* ॥ ३ ॥

ये वाजपेययाजिनः तैर्यथावयसम् एतानि कुर्य्यात् ये ज्येष्ठा-स्तेषां प्रत्यवरोहणादि कुर्य्यादित्यर्थः ॥ ३ ॥

प्रत्यवरोहणीयेनेष्ट्वा नैतानि व्रतानि चरेदिति लामकायनः † ॥ ४ ॥

कियन्तं पुनः कालमेतानि व्रतानि भवन्तीत्यत्र लामकायन आचार्य्य आह प्रत्यवरोहणीयेनेष्ट्वा ततो नैतानि व्रतानि चरेदिति प्रत्यवरोहणीय उक्तः क्लृप्तो ज्योतिष्टोमः प्रत्यवरोहणीय इति ॥ ४ ॥

तस्य विकल्पाः † ॥ ५ ॥

तस्य वाजपेयस्य विकल्पा आरभ्यत इति वाक्यशेषः ॥ ५ ॥

प्राकृतएव वाजापेय एकिप्रभृतीद्युत्तरान् सप्तदशत्रयस्त्रिंशान्तान् स्तोमान् कल्पयेत्समयूरोनोकर्षीत्याचक्षते † ॥६॥

योऽयं प्राकृतो वाजपेयः पथ्यः एतस्मिन्नेव एकिप्रभृतीन् द्युत्तरान् सप्तदशसंख्यातस्त्रयस्त्रिंशान्तान् स्तोमान् कल्पयेत् स वाजपेय एवं स्तोमक्लृप्तः सन् मयूरो नोकर्षीत्येवमुच्यते मयूरः कलापो अथ सप्तदशग्रहणं किमर्थमिति चेत् एकिप्रभृतयो द्युत्तरोभावेन कल्प्यमानाः त्रयस्त्रिंशान्ताः सप्तदशैव सम्पद्यन्ते वक्ष्यत्ययं ब्रह्मसामैव प्रत्येतेनेष्ट्वा स्वर्गं लोकमाक्रमेतेति सोऽयमाचार्य्यो नियमार्थं सप्तदशग्रहणं करोति प्रत्यवरोहणविधाने सप्तदशैव त्रयस्त्रिंशान्तानिति ॥६॥

* द्राह्यायणीये एतन्नास्ति।

† द्राह्यायणेऽप्येवम्।

तस्योपास्मै गायतेति बहिष्पवमानम्* ॥ ७ ॥

तस्यैवं क्लृप्तस्य वाजपेयस्य उपास्मै गायता नर इत्येतद्बहिष्पवमानं स्यात् ॥ ७ ॥

ब्रह्मसामैव प्रत्येतेनेष्ट्वा स्वर्गं लोकमाक्रमेतेति धानञ्जय्यः* ॥ ८ ॥

धानञ्जय्य आचार्य्य आह ब्रह्मसामैव प्रति एतेन इष्ट्वा स्वर्गं लोकमाक्रमेतेति इष्ट्वैव ब्रह्मसाम्ना कामानवाप्नोतीति ॥ ८ ॥

ज्योतिष्टोमोऽतिरात्रोऽषोड़शिकोऽनतिरात्रो वा षोड़शिमान् † ॥ ९ ॥

अपरो विकल्पः ज्योतिष्टोमोऽतिरात्रः अषोड़शिकः स्यात् अनतिरात्रो वा ज्योतिष्टोमः स्यात् षोड़शिमान् ॥ ९ ॥

तस्य बृहत्सप्तदशꣳस्तोत्रꣳस्यात् पञ्चदशस्तोमꣳस्यात्* ॥ १० ॥

प्राकृते हि शिपिविष्टवतीषु बृहत् क्लृप्तं तेन इह स्यादित्याह ॥१०॥

अग्निष्टोमो वा* ॥ ११ ॥

अग्निष्टोमो वा स्यात् ज्योतिः ॥ ११ ॥

तस्याभीवर्त्तो ब्रह्मसामानुष्टुभि यज्ञायज्ञीयमनुकल्पयेद्बृहदग्निष्टोमसाम ‡ ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

तस्याग्निष्टोमसंस्थस्य ज्योतिषः अभीवर्त्तो ब्रह्मसाम स्यात् अनुष्टुभि यज्ञायज्ञीयमनुकल्पयेत् बृहदग्निष्टोमसाम स्यात् यज्ञायज्ञीयस्यर्चु ॥ १२ ॥

**पञ्चविंशं पृष्ठानां ब्रह्मसामाच्छावाकसाम वा चतुर्विंशमितरत्* ॥ १३ ॥**

पञ्चविंशस्तोमं पृष्ठानां ब्रह्मसाम स्यात् अच्छावाकसाम वा इतरत्सर्वं चतुर्विंशम् ॥ १३ ॥

**एतस्य वैव चतुस्त्रिंशानि पृष्ठान्यग्निष्टोमसाम च सप्तदशमितरत् † ॥ १४ ॥**

अथवा एतस्यैव यथाक्लृप्तस्य सामद्रव्यस्य चतुस्त्रिंशानि पृष्ठानि स्युः अग्निष्टोमसाम च चतुस्त्रिंशमेव इतरत्सर्वं सप्तदशं स्यात् ॥ १४ ॥

**नैतेषां कश्चन वाजपेय इति गौतमो यजमानस्त्वेभिर्न वाजपेयदक्षिणा दद्यादिति दद्यादिति ‡ ॥ १५ ॥**

गौतम आचार्य्य आह य एते ज्योतिष्टोमोऽतिरात्रषोड़शिक-इत्यारभ्य विकल्पा उक्ताः नैतेषां कश्चिदपि वा वाजपेय इति नात्र प्रतिषेधो यजमानस्येति एभिर्यजमानो न वाजपेयदक्षिणा दद्यादिति ॥ १५ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।　　‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

इति अष्टमस्य द्वादशी कण्डिका।

**इति अष्टमः प्रपाठकः समाप्तः।**

## नवमः प्रपाठकः ।

### अथ प्रथमा कण्डिका ।

**राजा राजसूयेन यजेत* ॥ १ ॥**

उक्तो वाजपेयः अनन्तरं राजसूयो वक्तव्यः तं विवक्षुरारभते राजा राजसूयेन याज्य इति अयं सूत्रार्थः प्राप्ताभिषेकक्षत्रियो राजसूयेन यजेतेति ॥ १ ॥

**फाल्गुनीपक्षस्य प्रथमायां दीक्षेताभ्यारोहणीयाय ज्योतिष्टोमाय* ॥ २ ॥**

फल्गुनीभ्यां युक्ता फाल्गुनी फाल्गुन्याः पक्षः फाल्गुनीपक्षः तस्य फाल्गुनीपक्षस्य या प्रथमा तिथिस्तस्यां दीक्षेत अभ्यारोहणीयाय ज्योतिष्टोमाय उक्तम् अग्निष्टोमं प्रथममाहरतीत्यादि मन्त्रकेनाप्युक्तं क्लृप्तो ज्योतिष्टोम इति सोऽभ्यारोहणीयाय ज्योतिष्टोमः स्यात् तस्मै तदर्थं दीक्षेत ॥ २ ॥

**तस्यैका दीक्षा द्वादशशतं दक्षिणाः* ॥ ३ ॥**

तस्य अभ्यारोहणीयस्य ज्योतिष्टोमस्यैका दीक्षा स्यात् द्वादशं शतं दक्षिणाः एवं परिभावितं तेषामेका दीक्षाऽनादेशे तिस्रश्चतस्रोऽ-

---

* द्राह्यायणोऽप्येवम् ।

परिमिता वेति सोऽयमाचार्य्यो नियमयति तस्यैका दीक्षेति ननु दक्षिणापरिमाणं न कर्त्तव्यं कुतः तस्यानतिरात्रस्य द्वादशं शतं दक्षिणा इति परिभाषितत्वात् उच्यते तत्र तस्य प्रधानस्योक्तम् अयन्त्वङ्गभूतोऽस्वतन्त्रस्तस्मादत्र वक्तव्यम्॥ ३॥

संवत्सरादूर्द्ध्वमभिषेचनीयेन यजेत तस्मिन्नेव काले* ॥४॥

इष्ट्वाभ्यारोहणीयेन संवत्सरमासित्वा ततोऽभिषेचनीयेन यजेत अभिषेचनीय इति संज्ञा तस्मिन्नेव काले यस्मिन् कालेऽभ्यारोहणीयेनेष्टं फाल्गुनीपक्षस्य प्रथमायामिति ॥ ४ ॥

तस्य तथैव दीक्षा † ॥ ५ ॥

तस्याभिषेचनीयस्य यथैवाभ्यारोहणीयस्य तथैव दीक्षा स्यात् एकेत्यर्थः ॥ ५ ॥

द्वे इति गौतमः † ॥ ६ ॥

गौतम आचार्य्य आह द्वे दीक्षे स्यातामभिषेचनीयस्येति ॥ ६ ॥

तथा सत्यभ्यारोहणीयस्यापि द्वे ‡ ॥ ७ ॥

तथा सति कल्पे अभ्यारोहणीयस्यापि द्वे दीक्षे स्याताम् अभिषेचनीये च परस्य मतम्॥ ७ ॥

---

* द्राह्यायणीये "तस्मिन्नेव काले" इति नास्ति।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

‡ द्राह्यायणेऽप्येवम्।

एकाभ्यारोहणीयस्य तिस्रोऽभिषेचनीयस्येति शाण्डिल्य-स्त्रयोदश्यान्त्वपरपक्षस्य दीक्षेत* ॥ ८ ॥

शाण्डिल्य आचार्य्य आह एकाभ्यारोहणीयस्य दीक्षा स्यात् अभिषेचनीयस्य तिस्रः स्युः अयन्तु विशेषः त्रयोदश्यापमरपक्षस्य दीक्षेत ॥ ८ ॥

तस्य दक्षिणा द्वात्रिंशतं मध्यतः कारिभ्यः सहस्राणि दद्यादेकैकस्मै † ॥ ९ ॥

तस्याभिषेचनीयस्य दक्षिणा उच्यन्ते द्वात्रिंशतं सहस्राणि मध्यतः कारिभ्यः एकैकस्मै दद्यात् मध्यतः कारिणस्तु होत्रध्वर्युब्रह्मोद्गातारः ॥ ९ ॥

षोडश प्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृब्राह्मणाछंसिभ्यः ‡ ॥ १० ॥

षोड़शसहस्राणि प्रस्तोत्रादिभ्यो दद्यात् एकैकस्मा इति वर्त्तते ॥ १० ॥

ता अर्द्धिन्यः ‡ ॥ ११ ॥

ता एता ऋत्विजः अर्द्धिन्य उच्यन्ते ॥ ११ ॥

अष्टौ प्रतिहर्तृपोतृनेष्टाछावाकेभ्यस्तास्तृतीयिन्यः † ॥ १२ ॥

अष्टौ सहस्राणि प्रतिहर्त्रादिभ्यो दद्यात् एकैकस्मा इति प्रकृतं तास्तृतीयिन्य इत्युच्यन्ते ॥ १२ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

चत्वारि सुब्रह्मण्याग्नीध्रोन्नेटग्रावस्तुद्गुस्त्राः पादिन्यः* ॥ १३ ॥

चत्वारि सहस्राणि सुब्रह्मण्यादिभ्यो दद्यात् एकैकस्मा इत्यनुवर्त्तत एव ता एता होत्राः पादिन्य इत्युच्यन्ते ता एताः संज्ञा मध्यतः कारिभ्योऽर्द्धिन्यस्तृतीयिन्यः पादिन्य इति संज्ञा संव्यवहारार्थाः वक्ष्यति चायमष्टाचत्वारिंशं शतं वा मध्यतः कारिभ्यः सहस्राणि दद्यादित्येवमादि तथा गर्गत्रिरात्रादिषु दक्षिणाप्रतिविभागं वक्ष्यति एतद्दर्शयति यत्र यत्र दक्षिणानां संविभागः प्रतिविशिष्टो नोच्यते तत्रायं संविभागन्याय इति मध्यतः कारिभागात् एता उत्पद्यन्ते ॥ १३ ॥

अबलानस्य ज्ञातीन्सवित्तानावहेयुः † ॥ १४ ॥

अस्य राज्ञो यजमानस्य ज्ञातयः प्रतिराजानः तान् अबलान् कृत्वा निर्जित्य सह वित्तेनानयेयुः राजभृत्याः ॥ २४ ॥

ताञ्जिनीयाद्दक्षिणावेलायाम् † ॥ १५ ॥

तानबलानानीतान् राजा जिनीयात् दक्षिणावेलायाम् ॥ १५ ॥

इषूꣳस्तेभ्योऽस्येत्* ॥ १६ ॥

इषूंस्तेभ्यः अस्येत्क्षिपेत् दक्षिणावेलायां यजमानः ॥ १६ ॥

ताꣳस्त एव प्रत्याहरेयुर्विजयस्व राजन्निति* ॥ १७ ॥

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

तानिषून् क्षिप्तान् त एव राजानः प्रत्याहरेयुः विजयस्व राजन्निति ब्रुवन्तः ॥ १७ ॥

तेषां वित्तस्य तृतीयमृत्विग्भ्यो दद्यात्* ॥ १८ ॥

तेषां राज्ञां वित्तस्य तृतीयं भागमृत्विग्भ्यो दद्यात् ॥ १८ ॥

दशपेयेऽनुप्रसृप्तिभ्यस्तृतीयम्* ॥ १९ ॥

दशपेयेऽनुप्रसृप्तिभ्यः तृतीयं भागं विभज्य दद्यात् अनुप्रसर्पका वक्ष्यन्ते शेषं तेभ्य एव प्रत्युत्सृजेत् तस्य वित्तस्य ॥ १९ ॥

शेषन्तेभ्य एव प्रत्युत्सृजेत्* ॥ २० ॥

तस्य वित्तस्य शेषन्तेभ्य एव राजभ्यः प्रत्युत्सृजेत् प्रतिदद्यात् ॥२०

ग्रामानेभ्योऽपि दद्यात्* ॥ २१ ॥

ग्रामांस्तेभ्यो दद्यात् ॥ २१ ॥

राजन्यास्ते स्युस्तत ऊर्द्ध्वमनभिषेक्याः* ॥ २२ ॥

तत ऊर्द्ध्वन्ते राजन्याः स्युः राजसमानत्वं प्राप्नुयुः न अभिषेकार्हाः स्युः ॥ २२ ॥

तेनेष्ट्वा न साक्षादवभृथमभ्यवेयात् कृष्णविषाणं कृष्णाजिनपादं वावदध्यात्* ॥ २३ ॥

तेनाभिषेचनीयेनेष्ट्वा न प्रत्यक्षमवभृथमभ्यवेयात् अवभृथं नाप्सु मज्जेत् कृष्णविषाणं वा कृष्णाजिनस्य पादं वा अप्स्ववदध्यात् मज्जयेत् ॥ २३ ॥

---

* द्राह्यायणोऽप्येवम् ।

वाराहीभ्यामित उपानद्भ्यां व्रजेत्कार्ष्णीभ्यां प्रत्याव्रजेत्* ॥ २४ ॥

इतो देवयजनादवभृथं वाराहीभ्यामुपानद्भ्यां व्रजेत् वराहचर्मणा निर्वृत्ता वाराही कार्ष्णीभ्यां कृष्णसारचर्मणा निर्वृत्ताभ्यामुपानद्भ्यां प्रत्याव्रजेत् ॥ २४ ॥

इति नवमस्य प्रथमा कण्डिका।

---

अथ द्वितीया कण्डिका।

तद्दीक्षितएव दशाहे ततो दशपेयेन यजेत* ॥ १ ॥

उक्तं तेनेष्ट्वा न साक्षादवभृथमभ्यवेयादिति साम्प्रतञ्चास्मिन्नेव दीक्षितोऽभिषेचनीयस्य दशाहान्ते ततो दशपेयेन यजेत दशाहे सप्तदीक्षेष्टयस्तिस्रश्चोपसदः दशपेय इति संज्ञा ॥ १ ॥

तस्य ब्राह्मणं दश दश चमसमभियन्तीति* ॥ २ ॥

तस्य दशपेयस्य ब्राह्मणं दश दश चमसमभियन्तीति यत्, अभियन्तीत्यस्य पदस्य कोऽर्थः अत्राह ॥ २ ॥

सुब्रह्मण्यचतुर्था उद्गातृचमसं भक्षयेयुः षड्वान्ये* ॥ ३ ॥

सुब्रह्मण्यः चतुर्थो येषान्त इमे सुब्रह्मण्यचतुर्थाः ते उद्गातारः सुब्रह्मण्यचतुर्था उद्गातृचमसं भक्षयेयुः षड्वान्ये ब्राह्मणाः यदेतद्ब्रा-

---

* द्राह्यायणोऽप्येवम्।

ह्मणं दश दश चमसमभियन्तीत्यस्यायमर्थः दश दश चमसं भक्षयन्तीति तत्कथमेतद्गम्यते अभियन्तीत्युक्ते भक्षयन्तीति गम्यते उच्यते लिङ्गात् दशपेय इति अथोद्गातृग्रहणं किमर्थमिति चमसं भक्षयन्तीति सिद्धे प्रकृते उद्गातार इति उच्यते अन्यत्रापि यत्र सुब्रह्मण्यः सोमं भक्षयेत् तत्रोद्गातृचमसेनैव ॥ ३ ॥

एवमितरेषामेकैकं यावता दश पूर्येरन्यजमानश्चमसादन्यान्* ॥ ४ ॥

एवमितरेषाञ्चमसानां भक्षयेयुः यावता दशपूर्येरन् तावता ब्राह्मणान् गृहीत्वा एकैकं चमसं भक्षयेयुः यजमानचमसन्तु यजमान एव भक्षतेत् नान्यः ॥ ४ ॥

ते दशमातृर्दशपितृनित्यन्वाख्याय प्रसर्पेयुरादशमात् पुरुषादिति ह्याह* ॥ ५ ॥

ते ब्राह्मणा ये चमसान् भक्षयन्ति दशमातृर्दशपितृनिति अन्वाख्याय प्रसर्पेयुः मातृः पितृनिति द्वितीया कर्मणि आदशमात् पुरुषादन्वाख्याय प्रसर्पन्तीत्येवं ब्राह्मणमाह मातृतश्च दश पितृतश्च दश आचक्षीरन् ॥ ५ ॥

यत्राब्राह्मणीमधिगच्छेयुर्ब्राह्मण्यैवाभ्यासं दशसम्पूरयेयुः* ॥ ६ ॥

यस्या आरभ्य ब्राह्मणत्वं प्रवृत्तन्तामेवाभ्यस्येयुर्यावद्दशमः पूर्ण इति कः पुनरस्य विषयः वर्णान्तरागमनमुत्कर्षाभ्यामिति ॥ ६ ॥

---

* द्राह्यायणेऽप्येवम् ।

अस्मरन्तश्च यतः स्मरेयुः* ॥ ७ ॥

अस्मरन्तश्च नामानि यतः स्मरेयुस्तस्यैवाभ्यासं कुर्युर्नाम्नि ॥ ७ ॥

ऋत्विग्भिः सह धिष्ण्यानुपतिष्ठेरन्* ॥ ८ ॥

ते प्रसर्पका ऋत्विग्भिः सह धिष्ण्योपस्थानं कुर्युः ॥ ८ ॥

स्रगुद्गातुरिति स्रप्स्यतेऽस्मै बहिष्पवमानᳪंहिरण्यस्रजं त्रिपुष्करां प्रतिमुञ्चेत् † ॥ ९ ॥

स्रगुद्गातुरिति ब्राह्मणं स्रप्स्यतेऽस्मै उद्गातुर्बहिष्पवमानं सर्पण-काल इत्यर्थः सौवर्णीं स्रजं मालां त्रिपुष्करां त्रिभिः सौवर्णपद्मैः संयुक्तां प्रतिमुञ्चेत् बध्नीयात् ॥ ९ ॥

आस्ताव उपविष्टाय यजमान औदकीं द्वादशपुष्करां यास्य स्वा स्यात्* ॥ १० ॥

आस्ताव उपविष्टाय कस्मै उद्गात्रे यजमान औदकीं उदके भवा-मौदकीं द्वादशपुष्करां द्वादशपद्मसंयुक्तामाबध्नीयात् यास्य यज-मानस्य स्वा भवेत् ॥ १० ॥

स्तुत्वा बहिष्पवमानेन यजमानायैवौदकीं प्रत्युत्सृजेत्* ॥ ११ ॥

स्तुत्वा बहिष्पवमानेन औदकी द्वादशपुष्करा तां यजमानायैव पुनर्दद्यात् ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

इतरया प्रतिमुक्तया सर्वमहः कृत्वा ताᳬसएव हरेत्* ॥ १२ ॥

इतरया हिरण्यस्रजा आबद्धया सर्वमहः कृत्वा सर्वशब्दो निरवशेषवाची यावत् समिदाधानमिति स एवोद्गाता गृह्णीयात् ॥ १२ ॥

प्राकाशावध्वर्यवीरिति सौवर्णोऽध्वर्योर्दक्षिणतः स्याद्राजतः प्रतिप्रस्थातुः सव्यतः † ॥ १३ ॥

ब्राह्मणं प्राकाशावध्वर्यवीरिति सौवर्णः प्राकाशोऽध्वर्योर्दक्षिणे प्रदेशे शिरसा आबद्धः स्यात् प्राकाश आदर्शः प्रकाशकरः प्राकाशः अपरे ब्रुवते कर्णौत्सानू प्राकाशाविति प्रतिप्रस्थातुः रौप्यप्रकाशः सव्ये पार्श्वे स्यादाबद्धः ॥ १३ ॥

वासः पोतुरिति कार्पासᳬस्यात् † ॥ १४ ॥

ब्राह्मणं वासः पोतुरिति तद्वासः कार्पासं स्यात् कार्पासस्य विकारः कार्पासम् ॥ १४ ॥

बरासी नेष्टुरिति क्षौमी स्यात् † ॥ १५ ॥

ब्राह्मणं बरासी नेष्टुरिति सा बरासी क्षौमी स्यात् क्षुमायाः विकारः क्षौमी ॥ १५ ॥

ब्राह्मणेनैवेतरा विज्ञाताः † ॥ १६ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

इतरा दक्षिणाः याश्च देया येभ्यश्च ता ब्राह्मणेनैव विज्ञाता विस्पष्टाः पठिताः ॥ १६ ॥

तस्यावभृथादुदेत्य संवत्सरन्देवव्रतानि चरेत्* ॥ १७ ॥

तस्य दशपेयस्यावभृथादुदेत्य संवत्सरं देवव्रतानि चरेत् तस्य ग्रहणमभिषेचनीयोऽपि अधिकृत इति । कानि पुनर्देवव्रतानि उच्यते ॥ १७ ॥

उन्मृन्नीता नाप्लवमानः* ॥ १८ ॥

उन्मर्दनं कुर्य्याच्छरीरस्य उदकेन स्नानं न कुर्य्यात् ॥ १८ ॥

धावेत दन्तान् † ॥ १९ ॥

शोधयेत् दन्तान् दन्तकाष्ठं भक्षयेत् ॥ १९ ॥

निकृन्तयेत नखान् † ॥ २० ॥

नखांश्छेदयेत् ॥ २० ॥

श्मश्रूणि वापयेत न केशान् † ॥ २१ ॥

श्मश्रूणि वापयेत् न केशान् ॥ २१ ॥

वैयाघ्रे चर्मण्युत्तरलोम्न्यग्न्यगारे संविशेत्* ॥ २२ ॥

व्याघ्रस्य विकारो वैयाघ्रं तस्मिन्वैयाघ्रे चर्मण्युत्तरलोम्नि आस्तृतस्यैवोपरिष्टाल्लोमानि स्युः अग्न्यगारेऽग्निशरणे तस्मिन् चर्मणि शयीत ॥ २२ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम् ।

**अहरहः समिध आदध्यात्*** ॥ २३ ॥

अहन्यहन्यग्नौ समिध आदध्यात् ॥ २३ ॥

**नानुग्रामं प्रविशेत्*** ॥ २४ ॥

न ग्रामान्तः प्रविशेत् एतत् ज्ञापितं भवति यथा देवयजनमरण्ये भवतीति अपरे ब्रुवते नानुग्रामं प्रविशेदिति मैथुनप्रतिषेधः ग्राम्यं कर्म न कुर्यादिति ॥ २४ ॥

**नास्याब्राह्मणा राष्ट्रे वापयेरन्*** ॥ २५ ॥

अस्य राज्ञो राष्ट्रे नाब्राह्मणा वापयेरन् केशश्मश्रुरोमनखानि न कारयेयुः ॥ २५ ॥

**अस्नानाच्च न केशांश्छिन्द्युः*** ॥ २६ ॥

अस्नानाच्च केशच्छेदनं न कुर्युः ॥ २६ ॥

**न तेजनी दन्तान्*** ॥ २७ ॥

तेजनिना दन्तान्न च्छिन्द्युः तेजनी विकटः ॥ २७ ॥

**न प्रस्रवणानि †** ॥ २८ ॥

प्रस्रवणानि न च्छिन्द्युः ॥ २८ ॥

**ब्राह्मणास्तु यथाभिप्रेतं ये च तानन्वनु स्युः*** ॥ २९ ॥

ब्राह्मणास्तु यथाभिप्रेतं यथेष्टं छेदनं कुर्युः तथा ये चान्यान् ब्राह्मणानाश्रिता अन्ये वर्णास्तेऽपि यथाभिप्रेतं कुर्युः ॥ २९ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये एतन्नास्ति ।

इति नवमस्य द्वितीया कण्डिका ।

अथ तृतीया कण्डिका ।

**संवत्सरादूर्द्ध्वं केशवपनीयाय दीक्षेत यस्मिन् कालेऽभिषेचनीयेन यजेत* ॥ १ ॥**

उक्तं दशपेयः तस्यावभृथादुदेत्य संवत्सरन्देवव्रतानि चरेदिति ततस्तस्मात् संवत्सरादूर्द्ध्वं केशवपनीयाय दीक्षेत केशवपनीय इति संज्ञा संवत्सरधृतानां केशानां तस्मिन् वपनं क्रियते केशवपनीयायेति तादर्थ्ये चतुर्थी दीक्षेतेति यजमानस्य क्रियोपदेशः यस्मिन् कालेऽभिषेचनीयेन यजेतेति अभिषेचनीयस्य काल उक्तः ॥ १ ॥

**तस्य पौर्णमास्यामतिरात्रः* ॥ २ ॥**

तस्य केशवपनीयस्य पौर्णमास्यामतिरात्रः स्यात् ॥ २ ॥

**दशपेयेनेष्ट्वा य उत्तरः पूर्वपक्षस्तस्मिन्नेव केशवपनीयेन यजेतेति धानञ्जप्यः पौर्णमास्याञ्चैवातिरात्रः † ॥ ३ ॥**

धानञ्जप्य आचार्य्य आह दशपेयेनेष्ट्वा यस्तस्योत्तरः पूर्वपक्षः अनन्तरन्तस्मिन्नेव केशवपनीयेन यजेतेति पौर्णमास्यामेव चातिरात्रः स्यादिति ॥ ३ ॥

**तस्य सहस्रं दक्षिणाः* ॥ ४ ॥**

तस्य केशवपनीयस्य सहस्रं दक्षिणाः तस्य ग्रहणं **यदि संवत्सरादूर्द्ध्वं** यद्यनन्तरं पूर्वपक्ष इति ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

तस्योदवसानीययेष्टानिष्ट्वा पौर्णमासेन व्युष्टिद्विरात्राय दीक्षेतामावास्यायां पूर्वमहरिति चेच्चिकीर्षेत्* ॥ ५ ॥

तस्य केशवपनीयस्य उदवसानीययेष्ट्वा यदनन्तरं पौर्णमासं प्राप्तं अनिष्ट्वा तेन व्युष्टिद्विरात्राय दीक्षेत यद्यमावास्यायां पूर्वमहः कर्त्तुमिच्छेत् उक्तम् अमावास्यायां पूर्वमहरुदृष्ट उत्तरन्नानैवार्द्धमासयोः प्रतितिष्ठति पौर्णमास्यां पूर्वमहर्व्युष्टकायामुत्तरं नानैवमासीत् प्रतितिष्ठतीति ॥ ५ ॥

पौर्णमास्यामिति चेत्पूर्वपक्षएव दीक्षेत* ॥ ६ ॥

पौर्णमास्यां पूर्वमहरित्येवञ्चेच्चिकीर्षेत् पूर्वपक्ष एव दीक्षेत क्लृप्तादर्शम् ॥ ६ ॥

उभयोर्विचारयोर्यजनीय उत्तरमहः* ॥ ७ ॥

उभयोर्विचारयोर्यद्यमावास्यायां यदि पौर्णमास्यां यजनीयेऽह्नि उत्तरमहः स्यात् प्रतिपदीत्यर्थः कुतः पुनरयं संशयः यथा अमावास्यायां पौर्णमास्यां वा पूर्वस्मिन्नह्नि कृतेन यजनीयेऽह्नि उत्तरमहः स्यादिति उच्यते ब्राह्मणम् अमावास्यायां पूर्वमहरुदृष्ट उत्तरमिति तद्यस्मिन्नहनि दर्शनं भवति चन्द्रमसस्तदुदृष्टं नाम तस्य तु दर्शनं कदाचिद्यजनीयेऽहनि भवति नित्यन्तु द्वितीयायां तदत्र दर्शनशङ्कया कदाचिद्यजनीयमहर्लङ्घयेत् सोऽयमाचार्यो नियमार्थमारभते यजनीयेऽहनीति यद्यपि तस्मिन्नहनि न दृश्यते काल एवायं साधुर्दर्शनस्याविकृष्टा एव द्वितीया भवति तस्मिन्नहनि ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

व्यष्टकायामुत्तरमिति तामिस्रप्रथमा तिस्रोव्यष्टका इत्याचक्षते* ॥ ८ ॥

ब्राह्मणं व्यष्टकायामुत्तरमिति तामिस्रोऽपरपक्षः विगता व्याप्तिरस्मिन्नित्यपरपक्षप्रतिपदि चन्द्रमसस्तस्मादसौ व्यष्टकेत्युच्यते तेन सर्वव्याप्तेरेकया कलयोनोभवति अथ तिस्रो व्यष्टका इति किमिदं यदा व्यष्टकार्थः क्षतः प्रतिपद्येव उच्यते एतद्दर्शयति यथैव पूर्वपक्ष उत्थानाय तथैव तामिस्रप्रथमानि त्रीण्यहान्युत्थानीयानि भवन्ति लोके हि यानि पूर्वपक्षकार्य्याणि तान्येतेष्वहस्सु क्रियेरन्निति ॥ ८ ॥

उभेवा पूर्वपक्षे स्यातां ये एव समानपक्षे पुण्याहनो स्यातां तयोरेव कार्य्यमिति ह्याहेति* ॥ ९ ॥

अथवा उभे एवैतेऽव्युष्टिद्विरात्रस्याहनी पूर्वपक्षे स्यातां यस्मादेवं ब्राह्मणमाह ये एवेत्यादि ॥ ९ ॥

पूर्वेण दक्षिणा व्याख्याताः* ॥ १० ॥

अस्य व्युष्टिद्विरात्रस्य पूर्वेण केशवपनीयेन दक्षिणा व्याख्याताः तस्य सहस्रं दक्षिणा इति ॥ १० ॥

तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेतावकाशश्चेत् स्यात्* ॥ ११ ॥

इष्ट्वा व्युष्टिद्विरात्रेण यदि तस्मिन्नेव पूर्वपक्षे अवकाशः स्यात् अन्तरं स्यात् तस्मिन्नेव पक्षे क्षत्रस्य धृतिना यजेत उक्तं क्लृप्तो ज्योतिष्टोमः क्षत्रस्य धृतिरिति ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम् ।

**अविद्यमाने य उत्तरः पूर्वपक्षस्तस्मिन्*॥ १२॥**

अविद्यमाने अवकाशे य उत्तरः पूर्वपक्षस्तस्मिन् क्षत्रस्य धृति-ना यजेत॥ १२॥

**सोऽभ्यारोहणीयेन व्याख्यातः*॥ १३॥**

स क्षत्रस्य धृतिरभ्यारोहणीयेन ज्योतिष्टोमेन व्याख्यातः योऽभ्यारोहणीयस्य विधिः स तस्य तस्यैका दीक्षा द्वादशं शतं दक्षिणा इत्येतदादि॥ १३॥

**तयोः पृथक्सहस्रे दक्षिणा इति गौतमधानञ्जप्यौ द्वे च सहस्रे केशवपनीये तथा व्युष्टौ†॥ १४॥**

तयोः क्षत्रस्य धृत्यभ्यारोहणीययोः पृथक् सहस्रे दक्षिणाः पृथग्ज्ञानेत्यर्थः एकस्मिन्नपि सहस्रमन्यस्मिन्नपि एवं गौतमधानञ्जप्यावाचार्य्यावाहतुः केशवपनीये च द्वे सहस्रे दक्षिणाः स्युः चशब्द आचार्य्यमतानुकर्षणार्थः तथा व्युष्टौ व्युष्टिद्विरात्रे द्वे सहस्रे दक्षिणाः तयोरेवाचार्य्ययोर्मतम्॥ १४॥

**चत्वार्यभिषेचनीये गौतमः‡॥ १५॥**

अभिषेचनीये चत्वारि सहस्राणि दक्षिणाः स्युः इति गौतम आचार्य्यो मन्यते॥ १५॥

**पञ्च धानञ्जप्यो नित्यं त्वबलानां ज्ञातीनां वित्तम्‡॥१६॥**

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

‡ द्राह्यायणेऽप्येवं किन्तु तत्र छेदविषये विशेषोऽस्ति।

धानञ्जय्य आचार्य्य आह अभिषेचनीये पञ्चसहस्राणि दक्षिणाः स्युः अत्राबलानां ज्ञातीनां वित्तं स्यात् नित्यं दानं तुशब्दो विशेषणार्थः सर्वेषु दक्षिणाकल्पेषु ॥ १६ ॥

इति नवमस्य तृतीया कण्डिका।

---

अथ चतुर्थी कण्डिका।

राज्येकविंशतिवर्गान्यथोत्साहं दद्यादैन्द्रेण वृषभेण पुरस्तादुपरिष्टाच्च परियजेत* ॥ १ ॥

उक्तो राजसूयः साम्प्रतं द्वन्द्वा वक्तव्याः तेषां राज्यकामयज्ञः प्रथमो राट् स उच्यते राजीत्यधिकरणा सप्तमी तस्मिन् राजि एकविंशतिवर्गान् कृत्वा यथोत्साहं दद्यात् लिङ्गं अष्टावेकविंशः संस्तुतो भवतीति ऐन्द्र ऋषभः इन्द्रो देवता अस्येत्यैन्द्र ऋषभ इति गौरुच्यते वयोविशिष्टस्तेन पुरस्ताच्चोपरिष्टाच्च यजेत परिशब्द उभयतोवाची ॥ १ ॥

विराजि दशवर्गान्यथोत्साहं दद्यादाग्नेयेन तु पशुना पुरस्तादुपरिष्टाच्च परियजेत † ॥ २ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

विराजि क्रतौ दशशः दशवर्गान् कृत्वा यथोत्साहं दद्यात् अत्रापि सामान्याद्दश दश भवन्तीति अयन्तु विशेषः आग्नेयेन पशुना पुरस्तादुपरिष्टाच्च परियजेत अविशिष्टः पशुशब्दश्छागे वर्त्तते ॥ २ ॥

वैश्वदेवेनौपशदे* ॥ ३ ॥

औपशदे क्रतौ वैश्वदेवेन पशुना पुरस्तादुपरिष्टाच्च यजेत ॥३॥

तस्य चतुर्विंशंशतं दक्षिणाः* ॥ ४ ॥

तस्यौपशदस्य चतुर्विंशमेकशतं दक्षिणाः अत्रापि सामान्यम् एकैका स्तोत्रीयोपजायत इति द्वादशस्तोत्रीया उपजायन्ते प्राकृतेभ्य ऊर्द्ध्वं दक्षिणा अपि द्वादशैवोपजायन्ते ॥ ४ ॥

पूर्वे वयस्युच्चावचान्याजयित्वोपनीय वा तेभ्यः समावर्त्स्यन् पुनः स्तोमेन यजेत* ॥ ५ ॥

उक्तं पुनः स्तोममधिकृत्य यो बहु प्रतिगृह्य गरगीरिव मन्यते स एतेन यजेतेति तदुच्यते पूर्वे वयसि उच्चावचान्याजयित्वा उपनीय वा तेभ्यः समावर्त्स्यन् निवर्त्तयिष्यमाणः पुनः स्तोमेन यजेत ॥ ५ ॥

तस्य द्वादशमिथुना दक्षिणा इति धानञ्जप्यः* ॥ ६ ॥

तस्य पुनः स्तोमस्य द्वादशमिथुना दक्षिणाः स्युः द्वादशं माध्यंदिनं सवनमिति सामान्यता पुनः द्वादश मिथुना दक्षिणाः स्युः मिथुनशब्दः स्त्रीपुंससम्भवः स्त्रियः पुमांसश्च एवं धानञ्जप्य आचार्यो मन्यते ॥ ६ ॥

---

* द्राह्यायणोऽप्येवम् ।

**पुनः सꣳस्कृतो रथः पुनरुत्स्यूतꣳशामूलं पुनर्धेनुः पुनर्वत्स इति शाण्डिल्य एतेषां यथोत्साहं दद्यात्* ॥ ७ ॥**

शाण्डिल्यो दक्षिणां विकल्पयति शीर्णो यो रथः पुनः संस्कृतः पुनरुत्स्यूतं शामूलं जीर्णं शामूलं पुनः सूत्रेण संस्कृतं शामूलमिति ऊर्णं वासः पुनर्धेनुः विशुष्का गौः प्रवृत्तक्षीरा पुनर्धेनुः पुनर्वत्सः स्तनपानान्निवृत्तः सन् पुनः प्रवृत्तः एतेषां द्रव्याणां यथोत्साहं दद्यात् इत्येतच्छाण्डिल्य आह पुनस्त्वसामान्यात् ॥ ७ ॥

**चतुष्टोमयोरेकखुराणां पूर्वस्मिन्यथोत्साहं दद्यादुभयेषामुत्तरस्मिन्* ॥ ८ ॥**

द्वौ चतुष्टोमौ तयोः पूर्वस्मिंश्चतुष्टोमे एकखुराणां अश्वाश्वतरगर्दभानां यथोत्साहं दद्यात् उभयेषामुत्तरस्मिन् चतुष्टोमे एकखुराणाञ्च द्विखुराणाञ्च यथोत्साहं दद्यात् ॥ ८ ॥

**उद्भिद्वलभिद्भ्यामविप्रयोगेण यजेत † ॥ ९ ॥**

उद्भिच्च बलभिच्च उद्भिद्बलभिदौ ताभ्यामुद्भिद्बलभिद्भ्यामविप्रयोगेण यजेत उद्भिदा इष्ट्वा अवश्यं बलभिदा यजेत सम्बन्धेन फलश्रुतेः अर्थशेषत्वाच्च ॥ ९ ॥

**तावुभौ सप्तापवर्गौ स्याताम् वसन्ते च ‡ ॥ १० ॥**

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणीये छेदविषये विशेषोऽस्ति ।

ताबुद्भिद्वलभिदौ सप्तापवर्गौ स्याताम् अपवर्गः समाप्तिश्च उभा-
विति प्रत्येकं सप्तापवर्गौ वसन्ते च स्यातामुभावपि ॥ १० ॥

अर्द्धमास एनावन्तरेण स्यान्मासो वा संवत्सरो वा* ॥११॥

अर्द्धमासः एनयोरन्तरेण स्यात् मासो वा संवत्सरो वेति काल-
विकल्पः अन्तरान्तरेण युक्ते इति द्वितीया ॥ ११ ॥

तयोः पृथक् चतुर्विंशतिवर्गान् यथोत्साहं दद्यात् †
॥ १२ ॥

तयोरुद्भिद्वलभिदोश्चतुर्विंशतिवर्गान् कृत्वा यथोत्साहं दद्यात्
पृथङ्नानेत्यर्थः प्रत्येकं चतुर्विंशतिवर्गान् यथोत्साहं दद्यात् चतु-
र्विंशतिवर्गसामान्यात् गायत्री सम्पद्यते इति ॥ १२ ॥

पृथक् चतुर्युजावश्वरथावपचित्योः ‡ ॥ १३ ॥

अपचित्योः क्रत्वोः पृथक् नाना चतुर्युजावश्वरथौ दद्यात् चतु-
र्भिर्युक् चत्वारो वास्मिन् युक्ताश्चतुर्युक् ॥ १३ ॥

उभयतः कांस्यकवचौ ‡ ॥ १४ ॥

तौ रथौ उभयतः कांस्यकवचौ स्यातां कांस्येव कवचे एकैकस्य
रथस्योभयतः स्यातां कंसस्य विकारः कांस्यं कवचं सन्नहनम् ॥ १४ ॥

शतार्हाः स्युरश्वाः शतक्रियो वा † ॥ १५ ॥

---

* द्राह्यायणीये छेदविषये विशेषोऽस्ति ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

तयो रथयोश्चत्वारोऽपि शतार्हाः अश्वा युक्ताः स्युः शतम् एकैकोऽर्हति मूल्यमिति शतार्हः शतक्रियो वा शतेनैव वा एकैकः क्रीतः स्यात्॥ १५॥

राजैताभ्यां यजेतेति धानञ्जय्यः* ॥ १६ ॥

धानञ्जय्य आचार्यो मन्यते राजैताभ्यामपचिद्भ्यां यजेतेति स हि सर्वस्मात् पूजां कामयते॥ १६॥

यः कश्चापचितिकाम इति शाण्डिल्यः* ॥ १७ ॥

शाण्डिल्य आह यः कश्चापचितिकामः स एताभ्यां यजेतेति॥१७॥

ऐकाहिकेन व्रतेनोक्त उपायोऽग्नेः स्तोमयोः* ॥ १८ ॥

अग्नेः स्तोमयोरैकाहिकेन व्रतेनोक्त उपायः एकाहेषु भव ऐकाहिकः उपगमनमुपायः तिस्र उपसदो व्रतस्यैकाहिकस्य गौतमीयेन षड् वा द्वादश वेति॥ १८॥

तयोः पृथक्चत्वारि धान्याचितानि दक्षिणाः षड्गवानि पूर्वस्य चतुर्गवान्युत्तरस्य † ॥ १९ ॥

तयोरग्नेः स्तोमयोः पृथक् एकैकस्मिन् चत्वारि धान्याचितानि दक्षिणाः स्युः धान्याचितानीति धान्यपूर्णानि शकटानि एकैकस्मिन्नपि चत्वारि अन्यस्मिन्नपीति कथमेतद्गम्यते यथा चत्वारि चत्वारि न द्वे द्वे इत्युच्यते बहुवचनसामर्थ्यात् षड्गवानि चतुर्गवानीति चत्वारि

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

धान्याचितानीति पूर्वस्य षड्गवानि दक्षिणाः स्युः उत्तरस्य चतुर्गवानीति षड्भिः षड्भिः गोभिर्युक्तानि षड्गवानि चतुर्भिश्चतुर्भिर्युक्तानि चतुर्गवानि ॥ १९ ॥

**ऋषभाणां द्वादशशतं दक्षिणाः सहस्रं वर्षभे* ॥ २० ॥**

ऋषभाणामनडुहां द्वादशं शतं दक्षिणाः स्युः ऋषभे सहस्रं वा वाशब्दो विकल्पार्थः राजयज्ञत्वात् ॥ २० ॥

**अविद्यमानेषु कतिपया अप्यृषभाः स्युः साण्डा इतरे वत्सतराः* ॥ २१ ॥**

अविद्यमानेष्वप्यृषभेषु सर्वेषु कतिपया अप्यृषभाः स्युः इतरे वत्सतराः स्युः वत्सतरेषु बहुत्वमतन्त्रं वत्सतराः साण्डाः स्युः सेचनसमर्थाः ॥ २१ ॥

**वैश्यं यं विशः स्वराजानः पुरस्कुर्वीरन् स गोसवेन यजेत ॥ २२ ॥**

वैश्यमिति वर्णनिर्देशः वैश्यं यं वैश्याः स्वराजानः पुरस्कुर्वीरन् स्वराजानः येषां स्वो राजा वैश्यानां यथा आर्य्यः ब्राह्मणः पुरस्कारः आधिपत्ये स्थापनं स गोसवेन यज्ञेन यजेत ॥ २२ ॥

**स बृहस्पतिसवेन व्याख्यातः† ॥ २३ ॥**

स गोसवो बृहस्पतिसवेनोक्तो व्याख्यातः अभिषेकादिविध्यन्त-

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

सामान्यं य एनं पुरस्कुर्वीरन्नन्वगभूतवृत्तिं तत ऊर्द्धं तेषु वर्त्तयेत् स्थपतिरिति चैनन्त आचचीरन्निति ॥ २३ ॥

अयुतं त्वस्य दक्षिणाः* ॥ २४ ॥

अयुतन्तु अस्य दक्षिणाः स्युः श्रुतत्वात् तुशब्दो विशेषणार्थः अन्यत् समानं बृहस्पतिसवेन स्यात् दक्षिणास्तु अत्रायुतं स्युः ॥ २४ ॥

सखायो भ्रातरो वा ये सम्पादयेयुस्ते मरुत्स्तोमेन यजेरन्* ॥ २५ ॥

मरुत्स्तोमे ब्राह्मणं पठति एतेनैव त्रीन्या यजेदिति अत आरभ्यते सखायो भ्रातरो वा ये सम्पादयेयुः ते मरुत्स्तोमेन यजेरन्निति सखित्वं नाम प्रीतिपूर्वकं भवति तद्ये समानजातीया एकत्र सम्पादयेयुः भ्रातरो वा ते मरुत्स्तोमेन यजेरन्निति ॥ २५ ॥

तस्य दक्षिणा यथा रूपाः पञ्च शारदीये पशव आलभ्यन्ते तेषां यथोत्साहं दद्युः* ॥ २६ ॥

तस्य मरुत्स्तोमस्य दक्षिणाः तद्रूपाणां पशूनां यथोत्साहं दद्युः तस्येति निर्द्देशः क्रियते अयमेकमस्य वा भवति त्रयाणां वेति तद्यदेकस्य स्याद्यदि त्रयाणां तस्य तस्य पञ्चशारदीये सामान्यं मरुत्स्तोमत्वम् ॥ २६ ॥

येषां केषाञ्चेति धानञ्जय्यः* ॥ २७ ॥

---

* द्राह्यायणोऽप्येवम्।

धानञ्जय्य आचार्य्य आह येषां केषाञ्च पशूनां यथोत्साहं दद्युरिति ॥ २७ ॥

**कुलदक्षिण इन्द्राग्नेयः कुलायः* ॥ २८ ॥**

इन्द्राग्न्योः कुलाये गवां कुलानि कृत्वा सरस्वत्याः कुलमिदं विश्वरूपाया इदं गङ्गायाः इत्येवमादिसंख्यं प्रकृतिं पूरयेत् कुलादाने प्रयोजनं कुलाय इति शब्दसामान्यात् ॥ २८ ॥

**सहस्रमिन्द्रस्तोमे* ॥ २९ ॥**

इन्द्रस्तोमे सहस्रं दक्षिणाः राजयज्ञत्वात् ॥ २९ ॥

**राजपुरोहितौ यजेयातामिन्द्राग्न्योः स्तोमेन* ॥ ३० ॥**

राजा च पुरोहितश्च राजपुरोहितौ तावेकत्र यजेयातामिन्द्राग्न्योः स्तोमेन एवं हि ब्राह्मणं राजा च पुरोहितश्च यजेयातामिति ॥ ३० ॥

**गायत्रीसम्पन्ना दक्षिणा ब्राह्मणो दद्यात् जगतीसम्पन्ना राजा* ॥ ३१ ॥**

ब्राह्मणं गायत्रीञ्च जगतीञ्च सम्पद्यत इति ब्राह्मणो गायत्रीसम्पन्ना दक्षिणा दद्यात् गायत्रीसम्पच्चतुर्विंशतिः राजा जगतीसम्पन्ना दक्षिणा दद्यात् जगतीसम्पन्ना अष्टाचत्वारिंशत् ॥ ३१ ॥

**कामन्तु पृथग्यजेयातां तयोरेवमेव दक्षिणाः † ॥ ३२ ॥**

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

काममन्तु पृथङ्नाना यजेयातां तयोरेवमेव दक्षिणाः स्युः गायत्रीसम्पन्ना ब्राह्मणस्य जगतीसम्पन्ना राज्ञः ॥ ३२ ॥

विघनाभ्यां पशुकामो यजेताभिचरन्वा* ॥ ३३ ॥

विघनौ द्वौ पठितौ ताभ्यां पशुकामो यजेताभिचरन्वा उभयथा श्रुतिः पशुकामस्यापि तौ भवतः अभिचरतोऽपि श्रुतिसामर्थ्यात् ॥ ३३ ॥

सोमसामाथर्वणं वेत्याथर्वणं पशुकामयज्ञे कुर्यात् सोमसामाभिचरतः* ॥ ३४ ॥

मशकः पठति सोमसामाथर्वणं वेति तत्किमयं तुल्यविभाषा अथ विनिविष्टविभाषेति सोऽयमाचार्य्यो विनिवेशं कल्पयति यदा पशुकामः स्यात् तदास्मिन्नाथर्वणं कुर्य्यात् अभिचरतः सोमसाम कुर्य्यात् ॥ ३४ ॥

बृहतीसम्पन्नाः दक्षिणाः पशुकामस्य* ॥ ३५ ॥

पशुकामस्य बृहतीसम्पन्नाः दक्षिणाः स्युः षड्त्रिंशदक्षरा बृहतीति ॥ ३५ ॥

इषुणाभिचरतो व्याख्यातौ* ॥ ३६ ॥

अभिचरत एतौ विघनौ इषुणा व्याख्यातौ इषोर्यो विधिरुक्तः स सर्वोऽपि भवतीति ॥ ३६ ॥

सन्दंशवज्रौ च* ॥ ३७ ॥

---

* ब्राह्मणपाठोऽप्येवम् ।

सन्दंशवज्रौ च क्रतू इषुणा व्याख्यातौ ॥ ३७ ॥

राजानꣳसन्दꣳशेनाभिचरेज्जनपदं वज्रेण* ॥ ३८ ॥

राजानं सन्दंशेन क्रतुना अभिचरेत् जनपदं वज्रेण ॥ ३८ ॥

राजानमभिचरन्व्यत्यासमेनौ प्रयुञ्जीत* ॥ ३९ ॥

राजानमभिचरन् एनौ सन्दंशवज्रौ व्यत्यासं प्रयुञ्जीत व्यत्यासः सन्दंशं कृत्वा वज्रं वज्रं कृत्वा सन्दंशं अनेन न्यायेन ॥ ३९ ॥

ज्योतिष्टोमेनैवान्ततो यजेत शान्त्यर्थः शान्त्यर्थः* ॥ ४० ॥

एताभ्यां सन्दंशवज्राभ्यामिष्ट्वा ज्योतिष्टोमेन यजेत शान्त्यर्थः ननु मशकेनोक्तं कृप्ता ज्योतिष्टोमः शान्त्यर्थ इति उच्यते तत्र सन्दंशवज्रावनधिकृत्योक्तं इह सन्दंशवज्रावधिकृतौ अतः पुनराह ॥ ४० ॥

इति नवमस्य चतुर्थी कण्डिका ।

---

अथ पञ्चमी कण्डिका ।

पौर्णमासीदीक्षामासापवर्गा अहीनाः* ॥ १ ॥

उक्ता एकाहाः साम्प्रतमहीना विवक्षिताः तेषां परिभाषामारभ्यते पौर्णमासीदीक्षेत्यादिना पौर्णमास्यां दीक्षित्वा मासेनापवर्गो येषान्त इमे पौर्णमासीदीक्षामासापवर्गा इति अपवर्गः समाप्तिः अहीना इति व्यावहारिकी संज्ञा त्रिकाण्डो यज्ञः एकाहा-

---

* द्राह्यायणेऽप्येवम् ।

हीनाः सत्त्राणीति अयं निश्चयः ज्योतिष्टोमातिरात्रादयः एते सर्वे पौर्णमासीदीक्षामासापवर्गाश्चेति केचित्तु प्रलोभनां कुर्वन्ति ये मासापवर्गास्ते पौर्णमासीदीक्षा इति मासापवर्गा तया पौर्णमासी-दीक्षात्वमुपपद्यत इति के पुनर्मासापवर्गा इत्युच्यते ये सुत्याभ्यु-च्चयिनस्ते मासापवर्गा इति वक्ष्यति एकत्रिंशेऽहनि यज्ञपुच्छं त्रिंशे वा सुत्याभ्युच्चय इति सूत्रं कृत्वा वयन्तु ब्रूमः ये च सुत्याभ्युच्चयिनो ये च न सर्व्वेषामहीनशब्दः सामान्यः श्रुतिप्रामाण्यात् ज्योतिष्टोमा-तिरात्रादारभ्य यावत्पौण्डरिक इति उच्यते यदि च ये सुत्याभ्युच्च-यिनः तेषु पौर्णमासीदीक्षता मासापवर्गता चेष्टाभविष्यत् न शेषेषु विधिरारप्स्येत अस्मिन् काले दीक्षा इयत्यश्च दीक्षोपसद इति येन पुनर्विशेषेण विधिरारभ्यते तेन च मन्यामहे सर्वेषामयं सामान्यो विधिरिति ॥ १ ॥

तेषां द्वादशोपसदः* ॥ २ ॥

तेषामहीनानां द्वादशोपसदः स्युः तेषामिति निर्देशः क्रियते अन्यत्रास्मात् समाहृत्यानादेश इति इह पुनः किमनादेश इति न प्रतीतिः अनादेशग्रहणात् सामान्यस्य विधेर्विशेषकस्य च विकल्पः प्राप्नोति जमदग्निपञ्चशारदीयादिवत् तेन तेषामित्यारभ्यते तेषामेव पौर्णमासीदीक्षाणां मासापवर्गाणां द्वादशोपसदः स्युः अन्यत्र यथा-देशमेवेति अपरे पुनर्ब्रुवते अनादेशग्रहणाद्विकल्प एवेति ॥ २ ॥

षड़िति धानञ्जप्यः* ॥ ३ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

धानञ्जप्य आचार्य आह षडुपसदः स्युरिति ॥ ३ ॥

**एकत्रिंशेऽहनि यज्ञपुच्छं त्रिंशे वा*॥ ४ ॥**

यज्ञपुच्छमतिरात्रः सेयं विनिविष्टविषया विभाषा त्रिंशिनि मासे एकत्रिंशेऽहनि यज्ञपुच्छं स्यात् एकोनत्रिंशिनि त्रिंशे एवं पौर्णमास्यां दीक्षितस्य पौर्णमास्यामेव यज्ञपुच्छं भवति ॥ ४ ॥

**सुत्याभ्युच्चये दीक्षा प्रति ह्रासः† ॥ ५ ॥**

उपसदां नियमः कृतः द्वादश षड़िति वा सुत्यास्वपि नियतविषय एव तत्सुत्योपसत्सु शेषेण दीक्षा भवति द्विरात्रप्रभृतिषु सुत्याभ्युच्चयेन प्रतिसुत्यं दीक्षाणां ह्रासः स्यात् ॥ ५ ॥

**सर्वेऽतिरात्रा अहीना द्विरात्रप्रभृतयस्त्वाहर्गणा अश्वमेधादन्ये सहस्रदक्षिणाः प्राक् चतूरात्रेभ्यः ।॥ ६ ॥**

सर्वशब्दो निरवशेषवाची सर्वेऽतिरात्रा अहीनाः सिद्धे सति विध्यन्तरमारभते द्विरात्रादयस्त्वाहर्गणाः सर्वेऽहीना अश्वमेधादन्ये सर्वे सहस्रदक्षिणाः प्राक्चतूरात्रेभ्यः सर्वग्रहणं किमर्थमिति चेत् उच्यते येऽप्यहीनकाण्डेन सन्त्यतिरात्राः यथा केशवपनीयसाकमेधव्युष्टिद्विरात्रादयश्चेति ये चान्ये शाखान्तरदृष्टाः सन्त्यतिरात्रादयः सर्वे सहस्रदक्षिणा इति कः पुनर्विशेष आहीनिक्ये यदा दीक्षाकालोऽपि प्रतिविशिष्टः दक्षिणा अपि रात्रिविशेषे पृथक् समाम्नायान्तरतया

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये क्रेदविषये विशेषोऽस्ति ।

निवृत्ता तदाहीनिक्ये सति को विशेषः स्यादिति उच्यते उपसद-स्तावदाहीनिक्यः स्युः षण्णां सम्भवोऽस्ति एवं कृत्वा निदानकारोऽपि सिद्धमहीनेष्वित्युपक्रम्य केशवपनीयप्रकरणमाह प्राचीनस्तोम उत्तरः इत्येवमधिकृत्य अथापीदं द्वितीयं यज्ञस्थानं यदहीना द्वितीयो वर्णः क्षत्रिय इति ॥ ६ ॥

तत्प्रभृतीनां भूयस्यः सुत्याभ्युच्चयेन* ॥ ७ ॥

यदिति पूर्वनिर्देशः चतूरात्रप्रभृतीनां भूयस्यः सहस्रा दक्षिणाः स्युः सुत्याभ्युच्चयेन यथा यथा सुत्या वर्द्धयेरन् तथा तथा दक्षिणा वर्द्ध-येरन् कः पुनरुपजनः स्यादिति उच्यते द्वौ न्यायौ दृष्टौ एकस्तै-रात्रिकः प्रतिविनाशो दृष्टः त्रयस्त्रिंशच्च त्रीणि च शतानि प्रथमेऽहनि देयास्तथा द्वितीये तथा तृतीये तथानुकारवचने अथ चतुर्थादि-ष्वपि प्रतिसुत्यं अपरोन्यायः यथा दीयमानासु पौण्डरीके अयुत-मुपपद्यते तथोपजनं कुर्य्यादिति पञ्चविंशं शतं सहस्रञ्चोपजन इति एका एवमयुतोत्पत्तिः पौण्डरिक इति ॥ ७ ॥

ताः समꣳ सर्वेष्वहःसु विभाजं दद्यात् † ॥ ८ ॥

विभज्य विभज्य विभाजम् ॥ ८ ॥

समानुपपत्तावुत्तमेऽहनि भूयिष्ठाः † ॥ ९ ॥

यत्र समप्रविभागोनोपपद्यते तत्र उत्तमेऽहनि भूयिष्ठा दद्यात् याः समं विभागं नोपपद्येरन् ताः सर्वा उत्तमेऽहनि दद्यात् ॥ ९ ॥

---

* द्राह्यायणीये छेदविषये विशेषोऽस्ति।

† द्राह्यायणोऽप्येवम्।

अयुतमेकादशरात्रे दद्यात्* ॥ १० ॥

एकादशरात्रे पौण्डरीके अयुतं दद्यात् ननु तत्किमिदमारभ्यते यदा अयुतमेव श्रुतं तत्र उच्यते, प्रविभागार्थमारभ्यते ॥ १० ॥

नव नव पूर्वेष्वहःसु शतानि सहस्रमुत्तमे* ॥ ११ ॥

नवनवशतानि पूर्वेष्वहःसु प्रथमादिषु यावद्दशममिति उत्तमे एकादशे सहस्रं दद्यात् तत्र हि यद्दशममधिकं शतं तत्र समं प्रविभागं कर्त्तुमेकादशसु अहःसु नव नव भवन्ति एकावशिष्यते सा उत्तमेऽहनि दीयते एवं प्रविभागो माभूदित्यत आह यद्येवं नव नव पूर्वेष्वहःसु शतानीति उक्ते सहस्रमवशिष्यते तदुत्तम एव दास्यते तत्किमिदमारभ्यते सहस्रमुत्तम इति उच्यते उत्तमेऽहनि द्वादशाहे उपजनन्यायेन दक्षिणाविभागाः प्राप्ताः तासु प्राप्तास्वाह सहस्रमुत्तम इति उच्यते नैतद्युक्तं प्रधाने ज्ञापकज्ञापिता दक्षिणा इति न युक्ता जन्याः प्रविष्टा द्वारेण सुचिनानाहृताः तस्मादत्र प्रत्यहं सहस्रं दद्यात् दक्षिणा प्रवादमात्रं भवति सहस्राण्यादित्सतामिति ॥ ११ ॥

अप्तोर्यामिण कृता गर्भाः कल्पेन † ॥ १२ ॥

अप्तोर्याम्णि पठति विश्वजितानि पृष्ठानां गर्भा इति ॥ १२ ॥

रथन्तरं वा पृष्ठम् † ॥ १३ ॥

भवत्यप्तोर्याम्णि वाशब्दो विकल्पार्थः ॥ १३ ॥

तस्य स्थाने बार्हतं वाजजित् † ॥ १४ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

तस्य रथन्तरस्य स्थाने यत्प्रकृतेऽग्निष्टोमेऽपि बृहत्यां कल्पितं तस्य स्थाने बार्हतं वाजजित् स्यात् बृहत्यां भवं बार्हतं तस्य ग्रहणं क्रियते अन्यत्रापि रथन्तरं कल्पकेन बृहता रथन्तरस्थाने बार्हतं वाजजित् स्यात् यथा चतुर्विंशे चतुर्विंशमरथन्तरपृष्ठं वा बृहदनुष्टुप्कमिति ॥ १४ ॥

**बृहद्वारवन्तीये उत्तरे पृष्ठे* ॥ १५ ॥**

एतस्मिन् कल्पे बृहद्वारवन्तीये उत्तरे पृष्ठे स्यातां तृतीयचतुर्थे ॥ १५ ॥

**कालेयस्यर्चु वारवन्तीयम्* ॥ १६ ॥**

कालेयस्यर्चु वारवन्तीयं स्यात् चतुर्थं पृष्ठम् ॥ १६ ॥

**तस्य स्थाने पूर्वम्* ॥ १७ ॥**

तस्य वारवन्तीयस्य स्थाने अतिरिक्तस्तोत्रेषु पूर्वं वारवन्तीयं स्यात् ॥ १७ ॥

**समं तस्य च कालेयम् † ॥ १८ ॥**

समं तस्य स्थाने यद्बृहत्यां कल्पितं तस्य स्थाने कालेयं स्यात् चशब्दो विकल्पानुकर्षणार्थः ॥ १८ ॥

**पार्थस्यौशनम् † ॥ १९ ॥**

पार्थस्य स्थाने माध्यन्दिनान्त्यमौशनं स्यात् ॥ १९ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

त एव गर्भाः पृष्ठेषु* ॥ २० ॥

पृष्ठेषु त एव गर्भाः स्युः ये मशकेनोक्ताः ॥ २० ॥

वैश्वजिता न्याज्यान्याज्येषु गर्भान् कुर्य्यादिति धानञ्जप्यः षाष्ठिकान्युक्थान्युक्थेषु* ॥ २१ ॥

अपरं विकल्पं धानञ्जप्य आचार्य्य आह मशकक्लृप्तेऽप्तोर्याम्णि वैश्वजिता न्याज्यान्याज्येषु गर्भान् कुर्य्यादिति विश्वजिति भवानि वैश्वजितानि षाष्ठिकानि उक्थान्युक्थेषु गर्भान् कुर्य्यादिति षष्ठेऽहनि भवानि षाष्ठिकानि अपरः पक्षः ॥ २१ ॥

यथैवार्षेयकल्पेन कृतमिति शौचिवृक्षिः* ॥ २२ ॥

शौचिवृक्षिराचार्य्य आह यथैवार्षेयकल्पेन कृतं विधानं तथैव स्यात् अवधारितमिति अपरः पक्षः ॥ २२ ॥

ज्योतिष्टोमे वातिरात्रेऽतिरिक्तस्तोत्राण्यादध्यात् षोडशिमतीति शाण्डिल्यः* ॥ २३ ॥

शाण्डिल्य आचार्य्य आह यथा मशकेन क्लृप्तं तथैव स्यात् अथवा ज्योतिष्टोमे वातिरात्रे षोडशिमति अतिरिक्तस्तोत्राणि कुर्य्यात षोडशिमतीति अषोडशिको ज्योतिष्टोमोऽतिरात्रोऽपि इत्यज्योतिष्टोमोऽपीत्येव ज्ञापयति ॥ २३ ॥

त एव गर्भाः पृष्ठेषु यज्ञायज्ञीयञ्च बृहद्गर्भम्* ॥ २४ ॥

त एव गर्भा मशकोक्ताः स्युः यज्ञायज्ञीयञ्च बृहद्गर्भं स्यात् चशब्द-

---

* द्राह्यायणेऽप्येवम् ।

एवमपि सूत्रकारस्य कल्पं दर्शयति अपि वा सर्वाण्यावर्त्तानि वैश्व-जितैरावर्त्तिभिः गर्भवन्ति कुर्य्यात् तत्र बृहत्सञ्चरते तस्य वैरूपं विधृत्या इति ॥ २४ ॥

इति नवमस्य पञ्चमी कण्डिका।

---

अथ षष्ठी प्रकाश।

त्रिरात्राणां प्रथमेऽहनि वषट्कारिभ्यो दद्यात् ग्रावस्तुते च* ॥ १ ॥

त्रिरात्रे सहस्रं श्रुतं दक्षिणाः ताः प्रतिविभागं प्रविभिष्टो-विभाग उच्यते उक्तम् अश्वमेधादन्ये सहस्रदक्षिणाइति तत् येऽश्व-मेधादन्ये त्रिरात्रास्तेषामयं दक्षिणाप्रविभाग उच्यते त्रिरात्राणां प्रथमेऽहनि वषट्कारिभ्यो दद्यात् होतृमैत्रावरुणब्राह्मणाच्छंसिपोतृ-नेष्ट्रच्छावाकाग्नीध्रेभ्योग्रावस्तुते च प्रथमएव दद्यात् सा च मात्रा वक्ष्यते यस्य यावती देया ॥ १ ॥

छन्दोगेभ्य उत्तमे* ॥ २ ॥

उत्तमेऽहनि छन्दोगेभ्यो दद्यात् ॥ २ ॥

मध्यमइतरेभ्यः* ॥ ३ ॥

ये अनुक्तास्तेभ्यो मध्यमेऽहनि दद्यात् ॥ ३ ॥

---

* द्राह्यायणेऽप्येवं किन्तु एतत् स्थानान्तरेऽस्ति।

**शतमेकैकस्मै मध्यतः कारिभ्यो दद्यात्* ॥ ४ ॥**

एकैकस्मै मध्यतः कारिभ्यो होत्रादिभ्यो महर्त्विग्भ्यः शतं शतं दद्यात् ॥ ४ ॥

**पञ्चाशतमर्द्धिनीभ्यः* ॥ ५ ॥**

अर्द्धिनीभ्यो होत्रादिभ्यः पञ्चाशतं पञ्चाशतं दद्यात् एकैकस्मा इति प्रकृतम् अर्द्धिन्य उक्ताः अर्द्धिन्यस्तृतीयिन्यः पादिन्यः इति ॥ ५ ॥

**तृतीयिनीनां विंशतिं पोत्रे तथा नेष्ट्रे* ॥ ६ ॥**

तृतीयिनीनां होत्राणां विंशतिं पोत्रे दद्यात् तथा नेष्ट्रे विंशतिं दद्यादित्येतदुक्तं भवति ॥ ६ ॥

**त्रिंशतमितराभ्यामाग्नीध्राय च पादिनीनाम् † ॥ ७ ॥**

इतराभ्यां तृतीयिनीभ्यां होत्राभ्यां त्रिंशतं दद्यात् आग्नीध्राय च पादिनीनां त्रिंशतमेव दद्यात् ॥ ७ ॥

**नवोन्नेत्रे दशेतराभ्याम् ‡ ॥ ८ ॥**

पादिनीनामुन्नेत्रे नव दद्यात् इतराभ्यां पादिनीभ्यां दश दश दद्यात् ॥ ८ ॥

**अन्वहन्तून्नेत्रे समं दद्यात् ‡ ॥ ९ ॥**

---

* द्राह्यायणेऽप्येवं किन्तु एतत् स्थानान्तरेऽस्ति ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणेऽप्येवम् ।

यास्त्वताः उन्नेत्रे नव दक्षिणास्ता एव विभज्यान्वहं दद्यात् तिस्र-स्तिस्रः ॥ ९ ॥

**दश सदस्याय प्रथमेऽहनि सप्ततिं द्वितीये विंशतिं तृतीये* ॥ १० ॥**

सदस्याय प्रथमेऽहनि दश दद्यात् द्वितीयेऽहनि सप्ततिं दद्यात् तृतीये विंशतिं दद्यात् ॥ १० ॥

**दशदशार्षेयप्रवादिभ्यो य उक्ता ब्राह्मणेन* ॥ ११ ॥**

आर्षेयप्रवादिभ्यो दश दश दद्यात् ये ब्राह्मणेनोक्ताः य आर्षेयो विद्वानित्येवमादयः, विद्वानविद्वानित्येतस्मिन् संशय आह ॥ ११ ॥

**अनूचानौ पूर्वयोरह्नोरननूचान उत्तमे* ॥ १२ ॥**

विद्वांसौ पूर्वयोरह्नोरविद्वानुत्तमे ॥ १२ ॥

**दशशतं शिष्यन्ते ता ऋत्विग्भ्यो दद्यात् प्रसर्पकेभ्यो वा* ॥ १३ ॥**

दशाधिकं शतमेव शिष्यते दक्षिणानां ताः सर्वेभ्यो ऋत्विग्भ्यो विभज्य दद्यात् प्रसर्पकेभ्यो वा दद्यात् ॥ १३ ॥

**सहस्रतमीं मध्यमेऽहनि ब्रह्मण आग्नीध्राय च † ॥१४॥**

सहस्रस्य पूरणी सहस्रतमी तां सहस्रतमीं मध्यमेऽहनि ब्रह्मणे

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीयेऽतिरिक्तपाठोऽस्ति ।

दद्यात् आग्नीध्राय च दद्यात् उक्तम् अथैषा द्विदेवत्या त्रिरूपा ब्रह्मणो द्वे तृतीये तृतीयमग्नीध्र इति कानि पुनस्तानि रूपाणीत्युच्यते ॥१४॥

शुक्लं कृष्णं रोहितमित्यस्या रूपाणि* ॥ १५ ॥

शुक्लादीनि अस्याः सहस्रतम्याः त्रीणि रूपाणि ॥ १५ ॥

दशकला ब्रह्मणे पञ्चाग्नीध्रायैका ममेत्यपाकुर्वीत* ॥१६॥

तां सहस्रतमीं षोड़शधा कलशो विभज्य यजमानो दश कला ब्रह्मणे पञ्चाग्नीध्राय एका मम इत्यपाकरणं कुर्वीत ॥ १६ ॥

तामन्यया गवा निष्क्रीय दक्षिणेऽस्याः कर्णे गोनामानि जपित्वा गोष्वपि सृजेत* ॥ १७ ॥

तां सहस्रतमीं यजमानः अन्यया गवा निष्क्रीय दक्षिणे अस्या गोः कर्णे गोनामानि जपित्वा काम्यासीत्येतदादीनि अन्यासु गोष्वपि सृजेत ॥ १७ ॥

ज्योतिष्टोमविधिरनन्तराम्नानात् द्वादशाहभूतस्य स्यात्† ॥ १८ ॥

इह ब्राह्मणं कृत्स्नं ज्योतिष्टोमविधिमाम्नायानन्तरं द्वादशाहविधिमामनन्ति ततो द्वादशाहानन्तरं पुनरेकाहादौ पुनर्ज्योतिष्टोमविधिं समामनन्ति तत एकाहान् समाप्याहीनानामादौ पुनर्ज्योतिष्टोमविधिमामनन्ति तत्रायं संशयः किमयं ज्योतिष्टोमविधिः अन-

---

* द्राह्यायणेऽप्येवं किन्तु एतेषु छेदविषये विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

न्तराम्नानात् द्वादशाहभूतस्यैव ज्योतिष्टोमस्य भवति उत स्वतन्त्रस्य ज्योतिष्टोमस्येति किं पुनरेतस्याश्चिन्तायाः प्रयोजनमिति चेत् उच्यते यदि तावद्द्वादशाहभूतस्यैव ज्योतिष्टोमस्य स्यात् तदा उत्तरयोराम्नाययोर्द्रव्यान्तरं कल्पयितव्यम् अथ पुनः सार्वत्रिकः ततः पुनराम्नाये प्रयोजनं वक्तव्यम् एतस्मिन् संशयेऽयमाचार्य्यः शास्त्रमारभते ज्योतिष्टोमविधिरित्यादिना ज्योतिष्टोमस्यासौ विधिः द्वादशाहभूतस्य स्यादिति किंकारणम् अनन्तराम्नानादिति यस्मादनन्तरो द्वादशाह आम्नातः ॥ १८ ॥

तल्लिङ्गदर्शनाच्च यथा पृष्ठानाम्* ॥ १९ ॥

किञ्चान्यत् द्वादशाहिकलिङ्गदर्शनात् थाल् प्रकारवचने यथा पृष्ठानां यथा स्तोमानाञ्च ॥ १९ ॥

पुनराम्नानाच्चाहीनैकाहादौ* ॥ २० ॥

किञ्चान्यत् यस्माच्चाहीनैकाहादौ पुनर्ज्योतिष्टोमविधिराम्नातः तस्मात् द्वादशाहभूतस्य स्यादिति ॥ २० ॥

नाना प्रकरणवत्तु चोदितानामानन्तर्यात् सम्बन्धो न स्याद्यथोपह्वव्यत्तपेययोः* ॥ २१ ॥

नन्वेवं स्यात् तुशब्दः पूर्वपक्षव्यावर्त्तकः यदुक्तं द्वादशाहभूतस्य स्यादिति तत्र नाना पृथक् तस्मिन् स्वस्मिन् प्रकरणे चोदितानां क्रमेण आनन्तर्य्यात् सम्बन्धो न स्यात् नह्यानन्तर्य्यं सम्बन्धकारणं

---

* द्राह्यायणोऽप्येवम् ।

यथा उपहव्यस्य च ऋतपेयस्य च प्रकरणवचोदितयोर्न सम्बन्धो भवत्यानन्तर्य्यात् ॥ २१ ॥

लिङ्गग्रहणञ्चान्यार्थेन यथा षष्ठेऽहनि शक्करीणाम्* ॥२२॥

अथ यदुक्तं तल्लिङ्गदर्शनाच्चेत्यत्र ब्रूमः लिङ्गग्रहणं अन्यार्थेन कृतं किञ्चिदेवार्थमुद्दिश्यान्यन्तदर्थेन कृतं यथा षष्ठेऽहनि शक्करीणां ग्रहणं कृतं मृज्यमानः सुहस्त्येति सिमानां रूपं समानं वै सिमानाञ्च रूपं रेवतीनाञ्च सिमाभ्यो ह्यधिरेवत्यः प्रजायन्त इति ॥ २२ ॥

शेषविधेः पुनराम्नानम्* ॥ २३ ॥

अथ यदुक्तं पुनराम्नानाच्चाहीनैकाहादावित्यत्र ब्रूमः शेषस्य विधेः पुनराम्नानं न सर्वस्य शेषविधेरिति सम्बन्धलक्षणा षष्ठी कः पुनः शेषविधिरिति उच्यते प्रतिसवनं तावत् स्तोमविन्यासः त्रिवृत्पञ्चदशौ प्रातःसवनमिति तस्य नवतिशतं स्तोत्रीया इति संस्थादेशः तस्य द्वादशं शतं दक्षिणा इति दक्षिणानियमः तथा अहीनादौ त्रिवृद्वहिष्पवमानमित्यत आरभ्य प्रतिस्तोत्रं स्तोमविन्यासः अतिरात्रेणेति संस्थाचोदना ऋद्धिकामफलचोदना एतदर्थं पुनराम्नानम् ॥ २३ ॥

---

* द्राह्यायणेऽप्येवम् ।

इति नवमस्य षष्ठी कण्डिका ।

अथ सप्तमी कण्डिका।

तस्मिन् स्वतन्त्रेऽहीनरात्रिः स्यादविशेषेण ह्यहीनेषु चोद्यते* ॥ १ ॥

तस्मिन् ज्योतिष्टोमेऽतिरात्रे स्वतन्त्रे नाङ्गभूते आहीनिकी रात्रिः स्यात् यस्मादविशेषेण अहीनेषु चोद्यते हिशब्दः कारणोपदेशार्थः सर्वेऽतिरात्रा अहीना इति ॥ १ ॥

प्राकृती त्वेव स्यादधिकृत्याम्नानात्* ॥ २ ॥

प्राकृती त्वेव स्यात् प्राकृतौ भवा प्राकृती तुशब्दः पक्षान्तर-निवृत्तये यदुक्तमाहीनिकी स्यादिति तन्न एवशब्दोऽवधारणार्थः नैवाहीनिकी स्यात् किंकारणम् अधिकृत्याम्नानात् यस्मादधिकृत्य ज्योतिष्टोमं सा रात्रिराम्नाता ॥ २ ॥

अविशेषचोदना शेषे यथा चतुरवत्तम्* ॥ ३ ॥

अथ यदुक्तमविशेषेण ह्यहीनेषु चोद्यत इति तत्रोच्यते अविशेष-चोदना शेषे स्यात् सर्वस्तोमादिषु यथा चतुरवत्तं सर्वत्राविशेषेण भवति पञ्चावत्तन्तु भृगूणामिति तच्चतुरवत्तं भृगुणाविशेषेण भवति एवमविशेषचोदना ज्योतिष्टोमशेषे भवति ॥ ३ ॥

एतेनोक्तमोङ्कारस्य प्रत्याम्नानं वाचा रथन्तरे* ॥ ४ ॥

एतेन न्यायेनोक्तमाख्यातम् ओङ्कारस्य प्रत्याम्नानं वाचा रथन्तरे

---

* द्राह्यायणोऽप्येवम्।

अविशेषचोदितं सर्वेषां साम्नामोङ्कारेणोद्गीथादानन्तद्रथन्तरे प्रत्याम्नातं वाचा वागित्यादेर्यमिति ॥ ४ ॥

समुच्चयस्तु नानार्थत्वात् प्रस्तावशान्त्यर्था हि वागुद्गीथादेरोङ्कारः* ॥ ५ ॥

तुशब्दः पूर्वपक्षनिवृत्त्यर्थः यदुक्तमोङ्कारो वाचा निवर्त्तितः तत्र समुच्चयः स्याद्वागोङ्कारयोः कस्मात् नानार्थत्वात् वाक् प्रयोगः प्रस्तावशान्त्यर्थः उद्गीथादेरोङ्कारः शान्त्यर्थः कथं पुनर्वागोङ्कारयोः शान्त्यर्थतेति उच्यते एवं ब्राह्मणमाह वज्रेण वा एतत् प्रस्तोतोद्गातारमभिप्रवर्त्तयति यद्रथन्तरं प्रस्तौति समुद्रकं तर्ह्योद्गायेत् वागित्यादेयं वाग्वै समुद्रः समुद्रमेवान्तर्दधात्यहिंसाया इति तत् यत् वज्रेणाभिप्रवर्त्तनं तस्य वाचा समुद्रभूतायां अन्तर्द्धानं क्रियते अहिंसार्थम् ओङ्कारस्तूद्गीथादेः शान्त्यर्थः प्रस्तुतं वै सामावसीदति तदुद्गातौङ्कारेण विष्टभ्नोति तत्प्रसुतं सामावसीयमानमुद्गातौङ्कारेण क्षिपति तदेवं नानार्थत्वात् वागोङ्कारयोः समुच्चयः स्यात् उभयोः क्रिया ॥ ५ ॥

वाक्तु पूर्वमेवं यथार्थप्रत्यासत्तिः † ॥ ६ ॥

एवं वागोङ्कारयोरेकत्र समुच्चयीभूतयोः कस्य पूर्वं प्रयोगोऽस्त्वित्यतआह वाक् तु पूर्वं स्यात् एवं क्रियमाणे यदर्थं वाक् प्रयुज्यते

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणीये एतन्नास्ति ।

सोऽर्थः प्रत्यासन्नतरो भवति प्रस्तावानन्तरं वाचि क्रियमाणायाम् ॥ ६ ॥

उत्तरा वा जघन्यविधेराचाराच्च* ॥ ७ ॥

उत्तरा वा वाक् स्यात् यस्मादादित आरभ्य स्तोत्राणाम् ओङ्कारेण प्रवृत्तमुद्गीथादानं वाचा जघन्यविधानं रथन्तरे किञ्चान्यत् समाचारस्य दृश्यते आचारः पारम्पर्य्यमविच्छिन्नः लोकेऽपि ब्रह्मण आदानमोङ्कारपूर्वकमेव भवति तस्मादोङ्कार एव पूर्वमुत्तरकाला वाक् ॥ ७ ॥

एकस्तोमेषु वैदत्रिरात्रे च स्वस्तोमा रात्रिः स्यात्तथा सन्धिरुभयꣳ ह्यविकारेण वर्त्तते † ॥ ८ ॥

इह त्रिवृतातिरात्रेण ब्रह्मवर्चसकामो यजेतेत्यारभ्य चतुर एकस्तोमानामनति तथा त्रयस्त्रिꣳशतो तिरात्राः सर्वे षोड़शिमन्त इति वैदत्रिरात्रे श्रुतिः तत्रायं संशयः किमयमहःस्तोमो विधीयते भूयस्त्वादकृत्स्नसंयोगः रात्रिर्यथाक्लृप्तस्तोमैव अथवा कृत्स्नसंयोगात् सरात्रिकाण्यहानि तत्स्तोमान्येवेति एतस्मिन् संशये आचार्य्यः शास्त्रमारभते एकस्तोमेष्विति एकस्तोमेषु चतुर्षु वैदत्रिरात्रे च स्वस्तोमारात्रिर्भवेत् यथा सन्धिः स्वस्तोमकः कः पुनः रात्रेः स्वस्तोमक इति उच्यते स्वजातितः पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ ८ ॥

---

* द्राह्यायणीये एतन्नास्ति।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

परात्क्त्वस्त्र त्रिवृतोऽन्यत्र सर्व्वैर्नोपपद्यते त्रिवृतातिरात्रेणेति च विशेषचोदना* ॥ ६ ॥

अथ व्यावृत्तः पक्षः यदुक्तमेकस्तोमे वैदत्रिरात्रे च स्वस्तोमा रात्रिः स्यादिति तथा सन्धिरिति तत्र त्रिवृतातिरात्रेणेति त्वविशेषचोदना नायं विशिनष्टि अहस्त्रिवृतां स्वस्तोमा रात्रिस्तथा सन्धिरिति कृत्वाह त्रिवृतेति ॥ ६ ॥

वृत्त्यपेक्षा चादेशेन विद्यते यथा षोडशं प्रथमं रात्रिषामेति † ॥ १० ॥

यदुक्तमुभयं ह्यविकारेण वर्त्तत इत्यत्र ब्रूमः आदेशे वृत्त्यपेक्षा न विद्यते आदेशो हि बलवान् यथा षोडशं प्रथमं रात्रिषामेति आदेशेन सामान्यावृत्तिः प्रत्याम्नाता ॥ १० ॥

अर्थोक्तिः सन्धावावापः ‡ ॥ ११ ॥

यदुक्तं परात्क्त्वस्त्र त्रिवृतोऽन्यत्र सर्व्वैर्नोपपद्यत इत्यत्राप्यर्थोक्तः आवापः स्यात् कोऽर्थः परात्क्त्वस्त्र ॥ ११ ॥

अभ्यासो वा ‡ ॥ १२ ॥

अभ्यासो वा स्यात् अर्थोक्त एव कथमर्थोक्तः न हि परात्क्त्वं श्रुतं सर्व्वा त्र्यस्तृचाश्चोदिताः तेषां स्तोमवशेन परात्क्त्वं कृतं इहापि स्तोमवशेनाभ्यासः क्रियतां ॥ १२ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतं विशेषोऽपि कृतः ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

**ब्राह्मणमाज्यदोहानामग्निमुपनिधाय,स्तुवत इति होतुर्धिष्ण्येऽग्निं धारयेयुः प्रथमेऽहनि यं मध्यन्दिन आनयेयुः* ॥१३॥**

आज्यदोहानां ब्राह्मणमग्निमुपनिधाय स्तुवत इति तत्रायं संशयः कस्मिन् देशे तदुपनिधानं कुतश्चाग्निराहर्त्तव्य इति अत आह होतुर्धिष्ण्येऽग्निं धारयेयुः प्रथमेऽहनि यं मध्यन्दिने धिष्ण्यविहरण आनयेयुः यावदाज्यदोहकाल इति तत्र ह्यार्भवे आज्यदोहम् ॥ १३ ॥

**प्रातःसवन उत्तरयोरह्नोः † ॥ १४ ॥**

द्वितीयतृतीययोः प्रातःसवने धिष्ण्यविहरणाय यमानयेयुः तं धारयेयुः यावदाज्यदोहकाल इति तयोर्हि मध्यन्दिने आज्यदोहे ॥ १४ ॥

**स्तोत्रवेलायामेनं प्रज्वलयेयुः † ॥ १५ ॥**

स्तोत्रवेलायामेनमग्निं प्रज्वलयेयुः सर्वेष्वहःसु ॥ १५ ॥

**तमनुमन्त्रयेताग्निरसि वैश्वानरो नमस्तेऽस्तु मा मा हिंसीरिति ‡ ॥ १६ ॥**

तमग्निमनुमन्त्रयेतोद्गाता प्रज्वलितमग्निरसीति मन्त्रेण यथा सूचितेन ॥ १६ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणीये एतन्नास्ति ।

इति नवमस्य सप्तमी कण्डिका ।

अथ अष्टमी कण्डिका।

**सहस्रपोषकामः शबलीहोमं कुर्वीत* ॥ १ ॥**

गर्गत्रिरात्रस्यानन्तरं शबलीहोमस्य ब्राह्मणम् तस्य विधानमुच्यते सहस्रपोषं कामयते सहस्रपोषकामः यः कामयते सहस्रं मम पोषः स्यादिति स शबलीहोमं कुर्वीत किं तत्सहस्रं पशूनामित्यपरे वर्णयन्ति सहस्रपोषकाम इति सहस्रं विन्द्यादिति पूर्व एवलर्थः कथं गम्यते वक्ष्यति प्रथमतश्चेत्तु श्वा गर्दभो वा प्रतिवाश्येत न पशूनामाशास्तीति विद्यादिति तेन पशुकामस्येति सुतरामुपपद्यते ॥१॥

**नात्रिरात्रयाजीति शाण्डिल्यस्त्रिरात्रो वा एतां प्रदापयतीति ह्याह† ॥ २ ॥**

शाण्डिल्य आचार्य्य आह न अत्रिरात्रयाजी शबलीहोमं कुर्वीत यस्माद्ब्राह्मणं सम्बन्धं दर्शयति त्रिरात्रो वा एतां प्रदापयतीति ॥ २ ॥

**यः कश्च सहस्रपोषकाम इति धानञ्जप्यः* ॥ ३ ॥**

धानञ्जप्य आचार्य्य आह यः कश्च सहस्रपोषकामः स्यात् त्रिरात्रयाजी अत्रिरात्रयाजी वा शबलीहोमं कुर्वीतेति नास्य त्रिरात्रो निमित्तं कामो निमित्तम् ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

**वसन्ते प्रथमायां पूर्वपक्षस्य केशश्मश्रूणि वापयित्वाहतं वसनं परिधायानन्तर्हिते स्थण्डिले द्वादशरात्रिरधः शयीत तप्तं क्षीरं पिबन्* ॥ ४ ॥**

वसन्ते प्रथमायां पूर्वपक्षस्येति नियमः केशश्मश्रूणि वापयित्वा-हतं वसनं परिधाय अहतम् अभुक्तपूर्वम् अनन्तर्हिते स्थण्डिले आस्तरणेनास्तृते द्वादशरात्रीरधः शयीत ब्राह्मणं द्वादशरात्रीरधः शयीतेति तत्रास्तरणे प्राप्ते सूत्रकार आक्षानन्तर्हि ते स्थण्डिल इति ब्राह्मणं तप्तं पिबन्निति तत्किन्तप्तमिति तद्द्रव्यं निर्द्दिष्टं सोऽयमाचार्य्य आह क्षीरमिति ॥ ४ ॥

**नित्याभ्याहितोऽस्याग्निरावसथे स्यात् † ॥ ५ ॥**

अस्यावसथेऽग्निर्नित्याभ्याहितः स्यात् न जागरयेत् द्वादशा-हानि ॥ ५ ॥

**नैनमन्यः सुहृदः प्रैषकृतोऽनुप्रविशेत् † ॥ ६ ॥**

एनं कर्मिणं सुहृत् यः स्यात् प्रैषकृत् एवैनमनुप्रविशेत् नान्यः कश्चित् प्रैषकृदन्ये सुहृदः स्यात् ॥ ६ ॥

**अल्पव्याहारी च स्यात् ‡ ॥ ७ ॥**

अल्पव्याहारी च भवेत् नासद्वज भाषेत् ॥ ७ ॥

**अदूरगामी ‡ ॥ ८ ॥**

---

* द्राह्यायणेऽप्येवं किन्तु तत्र पाठक्रमवैपरीत्यमस्ति।

† द्राह्यायणेऽप्येवम्।

‡ द्राह्यायणीये एतन्नास्ति।

न च दूरं यायात् अवश्यकार्य्यार्थं वा समिदर्थं वा ॥ ८ ॥

द्वादश्या उपव्युषं परिसमुह्याग्निं परिस्तीर्य्यौदुम्बर इध्मः स्यात् स्रुक् स्रुवा च तथा चमसस्तस्माद्दधिमधुसर्पिरिति स्रुवेण स्रुचि गृह्णीयाच्चतुर्गृहीतमष्टगृहीतं वा* ॥ ९ ॥

द्वादश्या रात्रेरूपव्युषम् उषारात्रेरपरः कालः विगता उषा व्युषा व्युषायाः समीपे उपव्युषं परिसमुह्याग्निं परिस्तीर्य्य परिसमूहन-परिस्तरणे सिद्धे औदुम्बरः इध्मः स्यात् उदुम्बरस्य विकारः औदुम्बरः स्रुक्स्रुवौ च औदुम्बरे दारवे स्यातां तथा चमसः औदुम्बरः स्यात् तथा चमस इति किमर्थं स्रुक्स्रुवचमसाश्चेति वक्तव्ये उच्यते वक्ष्यत्ययं तस्माद्दधिमधुसर्पिरिति स्रुवेण स्रुचि गृह्णीया-दित्येतदर्थं पृथक् चमसग्रहणञ्चमन्त्यस्मिन्निति चमसः तस्माच्चमसा-द्दधिमधुसर्पिरित्येतानि द्रव्याणि संयुतानि स्रुवेण स्रुचि गृह्णीयात् चतुर्गृहीतमष्टगृहीतं वा ॥ ९ ॥

तज्जुहुयाच्छबलिः समुद्रोऽसीति* ॥ १० ॥

तदिति निर्देशः यदि चतुर्गृहीतं यद्यष्टगृहीतं तज्जुहुयात् शबलिः समुद्रोऽसीत्येतदादिना यजुषा यथाम्नातेन उक्तं मन्त्रविधि-त्वादिग्रहणेनेति ॥ १० ॥

स्वाहाकारेणोत्तराम् † ॥ ११ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

तथैव गृहीत्वा चतुर्गृहीतमष्टगृहीतं वा उत्तरामाहुतिं स्वाहा-कारेण जुहुयात् ॥ ११ ॥

**स्रुचि यः शेषः स्यात्तं चमस आनीय प्राश्नीयात्*॥ १२॥**

तस्य द्रव्यस्य यः शेषः स्यात् आचम्य तं चमसे कृत्वा प्राश्नीयात् ॥ १२ ॥

**प्रक्षाल्य स्रुक्स्रुवौ चमसञ्च निदध्यात्* ॥ १३ ॥**

स्थापयेत् ॥ १३ ॥

**तत्रैवानुप्रहरेदिति शाण्डिल्यायनः* ॥ १४ ॥**

शाण्डिल्यायन आचार्य्य आह कृतार्थत्वात् स्रुक्स्रुवचमसानां प्रक्षाल्यास्मिन्नेवाग्नौ प्रक्षिपेदिति ॥ १४ ॥

**प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य यत्र ग्राम्यस्य पशोर्नाशृणुयात्तदरण्यं परेत्य दर्भस्तम्बमालभ्य शबलि शबलीति त्रिः परमकण्ठेन क्रोशेत्* ॥ १५ ॥**

स्रुक्स्रुवचमसान्निधायाग्नौ वा प्रक्षिप्यानन्तरं प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य यस्मिन् देशे ग्राम्यस्य पशोः शब्दं न शृणुयात् तदरण्यं परेत्य गत्वा दर्भस्तम्बमालभ्य शबलिशबलीत्यनेन कृतरूपेण मन्त्रेण त्रिःपरमकण्ठेन क्रोशेत् आह्वयेत् परमेण स्वरेणेति न तस्मात्पर-तरोऽन्यः स्यात् ॥ १५ ॥

---

* द्राह्यायणेऽप्येवम्।

यदन्यच्छुनो गर्दभाद्वा प्रतिवाश्येत समृद्धं कर्मेति विद्यात्* ॥ १६ ॥

तस्मिन्नाक्राने क्रियमाणे कृते वा शुनो वा गर्दभाद्वा यदन्यत् सर्वं प्रतिवाश्येत समृद्धं कर्मेति जानीयात् ॥ १६ ॥

एवमातृतीयꣳ संवत्सरात्यासमप्रतिवाश्यमाने कुर्वीत* ॥ १७ ॥

एवमनेन प्रकारेण आतृतीयं संवत्सरात्यासं संवत्सरं क्षिप्वा कुर्वीत उक्तं यदि न प्रतिवाश्येत संवत्सरेण पुनराक्रमेदिति ॥ १७ ॥

प्रथमतश्चेत्तु श्वा गर्दभो वा प्रतिवाश्येत न पशूनामाशास्तीति विद्यात्* ॥ १८ ॥

यदि प्रथमतः श्वा गर्दभो वा न प्रतिवाश्येत संवत्सरे पुनराक्रमेत् यदि प्रतिवाश्येत न पशूनामाशास्तीति विद्यात् ॥ १८ ॥

आतृतीयञ्चाप्रतिवाश्यमाने* ॥ १९ ॥

आतृतीयं यावत् तृतीयं कर्मेति तावदन्यस्मिन्न प्रतिवाश्यमाने स तेन पशूनामाशास्तीति विद्यात् ॥ १९ ॥

शान्तिर्वामदेव्यꣳ शान्तिर्वामदेव्यम्* ॥ २० ॥

अन्ते कर्मणः शान्त्यर्थं वामदेव्यं गायेत् समृद्धे चासमृद्धे च नित्यं वामदेव्यगानम् ॥ २० ॥

---

* द्राह्यायणेऽप्येवम् ।

इति नवमस्य अष्टमी कण्डिका ।

अथ नवमी कण्डिका।

**राजाश्वमेधेन यजेत* ॥ १ ॥**

सबलिहोमउक्तः साम्प्रतमश्वमेध उच्यते तदनन्तरं तस्यान्नानः राजा प्राप्ताभिषेकः क्षत्रियः पृथिवीश्वरः अश्वमेध इति कर्मणो नामधेयम् अश्वमेधेन यजेतेति विधायकं वाक्यम् ॥ १ ॥

**तस्योपायो यथा महाव्रते गौतमीयम् † ॥ २ ॥**

तस्याश्वमेधस्य उपायः उपगमनमुपायः यथा येन प्रकारेण महाव्रते गौतमीयं विधानम् अमावास्यायां दीक्षितेत्येतदादि ॥ २ ॥

**उपसदस्त्वस्याहीनिक्यः † ॥ ३ ॥**

तिस्र उपसदो व्रतस्यैकाहिकस्य गौतमीयेन षड्वा द्वादश वेति प्राप्त आह उपसदस्त्वस्याहीनिक्य इति षड्वा द्वादश वोपसदः स्युः इति उपसत्पक्षं निवर्तयति ॥ ३ ॥

**दीक्षित्वाश्वमुत्सृजेत् श्वेतं कृष्णमण्डलमह्नो रूपं योजवेन सम्पन्नः ‡ ॥ ४ ॥**

दीक्षित्वा यजमानः नियमं गृहीत्वा यदेतद्व्रतावलम्बनादि दीक्षणीयायामिष्टावासमाप्तेस्तस्या एतत् सर्वं कृत्वानुष्ठीयाश्वमुत्सृजेत् अश्वस्योत्सर्गविधानमाध्वर्य्यवे दृष्टं श्वेतं कृष्णमण्डलं श्वेतमिति वर्ण-

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणोऽप्येवम्।

‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

निर्देशः कृष्णं मण्डलं यस्य शरीरे एतदलक्षणो रूपम् उक्तं प्रजापतेर्वा अक्षण्श्व यत्तत्परापतत्तदश्वोऽभवदिति यो जवेन सम्पन्नः स्यात् जवतिर्गत्यर्थः शीघ्रगतितम इत्यर्थः ॥ ४ ॥

तमनावर्त्तयन्तो दिग्भ्यः संवत्सरं रक्षित्वा राजक्रये बध्नीयुः* ॥ ५ ॥

तमेवं लक्षणमश्वं कामतश्चरन्तं अनावर्तयन्तो रक्षेयुः दिग्भ्यः संवत्सरं सोमस्य राज्ञः क्रये बध्नीयुः अथ दिग्भ्य इति किमर्थम् उच्यते दिग्भ्य अनावर्तयन्तो रक्षेयुः विषमेभ्यश्च श्वभ्रेभ्यः पर्वतादिभ्यश्च आवर्तयेयुः अथ क्रय इत्युक्ते राजग्रहणं किमर्थं राजक्रय इति उच्यते एतदादि दर्शयति सर्वकर्मसु प्रत्यक्षं सोममुपलभ्य दीक्षेत प्रतिनिधिना आरम्भो न स्यादिति ॥ ५ ॥

ग्रीष्मउपक्रमेति धानञ्जप्यः † ॥ ६ ॥

धानञ्जप्य आचार्य्य आह गीष्मे आरभ्येतेति ॥ ६ ॥

वसन्त इति शाण्डिल्यः † ॥ ७ ॥

शाण्डिल्य आचार्य्य आह वसन्ते उपक्रमेतेति ग्रीष्मे वसन्त इति काल निर्द्देशः ॥ ७ ॥

चैत्रवैशाखयोरन्यतरस्य सप्तम्यामष्टम्यां वा मध्यतः कारिण ऋत्विजो ब्रह्मौदनं भोजयित्वा तेभ्यः पृथक् सहस्राणि दद्यात्* ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

चैत्रवैशाखयोरन्यतरस्य चैत्रवैशाखस्य वा सप्तम्यान्तिथावष्टम्यां वा यजमानो मध्यतः कारिण ऋत्विजो होत्राध्वर्युब्रह्मोद्गातॄन् ब्रह्मौदनं भोजयित्वा ब्रह्मौदनः सिद्धः अध्वर्य्यवे तेभ्यो महर्त्विग्भ्यः पृथगेकैकस्मै सहस्राणि दद्यात् उक्तं संख्यामात्रे च दक्षिणा गाव इति अथ पृथक्ग्रहणं किमर्थमिति चेत् उच्यते सहस्राणीति बहुवचनसामर्थ्यात् सिद्धे उच्यते त्रिप्रभृतिबहुत्वात् सहस्राणीत्युक्ते त्रिभ्य आरभ्य अनियमः सहस्राणां स्यात् सोऽयं नियमार्थमारभते पृथगिति चतुर्णामिति ॥ ८ ॥

पौष्णयामिष्टौ विततायाꣳ सꣳस्थितायां वाश्वमुत्सृजेत् तन्तयैवावृता रक्षेयुः* ॥ ९ ॥

तेनैव विधिना रक्षेयुः यथोक्तेन दीक्षित्वाऽश्वमुत्सृजेदित्येतस्मिन् कल्पे पूषा देवता अस्येति पौष्णी तस्यां पौष्णयामिष्टौ विततायां प्रारब्धायां संस्थितायां समाप्तायां वाश्वमुत्सृजेत् तन्तयैवावृता रक्षेयुः ॥ ९ ॥

तिस्र इष्टयः सावित्र्यो भवन्ति तासु सꣳस्थितासु दक्षिणत आहवनीयस्य हिरण्मये कूर्चे प्राङ्मुख आसीनो यजमानः संवत्सरमहरहर्होतुः पारिप्लवमाचक्षाणस्य शृणुयात् † ॥ १० ॥

अनन्तरमश्वोत्सर्जनात् तिस्र इष्टयः सावित्र्यो भवन्ति सविता देवता आसामिति सावित्र्यः तासु संस्थितासु समाप्तासु आहवनीयस्य

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

दक्षिणे प्रदेशे हिरण्मये कूर्चे सौवर्णे पीठे प्राङ्मुख आसीनो यजमानः संवत्सरमहरहः अहन्यहनि पारिप्लवमाख्यानं होतुराचक्षाणस्य शृणुयात् ॥ १० ॥

हिरण्यकशिपुनि ब्रह्मोद्गाता चोदङ्मुखौ* ॥ ११ ॥

सौवर्णे कशिपुनि ब्रह्मा उद्गाता च पृथक् उदङ्मुखावासीनौ संवत्सरमेवाहरहर्होतुः पारिप्लवमाचक्षाणस्य शृणुयात् हिरण्यकशिपुनि सौवर्णे विचित्रे अमले ॥ ११ ॥

शतꣳ होत्रे दद्यात् दशाध्वर्य्यवे † ॥ १२ ॥

तत्पारिप्लवं श्रुत्वा यजमानः शतङ्गाः होत्रे दद्यात् दशाध्वर्य्यवे ॥ १२ ॥

सहस्रं वा होत्रे शतमध्वर्य्यवे किञ्चिच्चेतराभ्याम् † ॥ १३ ॥

इतराभ्यां ब्रह्मोद्गातृभ्यां किञ्चिद्दद्यात् किञ्चिच्छब्दोऽनियमे वाशब्दः उभयकल्पार्थः ॥ १३ ॥

तस्य देवव्रतानि यथा राजसूये* ॥ १४ ॥

तस्य यजमानस्य पारिप्लवं शृण्वतः संवत्सरं देवव्रतानि भवन्ति यथा राजसूये उन्मृक्तीतानाप्लवमान इत्येतदादीनि ॥ १४ ॥

संवत्सरादूर्द्ध्वमश्वं बद्ध्वा दीक्षेत* ॥ १५ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणोऽप्येवं किन्तु छेदविषये विशेषोऽस्ति ।

पारिप्लवाख्यानिके संवत्सरे प्राप्ते तस्मादूर्द्ध्वमश्वं बध्वा अश्वमेधाय दीक्षेत नियमं गृह्णीयात् ॥ १५ ॥

तदहरेतान्यृत्विज आसनानि यथास्वᳫं हरेरन्* ॥१६॥

तदहस्तस्मिन्नहनि एतान्यासनानि हिरण्यकपिपुप्रभृतीनि यथास्वं गृह्णीयुः यद्यस्य यथास्वं तस्मिन्नेव काले दर्शयति यथा तेषां सर्वेषां पृथक् हिरण्यकशिपुप्रभृत्यासनानीति ॥ १६ ॥

तस्य द्वादशदीक्षा द्वादशोपसदः सर्वेषामह्नां बहिर्बहिष्पवमानैः स्तुवीरन् † ॥ १७ ॥

उक्तम् अहीनबहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्रेति सोऽयमत्र विशेष आरभ्यते सर्वेषामेतेषामह्नां बहिर्बहिष्पवमानैः स्तुवीरन्निति अथ सर्वग्रहणं किमर्थं बहुवचनात्सिद्धे बहिष्पवमानैरिति उच्यते उभयोः कल्पयोः संवत्सरदीक्षे द्वादशदीक्षोपसदे च ॥ १७ ॥

मध्यमेऽहन्यश्वस्य वालधिमालभ्य बहिष्पवमानᳫं सर्पेयुः* ॥ १८ ॥

मध्यमेऽहनि अश्वस्य बालधिम् आलभ्य गृहीत्वा बहिष्पवमानं सर्पेयुः बाला अस्मिन्धीयन्त इति बालधिः ॥ १८ ॥

सर्पत्सु यजमान उद्गातारं ब्रूयात् उद्गातरप त्वावृणे शतेन च निष्केण चास्त्रोम उद्गास्यतीति* ॥ १९ ॥

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

सर्पत्सु बहिष्पवमानं यजमान उद्गातारं ब्रूयात् उद्गातरप त्वा वृणे शतेन च निष्केण च अपवृणे त्वा गवां शतेन च सौवर्णेन च निष्केण चकारेण कृतपरिमाणेन अश्वोम उद्गास्यतीति ॥ १९ ॥

**अश्वमास्तावमाक्रमय्य वड़वां दर्शयेयुः* ॥ २० ॥**

एवमुक्त्वाथानन्तरम् अश्वमास्तावमाक्रमय्य वड़वां दर्शयेयुः ॥२०॥

**तां यदाभिक्रन्देदथ यजमान उद्गातारं ब्रूयादुद्गातरूप त्वाह्वये शतेन चैव निष्केण च त्वमेव म उद्गास्यसीति* ॥ २१ ॥**

तां वड़वां अश्वम् आभिमुख्येन यदा क्रन्देत् शब्दं कुर्य्यात् अथानन्तरं यजमानः उद्गातारं ब्रूयात् उद्गातरूप त्वाह्वये शतेन चैव निष्केन च त्वमेव म उद्गास्यसीति ॥ २१ ॥

**उदञ्चमश्वमुत्क्रमय्यास्ताव उपविश्योद्गाताश्वव्रतेन स्तुयादभिवाजो विश्वरूप इत्येतासु* ॥ २२ ॥**

उदङ्मुखमश्वन्तस्मादास्तावादुत्क्रमय्य नीत्वा आस्तावे उपविश्योद्गाता अश्वव्रतेन साम्ना आत्मना स्तुयात् अभिवाजो विश्वरूप इत्येतासृक्षु उद्गातृग्रहणं इतरयोर्निवृत्त्यर्थम् ॥ २२ ॥

**हिरण्यकशिपुन्यासीनो बहिष्पवमानेन स्तुत्वा स एव तद्धरेत्* ॥ २३ ॥**

---

* द्राह्यायणेऽप्येवम् ।

आस्तावे हिरण्यकशिपुनि आसीनो बहिष्पवमानेन स्तुत्वा स एवोद्गाता गृह्णीयादिति आसनम् एवशब्दः क्रियते वचनात् गृह्णीयादिति ॥ २३ ॥

इति नवमस्य नवमी कण्डिका ।

---

अथ दशमी कण्डिका ।

या पत्नीनां प्रियतमा यजमानस्य सा वावाता राजपुत्री* ॥ १ ॥

या पत्नीनां प्रियतमा यजमानस्य पत्नीनां प्रियतमा राजपुत्री राजदुहिता क्षत्रिया तस्याः सांव्यवहारिकी संज्ञा वावातेति संव्यवहारं वक्ष्यति ब्रह्मा वावातामभिमेथेदिति ॥ १ ॥

अनपचिता परिवृक्ती † ॥ २ ॥

यजमानस्य या अनपचिता पत्नी स्यात् अपूजिता तस्याः सांव्यवहारिक्येव संज्ञा परिवृक्तीति वक्ष्यति उद्गाता परिवृक्तीमभिमेथेदिति ॥ २ ॥

संज्ञप्तेषु पशुषु होत्राभिमेथिते ब्रह्मा वावातामभि-

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये एतन्नास्ति ।

**मेथेदूर्द्धामेनामुच्छ्रयतादगिरौ भारꣳ हरन्निवाथास्यै मध्यमे जतु शीते वाते पुनर्निवेति निर्दिशेत्* ॥ ३ ॥**

संज्ञप्तेषु पशुषु शमित्रा सर्वेषु होत्राभिमेथिते सति ब्रह्मा वावातामभिमेथेत् ऊर्द्धामेनामुच्छ्रयतादित्येतदादिना यथोदिष्टेन अभिमेथनं नाम तदाक्रोशनमभिमेथनम् असंयतया वाचा मन्त्रवत्या उक्तिप्रत्युक्तिः ॥ ३ ॥

**शतमस्या राजन्यानां दुहितरोऽनुचर्य्यः स्युस्तास्तं प्रत्यभिमेथेयुरूर्द्धमेनमुच्छ्रयताद् गिरौ भारꣳ हरन्निवाथास्य मध्यमे जतु शीते पुनर्निवेतेति निर्दिशेयुः † ॥ ४ ॥**

शतम् अस्या वावातायाः राजन्यानां क्षत्रियाणां दुहितरः अनुचर्य्यः अनुगामिन्यः स्युः तास्तं ब्रह्माणं प्रत्यभिमेथेयुः प्रतिब्रूयुः ऊर्द्वमेनमुच्छ्रयतादित्येतदादिना यथासूचितेन मन्त्रेण ॥ ४ ॥

**उद्गाता परिवृक्तीमभिमेथेद्यदस्या अꣳहुभेद्या अणुस्थूलमुपातसन् मुष्कौ यदस्या एजतो गोशफे शकुला विवेति निर्दिशेत्* ॥ ५ ॥**

उद्गाता परिवृक्तीं यजमानस्य पत्नीमभिमेथेत् यदस्या अꣳहुभेद्या अणुस्थूलमित्येतदादिना यथासूचितेन मन्त्रेण ॥ ५ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

शतमस्याः सूतग्रामणीनां दुहितरोऽनुचर्य्यः स्युस्तास्तं प्रत्यभिमेथेयुर्युं देवासो ललामगुं प्रस८ हृष्टिनमाजिषुरिति निर्दिशेयुः सक्थ्ना देदिश्यते नार्यृतस्यान्तिभुवो यथेति* ॥६॥

अस्याः परिवृक्त्याः शतं सूतग्रामणीनां दुहितरः अनुचर्य्यः अनुगामिन्यः स्युः सूतास्च ते ग्रामण्यश्च सूतग्रामण्यः ग्रामन्नयतीति ग्रामणीः तास्तमुद्गातारं प्रत्यभिमेथेयुः प्रति ब्रूयुः यं देवासो ललामगुमित्येतदादिना यथासूचितेन ॥ ६ ॥

अथ उपस्पृश्य वामदेव्यं गीत्वा तस्यर्चाऽनुजपेयुः † ॥७॥

तदभिमेथनं कृत्वा ब्रह्मा उद्गातारश्च वामदेव्यं साम गायेयुः उद्गीत्वा ऋचोऽस्यानुजपेयुः अस्याभिमेथनस्यैतच्छान्त्यर्थं वामदेव्यगानम् अथ तस्येति किमर्थम् उच्यते यत्र यत्र वामदेव्यगानमादिश्यते शाखान्तरेऽपि तत्र तत्र गीत्वा तस्यर्चोऽनुजपेयुः ॥ ७ ॥

स्वाहाकृतिभिः श्वरिते पूर्वेण सद उपविश्य ब्रह्मोद्यं वदेयुः † ॥ ८ ॥

स्वाहाकृतयो नाम पशुप्रजयाजेषु तैः कर्मणि कृते होत्रध्वर्य्युभिः सदसः पूर्वे प्रदेशे ब्रह्मोद्यं वदेयुः ब्रह्मोद्यं वक्ष्यति किं तद्ब्रह्मोद्यम् ॥ ८ ॥

होत्राध्वर्युणा चोक्ते ब्रह्मा पृच्छेदुद्गातारं पृच्छामि

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

त्वा चितयं देवसख यद्यत्त्वमत्र मनसानुवेत्थ येषु विष्णुस्त्रिषु पदेष्वष्ट येषु विश्वं भुवनमाविवेशेति* ॥ ९ ॥

होत्राध्वर्युणा च उक्ते ब्रह्मोद्ये ब्रह्मा पृच्छेदुद्गातारं पृच्छामि त्वाचितयं देवसखेत्येतदादि यथास्त्रचितं प्रश्नम् ॥ ९ ॥

तं प्रति ब्रूयादपि तेषु त्रिषु पदेष्वस्मिन् येषु विष्णुस्त्रिषु पदेष्वष्ट येषु विश्वं भुवनमाविवेश सद्यः पर्यैमि पृथिवीं द्यामुते मामेकेनाङ्गेन दिवो अस्य पृष्ठमिति* ॥ १० ॥

तं ब्रह्माणं प्रति ब्रूयादुद्गाता अपि तेषु त्रिषु पदेष्वस्मिन्नेतदादि यथास्त्रचितं प्रतिवचनम् ॥ १० ॥

उद्गाता पृच्छेद् ब्रह्माणं किᳬस्विदन्तःपुरुष आविवेश कान्यन्तःपुरुषे अर्पितान्येतद् ब्रह्मन्नुपवल्हामहे त्वा किᳬस्विन्नस्त्वं प्रतिवोचास्यत्रेति † ॥ ११ ॥

उद्गाता ब्रह्माणं पृच्छेत् किंस्विदन्तःपुरुष आविवेशेत्येतदादि यथास्त्रचितं प्रश्नम् ॥ ११ ॥

तं प्रति ब्रूयात् पञ्चस्वन्तःपुरुष आविवेश तान्यन्तःपुरुषे अर्पितान्येतत्त्वान् प्रतिमन्वानो अस्मिन्न मायया भवस्युत्तरोमदिति † ॥ १२ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

तमुद्गातारं प्रति ब्रूयाद्ब्रह्मा पञ्चस्वन्तःपुरुष आविवेशेत्येतदादि यथासूचितेन प्रतिवचनेन ॥ १२ ॥

सर्वे यजमानं पृच्छेयुः पृच्छामस्त्वा परमन्तं पृथिव्याः पृच्छामो यत्र भुवनस्य नाभिः पृच्छामस्त्वा वृष्णो अश्वस्य रेतः पृच्छामो वाचः परमं व्योमेति* ॥ १३ ॥

सर्वे ब्रह्मोद्यवक्तारो यजमानं पृच्छेयुः पृच्छामस्त्वा परमन्तं पृथिव्या इति यथासूचितं प्रश्नम् ॥ १३ ॥

तान् प्रति ब्रूयादियं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिरयꣳसोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योमेति* ॥ १४ ॥

तान् सर्वान् प्रति ब्रूयात् यजमानः इयं वेदिः परो अन्तः पृथिव्या इत्येतदादि यथासूचितेन प्रतिवचनेन ॥ १४ ॥

तस्य दक्षिणाः सहस्रं प्रथमेऽहनि दद्यात्तथोत्तमे* ॥ १५ ॥

तस्य अश्वमेधस्य दक्षिणा उच्यन्ते प्रथमेऽहनि सहस्रं दद्यात् तथोत्तमे सहस्रमेव दद्यात् परिभाषितमिदं संख्यामात्रे च दक्षिणागाव इति तस्य ग्रहणमनेकान् विकल्पानस्य वक्ष्यन्ते तस्य तस्य च स्यात् ॥ १५ ॥

मध्यमेऽहन्येकजनपदे यदब्राह्मणानां वित्तꣳ स्यात् तत् दद्यात्* ॥ १६ ॥

---

* द्राह्यायणोऽप्येवम्।

अयं राजानेकजनपदेश्वरस्तदेकस्मिन् जनपदेऽब्राह्मणानां वित्तं स्यात् तत् दद्यात् जनपदाः पञ्चालाः कुरवो मत्स्याः शूरसेनीयाः चेद्यमालवादयः ॥ १६ ॥

विजितस्य वा मध्ये यजेत* ॥ १७ ॥

अथवा न केवलं पृथिवीश्वरो राजाश्वमेधेन यजेत मण्डलेश्वरोऽपि यजेत यो यस्य देशो विजितः स्यात् स तस्य मध्ये यजेत ॥ १७ ॥

इति नवमस्य दशमी कण्डिका ।

---

अथ एकादशी कण्डिका ।

प्राचीꣳ होत्रे दिशं दद्यात् दक्षिणां ब्रह्मणेऽध्वर्यवे प्रतीचीमुदीचीमुद्गात्रे यदन्यत्क्षेत्राच्च पुरुषेभ्यश्चेत्युभयोर्विचारयोः† ॥ १ ॥

दक्षिणा उच्यन्ते अश्वमेधे विहिता पृथिवी दक्षिणा श्रूयते तद्यदि तावत्पृथिवीश्वरः साक्षात् पृथिवीमेव दद्यात् चतुर्द्धा कृत्वा यो न्यायो वक्ष्यते अथ मण्डलीकः स्यात् यस्य देशस्येश्वरस्तस्य मध्ये यजमानो मध्यमेऽहनि होत्रे प्राचीन्दिशं दद्यात् दक्षिणां ब्रह्मणे दद्यात् अध्वर्यवे प्रतीचीं दद्यात् उद्गात्रे उदीचीं दद्यात् यदन्यत्क्षे-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

त्राच पुरुषेभ्यश्चेति भूपुरुषवर्जमित्येतदुक्तं भवति भूमिश्च न देया पुरुषश्च पुरुषशब्देन जातिग्रहणं यत् तत्र राजगामिभोगफलं दद्यादित्येतदुक्तं भवति भूमिश्च न देया उभयोर्विचारयोरेतत् अस्मिंश्च कल्पे यच्चोक्तं मध्यमेऽहन्येकजनपदे यद्ब्राह्मणानां वित्तं स्यात् तत् दद्यादिति तत्र च ॥ १ ॥

यावद्वा ब्रूयुर्नेतोभूय इच्छाम इति* ॥ २ ॥

अपरो विकल्पः तावद्वा दानं स्यात् यावद्ब्रूयुर्नेतो भूय इच्छाम इति तृप्ताः स्म इति ॥ २ ॥

अष्टाचत्वारिंशतं वा मध्यतः कारिभ्यः सहस्राणि दद्यादेकैकस्मै चतुर्विंशतिमर्द्धिनीभ्यो द्वादशतृतीयिनीभ्यः षट्पादिनीभ्यः* ॥ ३ ॥

अपरः कल्प उच्यते अष्टाचत्वारिंशतं वा सहस्राणि मध्यतःकारिभ्यः एकैकस्मै दद्यात् चतुर्विंशतिमर्द्धिनीभ्यः चतुर्विंशतिसहस्राणि अर्द्धिनीभ्यो दद्यात् एकैकस्मा इति वर्त्तते द्वादश तृतीयिनीभ्यः तृतीयिनीभ्यो होत्राभ्यो द्वादशसहस्राणि दद्यात् षट् पादिनीभ्यः पादिनीभ्यो होत्राभ्यः एकैकस्मै षट्सहस्राणि दद्यात् उक्तं संख्यामात्रे च दक्षिणा गाव इति ॥ ३ ॥

अवराध्या एताः कामन्तु भूयसीर्दद्यात्* ॥ ४ ॥

य एते दक्षिणाविकल्पा उक्ताः एतेषामष्टाचत्वारिंशादयो

---

* द्राह्यायणोऽप्येवम् ।

दक्षिणा अवरार्ध्याः सर्वनिकृष्टाः भूयस्त्वे बहुत्वं कुतः पुनरियमाशङ्का यथा नियमिताभ्यो न अवरार्ध्या इति उच्यते उक्तमनेन यावद्वा ब्रूयुर्नैतो भूय इच्छाम इति तदेतस्मिन् विकल्पे अवरार्ध्या एवै-भ्योऽपि नैव दद्यात् अवरार्ध्या एताः ॥ ४ ॥

तस्य विकल्पाः* ॥ ५ ॥

तस्य अश्वमेधस्य विकल्पा वर्त्तिष्यन्त इति वाक्यशेषः ॥ ५ ॥

एतान्येव पञ्चदशस्तोमान्यहानि कल्पयेत् स पतन्तको-ऽश्वमेधः* ॥ ६ ॥

एतान्येव प्रथमकल्पितान्यहानि पञ्चदशस्तोमविकृतानि कल्प-येत् सपतन्तकोऽश्वमेधः श्रुत्यन्तरदृष्टः अश्वमेधग्रहणं किमर्थमिति उच्यते न तत्कर्मान्तरं द्रष्टव्यम् अश्वमेधविचारोऽश्वमेधेन यजेत योऽसौ प्रकृतोऽश्वमेधः संवत्सरमश्वस्य चारणकालः स विकल्प्यते ॥६॥

अर्द्धमासमश्वञ्चारयित्वैतेन यजेत* ॥ ७ ॥

अर्द्धमासमश्वं चारयित्वा एतेन पतन्तकेन यजेत ॥ ७ ॥

ज्योतिष्टोमो वै तस्यातिरात्रस्तृतीयमहः स्यात् तेन मासम्* ॥ ८ ॥

ज्योतिष्टोमो वा अतिरात्रः एतस्य पतन्तकस्य ॥ ८ ॥

गौर्वा तेन त्रीन्* ॥ ९ ॥

---

* द्राह्यायणेऽप्येवम् ।

गौर्वातिरात्रस्तृतीयमहः स्यात् तेन यजमानस्त्रीन्मासानश्वं चारयेत् ॥ ९ ॥

आयुर्वा तेन षट्* ॥ १० ॥

आयुर्वातिरात्र एतस्य पतन्तकस्य तृतीयमहः स्यात् तेन यजमानः षण्मासानश्वं चारयेत् ॥ १० ॥

प्राकृतस्य वैतेषामह्नां किञ्चित्तृतीयमहः स्यात्* ॥ ११ ॥

प्राकृतस्याश्वमेधस्य वा एतेषां ज्योतिष्टोमादीनां यथोद्दिष्टानां त्रयाणां किञ्चिदेकं तृतीयमहः स्यात् ॥ ११ ॥

विश्वजिदभिजिद्व्रताप्तोर्य्यामाणां वातिरात्राणामेव* ॥ १२ ॥

अथ वा प्राकृतस्यैव विश्वजिदादीनां यथोद्दिष्टानां किञ्चित् तृतीयमहः स्यात् अतिरात्राणामेव ॥ १२ ॥

तेषाꣳ स्तोमचोदनैव स्यात् यथा चतुष्टोमसर्वस्तोमयोस्त्रिरात्रेषु च तन्त्रविलोपो न विद्यते † ॥ १३ ॥

तेषां ज्योतिष्टोमादीनामप्तोर्यामान्तानां स्तोमचोदनैव स्यात् न द्रव्यचोदना यथा चतुष्टोमसर्वस्तोमयोः प्रत्यक्षशिष्टयोः स्तोमचोदनामात्रं भवति एवमेतेषां स्तोमचोदनामात्रं स्यात् किं कारणं यस्मात् त्रिरात्रेषु तन्त्रविलोपो न विद्यते ॥ १३ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतं तथा विशेषस्त्र कृतः ।

**स्वतन्त्रास्त्वेव स्युः कृतलक्षणा हि पुरस्ताच्चोद्यन्ते प्रत्यक्ष-विकारात् स्तोमचोदना चतुष्टोमसर्वस्तोमयोः* ॥ १४ ॥**

अथ यदुक्तं यथा चतुष्टोमसर्वस्तोमयोः प्रत्यक्षशिष्टयोः स्तोम-चोदनामात्रं भवति एवमेतेषां स्तोमचोदनामात्रं स्यात् किं कारणं यस्मात् त्रिरात्रेषु च तन्त्रविलोपो न विद्यत इति तन्न नत्वेवं स्यात् तुशब्दः पूर्वपक्षनिवृत्त्यर्थः यदुक्तं तेषां स्तोमचोदनैव स्यादिति तन्न स्वतन्त्रा एव स्युः किं कारणं यस्मात् पुरस्तात् कृतलक्षणा हि चोद्यन्ते तेषां कृतलक्षणं न चोद्यमानानां स्तोमचोदनामात्रं प्रतीयात् अथ यदुक्तं यथा चतुष्टोमसर्वस्तोमयोरित्यत्र ब्रूमः प्रत्यक्ष-विकारात् चतुष्टोमसर्वस्तोमयोः स्तोमचोदनामात्रं प्रतीयते प्रत्यक्ष-विकारः कृत एव मशकेन ॥ १४ ॥

**वचनात्तन्त्रविलोपो यथा जामिकल्पः सर्वस्वारे † ॥ १५ ॥**

अथ यदुक्तं त्रिरात्रेषु च तन्त्रविलोपो न विद्यत इत्यत्र ब्रूमः तन्त्रविलोपो वचनाद्भवति वचनं बलीयः न हि तदस्ति यद्वचनान्न भवति प्रत्यक्षशिष्टत्वात् ज्योतिष्टोमादीनां श्रुत्यन्तरे ॥ १५ ॥

इति नवमस्य एकादशी कण्डिका ।

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

अथ द्वादशी कण्डिका।

त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्न्याय* ॥ १ ॥

अश्वमेध उक्तः अनन्तरं वैदन्विरात्रादयः परिभाषासिद्धाः सर्वे यावज्जामदग्न्य इति, साम्प्रतं जामदग्निविशेषो विवक्षितः स उच्यते त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्न्यायेति त्रयोदश्यामिति तिथिनिर्देशः अपरपक्षस्येति सामान्यविधिप्राप्तस्य पूर्वपक्षस्य प्रत्याम्नायः दीक्षेतेति क्रियानिर्देशः जामदग्न्यायेति जामदग्न्यार्थं तादर्थ्ये चतुर्थी एष सूत्रार्थः जामदग्न्येन चतूरात्रेण यक्ष्यमाणस्त्रयोदश्यामपरपक्षस्य दीक्षेत ॥ १ ॥

तस्य विंशतिर्दीक्षा द्वादशोपसदः* ॥ २ ॥

तस्य जामदग्न्यस्य विंशतिः दीक्षा द्वादशोपसदः स्युः इह सामान्य परिभाषा पौर्णमासी दीक्षा मासापवर्गा अहीनाः तेषां द्वादशोपसदः षड़िति धानञ्जप्य इति तदिदं सर्ववचनात् विकल्प्यते ॥ २ ॥

तत्रोपसत्सु पृथग्घोमानध्वर्युर्जुहुयात् पुरोड़ाशांस्त उक्ता ब्राह्मणेन † ॥ ३ ॥

तत्रोपसत्सु पृथग्घोमाः पुरोड़ाशाः भवन्ति उक्तं जामदग्निब्राह्मणे पुरोड़ाशिन्य उपसदो भवन्तीति तत्तस्मिन् जामदग्न्य उपसदिष्टिः पृथग्घोमाः पुरोड़ाशा भवन्ति पृथक्शब्दो नानार्थवाची

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणोऽप्येवम्।

नाना उपसदानि प्रधानानि पृथग्घोमा एव ते भवन्ति तानध्वर्यु- र्जुहुयात् पुरोडाशान्ते ब्राह्मणेनैवोक्ताः आग्नेय एककपाल इत्ये- तदादयो द्वादशकपालान्ताः अध्वर्युग्रहणं छान्दोग्य आम्नानात् तेषां पवमानादेवक्षोष्णतुसौ स्यातां पौर्वाह्णिक्याम् उपसद्यामाप- राह्णिक्याञ्च ॥ ३ ॥

समानदेवतौ पूर्वाह्णापराह्णयोः* ॥ ४ ॥

समानदेवतौ तुल्यदेवतौ पुरोडाशौ स्यातां पूर्वाह्णिक्यामुप- सदि आपराह्णिक्याञ्च ॥ ४ ॥

अग्नेर्वैहोत्रमित्येतत्प्रभृतय एषाᳫं होमाः* ॥ ५ ॥

अग्नेर्वैहोत्रमित्येतदादिभिर्यथाम्नातैर्मन्त्रैः अनुपूर्वं होमा भवन्ति एकैकेन मन्त्रेण एकैकः पुरोडाशो हूयते ॥ ५ ॥

तस्यावभृथादुदेत्य द्वादशाहमिष्टिभिर्यजेत* ॥ ६ ॥

तस्य जामदग्नस्यावभृथादुदेत्य द्वादशाहमिष्टिभिर्यजेत तस्येति पुनःशब्दो नियमार्थः नासौ सामान्येन विधिना विकल्पिते निय- मार्थः तस्यशब्दः ॥ ६ ॥

तास्वेतएव प्रतिलोमाः पुरोडाशाः* ॥ ७ ॥

तास्विष्टिषु एत एव पुरोडाशा ये उपरिष्टात् उक्तास्ते स्युः तेनैव विधिना समानदेवतौ पूर्वाह्णापराह्णयोरिति अयन्तु विशेषः प्रति-

---

* द्राह्यायणेऽप्येवम् ।

लोमा द्वादशकपालादयः एककपालान्ताः न मन्त्रैः प्रातिलोम्यम् अयं दीक्षोपसन्नियमो विंशतिः दीक्षा द्वादशोपसद इति सम्पदर्थः उक्तं ह्यस्य ब्राह्मणे जगतीच्छन्दोभिः सम्पद्यत इति न दीक्षाभिरुपसद्भिः उपरिष्टात् द्वादशभिरिष्टिभिः जगती सम्पद्यते कथं पुरोडाशैरुपसत्सु च चतुर्विंशतिरन्त्याखिष्टिषु चतुर्विंशत्येव जगती सम्पद्यते ॥ ७ ॥

वसिष्ठस्य जनित्रे भवत इति सꣳसर्पस्य चतुर्थेऽहनि बृहत्यनुष्टुभोः पृथगनुपूर्वमनुकल्पयेच्चतुर्थꣳ हि जनित्रस्थानम्* ॥ ८ ॥

उक्तं वसिष्ठस्य जनित्रे भवत इति ते कल्पयत्याचार्य्यः संसर्पस्य क्रतोः चतुर्थेऽहनि बृहत्यनुष्टुभोः पृथग्ज्ञाना अनुपूर्वम् अनुकल्पयेत् बृहत्यां पूर्वम् अनुष्टुभि उत्तरं यस्माच्चतुर्थमहर्जनित्रस्य स्थानम् ॥ ८ ॥

तयोर्विकल्पः स्यादार्षेयकल्पेन † ॥ ९ ॥

वसिष्ठस्य जनित्रे मशकेनानुकल्पिते तयोराचार्य्यकल्पेन विकल्पः स्यात् न तयोर्नियमः ॥ ९ ॥

पञ्च शारदीये पशुबन्धैर्यजेत सप्तम्यामष्टम्यां वाश्वयुजीपक्षेषु ‡ ॥ १० ॥

पञ्च शारदीये विशेष उच्यते तस्मिन् पञ्च शारदीये ब्राह्मणेन

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतं तथा विशेषस्य कृतः ।

पशव आम्नाताः सप्तदश पृश्नीनुक्ष्णः पञ्चवर्षानित्येवमादयः तेषां विधिविशेष उच्यते पञ्चशारदीये क्रतौ प्रतिसंवत्सरं पशुबन्धैर्यजेत सप्तम्याम् अष्टम्यां वाश्वयुजीपक्षेषु ॥ १० ॥

वत्सतरीरेवालभेरन्नुक्ष्णो विसृजेयुः* ॥ ११ ॥

उक्तं सप्तदश पृश्नीनुक्ष्णः पञ्चवर्षान् सप्तदश पृश्नीस्त्रिवत्सा अप्रवीतास्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्तीति तत्रायं संशयः केऽत्रालब्धव्याः के चोत्स्रष्टव्या इति तदयमाचार्यो विशिष्टवत्सतरीरेवालभेरन्नुक्ष्णो विसृजेयुः यास्तत्र वत्सतर्य्यस्ता आलब्धव्याः ये उक्षाणस्ते उत्स्रष्टव्याः तेषामालम्भनं सोमे भविष्यति ॥ ११ ॥

तेषां यावन्तो भ्रेषमापद्येरꣳस्तावतोऽन्यानयजुष्कृतानपि सृजेयुस्तथारूपाꣳस्तावद्वर्षान्* ॥ १२ ॥

पठितं यदि रुद्रीभिः मन्येताग्नये रुद्रवते पुरोडाशमष्टाकपालं निरूप्याथान्यमालभेत इत्येवमादयोभ्रेषाः पठिताः अन्येषां चालम्भनं तेषामुत्सृष्टानां उक्ष्णां यावन्तो यावत्परिमाणाः भ्रेषमापद्येयुः तावन्तः अन्यानयजुष्कृतान् अकृतसंस्कारान् तेष्वपि सृजेयुः तद्रूपास्ते पृश्निः चित्राः अप्रवीताः अनामिताः नवनीतवच्चित्रा राजीवा पद्मवच्चित्रा सारङ्गोवर्णान्तराधध्वस्ताः पिशङ्गो मांसवर्णाः अरुणा गरुड़कपिला भ्रेषमापन्नाः यद्रूपानेव यावद्वर्षास्तावद्वर्षानेव च ॥१२॥

---

* द्राह्यायणोऽप्येवम् ।

षष्ठ्यां शरदि कार्त्तिके मासि यजेत* ॥ १३ ॥

पञ्चसु संवत्सरेषु गतेषु या षष्ठी शरत् तस्यां कार्त्तिके मासि पञ्चशारदीयेन यजेत ॥ १३ ॥

तस्य द्वादशोपसदः* ॥ १४ ॥

तस्य पञ्चशारदीयस्य द्वादशोपसदः स्युः षड़िति धानञ्जप्यः इत्येतन्निवर्त्तयति ॥ १४ ॥

तृतीये षड्रात्रे पञ्चमस्याह्नः प्रत्यवरोहीण्युक्थानि स्युरित्याचार्य्या अभ्यासंग्योस्तत्र यथा देवानां पञ्चरात्रे † ॥१५॥

द्वौ षड़हौ परिभाषितौ कृतौ षड़ह आयुःकामषड़हस्य तृतीये किञ्चिद्विवचितं तदुच्यते तत्र पठति अभ्यासङ्ग्यः पञ्चाह इति तृतीये षड्रात्रे पञ्चमस्याह्नः प्रत्यवरोहीण्युक्थानि स्युरिति एवमाचार्य्या मन्यन्ते कस्मात् यस्मादत्राभ्यासङ्ग्यस्योद्यते यथा देवानां पञ्चरात्रे तत्र पञ्चमेऽहनि प्रत्यवरोहीण्युक्थानि तस्मादिहापि तथैव स्यात् अभ्यासङ्ग्यातिदेशात् ॥ १५ ॥

रात्रिकारितस्तत्र प्रत्यवरोह इति गौतमस्त्रयस्त्रिंशान्येव स्युरिति ‡ ॥ १६ ॥

गौतम आचार्य्य आह देवानां पञ्चरात्रे पञ्चमेऽहनि रात्रिर्भवति

---

* द्राह्यायणेन सूत्रदयेनैकसूत्रं कृतम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणेनैतेन सूत्रदयं कृतं तथा विशेषस्य कृतः ।

तत्कारितस्तत्र प्रत्यवरोहः इह पुनः पञ्चममहः उक्थसंस्थम् एव भवति तस्मात् तत्र त्रयस्त्रिंशान्येव स्युरिति यातु प्रत्यवरोहस्य निमित्तं रात्रिः सा विश्वजिति करिष्यति तत्र प्रत्यवरोहो भविष्यति ॥ १६ ॥

**सप्तरात्राणां प्रथमस्यातिरात्र एकविꣳशान्युक्थानि स्युर्ज्योतिष्टोमप्रदेशात् ज्योतिष्टोमप्रदेशात्* ॥ १७ ॥**

सप्तरात्राणां प्रथमे पठति पृष्ठ्यः षड़हो महाव्रतमतिरात्र इति तत्रायं संशयः महाव्रते किमुक्थानि व्रतस्तोममनुवर्त्तताम् अथैकविंशस्तोमानि भवन्ति एतस्मिन् संशये अयमाचार्य्य आरभते सप्तदशरात्राणां प्रथमस्यातिरात्र एकविंशान्युक्थानि स्युरिति यस्मात् ज्योतिष्टोमप्रदेशः क्रियते तस्य ज्योतिष्टोमोऽतिरात्रः षोड़शिमानिति शेषा अहीनाः परिभाषासिद्धा यावत्पौण्डरीक इति ॥ १७ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतं तथा विशेषश्च कृतः ।

इति नवमस्य द्वादशी कण्डिका ।

इति नवमः प्रपाठकः समाप्तः ।

## दशमः प्रपाठकः ।

### अथ प्रथमा कण्डिका ।

दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुः* ॥ १ ॥

अहीनानन्तरं सत्राणि वक्तव्यानि तानि विवक्षुराचार्य्यः परिभाषामारभते दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्षउपपादयेयुरिति दीक्षा च क्रयश्च प्रसवश्च उत्थानञ्च दीक्षाक्रयप्रसवोत्थानानि तस्मिन्नहनि दीक्षेरन् यथैतानि सर्वाणि पूर्वपक्षे भवन्ति सर्वशब्दो निरवशेषवाची ॥ १ ॥

तेषामेकस्यानुपपत्तौ क्रयोऽपरपक्षे स्यात्* ॥ २ ॥

तेषां दीक्षादीनामेकस्यानुपपत्तौ क्रयः अपरपक्षे स्यात् अनुपपत्तिरसामर्थ्यं कालस्य सम्पादने ॥ २ ॥

प्रसवश्च यदि द्वे* ॥ ३ ॥

यदि द्वे न सम्भवेयातां प्रसवश्च अपरपक्षे स्यात् क्रयश्च इति प्रकृतम् ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम् ।

त्रिषूत्थानमेव पूर्वपक्षे स्यात्* ॥ ४ ॥

त्रिष्वनुपपद्यमानेषु उत्थानमेव पूर्वपक्षे स्यात् एषामुदाहरणमात्रमुच्यते क्षुल्लके द्वादशाहे तथा विश्वसृजामयने सप्तत्रिंशत्समाख्ये चत्वारि स्युः यथाक्रमं क्षुल्लकतापश्चिते तावद्दीक्षाक्रयप्रसवोत्थानानि सर्वाणि पौर्णमास्यां दीक्षितानां पूर्वपक्षे उपपद्यन्ते द्वादशाहे पूर्वपक्षस्य सप्तम्यां दीक्षित्वा द्वादशदीक्षास्ततः अपरपक्षस्य चतुर्थ्यां क्रयः सम्पद्यते एवं दीक्षाक्रयप्रसवोत्थानानि त्रीणि पूर्वपक्षे सम्पद्यन्ते विश्वसृजामयने पूर्वपक्षस्य षष्ठ्यां दीक्षित्वा अपरपक्षस्य तृतीयायां क्रयः सम्पद्यते अमावस्या प्रसवे सहस्रसंवत्सर इति सप्तत्रिंशद्रात्रेषु व्रतवत्सु सर्वेष्वमावास्यायां दीक्षित्वा तस्मिन् काले सह सुत्याभिः षड़हानि सम्वत्सरादधिकानि कृत्वोत्तिष्ठेयुरिति अमावास्यायां दीक्षितानां दीक्षाक्रयप्रसवा अपरपक्षे भवन्ति उत्थानमेव केवलं पूर्वपक्षे सम्पद्यते ॥ ४ ॥

तेषां द्वादशदीक्षास्तथोपसदोऽनादेशे* ॥ ५ ॥

तेषां सत्राणां द्वादशदीक्षाः स्युः तथोपसदो द्वादशैव अनादेशे तेषां ग्रहणं त्रिषूत्थानमेव पूर्वपक्षे स्यादेतदनन्तरम् आदेशः मासं दीक्षिता भवन्ति संवत्सरमुपसद्भिश्चरन्ति ॥ ५ ॥

सांवत्सरिकेभ्यश्चोर्द्ध्वं दीक्षाणां यथाकामी † ॥ ६ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

सांवत्सरिकेभ्यस्तु सत्रेभ्य ऊर्द्धं दीक्षाणां यथाकामो स्यात् याथाकाम्यमिष्टतः प्रवृत्तिः सांवत्सरिकानि गवामयनादीनि सत्राणि॥६॥

**प्रथमे पञ्चदशरात्र एकान्नविंशतिर्दीक्षा इति धानञ्जप्य एकाष्टका महाव्रतममावास्यातिरात्र इति ह्याहेति* ॥ ७ ॥**

प्रथमे पञ्चदशरात्रे एकान्नविंशतिः दीक्षाः स्युः इत्येवं धानञ्जप्य आचार्य्य आह एवं हि ब्राह्मणमाह एकाष्टकामहाव्रतमभावास्यातिरात्र इति एवं क्रियमाणे एष कल्पः सम्पद्यते पौर्णमास्यां दीक्षितानां एकान्नविंशतिः दीक्षाः कृत्वा पूर्वपक्षस्य चतुर्थ्यां क्रयः ततः अपरपक्षस्य प्रतिपद्यतिरात्रं कृत्वा षड़हङ्कृत्वा अष्टम्यां महाव्रतं ततः पुनः षड़हं कृत्वा अमावास्यायामतिरात्रः ॥ ७ ॥

**अष्टादशेति गौतमः पौर्णमास्यतिरात्र इति ह्याहेति* ॥८॥**

गौतम आचार्य्य आह अष्टादशदीक्षाः स्युरिति यस्मादेवं ब्राह्मणमाह पौर्णमास्यतिरात्र इति अत्रापि पौर्णमास्यां दीक्षितानां अष्टादशदीक्षाः कृत्वा तृतीयायां पूर्वपक्षस्य क्रयो भवति ततः पौर्णमास्यां प्रायणीयोऽतिरात्रः ततः षड़हं कृत्वा सप्तमीं लङ्घयित्वा अष्टम्यां महाव्रतं कृत्वा अमावास्यायामतिरात्रः नलेषन्यायो युक्तः न हि लङ्घनमह्नो युक्तं सन्तानविरोधात् तस्मात् न्यूनमपरपक्षं विधाय कल्पं कुर्य्यात् ॥ ८ ॥

**जातिकल्पो वा* ॥ ९ ॥**

---

* द्राह्यायणोऽप्येवम् ।

जातिकल्पो वा स्यात् दीक्षोपदां जातिकल्पस्तु तेषां द्वादश-दीक्षास्तथोपसदोऽनादेश इति ॥ ९ ॥

षोडशरात्रप्रभृतीनि त्रिंशद्रात्रान्तान्यष्टादशदीक्षाण्यै-कान्नपञ्चाशद्रात्राणि च* ॥ १० ॥

षोडशरात्रादारभ्य यावत् त्रिंशद्रात्रमिति एतानि सर्वाण्यष्टा-दशदीक्षाणि स्युः एकान्नपञ्चाशद्रात्राणि च सर्वाणि अष्टादशदीक्षाणि स्युः एतेषां सर्वेषां पौर्णमासी दीक्षा क्रयप्रसवोत्थानानि सर्वाणि पूर्वपक्षे सम्पद्यन्ते ॥ १० ॥

द्वादशाहप्रभृतीनि सत्राणि* ॥ ११ ॥

द्वादशाहप्रभृतिसत्रस्यारभन्ते प्रभृतिशब्दः आदौ वर्त्तते इदं हि द्वादशाहप्रकरणं तेनारभ्यते द्वादशाहप्रभृतीनीति विशेषश्च विव-क्षितः ॥ ११ ॥

तेन यजेताप्यहीनभूतेनाहीनलिङ्गानि ह्यस्मिन् ब्राह्मणं दर्शयति यथैकदीक्षणम् † ॥ १२ ॥

तेन द्वादशाहेनाप्यहीनभूतेन यजेत अपि सत्रभूतेन अपिशब्दः अप्यहीनभूतेन यजेत किं पुनः सत्रभूतेनेति यस्मात् अस्मिन्नहीन-लिङ्गानि ब्राह्मणं दर्शयति यथा एको वा दीक्षेतेति यद्वारीवितेना-हीनानीति यजमानं वा अनुप्रतिष्ठन्तमित्येवमादीनि ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतं तथा विशेषश्च कृतः ।

प्रथमेऽहन्याचारं ब्रह्मसाम कुर्वन्नौधसस्यर्चु कुर्यात्* ॥ १३ ॥

यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यादाचारं ब्रह्मसाम कुर्वीतेति तदाचारं प्रथमेऽहनि ब्रह्मसाम कुर्वन्नौधसस्यर्क्षु कुर्य्यात् ॥ १३ ॥

तस्यौष्णिहमेकाक्षरणिधनꣳस्थाने स्यान्नौधसं वा †॥१४॥

तस्याचारस्य यत्किञ्चिदौष्णिहं साम एकाक्षरणिधनं स्यात् आचारं ह्येकाक्षरणिधनं नौधसं वा तस्य स्थाने स्यात् ॥ १४ ॥

अनाचारस्तूष्णिक्तु बार्हतानामनेकाक्षरणिधनानि चात्र भूयिष्ठानि सामानि † ॥ १५ ॥

नन्वेवं स्यादनाचारस्तूष्णिक्तु बार्हतानां अक्रिया किञ्च अनेकाक्षरणिधनानि चात्र उष्णिहि दृश्यन्ते भूयिष्ठानि सामानि क्रियमाणानि ॥ १५ ॥

तत्र पौष्कलं कुर्यात् ज्योतिष्टोमप्रायाणि ह्यत्र सामानि† ॥ १६ ॥

तत्र तस्यामुष्णिहि पौष्कलं कुर्य्यात् यस्मात् तस्मिन्नहनि ज्योतिष्टोमप्रायाणि सामानि प्रायेण ज्योतिष्टोमसामानि ॥ १६ ॥

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

इति दशमस्य प्रथमा कण्डिका।

अथ द्वितीया कण्डिका ।

**शर्करीषु षोड़शिना स्तुवीतेति गौरीवितं महानाम्नीषु स्यादृक्‌चोदना हि तत्प्रकरणे* ॥ १ ॥**

षोड़शिप्रकरणे चतुर्थेऽहनि पठति गौरीवितमधिकृत्य शर्करीषु षोड़शिना स्तुवीतेति तत्रायं संशयः किमत्र शर्कर्य्यः गौरीवितस्य ऋचस्तोद्यन्ते अथ सामचोदनैवेयम् इति कुतः पुनरयं संशयः चोदनात् एव शर्करीषु षोड़शिना स्तुवीतेति अधिकरणे पक्षेण सप्तमी श्रूयते शर्करीषु ऋक्षु गौरीवितेन साम्ना स्तुवीरन्निति अथ दृष्टा एता महानाम्न्यः षोड़शिसामेति कृत्वा अग्निः सामचोदनेति ऋगभिराश्रयेण साम्न आश्रयेण च चोदनेति संशये आचार्य्य इदं सूत्रमारभते शर्करीषु षोड़शिना स्तुवीतेति यदेतद्ब्राह्मणं तत्र गौरीवितं महानाम्नीषु ऋक्षु स्यात् किं कारणं तस्य प्रकरणे यस्मादृक्‌चोदना ॥ १ ॥

**महानाम्न्यस्त्वेव षोड़शिसाम स्युर्नह्येतास्वन्यत्सामापद्यते* ॥ २ ॥**

तुशब्दः पक्षनिवृत्त्यर्थः यदुक्तं गौरीवितं महानाम्नीषु स्यादिति तत्र महानाम्न्य एव षोड़शिसाम स्युः यस्मादेतासु न कदाचिदपि अन्यत्सामापद्यते अन्यासु ऋक्षु दृश्यन्ते अन्यानि सामानि आपद्यमानानि एतासु न कदाचिदप्यन्यत्सामापद्यते ॥ २ ॥

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अपि ह पृष्ठस्तोत्रीयेषु परोक्षाणि कुर्वन्नैतासु नित्यवत्साः करोति* ॥ ३ ॥

अपिह मशकाचार्य्यः पृष्ठस्तोत्रीयेषु परोक्षाणि कल्पयन् पञ्चमात्परोक्षाणि प्रत्यक्षाणि प्रत्यक्षेषु पृष्ठस्तोत्रीयेषु कल्पयति पाञ्चमिकं परोक्षं नित्यवत्साः नैतासु करोति एतमेव न्यायमनुपश्यन् ॥३॥

कृतास्त्वेतस्मिंस्थाने वज्रस्य* ॥ ४ ॥

कृता महानाम्न्यः षोड़शिसाम वज्रस्य न ह्येतास्वन्यत्साम किञ्चिद्दृष्टं प्रतीयते दृष्टप्रत्ययोन्यायतस्तस्मान्महानाम्न्य एव षोड़शिसाम स्युः न तासु गौरीवितं स्यात् ॥ ४ ॥

विराट्स्वनुष्टुप्सु च गौरीवितमेव स्यात्स्वारप्रायाणि हि षोड़शिसामानि † ॥ ५ ॥

विराट्स्वनुष्टुप्सु चोद्यमानं गौरीवितमेव स्यात् यस्मात्स्वारप्रायाणि हि षोड़शिसामानि दृष्टानि आसितादीनि ॥ ५ ॥

शर्क्करीणां काम्यानि निधनानीड़ास्थानेषु स्युरित्याचार्य्यास्तद्धि भूयिष्ठम्* ॥ ६ ॥

शर्क्करीणां काम्यानि निधनानि चोदितानि गायत्रमयनं स्वर्णिधनं ब्रह्मवर्चसकामस्य त्रैष्टुभमयनमथकारनिधनमोजस्कामस्य जागतमयनमिड़ानिधनं पशुकामस्य इति तदेतेषां निधनानां

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

किं स्थानमिति उच्यते यावत्य इड़ा महानाम्नीषु तासां स्थानेऽप्येतानि निधनानि स्युरिति तस्माद्भूयिष्ठं निधनमिड़ामहानाम्नीषु ॥६॥

**ऊधःस्वेवेति गौतमधानञ्जप्यावत्र हि निधनवादं वदति* ॥ ७ ॥**

गौतमधानञ्जय्यावाचार्य्यावाहतुः एतानि काम्यानि निधनानि ऊधःस्वेव स्युः यस्मादेतस्मिन्निधनवादं वदतीति इड़े अभितोऽथकारमिति एतदधिकृत्य काम्यानि निधनानि पठन्ति ॥ ७ ॥

**अथकारस्थान इति शौचिवृक्षिरेवमल्पीयान् विकारः † ॥ ८ ॥**

शौचिवृक्षिराचार्य्य आह अथकारस्थाने काम्यानि निधनानि स्युरिति एवं क्रियमाणे अल्पीयान् विकारो भवति ऊधःसु क्रियमाणेष्वनल्पो विकारो भवति अथकारस्थाने च क्रियमाणे अल्पीयान् विकारो भवति ॥ ८ ॥

**अनियमात्सर्वेषु निधनस्थानेष्विति कौत्सः ‡ ॥ ९ ॥**

कौत्स आचार्य्य आह न नियमितममुष्य निधनस्य स्थाने काम्यानि निधनानि स्युरिति अतः अनियमात्सर्वेषु निधनस्थानेषु स्युरिति ॥ ९ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणीये विशेषोऽस्ति ।

उत्तमया स्तोत्रीयया संयुक्तं पुरीषमानन्तर्यादिति धानञ्जय्यः* ॥ १० ॥

तिस्रः स्तोत्रीयाः पठित्वा पुरीषं पठति तत्किं पुरीषं महानाम्नीषु सकृत्प्रयोक्तव्यम् अथ पृथगेव तदिति उच्यते उत्तमया स्तोत्रीयया संयुक्तं पुरीषम् आनन्तर्य्याद्धेतोस्तस्मिन् संयोज्यम् उत्तमया सह युज्येत यावत्कृत्व उत्तमता प्रयुज्यते तावत्कृत्वः पुरीषाणि प्रयुज्यन्ते ॥ १० ॥

शर्करीभिः स्तुत्वेत्यपवर्ज्य पुरीषेणेत्याह तस्मादसंयुक्तं स्यात् † ॥ ११ ॥

शर्करीभिः स्तुत्वा पुरीषेण स्तुवते पशवो वै शर्कर्य्योगोष्ठः पुरीषमिति ब्राह्मणं शर्करीभिस्तुत्वेत्यपवर्ज्य अपवर्गं कृत्वा समाप्तिं कृत्वा पुरीषेणेत्याह तस्मादसंयुक्तं स्यात् सकृत्कुर्य्यादित्यर्थः ॥ ११ ॥

पर्य्यायान्ते स्यात् स्तोत्रान्ते वा ‡ ॥ १२ ॥

पुरीषप्रयोग इति शेषः ॥ १२ ॥

पञ्चमेऽहनि रायोवाजीयं ब्रह्मसाम कुर्वंस्तस्य स्थाने कुर्यात् यत् कल्पवृत्तेनोपपन्नम् † ॥ १३ ॥

उक्तं बार्हद्गिरं ब्राह्मणाय रायोवाजीयं वैश्यायेति तत् यदा

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेऽप्येवम् ।

‡ द्राह्यायणीये एतन्नास्ति ।

पञ्चमेऽहनि रायोवाजीयं ब्रह्म साम स्यात् तत् कुर्वन् तस्य स्थाने कुर्य्यात् यत् कल्पवृत्तेनोपपन्नं तदेतत् कल्पवृत्तं साम यदरण्ये गेयम् अथवा कल्पेन च वृत्तेन च वृत्तं छन्दः ॥ १३ ॥

बार्हद्गिरं कुर्यादरण्ये गेयꣳ हि सच्छन्दस्यञ्च समाने चाहनि दृष्टम्* ॥ १४ ॥

बार्हद्गिरमेव कुर्य्यात् ब्रह्मसाम यस्मादरण्ये गेयं तत् सच्छन्दस्यञ्च तस्मिन्नेवाहनि दृष्टं तदेव कल्पवृत्तेनोपपन्नम् ॥ १४ ॥

पार्थुरश्मं कुर्वन् बार्हद्गिरस्यर्क्षु कुर्यादृचामसञ्चाराय† ॥ १५ ॥

पार्थुरश्मं ब्रह्मसाम कुर्वन् बार्हद्गिरस्यर्क्षु कुर्य्यात् ऋचामसञ्चारार्थं यदि हि स्वासु कुर्य्यात् ऋचां सञ्चारः स्यात् अतएव रायोवाजीयं करिष्यन्ते ॥ १५ ॥

इति दशमस्य द्वितीया कण्डिका ।

---

अथ तृतीया कण्डिका ।

दशमस्याह्नोऽनङ्गमेके मानसं ब्रुवते वहिष्पत्नीसंयाजत्वादस्तोत्रस्थानꣳ हि* ॥ १ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

गवामयनप्रकरणे द्वादशाहस्य दशाहानि भवन्तीत्येवमधिकृत्याह अथैतत् दशममहरिति तस्मिन्नधिकरणे मानसम्पठति तत्रायं संशयः किमेतन्मानसं दशमस्याङ्गम् अथानङ्गमिति कुतः पुनरयं संशयः अङ्गमनङ्गमिति तत्कारणमस्मिन्नेव वक्ष्यते अथाङ्गमनङ्गमिति किं पुनरेतस्याश्चिन्तायाः प्रयोजनं यद्यनङ्गं ततः को विशेषः स्यादिति उच्यते मशकेन द्वादशाहविचारेषु अथापरे दश भवन्ति यथा स्तोमं प्रथममहस्तथा स्तोमोऽयं सर्वो दशरात्रः स्यात् तेन तेजस्कामो ब्रह्मवर्चसकामो वा यजेतेति एवं द्वितीयादिष्वहःसु येस्तोमास्तैः प्रतिकाममेकैकेन स्तोमेन सर्वाणि दशाहानि भवन्ति तद्यदि तावन्मानसं दशमस्याङ्गं ततस्त्रिवृदादिभिः स्तोमैः प्रतिकल्पं मानसेनापि भवितव्यं तथा दाशमिकेन स्तोमेन दशरात्रे क्रियमाने मानसेनापि स्तोमेनात्र भवितव्यम् अथ पुनरनङ्गं ततः मानसिकेन स्तोमेन नात्र भवितव्यं सोऽयमाचार्य्य एवमर्थं परिविवक्षुः पुनरारभते दशमस्याङ्गोऽनङ्गमिति दशमस्याङ्गः एके आचार्य्याः मानसम् अनङ्गं ब्रुवते गुणप्रधानमेकदेशोऽङ्गम् अवयवद्भूत्येकोर्थः न अङ्गम् अनङ्गं कस्मादनङ्गं ब्रुवते बहिष्पत्नीसंयाजत्वादेते यस्मात् पत्नीसंयाजेभ्यो बहिरेतत् अस्तोत्रस्थाने ह्येतत् स्तोत्राणि सर्वाणि प्राक् पत्नीसंयाजेभ्योऽपवृज्यन्ते ऊर्द्ध्वं पत्नीसंयाजेभ्यः स्तोत्रानामप्रवृत्तिः तस्मादनङ्गम् ॥ १ ॥

अग्निष्टोमावभित इति* ॥ २ ॥

---

* द्राह्यायणोऽप्येवम्।

द्वादशाहब्राह्मणं अष्टौ मध्य उक्थ्या अग्निष्टोमावभित इति यदि हि मानसं दशमस्याङ्गमभविष्यत् अग्निष्टोमत्वेन तस्यापवर्णनं नाभविष्यत् दशमस्य मानसं हि तत्त्रयोदशं स्तोत्रं तत्र दशममहरत्यग्निष्टोमोऽभविष्यत् ॥ २ ॥

अवयवेन चास्य सर्गं वदति* ॥ ३ ॥

किञ्चान्यत् अस्य मानसस्य अवयवेन एकदेशेन सर्गं वदति सर्गः सृष्टिरित्यनर्थान्तरम् इह स्तोत्राणां सर्वेषां आत्माभ्यासक्रिया अस्य पुनर्मानसस्य अवयवेन एकदेशेन क्रियां वदति मनसोऽपावर्तयति मनसा हिङ्करोति मनसा प्रस्तौति मनसोद्गायति मनसा प्रतिहरति मनसा निधनमुपयन्तीति एवं एभिः कारणैरनङ्गं सदित्युच्यते ॥३॥

अङ्गन्तु स्यादधिकृत्याम्नानात्* ॥ ४ ॥

तु शब्दः पक्षं व्यावर्तयति यदुक्तं दशमस्याङ्गः अनङ्गं मानसमिति तन्न अङ्गमेव स्यात् यस्मादधिकृत्य दशममहः मानसमाम्नातं कथमनङ्गं स्यात् ॥ ४ ॥

अस्तोत्रस्थानमित्येकस्तोत्रस्यापि स्वातन्त्र्यं न विद्यते* ॥ ५ ॥

न हि कदाचित् पश्यामः एकस्तोत्रस्य स्वतन्त्रभावो वर्तमानः तस्मादस्तोत्रस्थानमित्याह ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम् ।

**अग्निष्टोमावभित इति वादमात्रं यथा यदुक्थ्यो यज्ञक्रतोरनन्तरयायेत्यतिरात्रस्य गवामयने* ॥ ६ ॥**

अथ यदुक्तमग्निष्टोमावभित इति चाहेत्यत्र ब्रूमः वादमात्रमेतत् यथा गवामयने अतिरात्रस्य वादमात्रं ज्योतिष्टोमो भवति यज्ञमुखं तदृध्नुवन्ति यदुक्थ्यो यज्ञक्रतोरनन्तरयाजेति न कदाचित् ज्योतिष्टोमः उक्थ्यः प्रायणीयो भवति गवामयने उक्थ्यानि दृष्ट्वा वादमात्रं प्रवृत्तं एवमेतद्वादमात्रं अग्निष्टोमावभित इति ॥ ६ ॥

**नच सर्गावयवादधिकृत्याम्नातमनङ्गं स्यात् यथा रथन्तरं ज्योतिष्टोमस्य* ॥ ७ ॥**

यदुक्तं अवयवेन चास्य सर्गं वदतीत्यत्र ब्रूमः अहेतुरयं न हि अधिकृत्याम्नातं सर्गावयवमात्रादनङ्गं स्याद्यथा रथन्तरं ज्योतिष्टोमस्य ज्योतिष्टोममधिकृत्य आम्नातं रथन्तरं सावाग्रथन्तरमन्वपद्यतेत्येकदेशाम्नानात् न हि रथन्तरं ज्योतिष्टोमस्य अनङ्गं भवति प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तूष्णीं मनसा ध्यायेत् तस्य यन्मनस्यासीत् तद्बृहत्समभवत्स आदीधीत गर्भो वै मेऽयमन्तर्हितस्तं वाचा प्रजनया इति स वाचं व्यसृजत सा वाग्रथन्तरमन्वपद्यतेति एवमेते हेतवः प्रसक्तास्तस्मादङ्गमेव मानसं स्यात् दशमस्येति ॥ ७ ॥

**अतिरात्रयोः षोडशिन्यनादिष्टे प्रतिषिद्धेवा क्रियमाणे**

---

* द्राह्यायणोऽप्येवम्।

**यत्र विराडुपपद्येत कुर्य्यादेनं तत्रेत्याचार्य्या द्वादशाहे हि क्रियते न गवामयने तत्र तथोपपद्यते* ॥ ८ ॥**

इह सत्रेषु प्रायणीयोदयनीयावतिरात्रौ पठति तत्र कस्मिंश्चित् षोड़शिनमादिशति कस्मिंश्चित्प्रतिषेधति यत्र पुनर्नादेशो न प्रतिषेधः तत्र कथं षोड़शी कर्त्तव्यो न कर्त्तव्य इत्येतस्मिन्नर्थे आचार्य्यः परीक्षामारभते अतिरात्रयोः प्रायणीयोदयनीययोः षोड़शिनि अनादिष्टे अप्रतिषिद्धे क्रियमाणेऽस्मिन्यत्र विराट् उपपद्यते कुर्य्यादेनं षोड़शिनं तत्र इत्याचार्य्या आहुः यस्मात् द्वादशाहे क्रियते न गवामयने तत्र तथोपपद्यते तत्र तयोर्द्वादशाहगवामयनयोः क्रियमाणे चाक्रियमाणे च षोड़शिनि विराडुपपद्यते तत्र दशाहे यदि षोड़शि क्रियते अतो विराट् सम्पद्यते गवामयने क्रियमाणे प्रायणीयोदयनीययोरतिरात्रयोः षोड़शिनि विराट् सम्पद्यते ॥ ८ ॥

**अकारणन्तु सम्पद्बहवो ह्यविराट् सम्पन्नाः कारणञ्चापूर्वस्य विधेर्न विद्यते* ॥ ९ ॥**

प्रतिपक्षे यदुक्तं सम्पत्कारणं षोड़शिन इति तत्र न कारणम् अकारणम् अनिमित्तं सम्पत् हेतुः निमित्तं प्रमाणं कारणमित्यनर्थान्तरं बहवो ह्यविराट्सम्पन्नाः बहवो हि यज्ञा न विराट् सम्पन्नाः किञ्चान्यत्कारणमपूर्वस्य विधेर्न विद्यते अपूर्वस्य प्रथमौत्पत्तिकस्य विधेः कारणं न विद्यते यस्मात् द्वादशाहगवामयनयोः षोड़शिका

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

षोडशित्वं न विराट्सम्पदर्थम् अपूर्वएवासौ तयोरौत्पत्तिको विधिः प्राकृतस्य ॥ ९ ॥

याथाकामी त्वतिरात्रस्य प्रकृतौ तस्मादिहापि तथैव स्यात्* ॥ १० ॥

अतिरात्रस्य तु ज्योतिष्टोमस्य प्राकृतस्य तत्र याथाकामी भवतीति षोड़शिनि क्रियमाणे अक्रियमाणे वा याथाकाम्यं नाम दृष्टतः प्रवृत्तिः ज्योतिष्टोमोऽतिरात्रः षोड़शिमानिति तस्मात् येषु सत्त्रेषु प्रायणीयोदयनीययोरतिरात्रयोः षोड़शी नादिश्यते नापि प्रतिषिध्यते तेषु याथाकाम्यं स्यात् ॥ २० ॥

नियमार्थौ तु विधिप्रतिषेधौ † ॥ ११ ॥

यौ तौ विधिप्रतिषेधौ क्वचिद्विधानं क्वचित्प्रतिषेधः तौ नियमार्थौ ॥ ११ ॥

पूर्वस्मिꣳस्त्रयोदशरात्रे व्यूढाश्छन्दोमाः सोमसामादेशाद्गौरीवितस्य चानादेशात् † ॥ १२ ॥

पूर्वस्मिंस्त्रयोदशरात्रे पठति अतिरात्रः पृष्ठ्यषडहः सर्वस्तोमोऽतिरात्रस्त्रयस्त्रिंश्छन्दोमा अतिरात्र इति तत्रायं संशयः किं छन्दोमा व्यूढा भवन्ति न व्यूढा इति सर्वस्तोमेन व्यवधानात् अत आचार्य्य आरभते पूर्वस्मिंस्त्रयोदशरात्रे व्यूढाश्छन्दोमाः स्युरिति कस्मात्

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतं तथा विशेषश्च कृतः।

† द्राह्यायणोऽप्येवम्।

सोमसाम्न आदेशात् गौरीवितस्य चानादेशात् यदि हि समूढ़ा अभविष्यन् इह सोम साम नादेक्ष्यत् तस्मात् समूढ़ेषु छन्दोमेष्ववस्थितं सोमसाम गौरीवितञ्चादेक्ष्यत् यस्मात् समूढ़ेषु च्छन्दोमेषु गौरी-वितं नास्ति न हि समूढ़ेऽस्ति छन्दोमानां प्रकृतौ प्राक् गौरीवितः स्वरः तस्मात् व्यूढ़ाश्छन्दोमा भवन्ति ॥ १२ ॥

गवामयनन्यायेन पृष्ठ्योऽवच्छिन्नो हि तथा प्रवर्त्तते* ॥ १३ ॥

गवामयनन्यायेन पृष्ठ्यः स्यात् यो गवामयनन्यायः सः व्यूढ़ो वा समूढ़ो वा यथाक्लृप्तवहिष्पवमानः तस्मात् यत्र यत्रावच्छिन्नस्तत्र तत्र तथा प्रवर्त्तते ॥ १३ ॥

दशरात्रवत्त्वव्यतिरेकात् † ॥ १४ ॥

दशरात्रवत् तु स्यात् न गवामयनन्यायेन अव्यतिरेकात् नायं व्यतिरिक्तो दशरात्रात् ॥ १४ ॥

सच्छन्दोमत्वात् † ॥ १५ ॥

अव्यतिरेकात् ॥ १५ ॥

व्यूहसमाधेः † ॥ १६ ॥

व्यूहसमाधिर्हेतुः व्यूढ़ाश्छन्दोमाः पृष्ठेऽपि व्यूढ़े क्रियमाणे समा-धिः कृतो भवति ॥ १६ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

**प्रत्नवच्चाद्यबहिष्पवमानं परेण ह्येतदस्य प्रत्नानुरूप इत्याह* ॥ १७ ॥**

प्रत्नवच्चाद्यबहिष्पवमानं सिद्धं यस्मात्परेण एतन्मात्रं त्रयोदशरात्रम् अस्य प्रत्नानुरूप इत्याह मशकः अपवृज्य त्रयोदशरात्रं अस्य प्रत्नानुरूप इति पठति द्वादशाहस्य षोडशिमन्तावतिरात्रौ त्रयोदशरात्रे प्रथमस्य छन्दोमस्य कण्वरथन्तरस्य लोके सोमसाम पुनानः सोम धारयेत्येतत्सांवत्सरिकं व्रतं सत्रेषु यत्रातिरात्रात्पृष्ठ्यमुपयन्ति प्रथमस्याह्नोऽस्य प्रत्नानुरूप इति ॥ १७ ॥

**दृष्टञ्च दशमार्थमव्यवच्छेदे † ॥ १८ ॥**

छन्दो भवति दशरात्रे ॥ १८ ॥

**नवाहयोगाच्च † ॥ १९ ॥**

भवत्येतद्बहिष्पवमाने नवाहस्य युक्त्या इति स चेह नवाहोऽस्ति ॥ १९ ॥

**संवत्सरादेशाद्रात्रिसत्रेषु तथैवाभिप्लवानामभ्यास इति गौतमः † ॥ २० ॥**

संवत्सरेऽभिप्लवस्याभ्यासो दृष्टः तत्र च विशेषो दृष्टः अर्षासोमद्युमत्तम इति गायत्रञ्च यएवञ्चापत्यसन्तनिशाकरवर्ण्यन्युत्तरेष्विति तदभिप्लवस्याभ्यासः रात्रिसत्रेष्वपि केषुचिद्भवति तत्संवत्सरे आदेशा-

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

द्विशेषस्य रात्रिसत्रेष्वेवाभ्यासस्तथैव स्यात् एवं गौतम आचार्यो मन्यते ॥ २० ॥

त्रयस्त्रिंशद्रात्रे निवृत्तिमुत्तरेषां दर्शयतीत्यपरे* ॥ २१ ॥

त्रयस्त्रिंशद्रात्रे सत्रे निवृत्तिमुत्तरेषाम् अपत्यादीनां दर्शयतीति अपरं मतं नास्य परमपरम् अथवा इदमन्यत् इदमपरं तस्मादन्येषु सांवत्सरिको अभ्यासः स्यादिति ॥ २१ ॥

इति दशमस्य तृतीया कण्डिका ।

---

अथ चतुर्थी कण्डिका ।

आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नो मानवादिर्बृहती तज्जामि स्यात्सन्तनिना † ॥ १ ॥

कथं निवृत्तिमुत्तरेषां दर्शयतीति तदुच्यते आवृत्तानां पञ्चाहानां त्रयस्त्रिंशद्रात्रे प्रथमस्य पञ्चाहस्य प्रथमस्याह्नो मानवादिर्बृहती भवति अथैतयैव पञ्चाहा आवृत्ता आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नोऽभिसोमास आयव इति मानवमेकस्यां तस्यामेवानूप इति तत् यद्यपत्यादीनां प्रवृत्तिः स्यात् तत्र तृतीये पञ्चाहे सन्तनि स्यात् तदावृत्तस्य प्रथमं तदेवं सन्तनि-

---

* द्राह्यायणीये एतन्नास्ति ।

† द्राह्यायणीऽप्येवम् ।

मानवयोर्जामि स्यात् अनेन कारणेन मन्यामहे अपत्यादीनां रात्रिसत्रेषु निवृत्तिर्भवति ॥ १ ॥

वैकृतत्वात् तु निवृत्तिः* ॥ २ ॥

वैकृतत्वात्तु तेषु पञ्चाहेषु अपत्यादीनां निवृत्तिः पञ्चाहास्तेन ते षडहास्तेषु पञ्चाहेष्विति ॥ २ ॥

पञ्चाहेष्वभिप्लवन्न प्रसजेत्* ॥ ३ ॥

पञ्चाहेष्वभिप्लवप्रसङ्गं न कुर्य्यात् तस्मादभिप्लवाभ्यासो रात्रिसत्रेषु स्यात् सांवत्सरिकेभ्योऽयं विशेषः ॥ ३ ॥

तान् पृष्ठ्यस्तोमपञ्चाहानेकेऽनादेशे प्रकृतिप्रत्ययाद्विश्वजिदन्ववायान्नाना ब्रह्मसामत्वात्पृष्ठ्यतः षष्ठस्यालोपवचनात् ज्योतिर्गौरायुरित्यनादेशात् त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति चाह† ॥ ४ ॥

य एते पञ्चाहास्त्रयस्त्रिंशद्रात्रे चोदिताः ते अनादेशे प्रकृतिप्रत्ययादित्येतदादिभिर्हेतुभिः पृष्ठ्यस्तोमपञ्चाहानिति पक्षः प्रतिगृह्यते तान् प्रत्येकमुन्मीलयिष्यामः तान् पञ्चाहानेक आचार्य्याः पृष्ठ्यस्तोमपञ्चाहान् मन्यन्ते किं कारणम् अनादेशे प्रकृतिप्रत्ययात् यत्र ह्यादेशो नास्ति तत्र प्रकृतेः प्रत्ययो भवति इह सर्वे विलोपाद्यशरात्राद्भवन्ति उच्यते यद्येवं पृष्ठ्यस्तोमपञ्चाहानित्येवं न वक्तव्यं

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणेनैतेन षट्संख्यकानि सूत्राणि कृतानि।

न हि पृष्ठ्यः स्तोमः प्रकृतिः उच्यते पृष्ठ्यपञ्चाहा एवास्य विवक्षिताः बृहद्रथन्तरपृष्ठ्यतामभिप्रेत्य समूढश्च पृष्ठ्यस्तोमेन प्रदेशं करोति यदि तु पृष्ठ्येन प्रदेशं कुर्यात् पृष्ठ्यानि प्रसज्येरन् व्यूढसमूढतायाश्च विकल्पः स्यात् एवं माभूदित्यतः पृष्ठ्यस्तोमेन प्रदिशति पृष्ठ्य एव त्वस्य प्रकृतित्वेनाभिप्रेतः विश्वजिदन्ववायात् इह च मन्यामहे पृष्ठ्य-स्तोमपञ्चाहा इति येनैव विश्वजिदन्ववैति य एते पृष्ठ्यविलोपा एतान् सर्वान् विश्वजिदन्ववैति तथा तृतीये षड्रात्रे अभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः तथा द्वितीये नवरात्रे ज्योतिष्टोमोऽग्नि-ष्टोमो गौरुक्थ्य आयुरुक्थ्योऽभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्र इति दशरात्रेऽभ्यासङ्ग्यः पञ्चाहाश्वान् वा यश्छन्दोमा विश्वजिदतिरात्र इति एतेषां पृष्ठ्यविलोपं कृत्वा विश्वजिदन्ववायो भवति पृष्ठ्यानु-ग्रहार्थं नाना ब्रह्मसामत्वाच्च मन्यामहे पृष्ठ्यस्तोमपञ्चाहा इति न हि नाना ब्रह्मसाम अभिप्लवः श्यैतनौधसब्रह्मसामत्वात् तेन प्रदेशः नाना ब्रह्मसामान्युपयन्तीति नित्यानुवादोऽयं यदि ह्यपूर्वो भवेत् विधिरेवाभविष्यत् विधायकेन वाक्येन व्यवायः स्यात् नाना ब्रह्म-सामान्युपेयुरिति षष्ठस्यालोपवचनात् इतश्च मन्यामहे पृष्ठ्यस्तोम-पञ्चाहा इति यस्मात् पृष्ठ्यं प्रति षष्ठस्यालोपवचनं लुप्यते वा एतत् षष्ठमहर्यत्पञ्चाहानुपयन्ति नर्त्तवः कल्पन्ते यत्पृष्ठ्यः षडहस्तेन षष्ठ-महर्न लुप्यते नर्त्तवः कल्पन्त इति तद्यदि पार्ष्टिकं षष्ठमहर्न लुप्तं ततः पृष्ठ्यस्य षड़हस्य क्रियायामलोपवचनं नोपपद्यते अथ पुनराभिप्लविकं षष्ठमहर्न लुप्तं तस्य पार्ष्टिकेन षष्ठेनाह्ना अलोपवचनं नोपपद्यते ज्योतिर्गौरायुरित्यनादेशात् यद्यस्याभिप्लविकः पञ्चाह इष्टो भवति

त्रोपदिश्यते वातिरात्रोज्योतिर्गौरायुर्गौरायुः पञ्चाह इति इह पुनस्तस्यानादेशात् मन्यामहे पृष्ठ्यस्तोमपञ्चाहा इति त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति चाह एवं ब्राह्मणमाह त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति तस्य त्रिवृत्स्तोमं प्रथममहः आवृत्तस्य तदेवोहनीयं भवति एवमेतैर्हेतुभिर्मन्यामहे पृष्ठ्यस्तोमपञ्चाहा इति ॥ ४ ॥

समास्त्वेते* ॥ ५ ॥

समास्त्वेते हेतवः य एते पृष्ठ्यस्तोमपञ्चाहत्वे हेतव उक्तास्तान् समीकरिष्यामः तुशब्दः पूर्वपक्षनिवृत्त्यर्थः यदुक्तं पृष्ठ्यस्तोमपञ्चाहा इति तन्न य एवैते हेतव उक्ता उभयत्रैते समाः पृष्ठ्यस्तोमपञ्चाहेष्वभिप्लवपञ्चाहेषु च यत्तावदुक्तम् अनादेशे प्रकृतिप्रत्ययादित्यत्र ब्रूमः नैव पृष्ठ्यः स्तोमः प्रकृतिः यदुक्तं त्वया पृष्ठ्यमभिप्रेत्य पृष्ठ्यस्तोमेन प्रदिश्यत्येतन्नोपपद्यते कथं हि पृष्ठ्यस्तोमपञ्चाहा इत्युक्ते पृष्ठ्यस्तोमपञ्चाहा इति प्रतीयेरन् तद्यथैव पृष्ठ्यस्तोमस्य दाशरात्रिकान्यहानि प्रकृतिरेवमभिप्लवस्यापि तान्येव प्रकृतिः तस्मादनादेशे प्रकृतिप्रत्ययादिति उभयत्रायं समोहेतुः उभावेतौ षड़हावभिप्लवपृष्ठ्यस्तोमौ विकृतौ तस्मादुभयोर्दशाहिकः षड़हः प्रकृतिः अथ यदुक्तं विश्वजिदन्ववायादित्यत्र ब्रूमः नह्यत्र पृष्ठानां विलोपोयदर्थं विश्वजिदन्वैतीति अत्र हि दशरात्रप्रयोगो वक्ष्यते तत्प्रयोगादेव पृष्ठानामविलोपः न चापि पृष्ठार्थेन विश्वजिदागच्छति विषुवदर्थेनागच्छति अत्र विश्वजित् ततो अयमपि समोहेतुः अथ यदुक्तं नाना

---

* द्राह्यायणेऽप्येवम्।

ब्रह्मसामत्वाच्च ब्रूमः नह्यत्र नानाब्रह्मसामानीति अनित्यार्थवादः अपूर्वमेव नाना ब्रह्मसामत्वं विधीयते नित्यानुवादवद्विधानानि दृश्यन्ते यथा रथन्तरं भवति चार्चं चास्मै दण्डं प्रयच्छन्वाचयेदिति अथ यदुक्तं पृष्ठ्यतः षष्ठस्यालोपवचनादिति अत्राप्युच्यते यथैव पृष्ठ्यस्तोमस्य बृहद्रथन्तरपृष्ठस्य सतः षष्ठमहर्लुप्यते एवमेवाभिप्लवस्यापि तस्मात् समानोलोपः षडहतन्त्रे अथ यदुक्तं ज्योतिर्गौरायुरित्यनादेशादित्यत्र ब्रूमः यत्र ह्यस्य पृष्ठ्यस्तोमपश्चाद्धा दृष्टाः तत्राप्यादिशत्येव यथा पृष्ठ्यस्य न लब्धिः अभ्यासङ्ग्य पश्चाह इति यथा द्वितीये नवरात्रे दशरात्रे छन्दो भवति तद्यथैवात्र ज्योतिर्गौरायुरित्यनादेशे इति एवं पृष्ठ्यस्तोमेऽप्यनादेश इति यदुक्तं त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति चाहेति अत्र ब्रूमः अयं त्रिवृच्छन्दः न केवलं स्तोमवाचीति त्रित्वञ्चापेक्ष्य भवति यथा अग्निना पृथिव्यौषधिभिस्तेनायं लोकस्त्रिवृत् तथा अग्ने विवस्वदुषस इति सन्धिना स्तुयुरित्यधिकृत्य त्रिकं स्तोमं विधायाह प्राणावै त्रिवृत्स्तोमानामिति एवमयं त्रिवृच्छब्दस्त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति उत्तमे च त्रयस्त्रिंशद्रात्रे त्रित्वमिह समाख्याभिप्रवर्त्तते त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति पुरस्तात्त्र्यः पश्चाद्धास्त्रय उपरिष्टादिति तस्मादयमपि हेतुरुभयत्र समः अत एते हेतवः समीकृताः प्रत्युक्ताः स्वपक्षमिदानीं स्थापयिष्यामः ॥ ५ ॥

अभिप्लवपश्चाद्धा एवेति गौतमेऽधिकृतो हि स सर्वेषु भवतीतरस्माद्दृष्टः* ॥ ६ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

गौतम आचार्य्य आह अभिप्लवपञ्चाहा एव भवन्तीति एव शब्दोऽवधारणार्थः अभिप्लवपञ्चाहा एव न पृष्ठ्यस्तोमपञ्चाहा इति यस्मादधिकृतः सत्रेषु अभिप्लवपञ्चाहः अतिरात्रो ज्योतिर्गौरायुः पञ्चाह इति यदुक्तमनादेशे प्रकृतिप्रत्ययादिति अनादेशजातिरेषा भवति यदधिकारः किञ्चान्यत् इतरस्यादृष्टः इतरस्य पृष्ठ्यस्तोमपञ्चाहः अदृष्टः सत्रेषु किं दृष्टार्थः प्रतीयतामदृष्टार्थः प्रतीयतामिति दृष्टप्रत्ययो न्यायत इति ॥ ६ ॥

अभ्यासस्त्वस्य प्राकृतस्यापि कुतः पञ्चाहस्य* ॥ ७ ॥

अभ्यासस्त्वादृष्टः प्राकृतस्य तावत् पृष्ठ्यस्तोमस्यैव कुतः पञ्चाहस्याभ्यासः स्यादिति यावता निदानकारोऽप्याह अथापि कृत्स्नावेव पृष्ठ्यस्तोमौ नाभिप्रयोगं लभेते कुतो विलुप्तौ लभेयातामिति ॥ ७ ॥

ज्योतिर्गौरायुर्गौरायुः पञ्चाहः स द्वितीयः स तृतीय इति च परब्राह्मणम्† ॥ ८ ॥

यदप्युक्तं ज्योतिर्गौरायुरित्यनादेशादिति अस्यैव परेषां ब्राह्मणं ज्योतिर्गौरायुर्गौरायुः स द्वितीयः स तृतीय इति ॥ ८ ॥

एष प्रत्नावार्कजम्भं वा प्रतिपञ्चाहं यथा लोकन्तृचद्रथन्तरास्येत्* ॥ ९ ॥

एते पञ्चाहा भवन्ति तत एष प्रत्ना वा अनुरूपः प्रतिपञ्चाहं वार्कजम्भं वा प्रथमेऽहनि ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणीये विशेषोऽस्ति

आञ्जनाभ्यञ्जनानु गार्हपत्य उपसत्सु सर्पीꣳषि फाणेयुः पृथग्देवसुरभिभिर्यान्युक्तानि ब्राह्मणेन* ॥ १० ॥

आञ्जनाभ्यञ्जनासु गार्हपत्येऽग्नौ सर्पींषि गृहीतानि फाणयेयुः पृथङ्नानेत्यर्थः देवसुरभिभिः सह देवसुपभीणि यान्युक्तानि ब्राह्मणेन गौल्गुलवेन सौगन्धिकेन पैतुदारवेण घृतं सह एकीकरणं देवसुरभिभिः ॥ १० ॥

तैः सुत्याहूपाकरणवेलायाꣳसवनानां पूर्वेण हविर्द्धाने आसीना आञ्जीरन्नभ्यञ्जीरꣳश्च* ॥ ११ ॥

तैः सुत्याह्नुपाकरणवेलायां हविर्द्धानयोः पूर्वे प्रदेशे आसीनाः सत्रिणः आञ्जीरन् अक्षीणी गात्राणि च अभ्यञ्जीरन् उक्तं गौल्गुलवेन प्रातःसवने सौगन्धिकेन माध्यन्दिने सवने पैतुदारवेण तृतीयसवन इति ॥ ११ ॥

भुक्त्वाग्नीध्रीय एवेति गौतमः* ॥ १२ ॥

गौतम आचार्य्यो मन्यते भुक्त्वाग्नीध्रीय एव तत् कुर्य्युरिति ॥१२॥

उक्तमानुपूर्व्यं ब्राह्मणेन † ॥ १३ ॥

आनुपूर्व्यं ब्राह्मणेनोक्तं गौल्गुलवेन प्रातःसवने सौगन्धिकेन माध्यन्दिने सवने पैतुदारवेण तृतीयसवने ॥ १३ ॥

अहरहरेतत् कुर्युरिति धानञ्जप्यशाण्डिल्यौ* ॥ १४ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणीये एतन्नास्ति ।

धानञ्जप्यशाण्डिल्यावाचार्य्यावाहतुः अहरहरेतत् कुर्य्युरिति ॥१४॥

**सर्वस्तोम एवेति गौतमः* ॥ १५ ॥**

सर्वस्तोमएवैतत् कुर्य्युरिति एष ऊर्द्धं स्तोमतः संस्थातः ॥ १५ ॥

**पृष्ठ्य इत्येके* ॥ १६ ॥**

एके आचार्य्या ब्रुवते पृष्ठ्य एव तत्कुर्य्युरिति ॥ १६ ॥

इति दशमस्य चतुर्थी कण्डिका ।

---

अथ पञ्चमी कण्डिका ।

**संवत्सरसम्मितासु प्रथमं दाशरात्रिकं प्रायणीयꣳ स्या-दित्येके त्रिवृदेव कार्य्यमिति त्वाहेति* ॥ १ ॥**

संवत्सरसंमितासु पठति तदाऊर्य्यचतुर्विंशमहः प्रायणीयं कुर्य्युः संवत्सरमारभ्य न समापयेयुरिति त्रिवृदेव कार्य्यमिति तत्र किमिदं त्रिवृता लिङ्गेन दाशरात्रिकं प्रथममहश्चोद्येते अथवा तत अधिकृत-स्यैव प्रायणीयस्य स्तोमविकार इति सोऽयमेतस्मिन्नर्थे शास्त्रमारभते संवत्सरसंमितास्वित्यादि संवत्सरसंमिता इति संज्ञा तासु संवत्सर-संमितासु प्रथममहः दाशरात्रिकं प्रायणीयं स्यादित्येके आचार्य्या ऊचुः यस्मादेवं ब्राह्मणमाह त्रिवृदेव कार्य्यमिति ॥ १ ॥

**प्रायणीयन्तु चोदयित्वा तस्य स्तोमविकारं गृह्णाति* ॥२॥**

नत्वेवं स्यात् प्रायणीयं चतुर्विंशमहश्चोदयित्वा अतिरात्रस्तु-

---

* द्राह्यायणोऽप्येवम् ।

विंशं प्रायणीयमहरिति त्रिवृदेव कार्य्यमिति तस्य स्तोमविकारं गृह्णाति ॥ २ ॥

दाशरात्रिकाणाञ्चावयवप्रयोगो न विद्यते* ॥ ३ ॥

किञ्चान्यत् दाशरात्रिकाणाञ्चाह्नां अवयवप्रयोगः एकदेशसम्मितासु प्रयोगो न विद्यते ॥ ३ ॥

आवृत्तेऽभिप्लवे शार्क्करवर्णं स्यादित्याचार्य्याः सांवत्सरिकस्य द्रव्यस्यानुग्रहायेति* ॥ ४ ॥

संवत्सरसंमितासु उत्तरे पक्षसि अभिप्लवे अस्मिन् आवृत्ते शार्क्करवर्णं स्यादित्याचार्य्या मन्यन्ते सांवत्सरिकस्य द्रव्यस्यानुग्रहार्थमिति पूर्वस्मिन् पक्षसि त्रयोऽभिप्लवाः प्रयुक्ताः यत्क्लृप्त्यं सन्ततिनिमित्तम् अयं चतुर्थः शार्क्करवर्णवान् उत्तरे पक्षसि तस्मिन् प्रयुज्यमाने सर्वसांवत्सरिकं द्रव्यमनुगृहीतं भवति ॥ ४ ॥

चतुर्थस्त्वभिप्लवो लुप्तस्तेन सहापेयाद्यथा पृष्ठेन जनित्रम्* ॥ ५ ॥

नन्वेवं स्यात् यश्चतुर्थः सांवत्सरिकोऽभिप्लवः पूर्वस्मिन् पक्षसि स इह लुप्तः तेन सह शार्क्करवर्णमप्युपेयात् यथा पृष्ठ्येन लुप्यमानेन जनित्रमपि लुप्तं ननु सर्व एव पृष्ठो लुप्तः तत्किमिदं यथा पृष्ठ्येन जनित्रमिति उच्यते पृष्ठो दशरात्रे प्रयोच्यते जनित्रन्तु समूहागतं तत् लुप्तमेव ॥ ५ ॥

---

* द्राह्यायणेऽप्येवम् ।

सन्तनि पूर्वप्रयुक्तमावृत्तिसाधुत्वात्* ॥ ६ ॥

उच्यते यदि शार्करवर्णं न क्रियते किं तर्हि तत्र कर्त्तव्यमिति ब्रवीति सन्तनि कर्त्तव्यं तद्धि पूर्वस्मिन् पक्षसि प्रयुक्तन्तदिह कर्त्तव्यं आवृत्तिसाधुत्वात् उत्तरस्य पक्षस्य आवृत्तिसाधुरुत्तरे पक्ष इति ॥६॥

यद्येवन्तु स्यादुपरिष्टाध्यभिप्लवानां लोपस्थानं पूर्वस्मिन् पक्षसि तत् पुरस्तादावृत्तानाम्† ॥ ७ ॥

यद्येवन्तु स्यात् तत्र न सन्तनिनि उपरिष्टाध्यभिप्लवानां लोपस्थानं पुरस्ताद्भवति तस्मात् यद्येमेव स्यात् ॥ ७ ॥

एतेनोक्तमेकषष्टिरात्रे* ॥ ८ ॥

उत्तरस्मिन् पक्षसि आवृत्तस्याभिप्लवस्य एतेनोक्तं विधानम् एकषष्टिरात्रे ॥ ८ ॥

शतरात्रेऽभिप्रयायमभिषुण्वन्त्वभिक्रान्त्यै समानत्राभिषुण्वन्ति प्रतिष्ठित्या इति स विकल्पः स्यात्* ॥ ९ ॥

शतरात्रे पठति अभिप्रयायमभिषुण्वन्त्यभिक्रान्त्यै समानत्राभिषुण्वन्ति प्रतिष्ठित्या इति स विकल्पः स्यात् भवेत् अभिप्रयाय वा स्यादभिषवः अभिप्रयायाभिप्रयाय समानत्र समानत्र वा समानदेशे एकस्मिन् उभयस्याशक्यत्वात् ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

यान्तः सुनुयुर्यथा सारस्वतेषु* ॥ १० ॥

अभिप्रयायं सुन्वन्तः यान्तः सुनुयुः यथा येन प्रकारेण सारस्वतेषु शम्याप्रासमेन ॥ १० ॥

यत्र तु क्वच* ॥ ११ ॥

यत्र क्वच देशे नात्र नियमः यथा सारस्वतेषु सरस्वत्यास्तीरेणेति ॥ ११ ॥

समानदेशे वा यथान्येषामयान्त एव* ॥ १२ ॥

एकस्मिन्वा देशे सुनुयुः समाने अयान्त एव ॥ १२ ॥

चक्रीवन्ति सदोहविर्द्धानानि कारयित्वाहःसंस्थासु चक्राणि विपरिवर्त्तयेयुरित्याचार्य्यास्तदभिप्रयात्तद्रूपमप्रयाणाच्च समानत्राभिषवः* ॥ १३ ॥

स्तुत्यर्थत्वात् कल्पयन्ते चक्रीवन्ति सदो हविर्द्धानानि कारयित्वा सदश्च हविर्द्धाने च सदो हविर्द्धानानि तेषामहःसंस्थासु अहःसमाप्तिषु चक्राणि विपरिवर्त्तयेयुरित्याचार्य्या आहुः तदभिप्रयात्तस्य रूपम् अप्रयाणाच्च समानत्राभिषवः अप्रयाणाच्च एकत्र देशे समाने अभिषवः कृतो भवति एवमुभयोः स्तुत्योरर्थं कृतं भवति ॥ १३ ॥

अहरहरेतत् कुर्युरिति धानञ्जप्यशाण्डिल्यौ † ॥ १४ ॥

---

* द्राह्यायणेन सूत्रचतुष्टयेन सूत्रद्वयं कृतं तथा च्छेदविषये विशेषश्च कृतः ।

† द्राह्यायणोऽप्येवम् ।

धानञ्जय्यशाण्डिल्यावाचार्य्यावाहतुः यदेतदभिषवस्य विधानमुक्तम् एतदहन्यहनि कुर्य्युरिति ॥ १४ ॥

अभिप्लवेष्वेवेति गौतमः* ॥ १५ ॥

गौतम आचार्य्य आह अभिप्लवेष्वेव तत् कुर्य्युर्नाहन्यहनि इति ॥ १५ ॥

त्रिकद्रुकेष्वित्येके* ॥ १६ ॥

एके आचार्य्या आहुः त्रिकद्रुकेष्वित्यवैतत्कुर्य्युर्नान्यत्रेति ॥ १६ ॥

उक्तकालदीक्षा ब्राह्मणेन गवामयनस्य* ॥ १७ ॥

उक्तः कालोयस्याः सेयमुक्तकालदीक्षा काल उक्तो ब्राह्मणेन गवामयनस्य अयने विकल्पः ॥ १७ ॥

वैशाखज्यैष्ठौ तु विकल्पेते चैत्रीपक्षेणाषाढ़स्य* ॥ १८ ॥

वैशाखज्यैष्ठौ तु विकल्पेते असमास इति किमर्थम् आषाढ़स्येति उच्यते वक्ष्यति षष्ठ्यां वा दीक्षित्वा सप्तदशदीक्षाः कुर्वीरन्निति तदाषाढ़ एव स्यात् ॥ १८ ॥

षष्ठ्यां वा दीक्षित्वा सप्तदशदीक्षाः कुर्वीरन् † ॥ १९ ॥

षष्ठ्यां वा आषाढ़स्य दीक्षित्वा सप्तदशदीक्षाः कुर्वीरन् ॥ १९ ॥

एतेनोक्तमनादेशे सांवत्सरिकानाꣳसांवत्सरिकाणाम्* ॥ २० ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

एतेन गवामयनिकेन विधिना सांवत्सरिकाणां सत्राणाम् उक्तं विधानम् आदेशादन्यत्र आदेशे यथादेशम् ॥ २० ॥

इति दशमस्य पञ्चमी कण्डिका ।

अथ षष्ठी कण्डिका ।

**पञ्चसु मा:सु बार्हताः प्रगाथा आप्यन्त इत्यभीवर्त्त-स्तोत्रीया ब्रह्मसामभूतस्य तस्य हि प्रकरणे श्रूयन्ते* ॥ १ ॥**

उक्तकालादीचा ब्राह्मणेन गवामयनस्येत्येतदधिकृतं तस्मिन् गवामयने पठति अभीवर्त्तो ब्रह्मसाम भवतीत्येवमधिकृत्याह पञ्चसु मा:सु बार्हताः प्रगाथा आप्यन्त इति तेषां प्रगाथानान्तु विषयः कल्प्यते पञ्चसु मा:सु बार्हताः प्रगाथाः समाप्यन्ते आप्यन्त इति यदिदं विधानन्ते प्रगाथा अभीवर्त्तस्तोत्रीयाः स्युः किं विषयस्याभीवर्त्तस्य ब्रह्मसामभूतस्य यस्मात्तस्य प्रकरणे श्रूयन्ते ॥ १ ॥

**अन्योन्यः प्रगाथ इति च नाना प्रगाथतां दर्शयति † ॥२॥**

समानं साम भवत्यन्योन्यः प्रगाथ इत्येतद्ब्राह्मणं मभीवर्त्तस्य नाना प्रगाथतां दर्शयति ॥ २ ॥

**चतुःशतमैन्द्राबार्हता प्रगाथा दशतयीषु † ॥ ३ ॥**

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

कुतः पुनस्ते प्रगाथा आहर्तव्या इति उच्यते चतुःशतमैन्द्रा बार्हताः प्रगाथा दशतयीष्विति चत्वारश्च शतं चतुःशतं ऐन्द्राः देवतया बार्हताः छन्दसा दशतयीषु दशावयवासृक्षु ऋग्वेद इत्यर्थः ॥ ३॥

तेषां बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतुश्चान्यत्र स्थानाः* ॥ ४ ॥

तेषां प्रगाथानां चतुःशतस्य चत्वारः अन्यत्र स्थानाः चतुर्णामन्यत्र स्थानं ब्रह्मसाम्नः बृहद्रथन्तरयोः स्तोत्रीययोः कालेयस्तोत्रीयाः इन्द्रक्रतुमौत्तरपाचिक इति ॥ ४ ॥

शतस्यैकं चतुर्विंशे कुर्य्यादितरानभिप्लवेषु* ॥ ५ ॥

एवञ्चान्यत्र स्थानां चतुरुद्धृत्य शतं प्रगाथाः शिष्यन्ते तस्य शतस्यैकं प्रगाथं प्रायनीयेऽहनि चतुर्विंशे कुर्य्यात् इतरान्येकोनशतम् अभिप्लवेषु कुर्य्यात् पञ्चसु मासेषु विंशतिरभिप्लवाः तेषु एकैकस्मिन्नभिप्लवे पञ्च पञ्च प्रगाथा भवन्तीति तेषामेकस्मिंश्चत्वार एवमेवैषां प्रगाथानां विनाशः ॥ ५ ॥

एकोनत्रिंशत्सातोबार्हतास्तृचाः † ॥ ६ ॥

तास्वेव दशतयीषु एकोनत्रिंशत्सातोबार्हतास्तृचाः तान् आहरेत् ॥ ६ ॥

तेषामेकैकं तृतीये तृतीयेऽहनि कुर्य्यात् कृताद्येतस्मिंस्थान आर्षेयकल्पेन † ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणोऽप्येवं किन्तु तत्र छेदविषये विशेषोऽस्ति ।

तेषां सातोबार्हतानां तृचानां एकैकं तृतीये तृतीयेऽहनि कुर्य्यात् अभिप्लवेषु प्रथमद्वितीयतृतीयचतुर्थपञ्चमषष्ठेषु प्रगाथा न कृता हि सतोबृहत्यः तृतीयेऽहन्यार्षेयकल्पेन आत्वा सहस्रमाशतमित्येताः ॥ ७ ॥

पञ्चमस्य मासस्योत्तमेऽभिप्लवे पञ्चमेऽहनि सतोबृहतीः कुर्यात् प्रगाथा प्रभवात्* ॥ ८ ॥

पञ्चमस्य मासस्य य उत्तमोऽभिप्लवस्तस्मिन्नेव प्रगाथो न संपूर्य्यते पञ्चमेऽहनि सतोबृहतीः कुर्य्यात् द्वौ सातोबृहतौ तृचौ चत्वारश्च प्रगाथाः एवमेकविंशतिः सातोबृहत्यः प्रयुक्ताः प्रगाथाश्च सर्वे अष्टौ सातोबार्हतास्तृचाः अवशिष्यन्ते ॥ ८ ॥

तेष्वाप्तेषु छन्दसी संयुज्यैतव्यमिति षष्ठे मासि गायत्रीपादमेकैकमुष्णिहामुपरिष्टात् कुर्याद्विष्टावानुपपत्तिर्ह्यन्यथा† ॥ ९ ॥

उक्तं पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते तेष्वाप्तेषु छन्दसि संयुज्यैतव्यन्तिस्रषु उष्णिहः स्युरेका गायत्री तास्तिस्रो बृहत्यो भवन्तीति यावत् तेषु प्रगाथेषु आप्तेषु सर्वेषु छन्दसी संयुज्यैतव्यमिति ब्राह्मणं षष्ठे मासि गायत्रीपादमेकैकमुष्णिहामुपरिष्टात् कुर्य्यात् एवन्ते बार्हतास्तृचा भवन्ति अन्यथा हि विष्टावानोपपद्यन्ते ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

सातोबार्हतशेषेऽष्टौ तान् कृत्वा संयोग इति गौतमः* ॥ १० ॥

गौतम आचार्य्य आह सातोबार्हतानां तृचानाम् एकविंशतिः पञ्चसु मासेषु प्रयुक्ताः अन्येऽष्टौ शेषा अनुप्रयुक्ताः तान् षष्ठस्य मासस्य प्रथमेऽभिप्लवे कृत्वा द्वितीयस्य चार्धे द्व्यहे ततश्छन्दसी संयुञ्ज्यादिति ॥ १० ॥

बृहतीच्चयाद्ध्येवमामनतीति* ॥ ११ ॥

यस्मात् बृहतीच्चयादेवमामनति तेष्वाप्तेषु छन्दसी संयुज्यैतव्यम् ॥ ११ ॥

चतुरुत्तरैरेव छन्दोभिरेतव्यमिति गायत्रीं चतुर्विंशे कुर्यादुष्णिहं प्रथम आभिप्लविकेऽनुष्टुभं द्वितीये बृहतीरितरेषु † ॥ १२ ॥

उक्तं तदाहुः संशर इव वा एष छन्दसां यद्वे छन्दसी संयुज्यन्तीनि चतुरुत्तरेव छन्दोभिरेतव्यमिति एतस्मिंस्तुरुत्तरकल्पे गायत्रीं चतुर्विंशेऽहनि कुर्य्यात् अभिप्लविके प्रथमेऽहनि उष्णिहं कुर्य्यात् अनुष्टुभं द्वितीयेऽहनि कुर्य्यात् इतरेषु सर्वेष्वहःसु बृहतीं कुर्य्यात् ॥ १२ ॥

उद्धरेत्तु पञ्चमादह्नः सतोबृहतीः प्रभवन्ति हि प्रगाथाः † ॥ १३ ॥

---

* † द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

किञ्च उद्धरेत्यञ्चमादह्नः सतोबृहतीः यस्मात् प्रगाथाः प्रभवन्ति विद्यन्त इत्यर्थः चतुर्विंशात् प्रायणीयादेकः आभिप्लविकौ द्वौ द्वितीयप्रथमाभ्यामहोभ्याम् एकः पञ्चमात् ॥ १३ ॥

तत्र पङ्क्तीः कृत्वा षष्ठे वा* ॥ १४ ॥

तत्र पञ्चमेऽहनि षष्ठे वा पङ्क्तीः कृत्वा ॥ १४ ॥

त्रिष्टुभा षष्ठं मासमीयुः* ॥ १५ ॥

त्रिष्टुभा षष्ठं मासं गच्छेयुः ॥ १५ ॥

जगती तु तृतीये स्वरसाम्नि † ॥ १६ ॥

तृतीये स्वरसाम्नि जगती कर्त्तव्या एवमेतेषां छन्दसां क्रिया यस्मादाह एकां गायत्रीमेकाहमुपेयुरेकामुष्णिहमेकाहमेकामनुष्टुभमेकाहं बृहत्या पञ्चमासमीयुः पङ्क्तिमेकाहमुपेयुः त्रिष्टुभा षष्ठं मासमीयुः श्वोविषुवान् भवितेति जगतीमुपेयुरिति ॥ १६ ॥

नव सातोबार्हतशेषो द्वौ च प्रगाथौ तान् कृत्वा पङ्क्तिमुपेयुस्तेषाञ्चोत्तमस्य स्थाने तत ऊर्द्धं त्रिष्टुभेति गौतमः † ॥ १७ ॥

गौतम आचार्य्य आह सातोबार्हता नवावसिष्टा द्वौ च प्रगाथौ तान् षष्ठस्य मासस्य प्रथमे चाभिप्लवे द्वितीयस्य चाभिप्लवस्याद्ये पञ्चाहे तान् कृत्वा ततः पङ्क्तिमुपेयुरिति अथवा तेषामेव बार्हतानां

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

प्रगाथानाम् उत्तमस्य स्थाने पङ्क्तिं कृत्वा तत ऊर्द्धं त्रिष्टुभा षष्ठं मासमीयुः यावत्सिद्धम् ॥ १७ ॥

इति दशमस्य षष्ठी कण्डिका।

---

अथ सप्तमी कण्डिका।

बृहत्या चैव त्रिष्टुभा चैतव्यमिति त्रिष्टुभं चतुर्विंशे कुर्याद्बृहतीं प्रथम आभिप्लविके* ॥ १ ॥

इह पठति तदाहुरनवक्लृप्तानि वा एतानि छन्दांसि मध्यन्दिने बृहत्या चैव त्रिष्टुभा चैतव्यमिति चातुरुत्तर्य्यमपोह्य त्रिष्टुप्बृहतीभ्यां विदधाति तदुच्यते बृहत्या चैव त्रिष्टुभा चैतव्यमिति त्रिष्टुभं चतुर्विंशेऽहनि प्रायणीये कुर्य्यात् अभीवर्त्तस्तोत्रीयं प्रथमे आभिप्लविकेऽहनि बृहतीं कुर्य्यात् अभीवर्त्तस्य ॥ १ ॥

एष विपर्यासः सर्वस्मिन्नयने* ॥ २ ॥

एष विपर्य्यासः अनेन न्यायेन एष विपर्य्यासः सर्वस्मिन्नयने ॥ २ ॥

एतानि महानानात्वानि* ॥ ३ ॥

य एते विधय उक्ताः पञ्चसु मासु बार्हताः प्रगाथा आद्यन्त इत्यारभ्य एतानि महानानात्वानीत्युच्यन्ते श्रुत्यन्तरे महानानात्वानि श्रूयन्ते ॥ ३ ॥

---

* द्राह्यायणोऽप्येवम्।

**चतुरुत्तरप्रयोगो बृहतीत्रिष्टुभोश्च विपर्यासः षष्ठएव मासि स्यादिति शौचिवृक्षिः सञ्चर इव वा एष छन्दसामिति हि तस्मिन्नुपोह्य विदधाति* ॥ ४ ॥**

शौचिवृक्षिराचार्य्य आह य एष चतुरुत्तरप्रयोगः छन्दसां छन्दोभिरेतव्यमिति यश्च बृहतीत्रिष्टुभोश्च विपर्य्यासः बृहत्या चैव त्रिष्टुभा चैतव्यमिति एतौ कल्पौ क्रियमाणौ षष्ठ एव मासि स्यातामिति यस्मादाह संचर इव वा एष छन्दसां यद्वे छन्दसी संयुञ्जन्तीति चतुरुत्तरैरेव छन्दोभिरेतव्यमिति तस्मिन् षष्ठे उपोह्य छन्दःसंयोगं कल्पो विदधाति षष्ठविषयः छन्दःसंयोगः यद्विषयस्यापवादः तद्विषयेनैवेतरेण विधिना भवितव्यम् ॥ ४ ॥

**सर्वत्रैवेत्याचार्य्यास्तुरुत्तराणि ह्यनुपूर्वं प्रयुञ्जानो बृहतीं मध्यआमनति त्रिष्टुभा षष्ठं मासमिति चाह † ॥ ५ ॥**

आचार्य्या आहुः सर्वस्मिन्नेवायने पूर्वस्मिन्नेतौ कल्पौ स्यातामिति यस्माच्चतुरुत्तराणि छन्दांसि अनुपूर्वं प्रयुञ्जानः गायत्र्युष्णिगनुष्टुभौ विधाय त्रिष्वहःसु बृहतीं मध्य आमनति यावत्पञ्चमासाः समाप्ता इति किञ्चान्यत् त्रिष्टुभा षष्ठं मासमिति चाह ब्राह्मणं कृत्स्नं ‡ संयोगं दर्शयति ॥ ५ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

‡ कृत्स्नमित्यस्य स्थाने अन्यदिति काशीस्थपुस्तकपाठः ।

बृहतीत्रयाच्च बृहत्या व्यत्यासो नोपपद्यते* ॥ ६ ॥

यस्मात् बृहत्य एव न सन्ति केन व्यत्यासः करिष्यति ॥ ६ ॥

सा प्राप्याद्बृहतीग्रहणमिति शौचिवृक्षिस्त्रिष्टुभेति यथा भूयसो वादोऽक्षीणाश्च बृहत्यः† ॥ ७ ॥

शौचिवृक्षिराचार्य्य आह स्यादेव षष्ठे मासि बृहतीत्रिष्टुभो-र्विपर्य्यासः यत्तावदुच्यते चतुरुत्तराणि ह्यनुपूर्वं प्रयुञ्जानो बृहतीं मध्य आमनतीति सा प्राप्याद्बृहतीग्रहणं न ह्यत्र बृहत्यः कृताः अत्र यदुक्तं त्रिष्टुभा षष्ठं मासमिति चाह अयं भूयसोवादः भूयस्त्वं गृहीत्वा प्रवृत्तः प्रयोगो हि वादानान्नियामको भवति अथ यदुक्तं बृहती-त्रयाच्च बृहत्या व्यत्यासोनोपपद्यते इति अक्षीणाश्च बृहत्यः नच बृहत्यः, क्षीणाः सत्यो बृहत्यः कथं सन्तीत्युच्यते ॥ ७ ॥

सप्ताबार्हतशेषो ह्यष्टौ बृहद्रथन्तरकालेयस्तोत्रीयाश्च तैस्त्रिष्टुभो व्यत्यस्येत्‡ ॥ ८ ॥

य एकोनत्रिंशत्सप्तताबार्हतास्तचास्तेषामेकविंशतिप्रगाथैः सहोप-युक्ताः अष्टौ शिष्यन्ते तैरष्टभिः बृहद्रथन्तरकालेयस्तोत्रीयैश्च तैः तैस्त्रिष्टुभैः षष्ठे मासि त्रिष्टुभोव्यत्यस्येत् एकादशसु राथन्तरेष्वहःसु एकादशबृहत्यः दशसु बार्हतेषु दश त्रिष्टुभः त्रिष्वभिप्लवेषु च स्वर-सामसु च ॥ ८ ॥

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतं तथा विशेषश्च कृतः।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

तरणिरित्सिषासतीति कालेयꣳ स्याद्यदहस्तस्य स्तोत्रीयेऽभीवर्तः* ॥ ९ ॥

यस्मिन्नहनि कालेयस्तोत्रीयेऽभीवर्त्तः स्यात् तस्मिन्नहनि तरणिरित्सिषासतीति कालेयं स्यात् असञ्चाराद्धेतोः ॥ ९ ॥

स्वरसाम्नोर्वान्यतरस्मिन् रथन्तरस्तोत्रीयं कुर्यात् कृता हि तत्रान्या रथन्तरस्यैवं व्याचक्षत आचार्याः † ॥ १० ॥

अथवा स्वरसाम्नोः प्रथमतृतीययोरन्यतरस्मिन्नेकस्मिन् रथन्तरे स्तोत्रीयं ब्रह्मसाम्नि कुर्य्यात् यस्मात्तत्र पृष्ठगतस्य रथन्तरस्य अन्या एव ऋचः कृता एवमाचार्य्या व्याचक्षते ॥ १० ॥

विंशतिशतं त्वपि प्रगाथा न धीयते तेभ्यएव प्रयुञ्जीत सꣳरोधो हि चतुःशते ‡ ॥ ११ ॥

विंशतिश्च शतञ्च विंशतिशतं विंशतिशतन्त्वपि प्रगाथा न धीयते अपरे तुशब्दो हेत्वर्थः यस्मात् तत्र स एव प्रयुज्यते चतुःशते संरोधः स्वस्य पक्ष एव ॥ ११ ॥

तत्र तथैव सतोबृहतीः कुर्यात्* ॥ १२ ॥

तत्र तस्मिन् कल्पे तथैव सतोबृहतीः कुर्य्यात् यथा चतुःशते तृतीयेऽहनि ॥ १२ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

उद्धरेत्तु पञ्चमादह्नः* ॥ १३ ॥

यथा सतोऽवहत्यः पञ्चमे मासि अस्यामिन्नवस्य पञ्चमेऽहनि कृताः ता उद्धरेत् प्रभवन्ति हि प्रगाथाः हिशब्दो हेत्वर्थः यस्मात् प्रभवन्ति प्रगाथाः ॥ १३ ॥

शौचिवृक्षेः पुनर्विपर्यासोऽन्यायेनाकृतक्रिया हि विधानं कृताः पुनर्बृहद्रथन्तरकालेयस्तोत्रीयाः † ॥ १४ ॥

यः पुनरयं शौचिवृचेः बृहतीत्रिष्टुभोर्विपर्य्यासः षष्ठे मासि अयमन्यायेन कृतः कथमन्यायः यस्मादकृतक्रिया हि य आस्तुतं कुर्वतो यथादुग्धामुपसीदेदेवन्तदिति अप्रयुक्तप्रतिषेधः कृतः पुनर्बृहद्रथन्तरकालेयस्तोत्रीयाः तेषां कृतानां सतां स्वेषु स्थानेषु कृताः पुनर्ब्रह्मसाम्नि प्रयोगः ॥ १४ ॥

इति दशमस्य सप्तमी कण्डिका ।

---

अथ अष्टमी कण्डिका ।

विंशतिशतस्य तु शेषो विद्यते तेषां सप्तभिः सातोबार्हतैश्चतुर्भिर्व्यत्यस्येत्* ॥ १ ॥

विंशतिशतस्य प्रगाथानां शेषो विद्यते तेषां सप्तभिः प्रगाथैः

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वय कृतम् ।

ये च नव सातोबार्हतास्तच: तेषां चतुर्भिः षष्ठे मासि त्रिष्टुभोऽव्यत्यस्येत् ॥ १ ॥

त्रयस्त्रिꣳशत्प्रभृतीन् सह चतुर्विꣳशेषु कुर्यादुत्तमे च स्वरसाम्नीत्याचार्या अभीवर्तप्रकरणे हि श्रूयन्ते सोऽत्राप्यभीवर्त इति* ॥ २ ॥

अनन्तरं पठति त्रयस्त्रिंशता प्रगाथैरेतव्यं त्रयस्त्रिंशद्देवतास्वेव प्रतितिष्ठन्तीयन्ति चतुर्विंशत्यैतव्यं द्वादशभिरेतव्यं षड्भिरेतव्यं चतुर्भिरेतव्यं त्रिभिरेतव्यं द्वाभ्यामेतव्यमिति त्रयस्त्रिंशत्प्रभृतयः कल्पाः श्रूयन्ते तान् त्रयस्त्रिंशत्प्रभृतीन् प्रगाथान् सह चतुर्विंशेष्वभिप्लवेषु कुर्य्यात् उत्तमे च स्वरसाम्नि इत्येवमाचार्य्या आहुः यस्मादेते त्रयस्त्रिंशत्प्रगाथादयः कल्पाः अभीवर्त्तप्रकरणे श्रूयन्ते सोऽत्राप्यभीवर्त्त इति चतुर्विंशे स्वरसामसु च उत्तमं स्वरसामानं उद्गृह्णाति तत्र तु सतोबृहतीत्वन्न भवति सतोबृहतो उद्धरतीह ॥ २ ॥

अन्तरेण त्वेतावार्षेयकल्पेन कृतꣳ षट् प्रगाथमिहापि तथैव स्यात् † ॥ ३ ॥

नत्वेवं स्यात् अन्तरेण चतुर्विंशस्वरसाम्नोः आर्षेयकल्पेन मशकेन कृतं षट्प्रगाथम् अयने इहापि तथैव स्यात् ॥ ३ ॥

तेषां यत्र समप्रयोगे तृतीये तृतीयेऽहनि सतोबृहत्य उपपद्येरन् कुर्यादेनास्तत्र † ॥ ४ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

तेषां प्रगाथानां यत्र समप्रयोगे क्रियमाणे तृतीये तृतीयेऽहनि सतोबृहत्य उपपद्येरन् कुर्य्यादेनास्तत्र ॥ ४ ॥

अनुपपद्यमानास्तु प्रगाथा एव स्युरनाचारो हि षडहेऽन्यत्र तृतीयादह्नः सतो बृहतीनाम्* ॥ ५ ॥

अनुपपद्यमानास्तु समप्रयोगेण प्रगाथा एव स्युः तृतीयेष्वहःसु यथा अनाचारः षड़हेऽन्यत्र तृतीयादह्नः सतोबृहतीनाम् अयं हि समप्रयोगः षट्प्रगाथे एवोपपद्यते ॥ ५ ॥

स यथैव पुरस्तादभीवर्त्तस्तोत्रीयं कुर्य्यात् तथोपरिष्टादिन्द्रक्रतौ ब्रह्मसामानि निधनवन्त्येव्ँ ह्यार्षेयकल्पेन कृतम्† ॥ ६ ॥

स येनैव कल्पेन पूर्वस्मिन् पक्षसि अभीवर्त्तस्तोत्रीयं कुर्य्यात् आदिकल्पादारभ्य यावद्धि प्रगाथ इति तथैतस्मिन् पक्षसि इन्द्रक्रतौ प्रगाथे ब्रह्मसामानि निधनवन्ति एवं कल्पयेत् यस्मादेवमार्षेयकल्पेन कृतं पूर्वस्मिन् पक्षसि षट् प्रगाथेषु अभीवर्त्तः कृतः उत्तरस्मिन् इन्द्रक्रतौ षट् सामानि कृतानि ॥ ६ ॥

अतिरात्रचतुर्विंँशाभ्याँ सह षष्ठो मासः पूर्वस्मिन् पक्षसि व्रतातिरात्राभ्यां प्रथम उत्तरस्मिन्* ॥ ७ ॥

पूर्वस्मिन् पक्षसि अतिरात्रचतुर्विंशे पठित्वा पञ्चायनमासान् पठति ततः षष्ठे मासि व्रतं पठति उत्तरस्मिन् पक्षसि प्रथमं

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणीये विशेषोऽस्ति।

व्रतं पठित्वा चतुरयनमासान् पठति ततो दशरात्रमिश्रं मासं पठति तत्र व्रतातिरात्रमधिकं पठति तत् षष्ठसप्तमयोर्मासयोः पूरणं ददाति अतिरात्रचतुर्विंशाभ्यां सह पूर्वस्मिन् पञ्चसि षष्ठोमासः सम्पूर्णो भवति उत्तरस्मिन् पञ्चसि प्रथमोव्रतातिरात्राभ्याम् ॥ ७ ॥

**यदेतानि सामानि न च्यवन्त इति गौरीवितस्योत्तरयो-र्निहवश्यावाश्वे स्यातां सर्वत्र गवामयनेऽनारभ्य ह्यच्यवनं विदधातीत्येके* ॥ ८ ॥**

उक्तं ये वै वाचमन्नमादयन्त्यन्नादा भवन्तीति ये वितर्षयन्ति रूक्षा भवन्ति गौरीवितं श्यावाश्वनिहव एतानि वै सामानि वाचोऽन्नमेतेषां वागन्नं यदेतानि सामानि न च्यवन्ते वाचमेव तदन्नमादयन्ति तेन सर्वेऽन्नादा भवन्ति तद्यदेतानि सामानि न च्यवन्त इति गौरीवितस्योत्तरयोस्तृतीययोर्निहवश्यावाश्वे स्यातां सर्वस्मिन् गवामयने हि यस्मादनारभ्य एतेषां स्थानम् अच्यवनं विदधाति एवमेके आचार्या मन्यन्ते ॥ ८ ॥

**अन्ववेत्य विधिस्त्वार्षेयकल्पेन कृतो गौरीवितश्यावाश्वयो-र्निहवस्य च ब्राह्मणेन तथा सत्यच्यवनं स्यात्* ॥ ९ ॥**

अन्ववेत्यान्वगत्य गौरीवितश्यावाश्वयोः आर्षेयकल्पेन विधिः कृतः अनुगमनमन्ववायः निहवस्य च अन्ववेत्य विधिः कृतो ब्राह्मणेन तथा सति कल्पे तेषाम् अच्यवनं स्यात् ॥ ९ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

इति दशमस्य अष्टमी कण्डिका ।

## अथ नवमी कण्डिका।

सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्नित्युद्गातृविकार एव स्यादश्रुतिभूता ह्यन्ये* ॥ १ ॥

महाव्रतप्रकरणे सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्नित्येवमधिकृत्याध्वर्य्युः शिरसोद्गायेदिति परिसंख्यानं करोति तत्र किं सर्वशब्दस्य निरवशेषवाचित्वात् सर्वेषां स्तवनं अथ परिसंख्यानादध्वर्य्वादयो ये परिसंख्यातास्तेषामिति एतस्मिन् संशय आचार्य्य आरभते सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्निति तदेतद्ब्राह्मणम् अयमुद्गातृविकार एव स्यात् येनोद्गाता विक्रियते अध्वर्य्युमैत्रावरुणब्राह्मणाच्छंसिगृहपतिभिस्त एव स्युः अश्रुतिभूता ह्यन्ये न श्रुतिभूता अश्रुतिभूताः अन्य ऋत्विजः न श्रुतिभूताः उच्यन्ते नन्वियं श्रुतिः सर्वे सहर्त्विज इति अत्राह ॥ १ ॥

अवाप्यते च सर्वशब्दस्तेष्वेव† ॥ २ ॥

योऽयं सर्वशब्दः अयन्तेष्वेवावाप्यते एतद्धि ब्राह्मणम् अध्वर्य्वादीन् मनसि कृत्वा सर्वशब्दं प्रयुङ्क्ते तेन तस्याधिकृतेषु सर्वशब्दोऽर्थवान् यथा सर्वओदनभुक्तः सर्वैर्ब्राह्मणैर्भुक्तमिति ॥ २ ॥

सह स्तुवीरन्निति कर्मसमवायात् पौर्वापर्य्यचोदनादनुपूर्वꣳ स्तवनꣳ स्यात्* ॥ ३ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

† द्राह्यायणोऽप्येवम्।

सह स्तुवीरन्निति" यदेतत् तदेतस्मिन् कर्मणि समवायात् पौर्वापर्य्यचोदनादनुपूर्वं स्तवनं स्यात् यत्तु स्तवनं तदेव आनुपूर्व्येण स्यात् पूर्वापरभावः पौर्वापर्य्यम् ॥ ३ ॥

तिसृभिरुद्गातात्मन उद्गायेति चात्मना जघन्यस्तवनं दर्शयति* ॥ ४ ॥

तिसृभिरुद्गातात्मन उद्गायेति चैतदादि ब्राह्मणम् आत्मना जघन्यस्तवनं दर्शयति एवं चैतत्सर्वं भवति यथानुपूर्व्येण स्तवनमिति ॥ ४ ॥

नानादेशस्तवनं छन्दोगानामेव स्यादुद्गातैव "सर्वेणोद्गायेदिति ह्युक्त्वा तस्य देशान् विदधाति हविर्द्धाने शिरसा स्तुत्वा सꣳरब्धाः प्रत्यञ्च एयुस्ते दक्षिणेन धिष्ण्यान् परीत्य पश्चान् मैत्रावरुणस्य धिष्ण्यस्योपविश्येति च ये शिरसा स्तुवते तेषामेवेतरैः स्तवनं दर्शयति † ॥ ५ ॥

यदेतन्नानादेशस्तवनञ्चोदितं हविर्द्धाने शिरसा स्तुत्वा इत्येतदादिना तच्छन्दोगानामेव स्यात् नेतरेषां यस्मात् अथो खल्वाहुः कथमध्वर्य्युर्बह्वृचः साम गायेदित्युद्गातैव सर्वेणोद्गायेदिति ह्युक्त्वा तस्य देशान्विदधाति तस्य स्थानानि विदधाति उद्गातुः किञ्चान्यत् हविर्द्धाने शिरसा स्तुत्वा संरब्धाः प्रत्यञ्च एयुस्ते दक्षिणेन धिष्ण्यान् परीत्य

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

पश्चात् मैत्रावरुणस्य धिष्ण्यस्योपविश्येति चैष समानकर्त्तृक आदेशः ये शिरसि स्तुवते तेषामेवेतरैः स्तवनं दर्शयति ॥ ५ ॥

इलान्दमग्निष्टोमसाम कार्य्यमित्यग्ने तव श्रवो वय इत्येतासां पूर्वासु तिसृषु स्यात्* ॥ ६ ॥

इलान्दमग्निष्टोमसाम कार्य्यमिति ब्राह्मणं तदिलान्दमग्निष्टोमसाम क्रियमाणम् अग्ने तव श्रवोवय इत्येतासां षसामृचां पूर्वासु तिसृषु ऋक्षु स्यात् ॥ ६ ॥

दशाक्षरेष्वार्चिकान्यनुगानान्येवं तृचे भवति यथान्यानि सामानि* ॥ ७ ॥

तासान्तिसृणामृचां दशाक्षरेषु आर्चिकान्यनुगानानि स्युः दशाक्षराणि दशाक्षरे दशाक्षरे एकैकमार्च्चिकमनुगानं स्यात् एवं क्रियमाणन्तृचे भवति यथान्यानि सामानि ॥ ७ ॥

षडृचे सर्वस्मिन्नित्याचार्याः अर्द्धर्चेष्वनुगानान्येवमसंरोधतरोगीतानाम् † ॥ ८ ॥

षडृचे सर्वस्मिन् कार्य्यमित्येवमाचार्य्या मन्यन्ते एवं क्रियमाणे असंरोधतरः पर्वणां कृतो भवति अयमतिसंरोधः पूर्वस्मिंस्तु कल्पे संरोधः ततस्त्वक्रिया ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

द्वादशर्चं इति शाण्डिल्यस्तत्रापरावाग्नेयौ तृचावाहरेदाते अग्नेऽग्निं तं मन्य इत्येवमृत्त्वनुगानानि* ॥ ९ ॥

शाण्डिल्य आचार्य्य आह द्वादशर्चः स्यात् तत्र तस्मिन् वक्तृचावृत्तरौ अपरावाग्नेयौ तृचावाहरेदाते अग्नेऽग्निं तं मन्य इति एवं क्रियमाणे ऋगुत्पन्नान्यनुगानानि सर्वाणि कृतानि भवन्ति ॥ ९ ॥

चतुर्थमेवानुगानं तृचे स्यादिति वार्षगण्योऽत्र हि निधनवादं वदति व्रतमिति भवति स्वरिति भवति शकुन इति भवतीति भक्तयश्च कल्प्यन्ते नानासामवच्चैनान्येकेऽधीयतेऽधीयते† ॥ १० ॥

वार्षगण्य आचार्य्य आह चतुर्थमेवानुगानन्तृचे स्यात् यस्मादत्र हि निधनवादं वदति व्रतमिति भवति स्वरिति भवति शकुन इति भवतीति एष निधनवादः भक्तयश्च सर्वाः प्रस्तावादयः अस्मिन्नेव कल्पयन्ते एके च छन्दोगा एतानि पञ्चाप्यनुगानानि नानासामवदेवाधीयते ॥ १० ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतं किन्तु तत्र किञ्चिन्न्यूनमस्ति ।

† द्राह्यायणेनतन सूत्रचतुष्टयं कृतम् ।

इति दशमस्य नवमी कण्डिका ।

## अथ दशमी कण्डिका ।

छन्दोमदशाहयोर्दशमस्य त्रयस्त्रिꣳशमग्निष्टोमसाम स्यादित्येके त्रिकꣳ सार्पराज्ञं दशमप्रदेशात्* ॥ १ ॥

गवामयने यत्किञ्चित्सन्दिग्धं तद्विचारितम् अनन्तरमादित्यानामयनमङ्गिरसामयनञ्च तयोः सामान्यं विचार्य्यते आदित्यानामयने अहर्व्यूहं विधाय पठति छन्दोमदशाहोऽष्टाचत्वारिंशं प्रथममहरिति एवं दशस्वहःसु अष्टाचत्वारिंशादिभिः स्तोमैः प्रकृतान् स्तोमान् प्रत्यामनति दशमेऽहनि चतुर्विंशस्तोममामनति एवमेवाङ्गिरसामयने च चतुर्विंशादींस्तोमान् पठति पुनर्दशमे चतुर्विंशमेवामनति मशकेन प्रायणीयादृक्सामद्रव्यं कल्पयित्वा छन्दोमदशाहयोरेकत्र दशमेऽहनि पठति मशकः अथ यदेव छन्दोमवतो दशरात्रस्य महाव्रतान्तिममहस्तदत्र दशरात्रमिति अपरत्र पठति अथ यदेव पूर्वस्य छन्दोमदशाहस्य दशममहस्तदत्र दशममिति तत्रायं संशयः किं मशकेन दशमप्रदेशात् त्रिकत्रयस्त्रिंशौ मानसाग्निष्टोमसाम्नोः स्तोमौ कर्त्तव्यौ अथ प्रत्यक्षविधानात् सर्वत्रैव चतुर्विंश इति एतस्मिन् संशये अयमाचार्य्य आरभते छन्दोमदशाहयोर्दशमस्य त्रयस्त्रिंशमग्निष्टोमसाम स्यादित्येके त्रिकं सार्पराज्ञं दशमप्रदेशादिति छन्दोमदशाहयोरुभयोरपि दशमस्याह्नः त्रयस्त्रिंशमग्निष्टोमसाम स्यादित्येके आचार्य्या मन्यन्ते त्रिकञ्च सार्पराज्ञम् एते उभे मानसाग्निष्टोमसामनी त्रिकत्रयस्त्रिंशस्तोमयोः स्यातां किं कारणं दशमप्रदेशात् यस्मात् दशमे

---

* द्राह्यायणोऽप्येवम् ।

उभयोरप्येतयोः प्राकृतेन दशमेनाह्ना प्रदेशं करोति अन्योन्यं स्यात् यद्येवं तदिदं ब्राह्मणं चतुर्विंशमिति अस्य कृत्स्नसंयोगस्यानर्थक्यं प्राप्नोति उच्यते ॥ १ ॥

यथा भूयसोवादश्चतुर्विꣳशमिति* ॥ २ ॥

यदेतद्ब्राह्मणं चतुर्विंशमिति एष यथा भूयसोवादः भूयस्त्वं गृहीत्वा प्रवृत्तः आम्रवनवत् ब्राह्मणग्रामः यस्मिन्नन्येपि वृक्षा विद्यन्ते तथापि आम्रवनमिति उच्यते तथा अन्येऽपि वर्णा विद्यन्ते तथापि ब्राह्मणग्रामइत्युच्यते न चतुर्विंत्यन्येऽपि वर्णा न सन्ति किन्तु भूयस्त्वाद्वादः सन्निविष्टो यथा प्राधान्यभूयस्त्वान्नित्यलाच वादाः सन्निविशन्ते एवमयं चतुर्विंशमिति भूयस्त्वाद्वादः सन्निविष्टः ॥ २ ॥

ऋक्सामानि तु प्रदिश्यन्ते दशमात्सर्वꣳ ह्यहरधिकृत्य चोद्यते चतुर्विꣳशः* ॥ ३ ॥

तुशब्दः पूर्वपक्षनिवृत्त्यर्थः यदुक्तं त्रयस्त्रिंशमग्निष्टोमसाम स्यात् त्रिकं सार्पराज्ञमिति तन्न ऋक्साममात्रं प्रदिश्यते दशमस्तोमस्तु चतुर्विंशस्तोमं प्रथममहरधिकृत्य अष्टाचत्वारिंशं प्रथममहरधिकृत्य सर्वेषामह्नां कृत्स्नाधिकारः ॥ ३ ॥

प्रत्यक्षविकारश्च यथा भूयसो वादात् † ॥ ४ ॥

यदुक्तं भूयसोवादश्चतुर्विंशमिति एवं न स्यात् किं कारणं

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये विशेषोऽस्ति ।

यस्मात् प्रत्यक्षविकारो बलीयान् यथा भूयसीवादात् चतुर्विंशमिति प्रत्यक्षेण शब्देन विकरोति त्रिकत्रयस्त्रिंशे ॥ ४ ॥

ब्राह्मणविहिते च स्तोमे कल्पप्रदेशः ऋक्साम्नां भवति* ॥ ५ ॥

यदुक्तं मशकेन प्रदेशादिति ब्राह्मणविहितेन स्तोमेन कल्पप्रदेशेन ऋक्साम्नां भवति मशको हि ब्राह्मणं उपक्रान्तस्य स्तोमस्य वशेन प्रदेशस्येष्टेन हि ब्राह्मणविहितं स्तोमं मशकस्य विकल्पयितुं दर्शितम् ॥ ५ ॥

त्रिंशिनः सुत्या मासान् सर्वत्र सञ्चीरन् कौण्डपायिने च हाविर्यज्ञिकांस्तापश्चिते च दैक्षोपसदान् † ॥ ६ ॥

सर्वसत्रेषु त्रिंशिनः सुत्या मासान् सर्वत्र सञ्चीरन् कौण्डपायिने च हाविर्यज्ञिकान् मासान् कौण्डपायिने चाग्निहोत्रादयो विहिताः फाल्गुनामीष्याः मासमग्निहोत्रं जुह्वतीत्यत आरभ्य तांश्च हाविर्यज्ञिकान् मासान् कौण्डपायिने त्रिंशिनः सञ्चीरन् तापश्चिते पठति संवत्सरं दीक्षिता भवन्ति संवत्सरमुपसद्भिश्चरन्ति संवत्सरं प्रसुता भवति तांश्च दैक्षोपसदान्मासांस्तापश्चिते त्रिंशिनः सर्वान् सञ्चीरन् सौत्यास्तु सर्वशब्देनैव सिद्धाः ॥ ६ ॥

दृतिवातवतोरयने द्वावेकोनौ मासौ सुनुयुस्त्रिवृताविति गौतमः ‡ ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

दृतिवातवतोरयने अतिरात्रस्त्रिवृता मासमित्यधिकृत्य पार्ष्टिकैः यज्ञस्तोमैरेकेन स्तोमेन क्रियाविधानं पूर्वस्मिन् पत्तसि तदनन्तरमुत्तरस्मिंस्तैरेव प्रतिलोमैः तत्र गौतम आचार्य्य आह द्वौ मासौ प्रथमोत्तमौ त्रिवृतौ एकोनौ सुनुयुरतिरात्राभ्यान्तयोः पूरणमिति ॥ ७ ॥

त्रयस्त्रिंशाविति धानञ्जप्यः* ॥ ८ ॥

धानञ्जप्य आचार्य्य आह त्रयस्त्रिंशौ मासौ षष्ठसप्तमौ एकोनौ सुनुयुरिति गवामयने द्वितौ एकोनौ दृष्टाविति ॥ ८ ॥

उभौ वा त्रिंशिनौ स्यातां यथैतद्ब्राह्मणम्* । ९ ॥

अथवा उभावेव त्रिंशिनौ स्यातां प्रथमोत्तमौ वा षष्ठसप्तमौ वा यथैतद्ब्राह्मणं ब्राह्मणं समधिकावेवातिरात्रौ पठति ॥ ९ ॥

तथा सत्यष्टम्यां दीक्षित्वा पञ्चदशदीक्षाः कुर्वीरन्* ॥१०॥

तथा सति कल्पे अष्टम्यां दीक्षित्वा पञ्चदशदीक्षाः कुर्वीरन् ॥१०॥

पञ्चदशानां दशमस्याष्टादशंष्ट्रान्तान्युक्थानि स्युरित्याचार्याः षोडश्यपायाद्धि निवृत्तं नार्मेधमिति* ॥ ११ ॥

मशकः पठति विधृतिभिः क्लृप्तं दृतिवातवतोरयनमात्रिणवेभ्यः त्रिवृद्भ्रः उद्धरत्युक्थानि पञ्चदशेभ्यः षोडशिनमिति षोडशिन उद्धारं पठति तत्र च विधृतीनां दशमेऽहनि पञ्चदशानां नार्मेधमुक्थानेव पठति यदि षोडशिनमुद्धरति तत्रायं संशयः किं नार्मेधस्य तत्र षोडशी निमित्तम् अथ वचनं कारणमिति तदिह आचार्य्यैर्विचा-

* द्राह्यायणेऽप्येवम् ।

ध्यैते पञ्चदशस्तोमानामक्षां दशमस्याक्षः आष्टादंष्ट्रान्युक्थानि स्युरित्येवमाचार्य्या मन्यन्ते कस्मात् षोड़श्यपायात् नार्मेधस्य हि तत्र षोड़शी निमित्तं सचेत् षोड़शी तस्मादेवमपि स्यात् अवयवानां निवृत्तिः स्यात् ॥ ११ ॥

**अवचनात्तु निवृत्तिर्न स्याद्यथान्येषाꣳ साम्नाम्*** ॥ १२॥

तुशब्दः पक्षविनिवृत्त्यर्थः यथा अन्यानि सामानि निवृत्तानि भवन्ति तत्प्रदेशादेवमेव नार्मेधमपि स्यात् न हि वचनमस्ति येन नार्मेधं निवर्त्तेत इति यच्चोक्तं षोड़शिनो निवृत्तं न तत्र नार्मेधमित्येवं वचनम् ॥ १२ ॥

**वचनञ्च कारणं नार्मेधस्य न षोड़शी** † ॥ १३ ॥

वचनञ्च तत्र कारणं नार्मेधस्य न षोड़शी निमित्तं भवति ॥१३॥

**दृश्यते चाभीक्ष्णमषोड़शिकेषु** † ॥ १४ ॥

दृश्यते चैतदेवमाभीक्ष्णं पुनः पुनः प्रयुज्यमानम् अषोड़शिकेषु यज्ञेषु यथा गूर्दः चैकककुभञ्च नार्मेधमित्युत्थानानीत्येतदादिवत् ॥१४॥

**तस्यायनविचाराः पृष्ठ्येनैकैको मासो वर्त्ततेत्येके** ‡ ॥१५॥

तस्यायनविचारा वर्त्तिष्यन्ते पृष्ठ्येनैकैको मासो वर्त्ततेत्येवं श्रुतिः त्रिवृतामासमित्येवमादि अत्र पृष्ठ्येन षड़हस्तोमेन त्रिवृदादि स्तोम-

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

विकृतेन एकैको मासो वर्त्तेत एवमेके आचार्य्या मन्यन्ते लिङ्गात् यस्मात् पार्ष्टिकाः स्तोमाश्चोद्यन्ते ॥ १५ ॥

**पृष्ठ्यस्तोमेनेति शाण्डिल्यः* ॥ १६ ॥**

शाण्डिल्य आचार्य्य आह पृष्ठ्यस्तोमेन त्रिवृदादिस्तोमविकृतेन क्रमेण एकैकोमासो वर्त्तेत ॥ १६ ॥

**अभिप्लवपृष्ठ्याभ्यामिति शौचिवृक्षिः* ॥ १७ ॥**

शौचिवृक्षिराचार्य्य आह अभिप्लवपृष्ठ्याभ्यां त्रिवृदादिस्तोम-विकृताभ्याम् एकैकोमासो वर्त्तेतेति संवत्सरप्रकृतित्वात् ॥ १७ ॥

**पृष्ठ्याङ्गैकैकेनेति शाण्डिल्यायनधानञ्जप्यौ* ॥ १८ ॥**

शाण्डिल्यायनधानञ्जप्यावाचार्य्यावाहतुः पृष्ठ्याङ्गैकैकेन त्रिवृ-दादिः एकैको मासः वर्त्तेतेति यस्मात् तेन लिङ्गेन तस्य तस्य हि स्तोमचोदना ॥ १८ ॥

**ज्योतिष्टोमेनेति लामकायनस्तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् † ॥ १९ ॥**

लामकायन आचार्य्य आह ज्योतिष्टोमेन त्रिवृदादिस्तोम-विकृतेन एकैकोमासो वर्त्तेत यस्मात् सर्वेषामङ्गानामसौ प्रकृतिः अयन्तु विशेषः तस्य रथन्तरपृष्ठं बृहच्च पृष्ठानुग्रहार्थं तत्प्रकृतीनि हि सर्वाणि ॥ १९ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

यथैवार्षेयकल्पेनोक्तमिति चैरकल्भिः* ॥ २० ॥

चैरकल्भिः आचार्य्य आह यथैवार्षेयकल्पेनोक्तमयनं तथैव स्यादिति परं नः प्रमाणं मशक इति एवमेते सर्वे कल्पाः प्रमाणम् ॥ २० ॥

इति दशमस्य दशमी कण्डिका।

---

अथ एकादशी कण्डिका।

पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्य† ॥ १ ॥

विचारितं दृतिवातवतोरयनं साम्प्रतं कौण्डपायिनं विचार्य्यते तत्र पठति मासं दीक्षिता भवन्ति मासं सोमं क्रीणन्ति तेषां द्वादशोपसद उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन मासं वरुणप्रघासैर्मासं शाकमेधैर्मासं शुनासीर्य्येण त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासन्त्रिणवेन मासमष्टादशत्रयस्त्रिंशान्यहानि द्वादशान्यहानि द्वादशाहस्य दशाहानि महाव्रतञ्चातिरात्रञ्चेति तत्र उपसद्भिश्चरित्वा सोममुपनह्य विधाय प्रायणीयमतिरात्राग्निहोत्रादीन् हविर्य्यज्ञानुपदिशति त्रिवृन्मासादींस्तान्यान् मासान् तत्रायं संशयः किं सत्रन्यायेन प्रायणीयोऽतिरात्रेषु अथाश्रवणान् माभूदिति एत-

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणोऽप्येवम्।

स्मिन् संशये आचार्य्यैः स्वं स्वं मतं परिगृह्यायमर्थो विचार्य्यते पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्येति पौर्णमास्यारम्भाः पौर्णमासीप्रभृतयः दीक्षाः प्रभृतिशब्दः आद्यर्थः कौण्डपायिनस्येति सम्बन्धलक्षणा षष्ठी ॥ १ ॥

**तस्योपसदन्त उपवसथकर्म कृत्वातिरात्रमुपेयुरिति शाण्डिल्य एवꣳ हि गृह्यते वृत्तिः* ॥ २ ॥**

कौण्डपायिनस्य उपसदन्त उपवसथकर्म कृत्वातिरात्रमुपेयुरिति शाण्डिल्य आचार्य्य आह किं कारणं यस्मादेवं वृत्तिर्गृह्यते सर्वसत्राणाम् ॥ २ ॥

**तत ऊर्द्ध्वं प्रातराहुत्युपक्रमाः सायमाहुतिसꣳस्था एकान्नत्रिꣳशतमहान्यग्निहोत्रं जुहुयुः* ॥ ३ ॥**

ततस्तस्मादतिरात्रादूर्द्ध्वं प्रातराहुत्युपक्रमाः प्रातराहुत्यारम्भणाः सायमाहुतिसंस्थाः सायमाहुत्यपवर्गाः एकान्नत्रिंशतमहान्यग्निहोत्रं जुहुयुः एवं शाण्डिल्यो मन्यते ॥ ३ ॥

**मासमेवेति गौतमः सुत्यानान्तु पुरस्तादुपवसथकर्म स्यादतिरात्रस्यैवञ्च गृह्यते वृत्तिरव्यवायश्च हविर्यज्ञैः सुत्यानाम् † ॥ ४ ॥**

गौतम आचार्य्य आह मासमेवाग्निहोत्रं जुहुयुः मासो हि स्मृतः

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

तस्य कुतः खण्डनस्तते वचनात् किन्तु सुत्यानान्तु पुरस्तादग्निहोत्रा-दीन् शुनासीर्य्यान्तान् हविर्यज्ञान् उपरिष्टात्क्रमेण समाप्य ततः सुत्यानान्तु पुरस्तादुपवसथकर्म स्यादतिरात्रस्यैवञ्च गृह्यते वृत्तिः सर्व-कर्मसु सुत्यानां पुरस्तादुपवसथकर्म भवति किञ्चान्यत् अव्यवायश्च हविर्यज्ञैरेवं क्रियमाणे सुत्यानां भवति ॥ ४ ॥

**अश्रवणादतिरात्रो न स्यादिति धानञ्जय्यः प्रत्यन्ताद्य-न्येषु चोदयन्नेह विदधाति* ॥ ५ ॥**

धानञ्जय्य आचार्य्य आह अश्रवणादतिरात्रो न स्यादिति यदि अतिरात्रो दृष्टोऽभविष्यत् अश्रौषत् येन पुनस्तेषु सत्रेषु प्रतिसत्र-ञ्चोदयन् यावदन्त इति नेह विदधाति तस्मादकल्प्यो न श्रुतमति-रात्रं कल्पयितुम् ॥ ५ ॥

**उपसदन्त एवोपवसथकर्म स्यात् † ॥ ६ ॥**

उपसदन्त एव उपवसथकर्म भवेत् न सुत्यानन्तरम् ॥ ६ ॥

**अष्टादशभ्यो वार्द्धं शौनासीर्य्येभ्यो राजानं क्रीणीयु-रेवमनन्तरं सुत्याभ्यो भवतीति † ॥ ७ ॥**

अथवाऽनेकदीक्षाणामनन्तरं सोमक्रयो न स्यात् शौनासीर्य्या-न्यहान्यष्टादश कृत्वा ततः सोमं राजानं क्रीणीयुः एवं तत् राजक्रया-दि कर्म अनन्तरं सुत्याभ्यो भवतीति ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतं तथा विशेषश्च कृतः ।

दीक्षोपसदां व्यवायो न्याय इति शाण्डिल्यायनस्ते मासि सोमं क्रीणन्तीति वानन्तरं दीक्षाभ्यः क्रयं दर्शयति* ॥ ८ ॥

शाण्डिल्यायन आचार्य्य आह दीक्षोपसदां व्यवायः अन्याय इति किञ्चान्यत् ते मासि सोमं क्रीणन्तीति चैतत् ब्राह्मणमनन्तरं दीक्षाभ्यः क्रयं दर्शयति ॥ ८ ॥

उपवसथकर्म्मैवानन्तरꣳ सुत्याभ्यः स्यात् † ॥ ९ ॥

उपवसथकर्म्मैवानन्तरं सुत्याभ्यः स्यादतिरात्रो न स्यात् ॥ ९ ॥

आग्नीध्रीयादङ्गारान्मार्जालीयꣳ हृत्वा पृथक् स्थालीपाकान् श्रपयित्वा पितृयज्ञान् कुर्वीरन् † ॥ १० ॥

दर्शे पितृयज्ञा भवन्ति तेषां विधिरुच्यते आग्नीध्रीयादङ्गारान् मार्जालीयं हृत्वा पृथङ्नाना स्थालीपाकाञ्छ्रपयित्वा पितृयज्ञान् कुर्वीरन् ॥ १० ॥

ततो दक्षिणातिप्रणयेयुः पैतृयज्ञिकायाम् † ॥ ११ ॥

ततस्तस्मान्मार्जालीयात् दक्षिणे प्रदेशे अतिप्रणयेयुः पैतृयज्ञिकायां पितृमेधेषु ॥ ११ ॥

आहवनीयाद्दक्षिणतो वरुणप्रघासेषु तस्मिन् कुर्य्युर्यद्दक्षिणाहवनीये कृत्यमुपवसथकर्म चेत् कृतꣳ स्यात् ‡ ॥ १२ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

कृतउपवसथानन्तरं आहवनीयप्रणयनं भवति वरुणप्रघासेषु यो द्वितीयोऽग्निः प्रणीयते दक्षिणतस्तमाहवनीयस्य दक्षिणे प्रदेशे प्रणयेयुः तस्मिन् कुर्युर्यत् कर्म दक्षिणाहवनीये कृत्यं तदुपवसथकर्मपूर्वकं स्यात् ॥ १२ ॥

**यथा प्रकृत्यकृते* ॥ १३ ॥**

अथ पुनरुपवसथकर्म नैव कृतं स्यात् तथा सत्यनन्तरं प्रकृतं तत इह आग्नीध्रीयादङ्गारादित्येतदादि यथा प्रकृत्येव स्यात् ॥ १३ ॥

**अग्निहोत्रमासे दीक्षितान्नस्याध्वर्युर्जुहुयादन्वारब्धा इतरे स्युः* ॥ १४ ॥**

अग्निहोत्रमासे प्रकृतानां सत्रिणां अग्निहोत्राच्छिष्टेन वृत्तिर्न कल्पते तदेव दर्शयति तेषामन्नं क्रियत इति दीक्षितार्थमन्नं तस्य दीक्षितान्नस्याध्वर्युर्जुहुयात् उक्तान्नाहुतस्याश्नीयुरिति इतरेऽध्वर्युमन्वारभेरन् जुह्वानम् ॥ १४ ॥

**हवींष्येवेष्ट्ययनेषूपावद्येयुः† ॥ १५ ॥**

इष्ट्ययनेषु हवींष्येवोपावद्येयुः नात्र दीक्षितान्नमग्निहोत्रमासवत् स्यात् तत्किमिदमारभ्यते यथा उक्तमेवाग्निहोत्रमासे दीक्षितान्नस्येति तत् कथमिष्ट्ययनेषु न स्यात् उच्यते अन्यार्थमेवैतदित्यादिश्यते हवींष्येवेष्ट्ययनेषूपावद्येयुरिति हविषामावृत्तिपरिमाणमुक्तम् इह तु तथा उपावद्येयुः यथा इष्टीनां हविःशेषेण यजमानवृत्तिः स्यात् ॥१५॥

---

* द्राह्यायणेऽप्येवम्। † द्राह्यायणीये विशेषोऽस्ति।

इति दशमस्य एकादशी कण्डिका।

अथ द्वादशी कण्डिका ।

**अग्निहोत्रोपस्थानं विष्णुक्रमाः समिष्टयजूंषीति न क्रियेरन्नवभृथन्यङ्गश्चेति शाण्डिल्यः* ॥ १ ॥**

सोममुपनह्य मासमग्निहोत्रं जुह्वति इत्युक्तं तस्मिन् कर्मणि यत् प्राप्तं कर्म तत्र किञ्चिद्वचनेन निवर्त्यते अग्निहोत्रं तावदुपस्थानमिष्टिषु विष्णुक्रमाः समिष्टयजूंषि अवभृथन्यङ्गश्चेति एतानि न क्रियेरन् इत्येवं शाण्डिल्य आचार्य्यो मन्यते एतेषां प्राप्तप्रतिषेधः ॥ १ ॥

**समिधस्त्वादध्युर्यास्तत्र पुरस्तादुक्ताः † ॥ २ ॥**

समिधस्त्वादध्युर्या अस्मिन्नवभृथन्यङ्गेषु पुरस्तादुक्ताः अवभृथन्यङ्गं प्राप्याभ्युक्षणप्रभृति सौत्यं कर्म समापयेयुरित्येतस्मिन् प्रकरणे तत्र हि समिदाधानान्तं भवति ॥ २ ॥

**सर्वं क्रियेतेति धानञ्जप्यः † ॥ ३ ॥**

धानञ्जप्य आचार्य्य आह अग्निहोत्रोपस्थानादि सर्वं क्रियेतेति ॥ ३ ॥

**मासं दर्शपूर्णमासाभ्यामित्यामावास्येन पूर्वपक्षमितरं पौर्णमासेन* ॥ ४ ॥**

मासन्दर्शपूर्णमासाभ्यां यजेरन्नित्युक्तं तत्रामावास्येन हविषा पूर्वपक्षं यजेरन् इतरमपरपक्षं पौर्णमासेन यजेरन् ॥ ४ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

आमावास्ये पितृयज्ञः सकृत्कृत्वा न स्यादिति गौतमः* ॥५॥

आमावास्ये कर्मणि पितृयज्ञः सकृत्कृत्वा प्रथमे इतरेषु न स्यादित्येवं गौतम आचार्यो मन्यते सति दर्शाङ्गत्वे कालेऽपि न स्यात् पितृयज्ञः अमावस्यायाम् ॥ ५ ॥

न सकृच्च न स्यादिति शाण्डिल्यः* ॥ ६ ॥

शाण्डिल्य आचार्य्य आह असकृदपि न स्यात् पितृयज्ञः नाङ्गमेतद्दर्शस्येति ॥ ६ ॥

अहरहः स्यादिति धानञ्जय्यः* ॥ ७ ॥

धानञ्जय्य आचार्य्य आह यावत्कृत्व अमावस्या तावत्कृत्वः पितृयज्ञः स्यात् दर्शाङ्गं हि स इति ॥ ७ ॥

मासꣳ साकमेधैरिति गृहमेधीयेनेष्ट्वा तदैव शेषꣳ सꣳस्थापयेयुरेवं त्रिꣳशत्कृत्व उपेता भवन्तीति † ॥ ८ ॥

मासं साकमेधैर्य्यजेरन्निति ब्राह्मणं तत्र गृहमेधीयेनेष्ट्वा पूर्वेद्युः कर्म संस्थापयेयुः एवं क्रियमाणेन साकमेधीयं कर्म त्रिंशत्कृत्व उपेतं भवतीति ॥ ८ ॥

द्व्यहापवर्गास्त्वेषां प्रकृतौ पञ्चदशकृत्व एवाभ्यस्येयुः समासः* ॥ ९ ॥

तुशब्दो हेत्वर्थः एषां शाकमेधानां प्रकृते द्व्यहेनापवर्गो दृष्टः

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

इहापि व्यहापवर्गतामेव कल्पयित्वा पञ्चदशकृत्वोऽभ्यस्येयुः समासो भवति एवं मासशब्दस्यार्थवत्त्वं कृतं भवति ॥ ९ ॥

**अग्निहोत्रं दशहोतेति दशहोतारं नामाध्वर्यवोऽग्निहोत्रोपस्थानमधीयते* ॥ १० ॥**

अग्निहोत्रं दशहोता दर्शपूर्णमासं चतुर्होता चातुर्मास्यानि पञ्चहोता सौम्याध्वरे सप्त होतेति ब्राह्मणं तत्र अग्निहोत्रं दशहोतेति दशहोतारं नामाध्वर्यवः अग्निहोत्रस्योपस्थानमधीयते तदभिप्रेत्यैत द्ब्राह्मणम् ॥ १० ॥

**ऋत्विज उत्तरैरभिप्रेताः* ॥ ११ ॥**

उत्तरैर्वचनैर्यदुक्तं तत्र ऋत्विजोऽभिप्रेताः दर्शपौर्णमासयोश्चत्वारो होतारः चातुर्मास्ये तु पञ्च ॥ ११ ॥

**वषट्कारिणोऽध्वरे* ॥ १२ ॥**

अध्वरे सोमे वषट्कारिणः सप्तामनभिप्रेत्यैतद्ब्राह्मणं सौम्योऽध्वरः सप्तहोतेति ॥ १२ ॥

**अत्सरुकैश्चमसैर्भक्षयेयुः कुण्डप्रतिरूपैः † ॥ १३ ॥**

ते सर्वे कुण्डपायिनोऽत्सरुकैश्चमसैर्भक्षयन्तीति अत्सरुकैरदण्डचमसैः कुण्डप्रतिरूपैः कुण्डसदृशैर्भक्षयेयुः ॥ १३ ॥

**होत्रा समास उक्तो ब्राह्मणेन † ॥ १४ ॥**

---

* द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

यो होता सोऽध्वर्य्युः सपोतेत्येतदादि समासः सङ्क्षेप एकीभावः ॥ १४ ॥

स्वादासनादुपसञ्चारं ब्रह्मेतरे होत्रे कुर्यात्* ॥ १५ ॥

स्वस्मादासनादुपसञ्चारेऽपि सञ्चार्य्य इतरे होत्रे मैत्रावरुणीय-प्रतिकर्त्रे कुर्य्यात् एतत् ज्ञापितं भवति ब्रह्मत्वेनासौ दीक्षितः इतरे होत्रे करोति ॥ १५ ॥

तथोद्गातृप्रस्तोतारावाग्नीध्रश्च* ॥ १६ ॥

तथा उद्गाता च स्वस्मादासनादुपसञ्चारमितरे होत्रे नेष्टृीयाच्छावाकीये कुर्य्यात् तथा प्रस्तोता इतरे होत्रे ग्रावस्तुत् ब्राह्मणाच्छंसीये स्वस्मादासनादुपसञ्चारं कुर्य्यात् तथाग्निध्रीयेणासौ दीक्षितः इतरे उन्नेत्रे प्रतिप्रस्थात्रे कुर्य्यात् ॥ १६ ॥

गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यइत्यसमासन्तयोर्दर्शयति* ॥ १७ ॥

गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य इत्यनया वीप्सया ब्राह्मणमसमासन्तयोर्दर्शयति विज्ञापयति ॥ १७ ॥

इति दशमस्य द्वादशी कण्डिका ।

---

अथ त्रयोदशी कण्डिका ।

एतेनोक्तस्तापश्चितस्य दीक्षादिः* ॥ १ ॥

---

* द्राह्यायणेऽप्येवम् ।

उक्तं कौण्डपायिनामयनम् अनन्तरं तापश्चितस्य ब्राह्मणं संवत्सरं दीक्षिता भवन्ति संवत्सरमुपसद्भिश्चरन्ति संवत्सरं प्रसुता भवतीति तस्य दीक्षाकाल उच्यते एतेनोक्तस्तापश्चितस्य दीक्षादिरिति एतेन कौण्डपायिनेन उक्तोव्याख्यातस्तापश्चितस्य दीक्षादिः पौर्णमासी-प्रभृतयो दीक्षा इति ॥ १ ॥

तस्यायनविचाराः* ॥ २ ॥

वक्ष्यन्त इति वाक्यशेषः अयनस्य विकल्पितं मध्यकेन गवामयनेन क्लृप्तं तापश्चितामयनं ज्योतिष्टोमेन वा विकृतेनेति तस्य विकल्प उच्यते ॥ २ ॥

ज्योतिष्टोमोऽतिरात्रः षोडशिमानहरहः स्यादिति धानञ्जप्यः* ॥ ३ ॥

ज्योतिष्टोमोऽतिरात्रः षोडशिमानहन्यहनि स्यात् संवत्सरमिति शेषः ॥ ३ ॥

चत्वारोज्योतिष्टोमा अभिजिदेष पञ्चाहः षट्सु मासेष्वभ्यस्येत महाव्रतं विषुवानथैत एव मासा आवृत्ता विश्वजित्त्वभिजित्स्थाने तत्पुरुषस्य नारायणस्यायनम् † ॥ ४ ॥

चत्वारो ज्योतिष्टोमाः ज्योतिष्टोमस्त्रतुरभ्यस्तः अभिजिदेष पञ्चाहः षट्सु मासेष्वभ्यस्येत महाव्रतं विषुवान् स्यात् अथैत

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन पञ्च सूत्राणि कृतानि तथा विशेषश्च कृतः ।

एव मासा आवृत्ताः स्युः अयन्तु विशेषः विश्वजित्त्वभिजितः स्थाने स्यात् तत्पुरुषस्य नारायणस्यायनम् ॥ ४ ॥

अभिजिदहरहस्तदग्नेर्ज्योतिष्टोमो वा रथन्तरपृष्ठः * ॥५॥

तेनाभिजिद्विकल्पेन रथन्तरपृष्ठमिति नियमार्थम् ॥ ५ ॥

बृहत्पृष्ठ इन्द्रस्य † ॥ ६ ॥

बृहत्पृष्ठो ज्योतिष्टोमः संवत्सरमहरहः स्यात्तदिन्द्रस्यायनम् ॥६॥

व्यत्यासं बृहद्रथन्तरे पृष्ठे तदिद्राग्न्योः † ॥ ७ ॥

व्यत्यासं ज्योतिष्टोमे संवत्सरं बृहद्रथन्तरे पृष्ठे स्यातां तदिन्द्राग्न्योरयनम् ॥ ७ ॥

उभयसामा ब्रह्मप्राजापत्योः † ॥ ८ ॥

उभयसामा ज्योतिष्टोमः संवत्सरः स्यात् तद्ब्रह्मप्राजापत्योरयनं स्यात् ॥ ८ ॥

वायोर्वैरूपपृष्ठो व्रतं वा † ॥ ९ ॥

वैरूपपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् महाव्रतं वा संवत्सरमहरहः स्यात् तद्वायोरयनम् ॥ ९ ॥

आदित्यस्य वैराजपृष्ठो विश्वजिद्वा † ॥ १० ॥

वैराजपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् विश्वजिद्वा तदादित्यस्यायनम् ॥ १० ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

**अपां शर्करीपृष्ठः* ॥ ११ ॥**

शर्करीपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तदपामयनम् ॥ ११ ॥

**गवां रेवतीपृष्ठः* ॥ १२ ॥**

रेवतीपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तद्गवामयनं स्यात् ॥१२॥

**प्रजापतेर्वामदेव्यपृष्ठः* ॥ १३ ॥**

वामदेव्यपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तत्प्रजापतेरयनम् ॥१३॥

**विश्वेषां देवानाꣳस्वरपृष्ठः* ॥ १४ ॥**

स्वरपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् एतद्विश्वेषां देवानामयनम् ॥ १४ ॥

**सूर्य्यस्य दिवाकीर्त्यपृष्ठः* ॥ १५ ॥**

दिवाकीर्त्यपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तत्सूर्य्यस्यायनम् ॥१५॥

**महेन्द्रस्य महाव्रतपृष्ठः* ॥ १६ ॥**

महाव्रतपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् एतन्महेन्द्रायनम् एते विचारास्तापश्चितस्य ॥ १६ ॥

**ज्योतिष्टोमेन त्रीण्युत्तराणि तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् † ॥ १७ ॥**

तस्य तापश्चितस्य यानि त्रीण्युत्तराणि द्वादशसंवत्सरं षट्त्रिंशत् संवत्सरं शतसंवत्सरमिति एतानि ज्योतिष्टोमेन अभ्यस्तानि भवन्ति

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतं तथा विशेषश्च कृतः ।

तस्य ज्योतिष्टोमस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासं व्यत्यस्य व्यत्यस्य व्यात्यासम् ॥ १७ ॥

यथैवार्षेयकल्पेनोक्तमिति शैरकलम्भिः* ॥ १८ ॥

शैरकलम्भिराचार्य्य आह एतेषामयनविधानं यथैवार्षेयकल्पेनोक्तं तथैव स्यादिति इति वातवतोरयने तत् क्लृप्तं प्रजापतेर्द्वादशसंवत्सरं षट्त्रिंशत्संवत्सरं शतसंवत्सरमिति ॥ १८ ॥

इति दशमस्य त्रयोदशी कण्डिका ।

---

अथ चतुर्द्दशी कण्डिका ।

अग्निष्टोमास्त्रिवृत उक्थ्याः पर इति तत्रावचनादतिरात्रा न स्युर्विषुवन्तश्चेति शाण्डिल्यः † ॥ १ ॥

इह ज्योतिष्टोमेन त्रीण्युत्तराणीति प्रकृतं तेषु सर्वेषु संवत्सरचोदना न च प्रायणीयोदयनीयावादिष्टौ नापि विषुवान् तत्रायं संशयः किं संवत्सरन्यायं गृहीत्वा प्रायणीयोदयनीयातिरात्रवन्तो भवन्ति अथाग्रहणान्न भवन्तीति एतस्मिन् संशयेऽयमाचार्य्य आरभते अग्निष्टोमास्त्रिवृत इत्येतदादि सूत्रं मशक एतेषु ये त्रिवृदादिस्तोमाः संवत्सरान् अग्निष्टोमसंस्थान् कल्पयति यान् पञ्चदशान् तानुक्थ्यसंस्थान् सोऽयमाचार्य्य एतदर्थं गृहीत्वा तु परीक्षितुमारभते

---

* द्राह्यायणीये विशेषोऽस्ति ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

अग्निष्टोमास्त्रिवृत उक्थ्याः पर इत्येतस्मिन् कल्पे अवचनादतिरात्रा न स्युः विषुवन्तश्चेति एवं शाण्डिल्य आचार्य्य आह ॥ १ ॥

**इतरः सत्रन्याय इति धानञ्जप्यः* ॥ २ ॥**

धानञ्जप्य आचार्य्य आह इतरोयो वक्ष्यते सत्रन्यायः स भवेत इह कः पुनरित्युच्यते ॥ २ ॥

**अतिरात्रावभितः स्यातां मध्ये विषुवान् बृहत्पृष्ठो रथन्तरमध्यन्दिनः पञ्चदशः सप्तदशः † ॥ ३ ॥**

प्रायणीयोदयनीयावतिरात्रौ स्याताम् आद्यन्तयोः सत्रस्य स्यातां मध्ये विषुवान् स्यात् बृहत्पृष्ठो रथन्तरमध्यन्दिनः पञ्चदश-सप्तदशौ स्तोमौ स्तोत्रेषु व्यत्यासेन स्याताम् एकत्रिक इव ॥ ३ ॥

**एकैकस्मिन्वैतत्संवत्सरवर्गे स्यात् ‡ ॥ ४ ॥**

त्रिवृदादिवर्गेषु आद्यन्तयोः प्रायणीयोदयनीयावतिरात्रौ मध्ये विषुवान् ॥ ४ ॥

**उत्तममुत्तमे वा संवत्सरे ‡ ॥ ५ ॥**

वर्गाणामुत्तमे वा संवत्सरे एतत् स्यात् उत्तमस्योत्तमस्य संवत्-सरस्याद्यन्तयोः प्रायणीयोदयनीयावतिरात्रौ मध्ये विषुवान् ॥ ५ ॥

**पृथग्वा संवत्सरेषु ‡ ॥ ६ ॥**

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम् ।

पृथक्संवत्सरेषु एकैकस्मिन् संवत्सरे आद्यन्तयोः प्रायणीयोदयनीयावतिरात्रौ मध्ये विषुवान् ॥ ६ ॥

तेषां यथास्तोमं विषुवन्तः स्युः* ॥ ७ ॥

तेषां संवत्सराणां यथास्तोमं विषुवन्तः स्युः योऽयं सस्तोमः संवत्सरस्तस्मिन् सस्तोमे विषुवान् स्यात् ॥ ७ ॥

रथन्तरपृष्ठो बृहद्ब्रह्मसामा त्रिवृताᳩस्याद्बृहत्पृष्ठो रथन्तरमध्यन्दिनः परेषु † ॥ ८ ॥

त्रिवृतां संवत्सराणां रथन्तरपृष्ठो बृहद्ब्रह्मसामा विषुवान् स्यात् बृहत्पृष्ठो रथन्तरमध्यन्दिनः परेषु पञ्चदशादिषु संवत्सरेषु विषुवान् स्यात् ॥ ८ ॥

यजनीयेऽहनि प्रसवः स्यात् पूर्व्वपक्षे यद्यविषुवत्काः समार्द्धमासातिवर्त्तिषु* ॥ ९ ॥

यजनीयेऽहनि प्रतिपदि प्रसवो भवेत् प्रथमः सवः प्रसवः यद्यविषुवत्काः स्युः ततः पूर्वपक्षे स्यात् समार्द्धमासातिवर्त्तिनश्च यदि भवेयुः ॥ ९ ॥

अपरपक्षे विषमेषु* ॥ १० ॥

यदि विषमार्द्धमासातिवर्त्तिनः अविषुवत्काश्च ततो अपरपक्षे प्रसवः स्यात् ॥ १० ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतत् सूत्रद्वयं कृतम्।

**सहस्रसाव्ये महातिरात्राभ्याᳪ सहस्रमहानीत्याचार्य्याः सहस्रसाव्यमिति ह्याहेति* ॥ ११ ॥**

सहस्रसाव्ये पठति अतिरात्रः सहस्रमहानीत्यतिरात्र इति तत्र संशयः किं महातिराात्राभ्यां सहस्रमहानि स्युः उत विनातिरात्राभ्यामिति कुतः संशय उत्पन्न इति चेत् प्रत्यक्षायां श्रुतौ अतिरात्रः सहस्रमहानीत्यतिरात्र इति उच्यते समाख्यातः सहस्रसाव्य इति सहस्रमस्मिन् साव्या सहस्रसाव्यम् अत आचार्य्य आरभते सहस्रसाव्ये सत्रे महातिरात्राभ्यां सहस्रमहानि स्युरिति यस्मादाह सहस्रसाव्यमिति ॥ ११ ॥

**अन्तरेणेति शौचिवृक्षिः सहस्रमहानीत्यन्तरेणातिरात्रावाह † ॥ १२ ॥**

शौचिवृक्षिराचार्य्य आह अन्तरेणातिरात्रौ अन्यानि सहस्रमहानि स्युरिति यस्मादन्तरेणातिरात्रावाह सहस्रमहानीनि अतिरात्रः सहस्रमहान्यतिरात्र इति अथ यदुक्तं समाख्यातः संशय उत्पन्न इति न हि प्रत्यक्षायां श्रुतौ समाख्या ग्राह्या प्रथमं हि विनियोगकारणं श्रुतिः दुर्बला समाख्या ॥ १२ ॥

**तस्यायनविकल्पस्त्रिकद्रुकाश्चतुःषष्ठᳪ शतमभिप्लवानां दशरात्रो व्रतमिति दशरात्रो व्रतमिति ‡ ॥ १३ ॥**

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणीये विशेषोऽस्ति ।

तस्य सहस्रसाव्यस्यायन उच्यते अतिरात्रौ तावत्प्रत्यचमिष्टौ अन्यदत्र सहस्रमयनं यच्चोदितं तत् मशकेन विकल्पितं ज्योतिष्टोमेनाविकृतेन कृप्तम् अग्नेः सहस्रसाव्यं गौरीवितस्य स्वरेण वा तत्रायं विकल्प उच्यते अतिरात्रौ तावत् प्रत्यचमिष्टौ अन्यस्त्रिकद्रुकास्त्रतुःषष्टं शतमभिप्लवानां दशरात्रो व्रतमिति एतदहः सहस्रं त्रिकद्रुका ज्योतिर्गौरायुरिति चतुःषष्ट्यधिकं शतं अभिप्लवानां दशरात्रोव्रतमिति ॥ १३ ॥

इति दशमस्य चतुर्दशी कण्डिका।

---

अथ पञ्चदशी कण्डिका।

**दक्षिणे तीरे सरस्वत्या विनशनस्य दीक्षेरन् सारस्वताय षष्ठ्याम्पक्षस्येति गौतमः* ॥ १ ॥**

सहस्रसाव्यमुक्तम् अनन्तरं सारस्वतान्युच्यन्ते तत्र ब्राह्मणं सरस्वत्या विनशने दीक्षेत इति यस्मिन् देशे सरस्वत्यन्तर्भवति तद्विनशनमित्युच्यते तस्य विनशनस्य दक्षिणे कूले तीरे सारस्वताय तादर्थ्ये चतुर्थी षष्ठ्यां तिथौ पक्षस्य परिभाषितम् उदगयनपूर्वपक्षपुण्याहमिति गौतम आचार्य्य आह ॥ १ ॥

**अमावास्यायामतिरात्रः स्यादेवꣳस्वस्थानमामावास्यं प्रयुज्यते* ॥ २ ॥**

---

* द्राह्यायणेन सूत्रद्वयेन सूत्रत्रयं कृतम्।

उक्तं यदहरतिरात्रो भवति तदहर्वत्सानपाकुर्वन्ति संस्थितेऽतिरात्रे सान्नाय्येन यजन्त इति तद्वत्सापाकरणेन सान्नाय्ययोगेन च अतिरात्रस्यैव कालो ज्ञाप्यते वत्सापाकरणं हि अमावास्यायां भवति तदनन्तरेऽहनि सान्नाय्येन यागः सोऽयं गौतम आचार्य्य आह अमावास्यायामतिरात्रः स्यादेवं स्वस्थानमामावास्यं प्रयुज्यत इति आमावास्यस्य हि पूर्वपक्षादिस्थानम् उक्तञ्च संस्थितेऽतिरात्रे सान्नाय्येन यजन्त इति तद्यद्यमावास्यायामतिरात्रो भवति ततस्तस्य स्वस्थानं पूर्वपक्षादौ भवति ॥ २ ॥

**सप्तम्यां वा दीक्षित्वामावास्याया यजनीयेऽहन्यतिरात्रः स्यादिति धानञ्जप्यः* ॥ ३ ॥**

धानञ्जप्य आचार्य्य एवमाह ॥ ३ ॥

**समाधय उत्तराभ्याꣳ सुत्याभ्याम् † ॥ ४ ॥**

वक्ष्यति हि तेषां पौर्णमास्याज्ञ्योतिष्टोमस्तोमो भवतीति यजनीयेऽहनि स्यादित्याचार्य्या इति तथैवायुः प्रदेक्ष्यते एवन्तावत् आयुषो यजनीयेऽहनि क्रियोपदेक्ष्यते तद्यद्यतिरात्रोऽपि यजनीयेऽहनि क्रियते ततः गो आयुर्भ्यां समाधिः कृतो भवति एतदर्थं अतिरात्रोऽपि यजनीय एवाहनि स्यात् इति किञ्चान्यत् ॥ ४ ॥

**स्वस्थानञ्चैवामावास्यं प्रयुज्यते* ॥ ५ ॥**

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये एतन्नास्ति ।

यदुक्तममावास्यायामतिरात्रे क्रियमाणे पूर्वपक्षादौ स्वस्थानमामावास्यं प्रयुज्यते इतरथा हि क्रियमाणे न स्वस्थानमामावास्यं प्रयुज्यते किं कारणम् ॥ ५ ॥

पूर्वपक्षो ह्यामावास्यस्थानमिति* ॥ ६ ॥

कृत्स्नो हि पूर्वपक्ष आमावास्यस्थानं तदा दर्शितं ग्रन्थान्तरे ॥६॥

पुरा रात्रेः सायं दोहं दोहयेरन् सꣳस्थितेऽतिरात्रे प्रातर्दोहं तेन सान्नाय्येन यजेरन् † ॥ ७ ॥

प्राग्रात्रेरारम्भात् सायन्दोहं दोहयेरन् संस्थिते समाप्तेऽतिरात्रे प्रातर्दोहं दोहयेरन् उक्तं संस्थितेऽतिरात्रे सान्नाय्येन यजन्त इति ॥७॥

सान्नाय्येनेष्ट्वाध्वर्युः शम्यां परास्यतीत्याहवनीयन्यन्तेन तिष्ठन् प्राङ्मुखो नित्यमिष्टिसꣳस्थासु प्रास्येत्तदुक्तं ब्राह्मणेन ‡ ॥ ८ ॥

उक्तं सान्नाय्येनेष्ट्वाऽध्वर्युः शम्यां परास्यतीति तच्छम्याप्राशनं कुत्र भवतीत्याह आहवनीयसमीपे तिष्ठन्निति क्रियोपदेशः न आसीनः तिष्ठन् प्राङ्मुखः नित्यमहन्यहनि इष्टिसंस्थासु इष्टिसमाप्तिषु प्रास्येत् प्रक्षिपेत् शम्यां तदुक्तं ब्राह्मणेन सा यत्र निपतति तद्गार्हपत्यस्ततः षट्त्रिंशतं प्रक्रमान् प्रक्रामति तदाहवनीयमिति नित्यग्रहणम् अमा-

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतम्।

‡ द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

वास्यानन्तरं प्राशनं प्रकृतं तत्सर्वमकृतम् दृष्टिसंस्थास्तु च तत् स्यादिति नित्यग्रहणम् ॥ ८ ॥

**चक्रीवत्ता च तथापि पत्नीशाला स्याच्छामित्रश्च* ॥ ९ ॥**

पत्नीशालापि तथैव चक्रीवति स्यात् पत्नीशाला प्राग्वंशा शामित्रमपि चक्रीवदेव स्यात् शामित्रमुक्तलक्षणम् ॥ ९ ॥

**तानि यथादेशं वर्त्तेरन् समश्चेद्भूमिभागः स्यात् † ॥ १० ॥**

तानि सद आदीनि यथादेशं वर्त्तेरन् यो यस्य देशो यथादेशं स्वस्वदेशेन गच्छेयुर्यदि समोभूमिभागः स्यात् ॥ १० ॥

**अनुपूर्वं विषमे † ॥ ११ ॥**

यदि विषमो भूमिभागः स्यात् आनुपूर्व्येण वर्त्तेरन् आनुपूर्व्यमध्वर्य्यवे सिद्धं यथा व्यवायनम् ॥ ११ ॥

**वेदेः पांशून् हरेयुस्तथोत्तरवेदेर्धिष्ण्येभ्यश्च † ॥ १२ ॥**

वेद्यादीनानयनमशक्यं तत्र तेषामवयवा नीयन्ते वेदेरित्यपादानलक्षणा पञ्चमी तस्याः पांशून् गृहीत्वा नयेयुः यथा वेदेस्तथोत्तरवेदेः पांशून् हरेयुः धिष्ण्येभ्यश्च पांशून् हरेयुः ॥ १२ ॥

**तान्निविश्य यथायतनं निवपेयुः † ॥ १३ ॥**

तान् पांशून् निविश्य उपविश्य यथायतनं यद्यस्यायतनं तस्मिन्निवपेयुः ॥ १३ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणेऽप्येवम् ।

उलूखलबुध्नो यूप इति पृथुबुध्नः स्यात्* ॥ १४ ॥

उलूखलबुध्नोयूप इति ब्राह्मणं तत्कथमुलूखलबुध्न इत्युच्यते पृथुबुध्नः स्यात् पृथु विस्तारे विस्तीर्णबुध्नः स्यात् ॥ १४ ॥

प्रकृष्य इति तं पूर्वं कर्षेयुरेवानुद्यच्छन्तः* ॥ १५ ॥

यपः प्रकृष्य इति ब्राह्मणं यूपस्थानं सर्वेषां पूर्वं कर्षेयुः अनुद्यच्छन्तः अनुत्क्षिपन्तः एवशब्दः क्रियते कर्षेयुरेव नैनमुत्क्षिपेयुः यथा ग्रन्थान्तरे दृष्टः प्रकृष्य इत्यवस्थाने प्रकृष्यत आकृतिको ह्यत्यन्त इति आकृतिको भवतु मा वाभूत् प्रकृष्टव्य एव प्रकृष्य इति ब्राह्मणम् ॥ १५ ॥

उपोप्त एवेत्यनिखातस्तिष्ठेत् पांशुभिः पर्युप्तः* ॥ १६ ॥

उपोप्त एवेति ब्राह्मणं न निखातस्तिष्ठेत् उपोप्त एवेति पांशुभिः पर्य्युप्तः परिवेष्टितः ॥ १६ ॥

नोपरवान् खनन्तीत्यधिषवणफलकयोरधस्तादुपरवानामश्वभ्रास्तेषां प्रतिषेध आलिखेयुरेवैनान्न खनेयुः † ॥ १७ ॥

नोपरवान् खनन्तीति ब्राह्मणं ते उपरवाः कस्मिन् देशे इति उच्यते सोमस्याधिषवणार्थौ यौ फलकौ तयोरधस्ताद्भूमौ उपरवानामश्वभ्रा विद्यन्ते श्वभ्रः खातः तेषामत्र प्रतिषेधः आलेखनमात्रमेवैषां कुर्य्युः न खनेयुः आलिखेयुरेनानित्येवमेव वक्तव्ये एवशब्दः

---

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

किमर्थं क्रियते न खनेयुरिति उच्यते अन्यत्रापि यत्रार्थतः खातो न स्यात् तत्र लेखनमात्रमेव स्यात् यथा साद्यःक्रेषु वैश्वदेवे चा-त्वालपांशुभिः प्रयोजनं नास्ति तत्राप्यालेखनमात्रं स्यादिति ॥ १७॥

इति दशमस्य पञ्चदशी कण्डिका ।

---

अथ षोड़शी कण्डिका ।

**तेषां पौर्णमास्यां गोष्टोमः स्तोमो भवतीति यजनीयेऽहनि स्यादित्याचार्याः सꣳस्थिते गोष्टोमे पौर्णमासमिति हि सꣳ-स्थानान्ताद्विदधाति* ॥ १ ॥**

उक्तं ते तमापूर्यमाणमामावास्येन यन्ति तेषां पौर्णमास्यां गोष्टोमः स्तोमो भवत्युक्थ्यो बृहत्सामा संस्थिते गोष्टोमे पौर्ण-मासं निर्वपन्त इति गोष्टोमसंस्थानन्तरं पौर्णमासस्य क्रियामादि-शति पौर्णमासस्य चापरपक्षादिः स्थानं तत्किं पौर्णमासकालवशेन यजनीयेऽहनि गोष्टोमोऽस्तु अथ प्रत्यक्षत्वात् पौर्णमास्यां गोष्टोमं कृत्वा तत्कालानन्तरं पौर्णमासं निरूप्यतामिति अतोऽर्थमाचार्य्यः परीक्षितुमारभते तेषां पौर्णमास्यां गोष्टोमः स्तोमो भवतीति स गोष्टोमो यजनीयेऽहनि स्यात् इत्येवमाचार्य्या मन्यन्ते किं कारणं यस्मात् संस्थानन्तरं पौर्णमासस्य क्रियां विधत्ते यस्त्वयं पौर्णमासी-शब्दस्तेषां पौर्णमास्यामिति अयं पौर्णमासीसन्निकृष्टे काले ॥ १ ॥

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

ते तमापूर्यमाणं तेतमपक्षीयमाणमिति च कृत्स्नवत्पक्षा-भिधानम्* ॥ २ ॥

किञ्चान्यत् यदिदन्ते तमापूर्य्यमाणमामावास्येन यन्ति तेतम-पक्षीयमाणं पौर्णमासेन यन्तीत्येतदभिधानं कृत्स्नौ पक्षावधिकृत्य कालाध्वनोरत्यन्तसंयोगे द्वितीयेति यदि ह्ययं पौर्णमास्यां गोष्टोमं कुर्य्यादमावास्यायाञ्चायुष्टोमम् आमावास्यपौर्णमासाभ्यां कृत्स्नयोः पक्षयोर्व्याप्तिर्न स्यात् ॥ २ ॥

पर्वणि त्वेव स्यात्तेषां पौर्णमास्यां तेषाममावास्यायामिति हि प्रत्यक्षेण विदधाति † ॥ ३ ॥

तुशब्दः पूर्वपक्षनिवृत्त्यर्थः यदुक्तं यजनीयेऽहनि स्यादिति तन्न पर्वण्येव स्यात् एवशब्दोऽवधारणार्थः तेषां पौर्णमास्यान्तेषाममा-वास्यायामेवेति यस्मात् प्रत्यक्षेण विदधाति यदिदं यजनीयेऽहनीत्या-चार्य्याणां वचनं कल्पनामात्रमिदम् अयन्त्वाद्यः प्रत्यक्षशेषः कल्पना-मात्रेण शक्यं प्रत्यक्षं वचनं बाधितुं कल्पनावचनयोर्वचनस्य बलीय-स्त्वात् वचनं हि श्रुतिः ॥ ३ ॥

कर्मानन्तर्यमात्रन्तु सꣳस्था दर्शपूर्णमासयोः* ॥ ४ ॥

संस्थिते गोष्टोमे पौर्णमासमिति यदुक्तन्नान्तरान्यत्कर्म प्रवर्त्तेत इत्येतदुक्तं भवति स्वे स्वे काल एव गोष्टोमः स्वे स्वे काल एव पौर्णमासः स्यात् वक्ष्यत्येतेनायुर्व्याख्यात इति तत्राऽप्येष एव विधिः स्यात् ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

ते तमापूर्य्यमाणास्ते तमपक्षीयमाणमिति च यथा भूयसो वादः* ॥ ५ ॥

अथ य ... ते तमापूर्य्यमाणास्ते तमपक्षीयमाणमिति च कृत्स्न-वत्पक्षाभिधानमिति अयं यथा भूयसोवादः गृह्यताम् असम्भवात् कृत्स्नभावस्य ॥ ५ ॥

सꣳस्थिते गोष्टोमे तदहरेव पौर्णमासेन हविषेष्ट्वो-द्युञ्जीरन्निति* ॥ ६ ॥

पर्वणि गोष्टोमं कृत्वा तस्मिन्नेवाहनि पौर्णमासेन हविषेष्ट्वा उद्-युञ्जीरन्निति उद्योगं कुर्य्युरिति तदहरेव प्रतिष्ठेरन्निति एवं संस्थान-न्तरं पौर्णमासं प्रयुक्तं भवतीति ॥ ६ ॥

अयजमानास्तत्रैव तां रात्रिं वसेयुरिति गौतमः* ॥ ७ ॥

गौतम आचार्य्य आह पर्वणि गोष्टोमेनेष्ट्वा अयजमानाः पौर्ण-मासेन तस्मिन्नेव देशे तां रात्रिं वसेयुरिति ॥ ७ ॥

उद्युञ्जीरन्नेवेति शाण्डिल्यः श्वोभूते तु यजेरन्* ॥ ८ ॥

शाण्डिल्य आचार्य्य आह इष्ट्वा पौर्णमास्यां गोष्टोमेन प्रति-तिष्ठेरन्नेव श्वो भूते तु पौर्णमासेन यजेरन् एवं पौर्णमासं स्वे स्था कृतं भवति ॥ ८ ॥

एतेनायुर्व्याख्यातः* ॥ ९ ॥

---

* द्राह्यायणेऽप्येवम् ।

एतेन गवा आयुर्व्याख्यातः यजनीयेऽहनि स्यात् पर्वणि स्यादित्येतदादिना ॥ ९ ॥

**तत्र धानञ्जप्येनामावास्यायाꣳसायन्दोहं दोहयेरन् पुरा प्रातरनुवाकात्प्रातर्दोहम्* ॥ १० ॥**

तत्र तस्मिन् कर्मणि धानञ्जप्येन विधानेनातिरात्रे क्रियमाणे अमावास्यायां यजनीयेऽहन्यतिरात्रः स्यादिति तत्र तस्मिन्नमावास्यायां सायन्दोहं दोहयेरन् पूर्वमतिरात्रस्य प्रातरनुवाकात् प्रातर्दोहं ततः संस्थितेऽतिरात्रे सान्नाय्येन यजेरन् ॥ १० ॥

**अतिचिरमेवं दुग्धꣳसान्नाय्यन्तिष्ठेदिति शाण्डिल्यायन इतरयोरेवान्यतरत् कुर्युरिति † ॥ ११ ॥**

शाण्डिल्यायन आचार्य्य आह एवं क्रियमाणे यद्यमावास्यायां सान्नाय्यं क्रियते द्वितीयायाञ्च यागः अतिचिरं सान्नाय्यं दुग्धमवतिष्ठेदिति तस्मादितरयोरेव गो आयुषोर्यजनीयेऽहनि पर्वणि चेत्येतयोर्विधानयोरन्यतरत् कुर्य्युरिति अतिरात्रस्त्वमावास्यायामेव स्यादिति ॥ ११ ॥

**कौण्डपायिने भोजनमुक्तमिष्ट्ययनेषु दर्शपूर्णमासधर्माः † ॥ १२ ॥**

इष्ट्ययनेषु कौण्डपायिने सत्रे भोजनमुक्तं हविष्यम् इष्ट्ययनेषूपा-

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

पद्येयुरिति दर्शपूर्णमासधर्मांश्च कौण्डपायिन एवोक्ताः अमावास्येन पूर्वपक्षमितरं पौर्णमासेनेत्यादयः ॥ १२ ॥

चन्द्रप्रमाणास्त्वेव पर्वसु स्युः* ॥ १३ ॥

प्रमाणं एवं पर्वसु कौण्डपायिने हि चिंशिनो मासाविहिताः इह चन्द्रप्रमाणा एवेति ॥ १३ ॥

इति दशमस्य षोड़शी कण्डिका ।

---

अथ सप्तदशी कण्डिका ।

दृषद्वत्या अप्ययेऽपोनप्त्रीयामिष्टिं निर्वपेरन्यदि सोदका स्यात्* ॥ १ ॥

उक्तं दृषद्वत्या अप्ययेऽपोनप्त्रीयं चरुनिरूप्याथातियन्तीति तच्चरुणा इष्टिस्तोच्यते दृषद्वत्या नद्या अप्ययः सरस्वत्यासङ्गम एकीभावस्तस्मिन्नप्ययेऽपोनप्त्रीयामिष्टिं निर्वपेरन् अपोनप्ता देवता अस्या इत्यपोनप्त्रीया निर्वपत्यालभते यजतयः प्रधानशब्दास्तत्र प्रवर्त्तकाः निर्वपतिशब्देनेष्टिस्तोच्यते यदि तस्मिन् देशे सोदका स्याद्दृषद्वती ॥ १ ॥

अप्यनुदकायामिति धानञ्जप्यः* ॥ २ ॥

धानञ्जप्य आचार्य्य आह अनुदकायामपि निर्वपेरन् श्रुतिसामर्थ्यात् ॥ २ ॥

---

* द्राह्मायणोऽप्येवम् ।

  

शते गोष्वृषभमप्यृजन्तीति वत्सतरी शते गर्भिणीषु* ॥३॥

शते गोष्वित्यादि ब्राह्मणं शते गोष्वृषभं मिश्रयन्ति तासां वयः उच्यते वत्सतरी शते गर्भिणीषु वत्सभावादुत्तीर्णा वत्सतर्य्यः अदमेतासां वत्सत्वं बहुगोत्वं वत्सोचास्वर्षभेभ्यस्व तनुत्वइति टरच् प्रथमगर्भास्वास्वित्येतदुक्तं भवति ॥ ३ ॥

ता यत्र गव्यमभयꣳस्यात्तत्र रक्षेयुः* ॥ ४ ॥

ता गावो यस्मिन् देशे गव्यं तृणोदकमभयं स्यात् गोभ्योहितं गव्यम् अभयं यत्र भयं न स्यात् व्याघ्रचौरादिभ्य एतस्मिन् देशे एता रक्षेयुः गोपाः ॥ ४ ॥

पुङ्गवैस्तासां भुञ्जीरन् सर्पिषा च* ॥ ५ ॥

ये तासाङ्गवां पुङ्गवा उत्पद्येरंस्तैर्भुञ्जीरन् सत्रिणः यत्किञ्चिद-न्नाद्यम् उपार्जयितव्यं स्यात् तैः पुङ्गवैस्तदर्जयेरन् ते तत्र निमित्त-भूताः, अपरे ब्रूवते ये तत्र पुङ्गवास्तेषां मातृदुग्ध्वा तेन क्षीरेण भुञ्जी-रन् दध्नावा याः स्त्रियस्तासां मातरो न दोग्धव्याः एवं वर्द्धमाना क्षिप्रं सहस्रं सम्पद्यते एष एवमुख्यार्थः, अपरे ब्रूवते आलभ्यास्ते पुङ्गवा इति तैश्च पुङ्गवैर्भुञ्जीरन् सर्पिषा च ॥ ५ ॥

तासु सहस्रꣳसम्पन्नासु पूर्वपक्षे गामतिरात्रं कृत्वा दक्षै-ताउत्तिष्ठेयुः* ॥ ६ ॥

उक्तं यदा सहस्रं सम्पद्यतेऽथोत्थानं यदा सर्वज्यानिञ्जीयन्ते

---

* द्राह्यायणोऽप्येवम् ।

अथोत्थानं यदा गृहपतिर्म्रियते अथोत्थानं यदा सत्रं प्रास्रवण-मागच्छन्त्यथोत्थानमिति एतान्येवोत्थाननिमित्तान्युक्तानि तत्रे दन्ता-वत् प्रथममुत्थानं तासु गोषु सहस्रं संख्यातः सम्पन्नासु मासस्य यः पूर्वपक्षस्तस्मिन् गामतिरात्रसंस्थानं कृत्वा दत्वा एनागाः उत्तिष्ठेयुः यत्तौ देयास्तदुपरिष्टाद्वक्ष्यते ॥ ६ ॥

**यदा सर्वज्यानिर्ज्जीयन्त इति तासामेवाधिकारः प्रकरण-भूतत्वात्तत्र विश्वजिदतिरात्रः* ॥ ७ ॥**

तद्यदा सर्वज्यानिमिति किं सत्रिणो यथा सर्वज्यानिर्ज्जीयन्ते अथान्य इत्यत्राह तासामेवाधिकारः प्रकरणभूतत्वात् तस्मिन् हि प्रक-रणे तस्मिन्नुत्थाने विश्वजिदतिरात्रः स्यात् ॥ ७ ॥

**मृते गृहपतावायुः† ॥ ८ ॥**

मृते गृहपतौ आयुः स्यात् अतिरात्र इति प्रकृतम् ॥ ८ ॥

**प्रादुर्भावान्तादेतयोरापदोरुत्तिष्ठेयुरप्यपरपक्षे† ॥ ९ ॥**

एतयोरापदोः सर्वज्यानिगृहपतिमरणयोः प्रादुर्भावसमकाल-मेवोत्तिष्ठेयुः न पूर्वपक्षमाद्रियेरन् अपरपक्षेऽप्युत्तिष्ठेयुः ॥ ९ ॥

**न सकृच्चन सरस्वत्यामवभृथमभ्यवेयुर्देवयजनभूता ह्येषा भवति† ॥ १० ॥**

सकृदपि सरस्वत्यामवभृथन्नाभ्यवेयुः ॥ १० ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

अविद्यमाने सरस्वत्या एवोद्धारं पार्श्वतस्तु* ॥ ११ ॥

अविद्यमानेऽन्यचोदके सरस्वत्या एवोद्धारं कुर्य्यात् पार्श्वतस्तु तस्या एव न दूरे ॥ ११ ॥

यदा सत्त्रं प्रास्रवणमागच्छन्त्यथोत्थानमिति तथा प्रास्येयुर्यथैनं पूर्वपक्ष आगच्छेयुरिति गौतमः † ॥ १२ ॥

प्रस्रवणे भवं प्रास्रवणं यदि तावद्दूरे स्यात् सत्त्रः सन्निकृष्टस्य पूर्वपक्षः तदा तेन क्रमेण प्रास्येर्युर्यथा पूर्वपक्षे आगच्छेयुरिति गौतम आचार्य्य आह ॥ १२ ॥

यदेनात्किञ्चिदुत्थानमागच्छेदिति धानञ्जप्यः प्रायणीयमेवातिरात्रमुपेत्योत्तिष्ठेयुरिति* ॥ १३ ॥

धानञ्जप्य आचार्य्य आह चतुर्णामुत्थानानां यदेनात् सत्त्रिणः किञ्चिदुत्थानमागच्छेत् प्रायणीयमेवातिरात्रं ज्योतिष्टोमं कृत्वोत्तिष्ठेयुः आद्यन्तसमाध्यर्थं नैव गवादीन् कुर्य्यादिति ॥ १३ ॥

सत्त्रं प्रास्रवणमागम्य पुरस्तादतिरात्रस्याग्नये कामायेष्टिः स्यादिति शाण्डिल्यः* ॥ १४ ॥

उक्तं सत्त्रं प्रास्रवणमागच्छन्तीति तत् सत्त्रं प्रास्रवणमागम्याग्नये कामायेष्टिः पुरस्तादतिरात्रस्य स्यादित्येवं शाण्डिल्य आचार्य्यो मन्यते ॥ १४ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

